॥ श्रीः ॥

# सिद्धान्तलेशसङ्ग्रहः ।

श्रीमदप्पयदीक्षितविरचितः ।



श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया
कृष्णालङ्काराख्यया व्याख्यया
समलङ्कृतः ।



वझे इत्युपनामकेन भाऊशास्त्रिणा टिप्पण्यादि-
संयोजनेन परिष्कृत्य
संशोधितः ।



*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT SERIES OFFICE.
BENARES CITY,

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.

1916.

## ॥ श्रीगुरुः शरणम् ॥

यदानन्दलवेनैव जगदानन्दमश्नुते ॥
तं वन्दे प्रत्यगात्मानमसङ्गं नन्दनन्दनम् ॥ १ ॥



इह खलु विरिञ्चिप्रपञ्चे सर्वेषां प्राणिनां परमसुखावाप्तिपूर्वकात्यन्तिकदुःखनिवृत्त्यर्थं स्वभावत एवास्ति सततमुद्योगः । परमेतादृशसुखावाप्तेः कः प्रकृष्ट उपायः इत्येवं निश्चयमनासादयन्तो जना यस्मिन् कस्मिन्नपि दुःखसाधने एवाऽऽपातरमणीयतां पश्यन्तः सुखसाधनत्वभ्रान्त्या प्रवर्तमाना दुःखमहोदधौ निपतन्ति । एतादृशान् दुःखसागरनिमग्नान् भ्राम्यतो जनान् विलोक्य मातापितृसहस्रेभ्योऽप्यधिकतरवात्सल्यशालिनी भगवती श्रुतिर्यथाऽधिकारं कर्मोपासनाज्ञानादीनि न्यरूपयत् । तत्रापि साक्षान्निरतिशयसुखाभिव्यञ्जकं जीवब्रह्मणोरैक्यज्ञानमेवेति मत्वा पूर्वमुपासनादिकं निरूप्य पश्चात्तन्न्यरूपयत् । साक्षात्परमपुरुषार्थसाधनप्रतिपादकश्रुतिभाग एवोपनिषच्छब्दवाच्यः तस्य चातिगम्भीरार्थतया सहजतोऽर्थप्रतिपत्तेर्दुष्करतया वादिविप्रतिपत्त्या च तदीयतत्त्वार्थज्ञानस्यासम्भावितत्वमिव भवति इति महर्षिर्भगवान् बादरायणः शारीरकमीमांसामसूत्रयत् ।

इदानीं तेषामेव ब्रह्मसूत्राणामुपरि श्रीशङ्कररामानुजमाध्ववल्लभनिम्बार्कशैवप्रभृतिभिराचार्यैर्निर्मितानि भूयांसि भाष्याणि स्वस्वपक्षोपोद्बलकानि इतरपक्षस्य प्रतिक्षेपकाणि च दृश्यन्ते । सैरेव यावद्बुद्धिबलं महान्तमायासमङ्गीकृत्य सूत्राण्यन्यथाकृत्याऽपि स्वस्वपक्षस्यैव दृढीकरणार्थं बह्व्यो युक्तयः प्रतिपादिताः । एवंविधानां महात्मनामपि परस्परं विप्रतिपत्तिस्थानभूतानि सूत्राण्यालक्ष्य भवति मन्दमतीनामस्माकं सम्मोहः "किं सूत्राणां यादृशोऽर्थः प्रदर्शितस्तैस्तैर्भाष्यकारैः स सर्वोऽपि सूत्रकृत्तात्पर्यविषयः उत अन्यतम एव" किन्तु सर्वेष्वेव परस्परविरुद्धार्थेषु सूत्रकृत्तात्पर्यं वर्तते इति नैव शक्यं सम्भावयितुमिति पारिशेष्यादेकस्मिन्नर्थे एव तात्पर्यं विद्यते इति वक्तव्यमापतति । तदिदानीं विचारणीयं कस्मिन्नर्थे सूत्रकारस्यादरातिशयो लक्ष्यत इति ।

सर्वैर्हि साम्प्रतिकैरेवमुद्घोष्यते सूत्राक्षराणि सर्वथा का-

मथेनुरूपाणि, यो हि यथा व्याख्यातुमिच्छेत् तस्मै तदभिलपितमेवार्थं समर्पयन्ति इति । परमयमुद्धोषः सहृदयानां न चित्तमनुरञ्जयति; यतो ब्रह्मसूत्रेभ्य एवोद्धृत्य कानिचित् सूत्राणि शङ्करपक्षाग्रही कश्चित् रामानुजमाध्वपक्षाणामसारतां बोधयितुमित्थं यदुपपादयेत् यद् एते वादिनो ब्रह्मविद्यायामेव नाधिकारिणः, कथमेषां व्याख्यानं सर्वैरादरणीयं भवेत्, यतो बादरायण एव स्वसूत्रेषु अनधिकारितामेषां प्रकटयति । "मध्वादिष्वसम्भवादनधिकारं जैमिनिः" इत्यनेन सूत्रेणेदमुच्यते यत् जैमिनिराचार्यः इत्थं ब्रूते—माध्वरामानुजप्रभृतीनां ब्रह्मविद्यायां नास्त्यधिकारः, यतः असम्भवात् । तच्छ्रुत्वाऽपरो यदीत्थं ब्रूयात्—नेदं युक्तं, सर्वात्मनाऽधिकारो नास्तीति कथनं साहसम्, शङ्कराचार्यवत् सर्वातिशाय्यधिकाराभावेऽपि यथाकथंचित् अधिकारोऽस्त्येव, एतदर्थकमेवेदं सूत्रं "भावं तु बादरायणोऽस्ति हि" कथं बादरायणो मध्वादिषु अधिकारस्य भावमाह ? यतोऽस्ति हि-कथंचित् विद्यायामधिकारः इत्यादि, तर्ह्ययमपि सूत्रार्थः प्रामाणिकैः परिगृहीतः स्यात् । नह्ययं शब्दशक्तिलभ्यो न भवति । यदि नाम व्याख्यातॄणां स्वस्वकल्पनानुरूपं व्याख्यानमङ्गीक्रियेत तर्हि पूर्वोक्तस्यापि सूत्रकृत्तात्पर्यविषयत्वं प्रसज्येत, अतोऽवश्यमङ्गीकर्तव्यमेतत् यत् एक एव कश्चनार्थः, सूत्रकृत्तात्पर्यविषयो न सर्वविधः । यदि एक एव कस्तर्हि सः, कथञ्च सोऽवगन्तुं शक्यते । नच तस्यावगतौ कश्चिदस्ति उपाय इति चेत्, श्रीशङ्कराचार्यपादाभिमत एवार्थः सूत्रकारस्य तात्पर्यविषय इति ब्रूमः । स च सूत्राक्षरैरेवावगन्तुं शक्यते च ।

यद्यपि केचिद् वादिन इत्थं सङ्गिरन्ते नाम, यदयं मायावादः सूत्राक्षरैर्न लभ्यते श्रीशङ्कराचार्यैः कल्पित इति । परं नेदं युक्तम् । यतः प्रायशः सर्वत्र एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यमेव मूलं कृत्वा सर्वमपि विचारं करोति सूत्रकारः । यथा "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" इत्यादौ प्रतिज्ञादृष्टान्तयोरनुपरोधार्थमेव ब्रह्मणः प्रकृतित्वं, कार्यस्य कारणाद्भिन्नसत्ताकत्वाभावः, आकाशादीनां च ब्रह्मण्यध्यस्तत्वमित्यादिकं निरूपयति । तावता च प्रतिज्ञावाक्यस्येतरवाक्यापेक्षया प्राधान्यं द्योत्यते । तच्च प्रतिज्ञावाक्यं विवर्तवादाङ्गीकारमन्तरा न सामञ्जस्येनोपपादयितुं शक्यमिति प्रतिज्ञावाक्यमेव प्राधान्येनोपादाय निर्णयं ब्रुवाणः सूत्रकारः 'विवर्तवाद एव स्वाभिमतः' इति स्पष्टं कथयति ।

तथाहि—द्वादशवर्षाण्यधीत्य यथाविधि गुरुगृहे, ततः प्रत्यावृत्तं विनयादिशून्यमप्रणतस्वभावं पुत्रमालक्ष्य पितोवाच— हे सौम्य ! किमेतादृशी काचन विलक्षणा विद्या त्वयाऽऽसादिता यदेकस्य विज्ञानेन सर्वमिदं विज्ञातं भवतीति । तत् साद्भुतमिव श्रुत्वा गर्वं परिहृत्य शरणमुपसन्नः श्वेतकेतुः पितरं पप्रच्छ हे पितः! कीदृशमेतदेकविज्ञानेन सर्वविज्ञानं तन्मे कथयतु भगवानिति। तदा पिता इदमेकविज्ञानेन सर्वविज्ञानमुपदिदेश। तत्र च दृष्टान्तापेक्षायामिदमुच्यते "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इति । इयं श्रुतिः शाङ्करमतं विहायान्यस्मिन्मते न सामञ्जस्यमश्नुते। अत्र हि एकविज्ञानेन सर्वविज्ञानं नाम सर्वस्य तत्तद्व्यक्तित्वेन रूपेण ज्ञानं न विवक्षितम्, सर्वेषां पदार्थानां तत्तद्व्यक्तित्वेन रूपेण ज्ञानस्यासम्भवात् । सामान्यप्रत्यासत्त्या योगजधर्मप्रत्यासत्त्या वा सर्वेषां तत्तद्व्यक्तित्वेन रूपेण ज्ञानं भविष्यतीति चेत्, तथासति श्रुतिविरोधप्रसङ्गः। श्रुतिर्हि दृष्टान्तद्वारा इदं प्रतिपादयति—कार्यकारणयोरभेदाद् विकारस्य वाचारम्भणमात्रत्वेन मिथ्यात्वात् कारणीभूतमृद्विज्ञानेन सर्वे मृद्विकारा ज्ञायन्ते। "मृत्तिकेत्येव सत्यम्"इति कारणमात्रस्य सत्यत्वावधारणाच्च प्रकारान्तरेणैवेदं सर्वविज्ञानं श्रुत्यभिप्रेतमिति गम्यते। यदि नाम सामान्यप्रत्यासत्त्या योगजप्रत्यासत्त्या वा इदं सर्वविज्ञानं श्रुतितात्पर्यविषय इत्युच्येत तथासति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं प्रसज्येत । अतश्चैकविज्ञानेन सर्वविज्ञानमित्यस्यायमेवार्थः यत् श्रुतिर्मुमुक्षुं प्रति तदभिलषितमेव प्रतिपादयति । मुमुक्षुरभिलषितो हि मोक्षः, स चाद्वितीयब्रह्मात्मतत्त्वज्ञानादेवेति मोक्षसाधनीभूतमद्वितीयब्रह्मात्मतत्त्वज्ञानमेव श्रुत्या प्रतिपिपादयिषितम् । तत्र च द्वितीयस्य प्रपञ्चस्य दृश्यमानत्वात्कथमद्वितीयज्ञानं सम्भवेत् इति शिष्यशङ्कामपाकर्तुं जगतो मिथ्यात्वमभिधातुं श्रुतिः प्रवृत्ते—यथा सोम्यैकेनेत्यादिना। यथाहि शुक्तौ समारोपितानां रजतरङ्गादीनां रज्ज्वां वा समारोपितानां भुजङ्गमदण्डधारादीनां स्वरूपं वस्तुतः शुक्त्यादिकमेव, आरोपितपदार्थस्य अधिष्ठानातिरिक्तायाः सत्ताया अभावात्। अतः शुक्त्यादितत्त्वज्ञाने जाते तेषु समारोपितानां रजतादीनां तत्त्वं विदितं भवति, शुक्त्यादिकमेव हि तेषां तत्त्वम् । तत्त्वस्य ज्ञानमेव ज्ञानं, ततोऽन्यत् ज्ञानं मिथ्याज्ञानमेवेति। एकविज्ञानेन सर्वविज्ञानं नाम अधिष्ठानभूतसत्यवस्तुज्ञानेन समारोपितानां सर्वेषां पदार्थानां स्वरूपज्ञानम्, अर्थात् 'अधिष्ठाना-

व पृथग्भूतं वास्तवं स्वरूपमेषां नास्ति, एते मिथ्यारूपाः' इति यज्ज्ञानं एतदेवात्र विवक्षितं, नतु तत्तद्व्यक्तित्वेन रूपेण सर्वस्य ज्ञानं विवक्षितम्, अशक्यत्वात् निष्फलत्वाच्च । पूर्वोक्तप्रकारेण मिथ्यात्वज्ञानमेव प्रतिपिपादयिषितं चेत् सफलता सम्पद्यते, तस्य अद्वितीयतत्त्वज्ञाने उपयोगात्, अद्वितीयज्ञानस्य च मोक्षसाधनत्वात् । एतादृशैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थमेव छान्दोग्योपनिषदि "सदेव सोम्येदमग्र आसीद्" इत्यादिना उत्पत्तेः पूर्वं सन्मात्रस्य सत्त्वमभिधाय ततः तस्मादेव सतः सर्वस्य प्रपञ्चस्योत्पत्तिमभिधाय तत्रैव पुनः सर्वस्य प्रलयोऽप्यभिधीयते। तेन च सर्वस्य प्रपञ्चस्य ब्रह्मण्येव आरोपितत्वप्रदर्शनेन तदव्यतिरेकात् ब्रह्मणोऽद्वितीयता सम्यग् बुद्धौ समारूढा भवति, तेन च मोक्ष उपपत्स्यते । इत्येवंरीत्या दृष्टद्वारा प्रतिज्ञावाक्यस्य सर्वथा श्रीशङ्कराचार्यमतेनैव उपयोगः सम्भवति । इतरमते तु इदं प्रतिज्ञावाक्यं सर्वथा निष्फलं भवति इति श्रुत्यभिमतं निर्विशेषाद्वैतवादं भगवान् बादरायणः पदे पदे प्रतिज्ञावाक्यानुरोधेनैव सर्वं विचारयन् प्रतिष्ठापयति । अत एव ये केचन उद्घोषयन्ति निर्विशेषाद्वैतवादो न सूत्रकृत्सम्मत इति तत्परास्तम् । तथासति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" इत्यादिसूत्रजातं मुग्धप्रलपितं स्यात् । यदा हि प्रतिज्ञावाक्यं जगन्मिथ्यात्वमन्तरा न कथञ्चिदपि सार्थकं इति निर्धारितं भवति, तदा तान्येव वाक्यानि समुपादाय विचारयतो महर्षेरयं मायावादो न सम्मत इति कथं वक्तुं शक्यम् ।

अपि च 'ब्रह्मणो जगदुपादानत्वे तद् ब्रह्म सर्वात्मना परिणमते एकदेशेन वा ? आद्ये ब्रह्मातिरेकेण विकाराभावः ब्रह्माभावो वा प्रसज्यते। अन्त्ये सावयवत्वापत्त्या निरवयवत्वश्रुतिविरोधः' इति "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति सूत्रेण पूर्वपक्षं कृत्वा "श्रुतेस्तु शब्दमूलत्वात्"इत्यादिना आपाततः समाधानमभिधाय "आत्मनि चैवं विचित्राश्च हि" इति सूत्रेण "यथा हि स्वप्नद्रष्टरि द्रष्टुः स्वरूपानुपमर्देनैव सर्वथा परिणामाभावेऽपि नानाविधा रथाद्याकाराः सृष्टयः प्रादुर्भवन्ति तद्वत् ब्रह्मण्यपि स्वरूपानुपमर्देन नानाविधं देवतिर्यङ्मनुष्यादिभेदभिन्नं स्थावरजङ्गमात्मकं जगत् प्रादुर्भविष्यति" इति विवर्तवादमवलम्ब्य ब्रह्मणि जगत्कारणत्वं प्रतिष्ठापयता आचार्येण 'विवर्तवादः स्वाभिमतः' इति स्पष्टं प्रतिपाद्यते, कथमन्यथा अस्य सूत्रस्योपपत्तिः स्यात् । यथाहुराचार्यवा-

चस्पतिमिश्राः—अनेन हि स्फुटितो मायावाद इति ।

किञ्च द्वितीयाध्यायस्य तृतीयपादे आकाशवाय्वोरुत्पत्तिमभिधाय सत उत्पत्तिप्रतिषेधकमिदं सूत्रं विद्यते, "असम्भवस्तु सतोऽनुपपत्तेः" इति । अत्र हि आचार्यभाष्यम्—'वियत्पवनयोः असम्भाव्यमानजन्मनोरपि उत्पत्तिं श्रुत्वा स्यात् कस्यचित् भ्रांतिः सदप्युत्पद्यते इति तां निवर्तयितुमाचार्यः सदुत्पत्तिं प्रतिषेधति' इति । अस्य सूत्रस्य इदमेव प्रयोजनमिति भङ्ग्यन्तरेण सर्वैरेव भाष्यकारैरभ्युपगतं, परमेतत्सूत्रं न इतरमतेषु सामञ्जस्यमश्नुते । यदा हि सर्वमेव वस्तुजातं सत् तदा एतत्सूत्रस्थसत्पदेन ब्रह्मैवाभिप्रेतमिति कथं निर्णीतं स्यात्, सत्पदस्य ब्रह्मासाधारणत्वासम्भवात् । विवर्तवादे तु एतत् सूत्रमनायासेन सङ्गच्छते, तन्मते ब्रह्मव्यतिरिक्तस्य सत्यत्वाभावेन केवलब्रह्ममात्रप्रतिपादकत्वात् । एतेन एतत् गम्यते निरुपपदसच्छब्देन सूत्रकारः ब्रह्मैव निर्दिशति । अत एव छान्दोग्येऽपि "सदेव सोम्येदमग्र आसीत्" इत्यादिना सच्छब्देन ब्रह्मनिर्देशः कृतः । तथाच यत्र निरुपपदः सच्छब्दः सर्वत्र तत्र ब्रह्मैव गृह्यते इति सिद्धं भवति । तच्च जगत्सत्यत्ववादे नानुगुणं भवति । एवमादीनि बहूनि लिङ्गानि सूत्रेषु विद्यन्ते यैः सूत्रकृतो मायावादे एव तात्पर्यं विद्यते इति समुन्नेतुं शक्यम् । तानि च लिङ्गानि यथायथं भाष्यवाचस्पत्यकल्पतर्वादिग्रंथेषु तत्तत्स्थले निरूपितानि सन्ति इति तत एव द्रष्टव्यानि । एतावता चेदं सिद्धं सूत्राणां मायावाद एव तात्पर्यं विद्यते इति । यद्यपि नामेत्थं मायावादादिकं सूत्राक्षरैरेव अनायासेन बोद्धुं न शक्यते यतो व्याकरणसूत्रेषु पतञ्जलिप्रणीतमहाभाष्ये 'सूत्राणामयमेवार्थः सम्भवति नत्वन्यः', इत्यादिपूर्वापरसूत्रादिज्ञापकमाश्रित्य यथाऽर्थः प्रदर्शितः, तथा बादरायणसूत्राणां सूत्राक्षराण्येव प्रमाणयित्वा कस्मिन्नपि भाष्येऽर्थस्याप्रदर्शनात् । अतएव सर्वेषां सूत्रार्थावबोधने महान् क्लेशः समुपजायते, तथापि सूक्ष्मेक्षिकया निरीक्ष्यमाणे सूत्राक्षरैरेव सूत्राणामर्थः सुस्पष्टमवगन्तुं शक्यते ।

तत्र काचित् दिग् प्रदर्श्यते यथा—"अथातो ब्रह्मजिज्ञासा" इत्यादिशास्त्रं मोक्षसाधनीभूतब्रह्मज्ञानप्रतिपादनायैव प्रवृत्तमिति सूत्राक्षरैरेव कथं लब्धम् इति चेत्, दृश्यताम्—"अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति अन्त्यसूत्रेण सह, "अथातो ब्रह्मजिज्ञासा" इतिसूत्रस्य योजने कृते इदमेकं वाक्यं भवति—साधनचतुष्टयसम्पत्त्यनन्तरं यतः साधनचतुष्टयस्य असिद्धिर्न भवति—साधनचतुष्टयं

पुरुषेण सम्पादयितुं शक्यते, अतः ब्रह्मजिज्ञासा कर्तव्या । कस्मै फलाय कर्तव्या ? इति चेत्, यतः अनावृत्तिः शब्दात् श्रूयते । ब्रह्मज्ञानं प्राप्तः पुमान् पुनः संसारं नावर्तते । "इमं मानवमावर्तं नावर्तन्ते" "न स पुनरावर्तते" "अमृतः समभवत् समभवत्" इत्यादिश्रुतिभिः अनावृत्तिनिर्देशात् । अनया च एकवाक्यतया मोक्षसाधनीभूतब्रह्मविचारप्रतिपादनार्थमिदं शास्त्रं प्रवृत्तमिति सुष्ठु ज्ञातं भवति ।

यच्च विवरणादौ "अथातो ब्रह्मजिज्ञासा" इति सूत्रव्याख्यानसमये "ज्ञाधातोः निश्चयात्मकज्ञानेऽजहल्लक्षणा, सन्प्रत्ययस्य च इच्छासाध्ये विचारे जहल्लक्षणा, तथाच ब्रह्मविषयकनिर्णयात्मकज्ञानाय विचारः कर्तव्यः । अत्र च ब्रह्मज्ञानस्य स्वरूपतः फलत्वासम्भवात् आत्मनि अध्यस्तकर्तृत्वभोक्तृत्वरूपदुःखनिवृत्तिपूर्वकपरमानन्दावाप्तिसाधनत्वेनैव फलत्वं वक्तव्यमिति एतादृशबन्धनिवृत्तिपूर्वकपरमानन्दावाप्तिसाधनब्रह्मज्ञानाय विचारः कर्तव्यः इत्यर्थः पर्यवस्यति । तथाच जीवब्रह्मणोरैक्यं, आत्मनि कर्तृत्वभोक्तृत्वादीनां मिथ्यात्वं च सूत्रकारेण सूच्यते, जीवब्रह्मणोः भिन्नत्वे ब्रह्मज्ञानात् जीवगतानर्थनिवृत्तिर्न स्यात्, अन्यज्ञानात् अन्यदीयभ्रमानिवृत्तेः । अतः शुक्तितत्त्वसाक्षात्कारनिवर्त्यरजताध्यासाश्रयेदमंशस्य शुक्त्यभिन्नत्ववत् ब्रह्मज्ञाननिवर्त्यानर्थाश्रयस्य जीवस्य ब्रह्माभिन्नत्वं सूचितम् । तथा जीवगतानर्थस्य सत्यत्वे ज्ञानमात्रात् निवृत्तेरयोगात् तस्याध्यस्तत्वमपि सिद्धं भवति । सत्यस्य वस्तुनो ज्ञानमात्रात् निवृत्तेरदर्शनात्" इति प्रतिपादितं तत् न केवलं ब्रह्मजिज्ञासासूत्राक्षरमात्रलभ्यं किंतु "अनावृत्तिः शब्दात्" इति सूत्रं बुद्धिस्थं कृत्वा तेन सह अस्य एकवाक्यतया एवंविधोऽर्थः प्रदर्शितः । तथाच यत् भाष्यकारादिभिः "सूत्रस्य आर्थिकार्थोऽयमध्यासः" इति उपवर्णितं तद् एतत् उपसंहारसूत्रमनुसृत्यैव । यदा हि उपक्रमोपसंहारयोरेकवाक्यतया ब्रह्मविचारशास्त्रमिदमिति निर्णीतं, तदा तदन्तर्गतानां सर्वेषामपि सूत्राणां साक्षात् परम्परया वा ब्रह्मसम्बद्धार्थप्रतिपादकत्वमेव यथा सिद्धं भवति तथैव तेषामर्थाः कर्तव्याः इति तैरेव सूत्राक्षरैः सिध्यति ।

यद्यपि भाष्यकारैः "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इति सूत्रं ब्रह्मलोकं गतानामुपासकानां पुनरावृत्तिर्न भवति इति प्रतिपादनायावतारितं तथापि तस्य सूत्रस्य शास्त्रशेषपठितत्वेन एकयोक्त्या उपासनाफलस्य ब्रह्मज्ञानस्य च निरूफलकत्वप्रदर्शनद्वारा कृत्स्नस्य शास्त्रस्य अनावृत्तिरेव

फलमितिप्रदर्शनपरत्वे न कश्चिद् विरोधः। अत एव यदि सूत्राणामन्यादृशोऽर्थः करिष्यते तर्हि स शास्त्रासङ्गतो भवेत्। इयमेव शास्त्रसङ्गतिरित्युच्यते—यत्परं शास्त्रं तत्सम्बद्धार्थ एव सूत्रेण प्रतिपादितो भवेत् चेत् तदा तत् शास्त्रसङ्गतं स्यात् इत्यपि अनयैव एकवाक्यतया साधितं भवति।

अपि च यथा एतच्छास्त्रं मोक्षसाधनीभूतब्रह्मविचारपरमिति अनया एकवाक्यतयाऽवगतं तद्वत् अध्यायानां परस्परं भेदः सूत्रैरेव स्पष्टतया सिद्धो भवति। अध्यायस्यान्तिमसूत्रेषु द्विरभ्यासेन अध्यायपरिसमाप्तिर्द्योत्यते। तत्रापि प्रथमाध्यायः समन्वयाध्याय इति कथं ज्ञातव्यमिति चेत्, तदपि सूत्राक्षरैरेव ज्ञायते। यथा प्रथमाध्यायस्यान्तिमसूत्रं विद्यते "एतेन सर्वे व्याख्याता व्याख्याताः"। "अथातो ब्रह्मजिज्ञासा" इति सूत्रे च ब्रह्मशब्देन ब्रह्मबोधकं प्रमाणमपि उपस्थापितम्। यतो विचारस्य साक्षाद्ब्रह्मज्ञानसाधनत्वं न सम्भवति, विचारस्य प्रमाणेष्वपरिगणनात्, ज्ञानस्य च प्रमाणकार्यत्वात्। अतः प्रमाणविषयकत्वेन विचारस्यापि ब्रह्मज्ञानफलकत्वमभ्युपगन्तव्यम्। ब्रह्मबोधकं प्रमाणं च "तन्त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतिषु औपनिषदत्वविशेषणत्वेन वेदान्ता एव। तथा च वेदान्तानामेव विचारः कर्तव्यः इत्ययमर्थः सिद्धो भवति। "एतेन सर्वे व्याख्याता व्याख्याताः" इत्यत्र व्याख्याता इति पदेन वेदान्तानां तात्पर्यविचार एव एतावद्भिः सूत्रजातैः कृतः इति गम्यते, वेदान्तविचाराकरणे व्याख्याता इतिपदं नानुकूलं स्यात्। तस्य च द्विरभ्यासेन एतेनेत्यतिदेशेन च सर्वेषां वेदान्तानां तात्पर्यं विचारितमिति कथनात् अयं प्रथमोऽध्यायः समन्वयनिरूपणपरः इति स्पष्टं ज्ञायते। अतः प्रथमाध्यायान्तर्गतानां सूत्राणां यथा समन्वयपरत्वं सेत्स्यति तथैवार्थः कर्तव्यः, तद्विपरीतार्थकरणे हि अध्यायासङ्गतिः स्यात्।

अयं नियमः सूत्राक्षरैरेव लब्धः। एवमेव प्रत्यध्यायं विषयभेदः सूत्राक्षरैरेव ज्ञातुं शक्यः। एवमेव प्रथमपादस्य स्पष्टब्रह्मलिङ्गवाक्यानां समन्वयो विषयः एतदपि सूत्राक्षरैरेव लभ्यम्।

यावन्ति सूत्राणि प्रथमपादे वर्तन्ते तैः तादृशान्येव वाक्यानि उदाहृतानि, यथा "अन्तस्तद्धर्मोपदेशात्" इत्यत्र सार्वात्म्यसर्वदुरितविरहाभ्यां स्पष्टब्रह्मलिङ्गाभ्यां रूपवत्त्वादिदुर्बललिङ्गानां बाधः कृतः। एवमेव प्रत्यधिकरणे स्पष्टब्रह्मलिङ्गैरेव वाक्यानां समन्वयः कृतो दृश्यते, अतः

अयं पादः स्पष्टब्रह्मलिङ्गवाक्यानां समन्वयपर इत्येवं सिद्धं भवति।

एवमेव 'इदमेवाधिकरणसूत्रम्' इति ज्ञापकमपि चिह्नं सूत्रेषु वर्तते। यथा—यत्र प्रथमान्तपदमेकं पञ्चम्यन्तपदं च स्यात् तदधिकरणसूत्रम् इति ज्ञातव्यम्। अथातो ब्रह्मजिज्ञासेति ब्रह्मशब्दस्य सर्वत्रानुषङ्गेण तस्यैव साध्यवाचकपदत्वम्। प्रथमान्तपदस्य पक्षवाचकत्वं लभ्यते। तथासति आनन्दमयो ब्रह्म, अभ्यासात्। अन्तः उपदिश्यमानं ब्रह्म, तद्धर्मोपदेशात्। आकाशः ब्रह्म, तल्लिङ्गात्। प्राणः ब्रह्म, तथाऽनुगमाद् इत्येवं रीत्या अधिकरणसूत्राणां ज्ञानं भवति। अर्थात् अन्यानि गुणसूत्राणि इति। इमां प्रक्रियामाश्रित्यैव अधिकरणरचना कृता।

अपि च "कामाच्च नानुमानापेक्षा" "रचनाऽनुपपत्तेश्च नानुमानम्" इत्यादिसूत्रेषु अनुमानशब्देन अनुमानं प्रमाणं नाभिप्रेतं साङ्ख्यपरिकल्पितं प्रधानमभिप्रेतमिति कथं ज्ञातव्यम्—इति चेत्, अत्रापि सूत्राक्षराण्येव प्रमाणानि। यतः "ईक्षतेर्नाशब्दम्" इति आरम्भे एव ईक्षितृत्वहेतुना ब्रह्मेतरेषां कारणत्वेनाभिमतानां शब्दतात्पर्याविषयत्वं प्रसाधितम्। तावता च शब्दाप्रतिपाद्यत्वे सिद्धे प्रत्यक्षविषयत्वाभावात् प्रधानादीनामनुमानविषयत्वमेव इति अनुमानैकसिद्धत्वात् अनुमानशब्देन प्रधानं परिगृह्यते इत्यनुमीयते। अत एव पूर्वं अनुमानमात्रसिद्धत्वं प्रधानस्य स्पष्टमेवोक्तम् अशब्दत्वकथनेन इति सर्वत्रानुमानशब्देन प्रधानं परिगृह्यते। "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इत्यादौ पुनः प्रत्यक्षशब्दसमभिव्याहाराद् अनुमानं प्रमाणमेवोपस्थाप्यते। यत्र हि केवलमनुमानशब्दः तत्र साङ्ख्याभिमतप्रधानग्रहः इति सम्यग् निश्चेतुं शक्यम्। "स्मर्यमाणमनुमानं स्याद्" इति सूत्रे स्मर्यमाणशब्दसमभिव्याहारात्प्रमाणपरत्वमाश्रितम्।

अपि च यथा पाणिनीयसूत्रेषु अनुवृत्त्यादिना सूत्राक्षरैरेव सूत्रार्थो निरूप्यते तद्वत् एष्वपि सूत्रेषु अर्थो निरूपयितुं शक्यते। तथाहि—"आवृत्तिरसकृदुपदेशात्" इत्यस्य सूत्रस्य भाष्यकारैरेवमर्थः कृतः 'ब्रह्मज्ञानस्यावृत्तिः कर्तव्या कुतः असकृदुपदेशात्। विद्याप्रदेशेषु अनेकधा ब्रह्मविद्यायाः उपदेशात्' अयमर्थः भाष्यकारैः कथं कृत इति चेद्, सूत्राक्षरैरेव लभ्यते। तथाहि—तृतीयाध्यायस्य अन्तिमं सूत्रम् "मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः"। यथा उपासनाफले तारतम्यं विद्यते एवं मुक्तिरूपे फले तारतम्यं न विद्यते, कुतः तदवस्थायाः मुक्त्यवस्थायाः शुद्धब्रह्मरूपायाः अवधृतेः—एकरूपत्वावधारणात् इत्यर्थः। अत्र सूत्रे "तदवस्थावधृतेः"

इति पदं पञ्चम्यन्तं तदेव षष्ठ्यन्तत्वेन उत्तरसूत्रे अनुवर्तितं चेत् अयमर्थो निष्पन्नो भवति 'तदवस्थावधृतेरावृत्तिः कर्तव्या अर्थात् ब्रह्मज्ञानस्यावृत्तिः कर्तव्या असकृदुपदेशात्'। तथा च भाष्यकारैर्योऽर्थो निरूपितः स सूत्राक्षरादेव निर्गतः। तथा "वाङ्मनसि दर्शनात् शब्दाच्च" इति सूत्रं केवलं दृष्ट्वा केषांचित् इयमाशङ्का भविष्यति यत् 'वाङ् मनसि संपद्यते, कुतः दर्शनात्, 'वाङ् मनसि सम्पद्यते' इति शब्दाच्च' इत्येवंरूपो भाष्यकारैः कथमर्थः कृतः। परं सा न युक्ता, यतः तत्पूर्वतनं सूत्रं विद्यते "भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते" इति। तत्रत्यसम्पद्यते इतिपदस्य उत्तरसूत्रे अनुवृत्तौ कृतायां "वाङ् मनसि सम्पद्यते" इति यो भाष्यकारैरर्थो विवृतः स सूत्राक्षरैरेव निर्गत इति ज्ञायते। एवं सूक्ष्मेक्षिकया सर्वेषां सूत्राणां विचारणायां कृतायां भाष्यकारैः कृतोऽर्थः सर्वात्मना सूत्रसङ्गतः, सूत्राक्षरविपरीतोऽर्थलेशोऽपि नास्ति इति स्पष्टं वदितुं शक्यम्। अस्माभिः दिङ्मात्रं प्रदर्शितम्। बुद्धिमद्भिर्विचारेण सर्वमेवमेवोह्यम्।

एतावता मायावादः सूत्राक्षरैरेव सिद्धो न भाष्यकारैः कल्पित इति यत्पूर्वं प्रतिज्ञातं तदवितथं सिद्धं भवति। संप्रति कालमहिम्ना व्याख्याननिरपेक्षैः सूत्रैरेव यथा अर्थावबोधो भवेत् तथा तेषामर्थानामध्यापनाध्ययनपरम्पराया विच्छेदात् भवत्यस्माकं सूत्रार्थे व्यामोहो विप्रतिपत्तिश्च। यदि च पूर्वोक्तरीत्या प्रारम्भात् समाप्तिपर्यन्तं भाष्यमनालम्ब्य उपक्रमादिषड्विधतात्पर्यग्राहकलिङ्गसचिवैः सूत्रैरेव तेषामर्थो विचार्येत तर्हि सूत्रकारस्य कस्मिन्नर्थे तात्पर्यं तथा कथमस्य भाष्यस्य सामञ्जस्यमिति सुस्पष्टं ज्ञायेत। तदास्तां तावत्। तमेनं मायावादं श्रुतिस्मृतिपुराणसूत्रादिसम्मतं बौद्धजैनादितार्किकतर्ककर्दममग्नां श्रुतिमुद्धृत्य स्वव्याख्यानशुद्धसलिलैर्विधूतमलां कुर्वन् श्रुत्यादीनां यथार्थार्थप्रदर्शनपूर्वकं स्फुटीचकार भगवान् भाष्यकारः। न तु नूतनं किञ्चिन्मतं प्रातिष्ठिपत्। तदुक्तं सर्वज्ञात्ममुनिभिः—

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽभूत्॥
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चिताङ्घ्रिम्॥ इति।

यदि हि श्रुतिव्याख्यानं भाष्यकारो नाकरिष्यत् तदा तासां यथार्थार्थो नावागमिष्यत्। अज्ञाते हि श्रुत्यर्थे कथं तत्त्वप्रतिपत्तिः, तत्त्वाप्रतिपत्तौ हि मोक्षाभावः। यद्यपि भगवता बादरायणेन सूत्राणि प्राणायिषत तथापि तानि व्याख्यानसापेक्षत्वात्, पूर्वो-

क्रमेण अध्ययनाऽध्यापनपरिपाटेर्विच्छेदात् द्वैतिभिरन्यथाकृतत्वाच्च 'वेदान्तवाक्यानां कस्मिन्नर्थे तात्पर्यम्' इति मन्दमतिभ्यो मुमुक्षुभ्यो निश्चाययितुमसमर्थानि। अतः श्रुतेर्यथार्थार्थमभिधाय तं न्यायेन निर्णेतुं चतुरध्यायात्मकं शारीरकाभिधं भाष्यं रचयाम्बभूव भाष्यकारः। तदेव भाष्यमवलम्ब्य तत्रोक्ताश्च युक्तीर्नव्यनैयायिकपरिभाषालङ्कारैर्वेषयित्वा अद्वैतसिद्ध्यादयो नानाविधाः ग्रन्थाः जीवब्रह्मैक्यपरा अपि अवान्तरमतभेदभिन्नास्तैस्तैराचार्यैः प्रणीताः। येनाधुना वेदान्तग्रन्था महोदधिवत् सम्पन्नाः। तेषां सर्वेषां मतभेदानामल्पकालेनावगन्तुमशक्यतां नव्यनैयायिकपरिभाषाजटिलत्वेन नव्यन्यायशास्त्रेऽकृतपरिश्रमैः छात्रैरनायासेन बोद्धुमयोग्यताञ्चावलोक्य सर्वेषामुपकाराय परमकृपया स्वयं वेदान्तग्रन्थमहोदधौ निमज्ज्य तत्रस्थरत्नकल्पानि नानाविधानि मतानि एकीकृत्य शास्त्रसिद्धान्तलेशसङ्ग्रहाख्यं सुव्यवस्थितसन्निवेशं ग्रन्थचूडामणिं रचयाम्बभूवुर्विचक्षणचक्रचूडामणिश्रीमदप्पयदीक्षितेन्द्राः, यं किल वयं प्रवृत्ताः सम्प्रति मुद्रयित्वा प्रकाशयितुम्।

यद्यपि वेदान्तसिद्धान्तपरिदर्शका भूयांसो निबन्धा विराजन्ते तथापि सिद्धान्तलेशसङ्ग्रहस्तान् सर्वानपि निबन्धानतिशेते इत्यत्र न केषाञ्चिदपि विप्रतिपत्तिः। अस्मिन् ग्रन्थे श्रीमदाचार्यवाचस्पतिमिश्रविवरणाचार्यसङ्क्षेपशारीरकाचार्यानन्दबोधाचार्यचित्सुखाचार्यविद्यारण्यरामाद्वयाचार्यकल्पतरुकारसुरेश्वराचार्यनृसिंहभट्टोपाध्यायकौमुदीकारवेदान्तसिद्धान्तमुक्तावलीकारप्रभृतीनामाचार्याणां मतानि एवमुपन्यस्तानि यथा तेषां तेषां ग्रन्थानामवलोकने कृतेऽपि याथातथ्येन तत्तन्मतपरिज्ञानं दुःशकमपि एतद्ग्रन्थाध्ययनमात्रेण सुशकं सम्पद्यते। न हि कश्चिदेकः सर्वान् ग्रन्थान् उपक्रमप्रभृति समाप्तिपर्यंतं वाचयित्वा पश्चात् तन्मतमवगन्तुं प्रभवति। यतः तत्तदाचार्यप्रणीतानां ग्रन्थानां शरीरपरिमाणमपि महद् विद्यते। यथा एकस्य भामतीग्रन्थस्यैव सुविस्तृतस्य अध्ययनाय भूयान् काल अपेक्षितः, तदर्थतत्त्वपरिज्ञानाय च सुतरामधिकः काल अपेक्षित इति किमु वक्तव्यम्। एवमेकैकस्य ग्रन्थस्य अध्ययने एव अनेकानि वर्षाणि व्यतीतानि चेत् कथन्तरां सर्वेषां ग्रन्थानां परिशीलनमल्पेन कालेन भवितुमर्हति। बुद्धिमतामपि तत्तन्मतपरिज्ञानमसम्भावितमेव भवति इति कारुण्यात् दीक्षितेन्द्रैरधिगतसकलग्रन्थतत्त्वैर्महता श्रमेण नानाग्रन्थानालोड्य सुविचार्य च नव-

नीतमिव सारभूतं ग्रन्थरत्नं विनिर्मितमिति पण्डितानां छात्राणां स-र्वेषामुपादेयमेतत्। अतः बहुषु स्थलेषु इदानीमस्य ग्रन्थस्य बाहुल्येन प्रचारः सँल्लक्ष्यते। दीक्षितेन्द्रप्रणीतेष्वपि ग्रन्थेषु अयं ग्रन्थ इतरापेक्षयाऽग्रिमस्थानमे-वाधिकरोति। अस्य ग्रन्थस्य विषयप्रतिपादनशैली इतरग्रन्थेभ्योऽत्यन्तं मनो-रमा, यतः प्रायः अस्मिन् ग्रन्थे यानि यानि मतानि उपपादनापेक्षाणि, तेषां तेषां मतानां युक्त्या अनतिविस्तरं पूर्वपूर्वमतापेक्षया उत्तरोत्तरेषु उत्क-र्षप्रतिपादनपूर्वकं सर्वे विषयाः समुपपादिताः।

उपनिषदर्थनिर्णयाय भगवता बादरायणेन प्रणीतायाः शारीरक-मीमांसायाः चतुरध्यायात्मकतया तदुत्तरकालभाविनां प्रायः सर्वेषा-मपि ग्रन्थानां तद्रूपतैव संवृत्ता। यथा प्रथमाध्यायः समन्वयाध्यायः, द्वि-तीयोऽविरोधाध्यायः, तृतीयः साधनाध्यायः, चतुर्थः फलाध्यायः। एवमद्वै-तसिद्धेः चित्सुख्याः खण्डनखण्डखाद्यस्य तत्तदध्यायस्थानीयाश्चत्वारः परिच्छेदाः समुपलभ्यन्ते। तामेव सरणिमनुसृत्य दीक्षितेन्द्रैरपि अस्य ग्रन्थ-स्य चत्वारः परिच्छेदाः कृताः। तत्र प्रथमः परिच्छेदः समन्वयनिरूपण-परः। तत्र श्रवणविधिविचारद्वारा अथातो ब्रह्मजिज्ञासेति प्रथमसूत्रार्थं विचार्य ब्रह्मलक्षणविचारेण द्वितीयसूत्रार्थं निरूप्य प्रथमाध्यायप्रतिपाद्यं सर्ववेदान्तानां प्रत्यगभिन्ने ब्रह्मणि समन्वयं कृत्वा प्रथमाध्यायार्थः सर्वो विवृतः। द्वितीयपरिच्छेदे उक्तसमन्वये प्रत्यक्षादिविरोधमुद्भाव्य श्रुत्या तस्य बाधमभिधाय अविरोधलक्षणद्वितीयाध्यायार्थो विवृतः। तृतीयपरि-च्छेदे ब्रह्मज्ञानसाधनं कर्म उत संन्यासः, तयोश्च सम्बन्धः कीदृशः? इत्यादि-विचारद्वारा तृतीयाध्यायार्थो विवृतः। चतुर्थपरिच्छेदे जीवस्य मुक्त्यव-स्थायां शुद्धचैतन्यात्मनाऽवस्थानमुत ईश्वररूपेण, अविद्यानिवृत्तिपदार्थश्च कः इत्यादिनिरूपणेन चतुर्थाध्यायार्थो निरूपितः। सोऽयं वेदान्तार्थः सर्वेषां दर्शनानां परमतात्पर्यविषयीभूतः स्वल्पैरेवाक्षरैः परिच्छेदचतुष्टयात्मकेन ग्रन्थेन सम्यगुपवर्णितः। अस्मिन् ज्ञाते विचारिते च सति मुमुक्षूणामपि चित्तं समाधी-यते। एतादृशमुपयोगितामुपलभ्य वयं वेदान्तसिद्धान्तसूक्तिसहितमेनं समशो-धयाम। यद्यप्ययं ग्रन्थः पूर्वं वाराणस्यां सव्याख्यस्तद्रहितश्च मुद्रितः, एवं कुम्भकोणादिनगरेष्वपि व्याख्यासनाथः सम्यग् मुद्रितः, परं तस्मिन् ग्रन्थे उपन्यस्तानां तैस्तैराचार्यैरुद्भावितानां वेदान्तिमतानां झटिति अनायासेन बोधे विद्यार्थिनां यादृशमपेक्षितं सौकर्यं तेन प्रकारेण न पूर्वं समभवन्मुद्रणम्

इति अस्माभिः श्रीमत्परहंसपरिव्राजकाचार्यगङ्गाधरेन्द्रसरस्वतीनिर्मितया वेदान्तसिद्धान्तसूक्तिमञ्जर्या सनाथीकृत्य श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थकृतटीकया युतः यथामति संशोध्य मुद्रापितोऽयं ग्रन्थः। इयं हि सूक्तिमञ्जरी एकैकस्मिन् विषये समुपनिबद्धानां नानामतानां सङ्क्षेपेण स्पष्टरूपेण च इतरमतेभ्यो वैलक्षण्यप्रदर्शनपुरःसरं तात्पर्यप्रदर्शनपरा वेदान्तसिद्धान्तमधिजिगमिषूणामन्तेवासिनां कृते अत्यन्तमुपयोगिनी पद्यैरचिता। एतस्या अवलोकनमात्रेणैव सर्वेषां मतानामनायासेन कण्ठस्थीकरणं भवितुमर्हति ।

श्रीमद्गङ्गाधरेन्द्रसरस्वतीन्द्राः द्राविडदेशाभिजना एव इति सम्भाव्यते, एतत्तत्त्वमितिहासनिपुणैरन्यतोऽन्वेषणीयम् ।

दीक्षितेन्द्राणां चरित्रं, तेषां स्थितिकालः, तत्प्रणीता ग्रन्थाः क्रियन्तः, ते कुत्रत्या, कतमत्कुलं जन्मनाऽलङ्चक्रुरित्यादि सर्वं विस्तृतरूपेण कुम्भकोणमुद्रितसिद्धान्तलेशसंग्रहभूमिकायां निरूपितमिति प्राज्ञैस्तत एवावधेयम् ।

तथा सिद्धान्तलेशसङ्ग्रहव्याख्यातॄणां श्रीमत्परमहंसपरिव्राजकानामच्युतकृष्णानन्दसरस्वतीनां चरितादिकमपि तस्यामेव भूमिकायां सुनिरूपितमिति नात्र पुनरुक्तिर्विधीयते ।

अत्रत्यभूमिकास्थविचारसरणेः प्रदर्शनेन अस्मद्गुरुवरैर्महामहोपाध्यायपदव्यलङ्कारभूतैर्द्राविडश्रीलक्ष्मणशास्त्रिमहोदयैः सर्वथैव अनुगृहीतोऽस्मि ।

शोधनकार्ये च अस्मत्सुहृद्भिः व्याकरणोपाध्यायैः शेंडे इत्युपाह्वैः सीतारामशास्त्रिभिः टिप्पण्यादिसूचनया बहूपकृतोऽस्मि ।

किञ्च—

यत्सान्निध्यात् चलन्त्येते जडा बुद्धीन्द्रियासवः ॥
तस्य श्रीयादवेन्द्रस्य न वाच्योपकृतिः कथम् ॥ १ ॥

सुशोधितेऽप्यस्मिन् ग्रन्थे बुद्धिदोषात् सीसकाक्षरयोजकदोषाद्वा जाता अशुद्धीः शुद्धिपत्रेण संशोध्य सफलयन्तु मामकीनं श्रमं विद्वांस इति प्रार्थयते ।

विद्वदनुचरो—
वझे इत्युपनामको—भाऊशास्त्री

# सिद्धान्तलेशस्थविषयसूचीपत्रम् ॥

## प्रथमपरिच्छेदे ।



## द्वितीयपरिच्छेदे ।

सिद्धान्तलेशविषयसूचीपत्रं समाप्तम् ॥

# सिद्धान्तलेशस्य शुद्धिपत्रम् ।

प्रथमपरिच्छेदः

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| १०२ | १२ | ३९ | ९ |
| सर्वसंहर्तृत्वादिकं ब्रह्मालिङ्गतयोपन्यस्तमिति कौमुदीकारः | सर्वसंहर्तृत्वादीकं प्रत्येकं ब्रह्मालिङ्गतयोपन्यस्तमिति कौमुदीकाराः | ४८ | ३ |
| कलाना | कलानां | ६७ | ७ |
| विकरातिरेकेण | विकारातिरेकेण | ७० | २ |
| सत्रेण | सूत्रेण | ७० | ५ |
| प्राक्रिया | प्रक्रियां | ८३ | १० |
| विशेषांशरूपयोस्त्रयन्त्व | विशेषांशरूपयोः स्वयन्त्व | ८६ | २ |
| पराभास | पटाभास | ९२ | ६ |
| व्याहारः | व्यवहारः | १०४ | २७ |
| जीवपदाभासान् | जीवं तदाभासान् | १२५ | २ |
| नष्टा | नष्टां | १३२ | १ |
| आनन्द- | आनन्दै- | २०० | २८ |
| युक्तष्वनेकेषु | युक्तेष्वनेकेषु | २०३ | ५ |
| कारणत्वम | कारणत्वमा | २२० | ७ |
| न चावरण | न त्वावरण | २५३ | ४ |
| करणाज्ञा– | कारणज्ञा | २६१ | ५ |

द्वितीयपरिच्छेदः

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| ऽसंदिग्धवि | ऽसंन्दिग्धावि | २६८ | २ |
| भेदे ज्ञानं | भेदज्ञानं | २६८ | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| मुञ्जात्य | मुञ्जान्य | २७२ | २५ |
| पर्वापच्छेद् | पूर्वापच्छेद | २९९ | ३ |
| प्रथमसञ्ज्ञात | प्रथममसञ्ज्ञात | ३०० | ८ |
| स्वाधिरकणे | स्वाधिकरणे | ३०४ | २६ |
| निषेधस्य | स्वरूपेण निषेधस्य | ३०६ | ५ |
| मथ्सर्यते | समर्थ्यते | ३४३ | ९ |
| नाशत्वम् | नांशत्वम् | ३८९ | ३ |

तृतीयपरिच्छेदः

| | | | |
|---|---|---|---|
| कर्मणा | कर्मणां | ४०८ | १ |
| दाश्रर्मकणाम् | दाश्रमकर्मणाम् | ४०९ | १ |
| श्रमिणा | श्रमिणां | ४११ | २ |
| स्त्वापात्ति | स्त्वापत्ति | ४५४ | ६ |

चतुर्थपरिच्छेदः

| | | | |
|---|---|---|---|
| भूताकाश | भूताकाशः | ५२० | ११ |
| बुभुत्साया | बुभुत्सायां | ५३२ | ४ |

शुद्धिपत्रं समाप्तम् ।

—:०:—

श्रीगणेशाय नमः ।

# वेदान्तसिद्धान्तसूक्तिमञ्जरी ।

---

तरणिशतसवर्णं कर्णघूर्णद्विरेफावलिवलितकपोलोद्दामदानाभिरामम् ।
गिरिशगिरिसुताभ्यां लालितं नित्यमंके स्वजनभरणशीलं शीलये विघ्नराजम् ॥१॥

श्रीमद्गुरुपदांभोजद्वन्द्वमानम्य भक्तितः ॥
सिद्धान्तलेशसिद्धान्तान् कारिकाभिर्निदर्शये ॥ २ ॥
अपूर्वो नियमोऽन्यस्य परिसंख्येति च क्रमात् ॥
त्रयो हि विधयस्तेषु श्रोतव्य इति को विधिः ॥ ३ ॥
तत्रोपायापरिज्ञानादलौकिकसमीक्षणे ॥
प्रकटार्थकृतः प्राहुरपूर्वं श्रवणे विधिम् ॥ ४ ॥
विचारस्य विचार्यार्थनिर्णयं प्रति हेतुता ॥
अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता ॥ ५ ॥
प्राप्तैव, किन्त्वनियता भ्रान्तिः प्राप्ताऽन्यसाधनैः ॥
ततो नियम इत्याहुः सर्वे विवरणानुगाः ॥ ॥ ६ ॥
तथा तदीयाः शब्दस्तु परोक्षज्ञानकृत्पुरा ॥
मननादियुतोऽध्यक्षं कुर्याद्विधुरचित्तवत् ॥ ७ ॥
अन्ये परोक्ष एवात्मज्ञाने नियममास्थिताः ॥
मनसैवेदमाप्तव्यमित्यादिश्रुतिदर्शनात् ॥ ८ ॥
गान्धर्वशास्त्रवत् चित्तसहकारितयेष्यते ॥
आत्मापरोक्षे श्रवणं तत्रैव नियमं परे ॥ ९ ॥
ऊहापोहात्मिका चित्तक्रियैव श्रवणं विधेः ॥
अपरोक्षं परोक्षं वा नामानस्यास्य तत्फलम् ॥ १० ॥
तस्मात्पुंदोषतात्पर्यभ्रान्तिसंस्कारशान्तये ॥
नियमोऽस्येति सङ्क्षेपशारीरककृतो विदुः ॥ ११ ॥
चिकित्साशास्त्रवत्प्राप्तव्यापारान्तरवारिणी ॥
श्रवणे परिसंख्येयमिति वार्त्तिकवेदिनः ॥ १२ ॥

श्रवणं ह्यागमाचार्यवाक्यजं ज्ञानमिष्यते ॥
अयोग्येऽत्र विधिर्नेति वाचस्पतिमतानुगाः ॥ १३ ॥
जगज्जन्मस्थितिलयेष्वेकैकं ब्रह्मलक्षणम् ॥
प्रत्येकं ब्रह्मलिङ्गत्वादित्याहुः कौमुदीकृतः ॥ १४ ॥
उपादानत्वविज्ञत्वकर्तृत्वान्तरनिराक्रिया: ॥
व्युत्क्रमाल्लब्धुमाचख्युरन्ये संवलितं त्रयम् ॥ १५ ॥
तत्रोपादानता विवर्तास्पदता चितः ॥
स्वाभिन्नन्यूनसत्तार्थो विवर्त इति कथ्यते ॥ १६ ॥
अथ शुद्धमुपादानमीश्वरो जीव एव वा ॥
शुद्धं संक्षेपकमते ज्ञेयलक्षणवर्णनात् ॥ १७ ॥
सार्वात्म्यस्येशलिङ्गत्वाद्यः सर्वज्ञ इति श्रुतेः ॥
मायोपहितमीशं तदाहुर्विवरणानुगाः ॥ १८ ॥
ईश्वरो वियदादौ स्याज्जीवेशौ लिङ्गतद्गते ।
मायाऽविद्याभिदावादाः केचिदेवं प्रचक्षते ॥ १९ ॥
लिङ्गादौ जीव एवेति केचित्तत्रैकदेशिनः ॥
महाभूतलयोक्तिस्तु कलानामन्यदृष्टितः ॥ २० ॥
मायाऽविद्यैक्यवादेपि जीवतादात्म्यदर्शनात् ॥
जीव एव हि लिङ्गादेरुपादानमितीतरे ॥ २१ ॥
इष्ट ईश उपादानं सर्वस्मिन्व्यावहारिके ॥
प्रातिभासिककार्ये तु जीव इत्यपरे जगुः ॥ २२ ॥
स्वात्ममोहात्समस्तस्य सेश्वरस्य प्रकल्पकः ॥
स्वप्नवज्जीव एवैको नापरोऽस्तीति केचन ॥ २३ ॥
अहेतुत्वादमायस्य मायाशबलतेष्यते ॥
साऽप्युपादानमेवेति तत्त्वनिर्णयकृन्मतम् ॥ २४ ॥
ब्रह्ममात्रमुपादानं माया तु द्वारकारणम् ॥
मृल्लक्ष्णतावत्संक्षेपशारीरककृतां नये ॥ २५ ॥
ब्रह्मैव जीवाश्रितयाऽविद्यया विषयीकृतम् ॥
वाचस्पतिमते हेतुर्माया तु सहकारिणी ॥ २६ ॥
अपूर्वानपरं ब्रह्म नोपादानं जगत्स्थितेः ।
माया तु मुख्योपादानमिति मुक्तावलीकृतः ॥ २७ ॥
क ईश्वरोऽथ को जीवः प्रकटार्थकृतो विदुः ॥

ईशं मायाचिदाभासं जीवमाविद्यकं च तम् ॥ २८ ॥
अनादिविश्वप्रकृतिर्माया चिन्मात्रसंश्रया ॥
तदेकदेशोऽविद्या तु विक्षेपावरणान्विता ॥ २९ ॥
उक्ता, तत्त्वविवेके तु शुद्धसत्त्वमयी स्फुटा ॥
माया रजस्तमोध्वस्ताऽविद्या शेषं तु पूर्ववत् ॥ ३० ॥
विक्षेपशक्तिप्राधान्यान्मायेशोपाधिरुच्यते ॥
अविद्यावरणोत्कर्षाज्जीवस्येत्यपि कश्चन ॥ ३१ ॥
कार्योपाधिर्भवेज्जीवः कारणोपाधिरीश्वरः ॥
प्रतिबिम्बोऽत्र संक्षेपशारीरककृतां नये ॥ ३२ ॥
घटाभ्रवारिणोर्व्योम्नः प्रतिबिंबाविवात्मनः ॥
बुद्धितद्वासनाभासौ जीवेशौ बुद्ध्युपाधिकः ॥ ३३ ॥
कूटस्थः शुद्धचिद्ब्रह्म चित्रदीपे चतुर्विधम् ॥
कूटस्थे कल्पितो जीवः शुद्धे ब्रह्मणि चेश्वरः ॥
अहं ब्रह्मेति बाधायामैक्यमित्यपि तन्मतम् ॥ ३४ ॥
ब्रह्मानन्दे विराडादिसमष्टिव्यष्ट्युपाधितः ॥
षोढा चिदानन्दमयव्यष्टिर्जीव इतीरितम् ॥ ३५ ॥
शुद्धलिप्ताङ्कितापूर्णवर्णचित्रपटोपमाः ॥
ब्रह्मेशसूत्रवैराजाः पटाभाससमोऽसुभृत् ॥
चित्रदीपे चित्रपटन्यायेनेत्थं निरूपिताः ॥ ३६ ॥
विराट्सूत्राक्षराण्यादौ विभज्य प्रणवाक्षरैः ॥
विलाप्य गौडपादीये तुरीयात्माऽवशेषितः ॥ ३७ ॥
मायाछन्ने चिदाभासः कूटस्थे व्यावहारिकः ॥
तस्मिन्निद्रावृत्ते तादृग्जीवोऽन्यः प्रातिभासिकः ॥ ३८ ॥
जीवस्त्रिधैवं दृग्दृश्यविवेके प्रतिपादितः ॥
इत्येते दर्शिताः पक्षा प्रतिबिंबशवादिनाम् ॥ ३९ ॥
अविद्यायां चिदाभासो जीवो बिंबचिदीश्वरः ॥
स्वातन्त्र्याद्युपपत्तेरित्याहुर्विवरणानुगाः ॥ ४० ॥
घटसंवृतमित्यादि श्रुतियुक्तिसमाश्रयात् ॥
अन्येऽन्तःकरणेनावच्छिन्नं जीवं बभाषिरे ॥ ४१ ॥
कौंतेय इव राधेयो जीवः स्वाविद्यया परः ॥

नाभासो नाप्यवच्छिन्न इत्याहुरपरे बुधाः ॥ ४२ ॥
एको जीव उतानेकस्तत्रानुपदवादिनः ॥
एकं देहं च तस्यैकमन्यत्स्वप्नसमं विदुः ॥ ४३ ॥
सूत्रमेकं परं जीवं तदाभासान्परान्परे ॥
योगीव कायव्यूहेषु जीवोऽन्य इति चापरे ॥ ४४ ॥
बद्धमुक्तव्यवस्थार्थमन्तःकरणभेदतः ॥
जीवभेदं परे प्राहुर्व्यवस्था चात्र कीदृशी ॥ ४५ ॥
प्रतिजीवमविद्यांशा भिन्ना ब्रह्मावृतिक्षमाः ॥
तन्नाशक्रमतो मुक्तिव्यवस्था कैश्चिदीर्यते ॥ ४६ ॥
आत्मन्यविद्यासंसर्गो हृदयग्रन्थिसंश्रयः ॥
तद्भेदात्तदसंसर्गः क्रमान्मुक्तिक्रमः परैः ॥ ४७ ॥
जातिर्व्यक्तिमिव ध्वस्तां स्वात्मज्ञं यज्जहाति सा ॥
जीवं जीवाश्रिताऽविद्या मुक्तिः सेत्यपि चापरैः ॥ ४८ ॥
प्रतिजीवमविद्याया भेदमाश्रित्य चेतरे ॥
तद्विनाशक्रमान्मुक्तिव्यवस्थां सम्प्रचक्षते ॥ ४९ ॥
प्रातिभासिकरूप्यादेः प्रकृतिर्जीवसंश्रया ॥
अविशेषेण सर्वेषामविद्यातः प्रवर्तते ॥
प्रपञ्चोऽस्मिन्नैकतन्त्वारब्धः पक्षे पटो यथा ॥ ५० ॥
प्रत्यविद्यं प्रपञ्चस्य भेदं न्यायनये यथा ॥
अपेक्षाबुद्धिजद्वित्वं शुक्तिरूप्यं च भिद्यते ॥ ५१ ॥
अविद्येशाश्रया माया विश्वस्येत्यपरे जगुः ॥ ५२ ॥
ईशस्य कर्तृता कीदृक् तत्र केचित्प्रचक्षते ॥
कार्यानुकूलविज्ञानचिकीर्षाकृतितेति ताम् ॥ ५३ ॥
कार्यानुकूलविज्ञानमात्रं सा नेतरे तयोः ॥
कार्यत्वेनानवस्थानादिति चान्ये प्रचक्षते ॥ ५४ ॥
एवं जीवोऽपि कर्त्ता स्याज्जगतः स्वप्नजस्य च ॥
ततः सृष्ट्यनुकूलार्थालोचनैवेति चापरे ॥ ५५ ॥
जगत्कर्तृत्वसंसिद्धं सर्वज्ञत्वं समर्थितम् ॥
ईशस्य शास्त्रयोनित्वाच्च कीदृग्विधं भवेत् ॥ ५६ ॥
तत्र सर्वार्थविषयसर्वधीवासनोपधः ॥

साक्षित्वाद्भारतीतीर्थमते सार्वज्ञ्यमीरितम् ॥ ५७ ॥
चिच्छायाग्राहिभिर्मायावृत्तिभेदैस्तदीशितुः ॥
त्रैकालिकेष्वापरोक्ष्यं प्रकटार्थकृतो विदुः ॥ ५८ ॥
तत्त्वशुद्धिकृतो भूते स्मृतिं भाविनि तूहनम् ॥
सदा सर्वस्य सत्त्वात्तु साक्षिणा कौमुदीकृतः ॥ ५९ ॥
सार्वज्ञ्ये ज्ञानरूपत्वमिष्टं न ज्ञानकर्तृता ॥
भाष्येऽस्य जीवलिङ्गत्वकीर्त्तनादिति ते विदुः ॥ ६० ॥
दृश्यावच्छिन्नरूपेण चितः कार्यत्वसम्भवात् ॥
सार्वज्ञ्यं ज्ञानकर्तृत्वं वाचस्पतिमते स्थितम् ॥ ६१ ॥
बुद्धौ संसृज्यते जीवः सर्वगो व्यक्तिजातिवत् ॥
अन्यैस्तद्वृत्त्युपारूढो ज्ञाता विवरणे स्थितः ॥ ६२ ॥
यद्वाऽन्तःकरणोपाधिर्जीवो वृत्त्या बहिर्गतः ॥
विषयब्रह्मचैतन्याभेदव्यक्त्याऽर्थभासकः ॥ ६३ ॥
अथवा सर्वगोऽविद्यावृतोऽसौ न प्रकाशते ॥
बुद्धावनावृतो वृत्तिभग्नवारणभासकः ॥ ६४ ॥
वृत्तेश्चिदुपरागो वा अभेदव्यक्तिरेव वा ॥
फलमावृतिभङ्गो वा तत्राद्यं कीदृशं भवेत् ॥ ६५ ॥
नैयायिकादिवत्केचिद्विषयत्वं स्वभावतः ॥
वृत्तिनिर्गमवैयर्थ्यादन्ये तद्द्वारसङ्गमम् ॥ ६६ ॥
तरङ्गतरुसंस्पर्शान्नदीस्पर्शी तराविव ॥
विषये वृत्तिसंसर्गाज्जीवसङ्गं परे विदुः ॥ ६७ ॥
द्वितीयपक्षे जीवस्यासर्वगत्वादसङ्करात् ॥
विषयब्रह्मचैतन्याभेदव्यक्त्यैव तं परे ॥ ६८ ॥
अथ द्वितीये काऽभेदव्यक्तिस्तत्रापि केचन ॥
कुल्याद्वारेव सा वृत्त्या क्षेत्रकासारवारिणोः ॥ ६९ ॥
सत्युपाधौ दृढं विम्बप्रतिविंबभिदास्थितेः ॥
वृत्त्यग्रे विषयस्फूर्त्त्या भासार्पणमितीतरे ॥ ७० ॥
विम्बत्वयुक्तं ब्राह्मं स्याज्जैवं तदुपलक्षितम् ॥
वृत्तौ विषयचैतन्यं तदभेदं च तां परे ॥ ७१ ॥
अथावरणभङ्गोऽपि तृतीये कीदृशो मतः ॥

मोहनाशः स चेदिष्टो मोक्षः स्याद्धट्टवेदनात् ॥ ७२ ॥
खद्योतेनेव तमसश्छिद्रं केचित्प्रचक्षते ॥
कटवद्वेष्टनं भीतभटवद्वा पलायनम् ॥ ७३ ॥
पुनः कंदलनादन्येऽनावृत्तिं वृत्त्यनेहसम् ॥
अज्ञोऽहमिति विज्ञानात्स्वाश्रितेनाप्यनावृतिम् ॥ ७४ ॥
वृत्तिनाश्यं परे वृत्तिसमसंख्यं प्रचक्षते ॥
अवस्थाज्ञानमज्ञानं नष्टमित्यनुभूतितः ॥ ७५ ॥
केचिदूचुरनादीदं मूलाज्ञानमिवेतरे ॥
सादिनिद्रादिवत्तत्रानादित्वे कस्य नाश्यता ॥ ७६ ॥
अत्र केचित्स्वभावेन व्यवस्था प्रागभाववत् ॥
सत्स्वप्यावरकेष्वर्थप्रकाशं च प्रचक्षते ॥ ७७ ॥
विशेषदर्शनाभावकूटात्संशयसम्भवात् ॥
आवृतस्याप्रकाशाच्च पर्यायेणावृत्तिं परे ॥ ७८ ॥
नचानावरकाज्ञानशेषो मुक्तौ प्रसज्यते ॥
मूलाज्ञानच्छिदा छेद्यास्तदवस्था इमा यतः ॥ ७९ ॥
अन्ये त्वेकस्य विच्छेदमितरेषां पराभवम् ॥
तं चावरणशक्तीनां प्रतिबन्धं प्रचक्षते ॥ ८० ॥
तत्र धारावहज्ञानेष्वाद्येनैव पराभवात् ॥
अज्ञानानां द्वितीयादेः साफल्यं कथमुच्यते ॥ ८१ ॥
अत्राहुर्दीपधारेव तिरस्कृत्य तमः स्थिता ॥
वृत्तिधारेत्यनावारो वृत्तीनां क्षेमतः फलम् ॥ ८२ ॥
पर्यायेणावृतिर्न्यायचन्द्रिकाकृद्भिरीरिता ॥
अर्थस्य मोहैर्बोधेन स्वकालावरणक्षतिः ॥ ८३ ॥
केचिदाहुर्घटाज्ञानमाद्यज्ञानेन हन्यते ॥
द्वितीयाद्यैस्तु कालादिविशिष्टाज्ञानबाधनम् ॥ ८४ ॥
वृत्तिश्चिरस्थितैकैव स्याद्धारावाहिकस्थले ॥
भिन्ना वा वृत्तयः सन्तु स्थूलकालार्थगोचराः ॥ ८५ ॥
उपास्तिवदमानानि सन्तु वाऽनाद्यवृत्तयः ॥
गृहीतग्रहणात्सूक्ष्मकालस्यातीन्द्रियत्वतः ॥ ८६ ॥
ननु नाज्ञानविच्छित्तिः परोक्षज्ञानतस्ततः ॥

भ्रान्तिजिज्ञासयोर्दृष्टेरत्र केचित्समादधुः ॥ ८७ ॥
द्विविधं विषयाज्ञानं साक्षिविक्षेपसङ्गतेः ॥
अर्थगं पौरुषं चेति परोक्षात्पौरुषक्षयः ॥ ८८ ॥
अन्ये पौरुषमज्ञानमाहुः शक्तिद्वयाश्रयम् ॥
परोक्षज्ञानतस्तत्रावरणांशपरिक्षयम् ॥ ८९ ॥
विषयस्थं परे मोहं मूलाज्ञानांशरूपकम् ॥
अंशांशिनोरभेदाच्च साक्षिणा तस्य सङ्गतिम् ॥ ९० ॥
सुखादिगोचरा वृत्तिर्ननु नाज्ञानघातिनी ॥
मैवं मोहसुखादीनां साक्षिवेद्यत्वानिर्णयात् ॥ ९१ ॥
कः साक्षी तत्र कूटस्थदीपे कूटस्थचित्स्वयम् ॥
स्वाध्यस्तदेहयुग्मादेः साक्षीति प्रतिपादितः ॥ ९२ ॥
उक्तो नाटकदीपेऽसौ नृत्यशालास्थदीपवत् ॥
नेशो जीवोऽप्यसौ तत्त्वदीपे ब्रह्मेति वर्णनात् ॥ ९३ ॥
ईशस्य रूपभेदोऽसौ कारणत्वादिवर्जितः ॥
जीवांतरङ्गः कौमुद्यां प्राज्ञाख्यः परिकीर्त्तितः ॥ ९४ ॥
शुक्तीदमंशवदसौ तत्त्वशुद्धौ च वर्णितः ॥
अज्ञानोपहितः कैश्चिल्लिङ्गैरुपहितः परैः ॥ ९५ ॥
अविद्ययाऽऽवृतः साक्षी तेनान्यस्य प्रथा कथम् ॥
अत्राहूराहुवत्केचित्तस्य स्वावृतभास्यताम् ॥ ९६ ॥
अविद्याबुद्धितद्धर्मभासकांशेतरावृतिः ॥
कल्प्यते वस्तुतस्तेषु संशयादेरदर्शनात् ॥ ९७ ॥
स्याच्चेदनावृतः साक्षी भासेतास्य सुखात्मता ॥
प्रेमास्पदत्वाद्भात्येव परिच्छेदादतृप्तता ॥ ९८ ॥
साक्षिण्युपाधिमालिन्यादध्यस्तादपकर्षतः ॥
सुखापकर्षमद्वैतविद्याचार्याः प्रचक्षते ॥ ९९ ॥
सुखांशोऽस्यावृतो नास्ति न भातीत्यनुभूतितः ॥
चिदंशोऽनावृतो वृत्त्या सौख्यव्यक्तिरितीतरे ॥ १०० ॥
अहंकारादिनः साक्षिभास्यस्य स्मरणं कथम् ॥
सूक्ष्मावस्था हि संस्कारो वृत्तीनां स्यान्न साक्षिणः ॥ १०१ ॥
शृणु यद्वस्त्ववच्छिन्नसाक्षिणा यत्प्रकाश्यते ॥

तत्संस्कारं हि सा धत्ते न त्वाकारव्यवस्थया ॥ १०२ ॥
अन्ये तु विषयाकारवृत्तिस्थानित्यसाक्षिणा ॥
त्रिपुटीभासिनाऽऽधानात्संस्कारस्य स्मृतिं जगुः ॥ १०३ ॥
अन्ये त्वविद्यावृत्त्यैव सौषुप्तस्मृतिक्लृप्तया ॥
अहंकरादिभानेन संस्कारं संप्रचक्षते ॥ १०४ ॥
उपास्तिवन्मनोवृत्तिरियं न ज्ञानमिष्यते ॥
प्रत्यभिज्ञास्मृतिज्ञानं तत्तांश इति चापरे ॥ १०५ ॥
इतरे ज्ञानमेवेयं मनसोऽपीन्द्रियत्वतः ॥
बाह्यार्थेष्वेव वृत्तीनामावृत्त्यभिभवः फलम् ॥ १०६ ॥
शुक्त्यादौ नन्विदंवृत्त्याऽऽवरणाभिभवो नहि ॥
रूप्याध्यासाद्यसंसिद्धेरत्र केचित्प्रचक्षते ॥ १०७ ॥
इदमाकारवृत्त्येदमंशे मोहक्षितावपि ॥
शुक्त्याद्यंशेऽक्षितत्वेन रजताद्युद्भवस्ततः ॥ १०८ ॥
अत एव स्फुरन् भ्रान्तावाधार इदमंशकः ॥
शुक्त्याद्यंशस्त्वधिष्ठानं सकार्याज्ञानगोचरः ॥ १०९ ॥
अन्ये वृत्त्येदमज्ञानावरणांशपरिक्षयात् ॥
विक्षेपांशेन रजतं जीवन्मुक्तौ जगद्यथा ॥ ११० ॥
नृसिंहभट्टोपाध्यायः पूर्वं रजतविभ्रमात् ॥
न मानमिदमाकारवृत्ताविति समभ्यधात् ॥ १११ ॥
अन्ये त्वेकैव सामान्यवृत्तिर्वा भ्रांतिकारणम् ॥
तत्साक्षिभास्यमध्यस्तमलं वृत्त्येति मेनिरे ॥ ११२ ॥
वृत्तिरेकेदमाकारा सामान्यज्ञानरूपिणी ॥
इदं रजततादात्म्यगोचराऽन्येति केचन ॥ ११३ ॥
इदं तद्वृत्त्यवच्छिन्नाचिन्मोहौ तत्तदन्विते ॥
युगपद्रूप्यतद्वृत्ती कुर्वाते इति चापरे ॥ ११४ ॥
ननु हेतुनियम्यत्वात्परोक्षत्वापरोक्षयोः ॥
वृत्तेर्निर्गमनं व्यर्थमत्र केचित्समादधुः ॥ ११५ ॥
अर्थेष्वाश्रयवृत्तिस्थचिद्भास्येष्वापरोक्ष्यतः ॥
कल्प्यते निर्गमो वृत्तेः परोक्षेऽगतिकल्पना ॥ ११६ ॥
साक्षात्प्रमातृसम्पर्के सुखादेरापरोक्ष्यतः ॥

अन्यत्रापि तथेत्याहुर्वृत्तेर्निर्गमनात्परे ॥ ११७ ॥
इतरे स्पष्टताहेतुमाचख्युर्वृत्तिनिर्गमम् ॥
न चानुमितमाधुर्यं स्पष्टमास्वादितं यथा ॥ ११८ ॥
नन्वावरणविच्छेदः स्पष्टता तामनिर्गता ॥
करोतु तुल्यविषयतत्तदज्ञानभेदिनी ॥ ११९ ॥
मैवं परोक्षवृत्त्याऽपि मोहोच्छेदप्रसङ्गतः ॥
आपरोक्ष्यं तु नो जातिरांशिकत्वाच्च सङ्करात् ॥ १२० ॥
अन्ये विषयसंमोहभेदनाय तमास्थिताः ॥
परे चिदुपरागार्थमभेदव्यक्तयेऽपरे ॥ १२१ ॥
अभेदो जीवपरयोः सिद्धो वेदान्तमानकः ॥
यतोऽत्र सर्ववेदांतास्तात्पर्येण समन्वियुः ॥ १२२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्येण गङ्गाधरसरस्वत्याख्यभिक्षुणा विरचितायां वेदान्तसिद्धान्तसूक्तिमञ्जर्यां प्रथमः परिच्छेदः सम्पूर्णः ॥

---

## द्वितीयः परिच्छेदः ।

ननूपजीव्यप्रत्यक्षविरुद्धश्रुतियुक्तिभिः ॥
बोध्यते कथमद्वैतं तत्त्वशुद्धिकृतो विदुः ॥ १ ॥
शुक्तीदंतेव सन्मात्रं सर्वाध्यक्षेषु गोचरः ॥
रूप्यवद् घटभेदादिर्भ्रान्तेरित्यविरुद्धता ॥ २ ॥
ब्रह्मसत्तानुविद्धं हि विश्वमिन्द्रियगोचरः ॥
स्वतो नेत्यविरुद्धत्वमाहुर्न्यायसुधाकृतः ॥ ३ ॥
जडेष्वावरणायोगाच्चक्षुरादेर्न तात्त्विकी ॥
मानतेत्यविरुद्धत्वं संक्षेपाचार्यदर्शने ॥ ४ ॥
जातिकालादिकं सत्त्वमिष्टमध्यक्षगोचरः ॥
नाहि तच्छ्रौतमिथ्यात्वविरुद्धमिति केचन ॥ ५ ॥
अथावज्ज्ञानबाध्यत्वमबाध्यत्वमिति द्विधा ॥
सत्त्वयोर्भेदमाश्रित्याविरोधमितरे जगुः ॥ ६ ॥
प्रत्यक्षं बाध्यमाचख्युरपच्छेदनयात्परे ॥
यतः शंकितदोषं तन्निर्दोषा बाधते श्रुतिः ॥ ७ ॥
ननु सोमपदेनैव भवेन्मत्वर्थलक्षणा ॥
प्रस्तरो यजमानः स्यादत्राहुर्भामतीकृतः ॥ ८ ॥
मानांतराद्बलवती श्रुतिस्तात्पर्यगोचरे ॥
अन्यत्र त्वविरुद्धार्थे देवताविग्रहादिके ॥ ९ ॥
कथंचिद्विषयप्राप्त्या मानांतरसमर्थने ॥
श्रुतिर्बलीयसी नोचेद्विपरीतं बलाबलम् ॥ १० ॥
अथवा कृष्णलेऽशक्तेर्लक्षणा श्रपयेदिति ॥
व्यावस्थेत्थं विवरणवार्त्तिके समुदीरिता ॥ ११ ॥
ननूपक्रमवत्पूर्वं प्रत्यक्षं बलवच्छ्रुतेः ॥
नैक्यवाक्येष्विदंबाधस्त्वपच्छेदनयादिह ॥ १२ ॥
ननूपजीव्यप्रत्यक्षविरुद्धेऽर्थे श्रुतेः कथम् ॥
मानत्वं युक्तमिति चेदत्र केचित्प्रचक्षते ॥ १३ ॥
न पदज्ञानमानत्वनियता शाब्दमानता ॥
ऋषभादिपदे भ्रान्त्या न्यूनाधिक्येऽपि दर्शनात् ॥ १४ ॥

असद्विलक्षणं रूपमुपजीव्यं न तात्त्विकम् ॥
त्वचानिर्वचनीयार्थेष्वविरुद्धमितीतरे ॥ १५ ॥
पारमार्थिकसत्त्वं नेह नानेति नुच्यते ॥
व्यावहारिकसत्यत्वं न निषिद्धमितीतरे ॥ १६ ॥
अन्येऽविवेकादेकैव ब्रह्मसत्ता घटादिषु ॥
असन्निकृष्टे ह्यध्यासोऽन्यत्र संसर्गकल्पनम् ॥ १७ ॥
नन्वेवं स्वमुखं स्वस्यासन्निकृष्टमितीतरत् ॥
दर्पणेऽध्यस्तनाऽऽपन्नं प्रतिबिम्बं मृषेति चेत् ॥ १८ ॥
दर्पणादिपरावृत्तैर्निजैर्नयनरश्मिभिः ॥
सन्निकृष्टं मुखं तत्रोपाध्यंतःस्थितिविभ्रमः ॥ १९ ॥
न दर्पणे मुखाध्यासः संस्कारादेरसम्भवात् ॥
ममेदमिति भानाच्चेत्याहुर्विवरणानुगाः ॥ २० ॥
अद्वैतविद्याचार्यास्तु पार्श्वस्थैर्भेददर्शनात् ॥
ग्रीवास्थादन्यदध्यस्तं प्रतिबिम्बमुखं विदुः ॥ २१ ॥
सामान्यतोऽपि संस्कारो विशेषारोपकारणम् ॥
स्वप्ने तथैव वाच्यत्वादिह बिम्बानुसारिता ॥ २२ ॥
न छाया नापि वस्त्वन्यत्प्रतिबिम्बमसम्भवात् ॥
नन्वध्यासोऽप्ययुक्तोऽस्योपादानाज्ञानसंक्षयात् ॥ २३ ।
अत्र केचिदविद्याऽत्रावरणांशे विनश्यति ॥
विक्षेपांशे तु बिम्बादिप्रतिबद्धाऽस्य कारणम् ॥ २४ ॥
मूलाविद्याऽथवा हेतुर्विक्षेपांशेन संस्थिता ॥
बिम्बादिदोषजन्यत्वान्मिथ्येत्यन्ये प्रचक्षते ॥ २५ ॥
बिम्बापसरणाध्यक्षाद्विक्षेपांशस्य बाधनम् ॥
विरोधादथवा ब्रह्मज्ञानेनैवास्य बाधनम् ॥ २६ ॥
सुषुप्त्याख्यं तमोऽज्ञानं तद्बीजं स्वप्नबोधयोः ॥
इत्याचार्योक्तितः स्वाप्नाध्यासोऽप्येवं प्रतीयताम् ॥ २७ ॥
जाग्रत्प्रबोधबाध्यत्वमन्ये स्वप्नस्य मन्वते ॥
दंडभ्रांतेरहिभ्रांत्या दृढयेवात्र बाधनम् ॥ २८ ॥
व्यावहारिकमावृत्त्य जीवं निद्रा तमोमयी ॥
स्वाप्नमाविष्करोत्यर्थं बाध्यं प्राग्जीवबोधतः ॥ २९ ॥

नन्वहंकृत्यवच्छिन्ने ऽनवच्छिन्ने च नोचितः ॥
स्वाप्नाध्यासोऽनहंभावाच्चक्षुराद्यनपेक्षणात् ॥ ३० ॥
अत्र द्वितीय आचख्युः केचिद्देहांतरेव तम् ॥
स्वप्नधीवृत्त्यभिव्यक्तशुद्धचैतन्यसंश्रयम् ॥ ३१ ॥
अन्येऽनहमवच्छिन्नाविद्याविवितचिद्गतम् ॥
तद्भास्यं तदधिष्ठानवृत्त्या गातारि तत्प्रथाम् ॥ ३२ ॥
आद्येऽहंकृत्युपहितचिदाभासास्पदं परे ॥
अहंताधीप्रसक्तिस्तु नाहंकारविशेषणात् ॥ ३३ ॥
इदंवृत्तिचिदाभासे इत्थं रजतकल्पनात् ॥
नाहं रजतधीस्तद्वदनन्यनरवेद्यता ॥ ३४ ॥
अन्ये तु बिंबचैतन्ये रजताध्यासवादिनः ॥
प्राहुस्तत्तदविद्योत्थं तत्तत्पुरुषगोचरम् ॥ ३५ ॥
नन्वस्तु रजताध्यासे कथंचिच्चाक्षुषत्वधीः ॥
कथं स्वाप्नगजज्ञाने तस्याः साधु समर्थनम् ॥ ३६ ॥
स्वानां विरागादग्राह्यप्रातिभासिकनिह्नवात् ॥
स्वयंज्योतिष्ट्ववादाच्च न स्वाप्नेन्द्रियकल्पना ॥ ३७ ॥
अत्राहुरत एवात्र चाक्षुषत्वादिधीर्भ्रमः ॥
अन्वयव्यतिरेकादिकल्पनाऽप्यक्षिकल्पना ॥ ३८ ॥
असंगावितसाहस्रदर्शनात्स्वप्नदर्शने ॥
इत्थमेव हि शुक्त्यादौ रूप्याद्यध्यक्ष्यधीगतिः ॥ ३९ ॥
दृष्टिसृष्टिविदस्त्वाहुर्गतिं जाग्रद्धियोऽप्यमुम् ॥
अर्थसृष्टेः पुराऽर्थेषु सन्निकर्षाद्यसंभवात् ॥ ४० ॥
निरुपाधिरथान्यो वा कल्पकः प्रथमे भवेत् ॥
मुक्तस्य संसृतिः को वा द्वितीये मोहकल्पकः ॥ ४१ ॥
अत्राहुः पूर्वसंकल्प्तमोहयुक्तोऽन्यकल्पकः ॥
अविद्याव्यतिरिक्ते वा दृष्टिसृष्टिरितीतरे ॥ ४२ ॥
नन्वेवं श्रौतसर्गस्य कल्पकः को न कश्चन ॥
अध्यारोप्यापवादो हि निष्प्रपञ्चप्रसिद्धये ॥ ४३ ॥
सूत्रेषु सृष्टिचिन्ता तु कृत्वाचिन्ताप्रदर्शनम् ॥
स्वाप्नवत्फलसंवादः शुद्धिर्वा कर्मणां फलम् ॥ ४४ ॥

दृष्टिरेव हि विश्वस्य सृष्टिरित्यपरा विधा ॥
ज्ञानस्वरूपमेवाहुरित्येतत्स्मृतियानिकाः ॥ ४५ ॥
सृष्टदृष्टिं परे प्राहुः संस्काराद्यनपेक्षणात् ॥
तथापि विश्वं मिथ्यैव बाध्यत्वाच्छ्रुतिमानतः ॥ ४६ ॥
अहङ्कारादिमिथ्यात्वं नन्वेवं संप्रसिद्ध्यति ॥
तदध्यासाय टीकादौ व्यर्था कारणकल्पना ॥ ४७ ॥
अत्राहुः साक्षिवेद्यत्वादहङ्कारस्पृहादिकम् ॥
प्रातिभासिकमेवेति चित्सुखाचार्ययोगिनः ॥ ४८ ॥
चैतन्यस्याप्रमाणस्य प्रमाणत्वेन कीर्त्तनात् ॥
तं तु रामाद्वयाचार्याः प्रौढिवादं प्रचक्षते ॥ ४९ ॥
ननु प्रपञ्चो मिथ्या चेत्कथमर्थक्रियाक्षमः ॥
केचित्स्वप्नवदत्राहुः समसत्ताकतत्क्रियाम् ॥ ५० ॥
स्वप्नोत्थभयकंपादेर्जागरेऽप्यनुवर्त्तनात् ॥
अद्वैतविद्याचार्याणां समसत्ता न संमता ॥ ५१ ॥
अन्तर्बाह्यपुमध्यस्ततमसोऽर्थक्रियेक्षणात् ॥
दीपादिजाड्यतादृष्टेर्युक्तमेतदितीतरे ॥ ५२ ॥
अन्ये तु हेतुसत्यत्वापेक्षा नार्थक्रियां प्रति ॥
मरीचितोये तोयत्वजात्यभावान्न तत्क्रिया ॥ ५३ ॥
अन्ये तु जातिरस्त्येव काचिदर्थक्रियाऽपि च ॥
हेतूच्छेदेन बाधेनानध्यासेन च नाखिला ॥ ५४ ॥
ननु मिथ्यात्वसत्यत्वे ब्रह्मैक्यश्रुतिपीडनम् ॥
तन्मिथ्यात्वे तु विश्वस्य सत्यत्वं केन वार्यते ॥ ५५ ॥
सत्यमत्रोक्तमद्वैतदीपिकायां विरोधिनीम् ॥
स्वधर्म्यन्यूनसत्ताकं मिथ्यात्वं सत्यतां हरेत् ॥ ५६ ॥
स्वधर्मीक्षाऽक्षतो धर्मः स्वविरुद्धहरोऽथवा ॥
शाब्दप्रामाण्ययोग्यत्वसत्त्वं लौकिकमप्यलम् ॥ ५७ ॥
न जीवैः सद्वितीयत्वं ब्रह्मणस्तदभेदतः ॥
तेषां च भोगसाङ्कर्यं वारणीयमुपाधिभिः ॥ ५८ ॥
नन्वन्यभेदादन्यस्य कथं साङ्कर्यवारणम् ॥
अत्राहुर्नान्यताऽसङ्गे भोक्तृतादात्म्यकल्पनात् ॥ ५९ ॥

अन्ये भोक्ता चिदाभासः कूटस्थैक्येन कल्पितः ॥
अतो न भिन्नगामित्वमित्याहुर्बन्धमोक्षयोः ॥ ६० ॥
अन्ये विशिष्टो भोक्ताऽत्र संशुद्धो मुक्तिसङ्गतः ॥
आत्मेन्द्रियमनोयुक्तमित्यादिश्रुतिदर्शनात् ॥ ६१ ॥
परे कर्तृमनःसङ्गाद्भोक्तृताऽन्या प्रकल्प्यते ॥
स्फटिकेऽपि लौहित्यं श्रोत्रवत्तद्व्यवस्थितिः ॥ ६२ ॥
एके त्वनाश्रयोपाधिभेदभेदप्रकल्पनम् ॥
प्रतिबिम्बेष्विवोपाधिधर्माध्यासव्यवस्थितिः ॥ ६३ ॥
क उपाधिरिह प्राहुर्भोगायतनभिन्नताम् ॥
अन्ये विश्लिष्टतद्भेदं भोगासाङ्कर्यकारणम् ॥ ६४ ॥
देहभेदं परे प्राहुर्बाल्यादिषु न तद्भिदा ॥
माययाऽपचयी देहो दीपवन्नैव चाणुभिः ॥ ६५ ॥
लिङ्गभेदं परेऽविद्याभेदमन्ये प्रचक्षते ॥
अदृष्टानियमादिभ्यः कारणादेर्व्यवस्थितिः ॥ ६६ ॥
एवमण्वात्मवादेऽपि भोगश्लेषो प्रसज्यते ॥
तथाऽन्ये बहवो दोषा विद्वद्भिः संप्रदर्शिताः ॥ ६७ ॥
तस्मात्प्रपञ्चमिथ्यात्वात्पराभेदाच्च देहिनः ॥
मानांतराऽविरोधेन सिद्धोऽद्वैते समन्वयः ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्येण गङ्गाधरसरस्वत्याख्यभिक्षुणा विरचितायां वेदांतसिद्धांतसूक्तिमंजर्यां द्वितीयः परिच्छेदः सम्पूर्णः ॥

## तृतीयः परिच्छेदः ।

ज्ञानेनैव कथं मुक्तिः कर्मभिश्चापि तत्स्मृतेः ॥
नाविद्यकत्वाद् बंधस्य नान्यः पंथा इति श्रुतेः ॥ १ ॥
कर्मणामुपयोगस्तु भामतीकृन्मते स्थितः ॥
तमेतमितिवाक्येन मुख्ये विविदिषोद्भवे ॥ २ ॥
स्वर्गवत्काम्यमाने तं ज्ञाने विरणानुगाः ॥
जिज्ञासितव्यं श्रुतिभिर्ब्रह्मेत्यत्र श्रुतेरिव ॥ ३ ॥
तत्रोपयोगः कथितः कैश्चिदाश्रमकर्मणाम् ॥
परैस्तु वैधुरादीनामपि कल्पतरूक्तितः ॥ ४ ॥
तत्र क्लृप्तफलत्वेन नित्यानामेव कैश्चन ॥
काम्यानामपि सङ्क्षेपशारीरककृतां नये ॥ ५ ॥
नचोपकारसंक्लृप्तिकालं वाक्यं प्रतीक्षते ॥
प्राप्तेर्वचनवैयर्थ्यं द्वारभेदेऽविशिष्टता ॥ ६ ॥
ब्राह्मणग्रहणं चात्र त्रैवर्णिकनिदर्शनम् ॥
वार्त्तिकोक्तेस्तथोद्देश्यगतत्वेनाविवक्षणात् ॥ ७ ॥
वैदिकत्वात्तु विद्यायाः शूद्रस्यानधिकारिता ॥
केचित्पौराणिके ज्ञाने तस्याप्याहुरधिक्रियाम् ॥ ८ ॥
संन्यासस्यात्र किं द्वारेणोपयोगोऽत्र केचन ॥
कर्माविनाश्यदुरितनाशद्वारेति चक्षते ॥ ९ ॥
अन्ये त्वदृष्टद्वारेण श्रवणेऽस्याङ्गतां जगुः ॥
दृष्टेन निर्विक्षेपेण नियमं त्वितरे बुधाः १० ॥
क्षत्रियादेरसंन्यासाच्छ्रवणादि कथं भवेत् ॥
तत्र केचन संन्यासमाहुःक्षत्रियवैश्ययोः ॥ ११ ॥
अन्ये तु ब्राह्मणस्यैव संन्यासो बहुधा श्रुतेः ॥
देवादिवदसंन्यासश्रवणं क्षत्रवैश्ययोः ॥ १२ ॥
ब्रह्मसंस्थश्रुतेर्न्यासी मुख्यः श्रवणविद्ययोः ॥
क्षत्रियादेरनुमतिं जन्मांतरफलां परे ॥ १३ ॥
श्रवणं नन्वसंन्यासं जन्मांतरफलं कथम् ॥
दृष्टार्थत्वाददृष्टस्यासांगत्वेनाप्यसम्भवात् ॥ १४ ॥

उच्यते यज्ञजादृष्टजातमेतत्फलावधि ॥
उत्पाद्य तेन निर्वाह्यमिति न द्वारकल्पना ॥ १५ ॥
आचार्याश्चैवमेवाहुरादोषपरिसङ्क्षयात् ॥
आवृत्तं नियमादृष्टं निष्पाद्य फलदं यतः १६ ॥
कृच्छ्राशीतिफलस्मृत्या ऽऽधानवत्कर्तृसंस्कृतेः ॥
तद्द्वारा श्रवणं केचिज्जन्मांतरफलं जगुः ॥ १७ ॥
श्रवणादेरिव ज्ञानसाधनत्वं समर्थितम् ॥
प्रमाणैर्भारतीतीर्थैर्निर्गुणोपास्तिकर्मणः ॥ १८ ॥
ननु किं करणं ब्रह्मसाक्षात्कारेऽत्र केचन ॥
प्रत्ययावृत्तिमाचख्युः सांख्ये योगे च सम्भवात् ॥ १९ ॥
अन्ये तु मन एवाहुरेनां तत्सहकारिणीम् ॥
महावाक्यं परे प्राहुर्मनसः प्रतिषेधतः ॥ २० ॥
मानांतरस्याप्रसरात्परोक्षेण भ्रमाक्षयात् ॥
सहकारिविधानाच्च शब्दादप्यपरोक्षधीः ॥ २१ ॥
भावनावृत्तिसचिवाद्विधुरस्येव मानसात् ॥
कामिन्या इव शब्दात्तामितरे संप्रचक्षते ॥ २२ ॥
विज्ञातृचिदभिन्नस्य विषयस्यापरोक्ष्यतः ॥
परोक्ष्यासम्भवादन्ये प्राहुः शब्दापरोक्षताम् ॥ २३ ॥
अद्वैतविद्याचार्यास्तु स्वसुखज्ञानसंग्रहाव ॥
आपरोक्ष्यं स्फुरच्चित्त्वं तदभेदात्तु तद्युजि ॥ २४ ॥
नन्वध्ययनकालेऽपि शब्दात्स्यादपरोक्षधीः ॥
सत्ताधृतीर्विचाराचेन्मननादिश्रमो वृथा ॥ २५ ॥
नैवं पुंदोषशांत्यर्थं मननादेर्विधानतः ॥
तत्तत्संसृष्टवृत्त्येत्थं तदज्ञाननिवर्हणम् ॥ २६ ॥
नन्वेवं वृत्त्यभिव्यक्तचिदंशो विषयैक्यतः ॥
श्रवणादिमतो नश्येन्मूलाज्ञानं घटेक्षणाद ॥ २७ ॥
नैवमत्राहुराचार्या न संदृश इति श्रुतेः ।
चिच्चक्षुराद्ययोग्यैव चिद्द्वाराऽस्त्याद्वृतिर्जडे ॥ २८ ॥
मूलाज्ञानस्य विषयो जड एवाथवाऽन्यथा ।
चक्षुषा सौरभं भायाद्वृत्त्यभिव्यक्तचिदन्वयाद ॥ २९ ॥

साक्षिणः स्वप्रकाशत्वान्नाहंवृत्त्याऽपि तत्क्षयः ॥
तथा कालादिवैशिष्ट्यगोचरप्रत्यभिज्ञया ॥ ३० ॥
केचिच्छ्रोतव्यनियमाददृष्टदोषक्षयान्वितम् ॥
वाक्यजं ज्ञानमेवाहुर्मूलाज्ञाननिबर्हणम् ॥ ३१ ॥
अन्ये स्वरूपसंबंधाद्वैजात्याद्वोऽपि वाक्यजात् ॥
अखंडाकारकं ज्ञानमाचख्युस्तन्निवर्तकम् ॥ ३२ ॥
ननु स्वहेतुमज्ञानं विरोधात् सा कथं हरेत् ॥
वृत्तिर्मैवं विरुद्धत्वाद्वह्निसंयोगवत्पटे ॥ ३३ ॥
हृत्वा मोहं विनश्येत्सा कतकाम्बिदुवद्वयः ॥
पंकभस्मतृणानीव वास्तप्तायसभूमिषु ॥ ३४ ॥
आहुरन्ये तु वृत्तीद्ध आत्मैवाज्ञानतत्कृतम् ॥
प्रदहेत्सूर्यकांतेद्धा सूर्यकांतिस्तृणं यथा ॥ ३५ ॥
उपादानक्षयादन्ये विश्वोच्छेदं प्रचक्षते ॥
जीवन्मुक्तस्य भोगोऽत्राविद्यालेशेन युज्यते ॥ ३६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपाद-शिष्यगंगाधरसरस्वतीविरचितायां वेदांतसिद्धांतसूक्तिमञ्जर्यां तृतीयः परिच्छेदः ॥ ३ ॥

---

## चतुर्थपरिच्छेदः ॥

अथ कोयमविद्याया लेशो यदनुवर्त्तनात् ॥
देहादेः प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥ १ ॥
ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्त्तते ॥
प्रारब्धप्रतिबंधेन स लेशस्तेन जीवनम् ॥ २ ॥
क्षालितेष्विव हिङ्ग्वादिपात्रेष्वन्ये तु वासनाम् ॥
नष्टानुवृत्तिमाचख्युरन्ये दग्धपटे यथा ॥ ३ ॥
विरोधिन्युदिते शेषासम्भवादर्थवादताम् ॥
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥ ४ ॥
का निवृत्तिरविद्यायाः ब्रह्मसिद्धिकृतां नये ॥
आत्मैव तदभावो हि मोहस्तत्संक्षयश्च सः ॥ ५ ॥
आनन्दबोधाचार्यास्तु युक्तिभिः पञ्चमीं विधाम् ॥
सदसत्सदसन्मिथ्याभिन्नामात्मनि तां विदुः ॥ ६ ॥
उत्पत्तिरिव नाशोऽपि क्षणिकाभावविक्रिया ॥
अद्वैतविद्याचार्यास्तद्वृत्तिकालेति तां विदुः ॥ ७ ॥
नन्वेवं क्षणिकत्वं स्यान्मुक्तेर्भ्रान्तोऽसि नह्यसौ ॥
दुःखाभावः सुखं वेति पुरुषार्थत्ववर्जनात् ॥ ८ ॥
दुःखं सुखविरोधीति तन्नाशोऽपि हि न स्वतः ॥
पुमर्थःसुखमात्रं तु तथा चित्सुखदर्शने ॥ ९ ॥
प्रसगेव परानंदस्तिरोभूतः स्वमोहतः ॥
स्वकंठचामीकरवत्प्राप्तः प्राप्यः स्वविद्यया ॥ १० ॥
अप्राप्तिरपि तस्याभूत्संसृतौ व्यावहारिकी ॥
सा विद्यया निवृत्तेति मुख्यां प्राप्तिं परे जगुः ॥ ११ ॥
परे प्रागावृतत्वेन पारोक्ष्यादपुमर्थताम् ॥
मुक्तौ तु तदभिन्नत्वादात्मप्राप्त्या पुमर्थताम् ॥ १२ ॥
अन्ये भूमसुखाद्भेदो जीवेऽध्यस्तोऽभवत्पुरा ॥
मुक्तौ तन्नाशतः प्राहुः प्राप्तिं स्फुटसुखात्मिकाम् ॥ १३ ॥
अथ मुक्तो भवेच्छुद्ध उतेशोऽत्र निगद्यते ॥
व्यक्ता जीवैक्यवादे हि शुद्धब्रह्मैकशेषता ॥ १४ ॥

अनेकजीववादेऽपि प्रतिबिंबेशवादिनाम् ॥
मुक्तस्य बिंबसद्भावाच्चशुद्धता पर्यवस्यति ॥ १५ ॥
अनेकजीववादेऽतो नावच्छेदनयः शुभः ॥
बद्धमुक्ताव्यवस्थानात्तद्देशोपाधिबन्धनात् ॥ १६ ॥
बिंबेशवादे मुक्तः प्राक्सर्वजीवविमोचनात् ॥
ईशो भूत्वा ततः शुद्धे स्वभावे व्यवतिष्ठते ॥ १७ ॥
नच विद्यांतरफलैः साम्यं मोहपरिक्षयात् ॥
तेषु भोगस्य साम्येऽपि जगद्व्यापारवर्जनात् ॥ १८ ॥
पक्षोऽयं चरमः साधुः सूत्रभाष्यादिषु स्फुटः ॥
आविर्भूतस्वरूपेऽपि गुणाष्टकनिरूपणात् ॥ १९ ॥
ईशांशस्येशभावाप्तौ सर्वदुःखप्रसञ्जनम् ॥
निवारयद्भिरग्रेऽपि बिम्बभावप्रदर्शनात् ॥ २० ॥
पराभिध्यानतः सत्यकामत्वादितिरोहितेः ॥
नाशे मुक्तौ पुनस्तेषामाविर्भावस्य चेरणात् ॥ २१ ॥
ब्राह्मचैतन्यमात्रत्वाविरोधस्य च कीर्त्तनात् ॥
प्रतिबिंबेशजीवैक्यवादयोर्नैतदञ्जसा ॥ २२ ॥
जीवेशभेदसत्यत्वेऽप्येतत्सर्वमसंगतम् ॥
न च शक्त्यंतरं जीवे प्रमाणफलवर्जनात् ॥ २३ ॥
आसर्वमुक्ति परकल्पितसत्यकामसंकल्पकल्पितजगत्स्थितिभंगसर्गे ॥
सत्यं स्वतस्तु सुखचिद्घनमद्वितीयं मुक्तोपसृप्यमहमस्मि विशुद्धतत्त्वम्॥२४॥
श्रुतिकल्पलताकुञ्जसञ्जाता सूक्तिमंजरी ।
रम्या राद्धान्तगन्धाढ्या रंजयत्वखिलान्बुधान् ॥ २५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्रामचन्द्रसरस्वतीपूज्यपाद-
शिष्येण गङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुणा विरचिता
वेदांतसिद्धांतसूक्तिमंजरी

संपूर्णा ॥



॥ श्रीः ॥

# ॥सिद्धान्तलेशसङ्ग्रहाख्योऽयं ग्रन्थः॥

## ॥ सटीकः प्रारभ्यते ॥

---

वेदवेद्यमुमाकान्तं कुमाराभ्यामलङ्कृतम् ॥
नन्दीशप्रमुखैस्सेव्यं प्रणमामीष्टसिद्धये ॥ १ ॥
शङ्करं शङ्कराचार्यं व्यासं नारायणात्मकम् ॥
सरस्वतीं च ब्रह्माणं प्रणमामि पुनः पुनः ॥ २ ॥
गोविन्देति समाक्रन्द्य रक्षां प्राप भयातुरः ॥
यं गजः करुणामूर्तिं तं गोविन्दं भजेऽन्वहम् ॥ ३ ॥
आपन्ना यं समाश्रित्य रक्षां प्राप सुदुर्लभाम् ॥
कृष्णा कृष्णस्य महिषी तं कृष्णं संश्रयेऽन्वहम् ॥ ४ ॥
प्रकाशितब्रह्मतत्त्वं प्रकृष्टगुणशालिनम् ॥
प्रणवस्योपदेष्टारं प्रणमाम्यनिशं गुरुम् ॥ ५ ॥
यो मे विश्वेश्वरक्षेत्रं विश्वेश्वरसमो गुरुः ॥
समध्यास्ते स्वयञ्ज्योतिर्वाणीसंज्ञो भजामि तम् ॥ ६ ॥
यस्य शिष्यप्रशिष्याद्यैः व्याप्तेयं साम्प्रतं मही ॥
सर्वज्ञस्य गुरोस्तस्य चरणौ संश्रये सदा ॥ ७ ॥
गुरोरपि गरीयान्मे यः कलाभिरलङ्कृतः ॥
अद्वैतानन्दवाण्याख्यस्तं वन्दे शर्मवारिधिम् ॥ ८ ॥
ओतप्रोतमिदं सर्वं यस्मिन् सच्चित्सुखात्मके ॥
पर्यवस्यन्ति वेदान्ता यत्र चाहं तदक्षरम् ॥ ९ ॥
श्रीकृष्णचरणद्वन्द्वं प्रणिपत्य निबन्धनम् ॥
व्याकुर्वे शास्त्रसिद्धान्तलेशसङ्ग्रहसंज्ञितम् ॥ १० ॥
आचार्यचरणद्वन्द्वस्मृतिर्लेखकरूपिणम् ॥
मां कृत्वा कुरुते व्याख्यां नाहमत्र प्रभुर्यतः ॥ ११ ॥

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् सम्प्राप्य शौरिपदोद्गता ।

---

कुमाराभ्यां [1]विघ्नेश्वरसुब्रह्मण्याभ्याम् । शङ्करं शङ्करस्य शिवस्यावताररूपं शङ्कराचार्यं भगवत्पादम् । तथा च शिवपुराणवचनम्—"व्याकुर्वन् व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान् । श्रुतेर्न्याय्यः स एवार्थः शङ्करः [2]सवितानन:" इत्यादि । व्यासं सूत्रकृतं बादरायणम् । नारायणात्मकं नारायणस्यावताररूपम् । तथा च वचनम्—"द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुनिः" इति । "न ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्" इत्यादि च । ब्रह्माणं सरस्वतीभर्तारं हिरण्यगर्भम् । आपन्ना सभायां वस्त्रापहारनिमित्तामापदं प्राप्ता । रक्षां वस्त्रकोटिलाभनिमित्ताम् । कृष्णा द्रौपदी । कृष्णस्य अर्जुनस्य । प्रकाशितं शिष्यशतेभ्य उपदिष्टं ब्रह्मतत्त्वं येन गुरुणा, स तथोक्तः तम् । स्वयञ्ज्योतिर्वाणीसंज्ञः स्वयम्प्रकाशसरस्वतीसंज्ञः । गरीयान् गुरुः । इदं सर्वं यस्मिन् सच्चित्सुखात्मके अक्षरे ब्रह्मण्योतप्रोतमध्यस्तम्, वेदान्ताश्च यत्राक्षरे विषये पर्यवस्यन्ति तात्पर्येण बोधहेतवो भवन्ति, तदहमिति सम्बन्धः । अक्षरे सर्वस्य ओतप्रोतत्वोक्त्या ब्रह्मणः सर्वाधिष्ठानत्वरूपं तटस्थलक्षणमुक्तम् । सच्चित्सुखात्मक इत्यनेन सत्यज्ञानानन्दस्वरूपात्मकं स्वरूपलक्षणमुक्तम् । तत्र वेदान्तानां पर्यवसानोक्त्या उक्तरूपे ब्रह्मण्यक्षरे वेदान्ता एव प्रमाणमित्युक्तम् । " नाहमत्र प्रभुर्यतः " इत्यत्र अत्र व्याख्याने प्रभुः समर्थ इत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनयोः सिद्धये भगवत्पादीयभाष्यस्तुतिमुखेन भाष्यप्रतिपाद्यब्रह्मतत्त्वानुसन्धानलक्षणं मङ्गलाचरणं करोति—अधिगताभिदेति । दृष्टान्तमुखेन श्रीमूर्तिचरणारविन्दगङ्गयोः अनुसन्धानलक्षणमपि मङ्गलं करोति—शौरीति । शौरिपदोद्गता सरिव महीभेदान् सम्प्राप्य यथा सहस्रधा अधिगताभिदा, तथा भगवत्पादश्रीमन्मुखाम्बुजनिर्गता ब्रह्माद्वयैकपरायणी जननहरणी सू-

---

[1] गणेशकार्तिकेयाभ्याम् । [2] "षुञ् अभिषवे" इत्यस्मात् धातोः ऋदोरवित्यप्प्रत्यये ततः तारकादित्वादितचि सवित इति रूपम्, सवितम् औज्ज्वल्ययुक्तमाननं यस्य तादृशः, प्रशस्तमुख इत्यर्थः ॥

जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ १ ॥
प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं
सन्नह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः ।

---

क्तिः । पूर्वाचार्यान् व्याख्यातॄन् व्याख्येयत्वेनोपेत्यार्थतस्सहस्रधाऽधिगतभिदा सती जयतीति सम्बन्धः। अत्र सूक्तिः सहस्रधा अधिगतभिदेति सूक्तिविशेषणेन स्वग्रन्थे प्रदर्शयिष्यमाणसिद्धान्तभेदानां सर्वेषां भगवत्पादश्रीमन्मुखाम्बुजनिर्गता सूक्तिरेव मूलमिति सूचितम् । अधिगताभिदा प्राप्तभेदा सरित् गङ्गा। महीभेदान् भूप्रदेशान् । शौरेः श्रीमहाविष्णोः पदोद्गता पादाम्बुजनिर्गता जयति सर्वोत्कर्षेण वर्तत इति स्तुतिः । भगवत्पादस्य श्रीमन्मुखमेवाम्बुजं कमलं तस्मान्निर्गता । मुखे अम्बुजत्वारोपे कान्तिमत्त्वादिरूपं श्रीमत्त्वं निमित्तमिति सूचनार्थं श्रीपदिति विशेषणम् । जननहरणी जननं संसारः तद् स्वजन्यब्रह्मज्ञानद्वारा हरतीति जननहरणी सूक्तिः ग्रन्थतोऽर्थतश्च निरवद्यं भाष्यम् । ब्रह्माद्वयैकपरायणा ब्रह्म च तदद्वयं च ब्रह्माद्वयं, ब्रह्माद्वयं च तदेकं च ब्रह्माद्वयैकं, ब्रह्माद्वयैकं परायणं परमतात्पर्यविषयो यस्याः सूक्तेः , सा ब्रह्माद्वयैकपरायणा । अनेन विशेषणेन द्वितीयप्रपञ्चशून्यमेकरूपं सत्यज्ञानानन्दलक्षणं ब्रह्म सूक्तिपदसङ्गृहीतस्य भाष्यात्मकशास्त्रस्य विषय इत्युक्तं भवति । जननहरणीति विशेषणेन शास्त्रस्य मुक्तिः प्रयोजनमित्युक्तम् । अर्थान्मुक्तिकामः शास्त्रस्याधिकारी, मुक्तेरधिकारिणश्च प्राप्यप्राप्तृभावलक्षणः सम्बन्धश्च सूचितः । एवं श्रुत्यर्थाभ्यां श्लोकेन भाष्यात्मकवेदान्तशास्त्रस्य विषयादिकं कथयता ग्रन्थकारेण स्वकीयग्रन्थस्य वेदान्तशास्त्रप्रकरणत्वात्तस्यापि तदेव विषयादीति सूचितं भवति ॥ १ ॥

इदानीं चिकीर्षितं प्रतिजानीते—प्राचीनैरिति । प्राचीनैराचार्यैः आत्मैक्यसिद्धौ परम् अत्यन्तं सन्नह्यद्भिः तात्पर्यवद्भिः आत्मैक्यसिद्ध्युपायतया व्यवहारसिद्धविषयेषु भ्रान्तिमात्रसिद्धपदार्थेषु जीवेश्वरजगद्रूपेषु अनादरात् सरणयः प्रकाराः नानाविधाः परस्परविरुद्धा दर्शिताः । अनादरादित्यनेन परस्परविरुद्धेषु जीवैकत्वनानात्वतत्प्रतिबिम्बत्वा-

तन्मूलानिह सङ्ग्रहेण कतिचित्सिद्धान्तभेदान्धिय-
श्शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान् ॥२॥

तेषूपपादनापेक्षान्
पक्षान् प्रायो यथामति ।
युक्त्योपपादयन्नत्र
लिखाम्यनतिविस्तरम् ॥ ३ ॥

---

दिरूपप्रकारेष्वभिनिवेशवतामाचार्याणां भेदवादिनामिवानाप्तत्वं स्यादिति शङ्का निराकृता भवति । विवक्षितवस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकारप्रदर्शनमाचार्याणां न दोषाय भवति, किं त्वलङ्कारायैव भवति । प्रतिपत्तॄणां प्रज्ञावैचित्र्येण कस्यचित्प्रतिपत्तुः केनचित् प्रकारेण मुक्तिसाधनब्रह्मात्मैक्यज्ञानलाभात् । तदुक्तं सुरेश्वराचार्यैः—"यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥" इति । व्युत्पत्तिः बोधः । प्रत्यक् चासावात्मा च प्रत्यगात्मा सर्वान्तरश्चिदात्मा, तस्मिन्विषये । प्रक्रिया प्रकारः । इह वेदान्तशास्त्रे । साध्वी निरवद्या गुणभूता । सा चानवस्थिता नानाविधा । परिमले दीक्षितैरप्येतदुक्तम्—"अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधो न दोषावहः । यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानासु तत्प्राच्योदीच्यादिनक्षत्ररूपासु स्थूलारुन्धतीषु विरोधो न दोषावहः" इति । तन्मूलान् प्राचीनप्रदर्शितनानाविधसरणिमूलान् । इह स्वग्रन्थे । धियः शुद्ध्यै स्वबुद्धिपरिष्काराय । वस्तुतस्तु लोकानुग्रह एव प्रयोजनमिति बोध्यम् । तातचरणानां पितृचरणानां व्याख्यारूपैः वचोभिः ख्यापितान् ज्ञापितान् । अनेन स्वस्य ब्रह्मविद्यामाचार्यादेव लब्धां दर्शयति स्वग्रन्थस्योपादेयत्वसिद्धये ॥२॥
इह सङ्ग्रहेण सिद्धान्तभेदान् सङ्कलयामीत्युक्तमेव विवृण्वन्, 'ननु प्राचीनग्रन्थसिद्धान्तानामेव स्वग्रन्थे सङ्ग्रह इत्युक्तमयुक्तम् । प्राचीनग्रन्थेष्वविद्यमानस्यापि युक्तिभिरुपपादनस्य स्वकीयसङ्ग्रहग्रन्थे तत्र तत्रोपलम्भात्' इति शङ्कां निराकरोति—तेष्विति ॥ ३ ॥

## ॥ वेदान्तसिद्धान्तसूक्तिमञ्जरी ॥

तरणिशतसवर्णं कर्णघूर्णद्विरेफा-
चलिचलितकपोलोद्दामदानाभिरामम् ॥
गिरिशगिरिसुताभ्यां लालितं नित्यमङ्के
स्वजनभरणशीलं शीलये विघ्नराजम् ॥ १ ॥
श्रीमद्गुरुपदाम्भोजद्वन्द्वमानम्य भक्तितः ॥
सिद्धान्तलेशसिद्धान्तान् कारिकाभिर्निदर्शये ॥ २ ॥
अपूर्वो नियमोऽन्यस्य परिसङ्ख्येति च क्रमात् ॥
त्रयो हि विधयस्तेषु श्रोतव्य इति को विधिः ॥ ३ ॥

(१)तत्र तावत् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इति अधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्ने ब्रह्मात्मनि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किंविध इति चिन्त्यते । तिस्रः खलु विधेर्विधाः—अपूर्वविधिः, नियमविधिः, परिसङ्ख्याविधिश्चेति । तत्र कालत्र-

स्वग्रन्थे प्रथमं श्रवणविधिः विचार्यत इत्याह— तत्र तावदिति । श्रवणविधावधिकारिणं निर्दिशति—अधीतेति । वेदान्तैः जनितापातप्रतिपत्तिविषये ब्रह्माभिन्नात्मनि सम्यग्दार्ढ्येनोदिता उत्पन्ना जिज्ञासा निर्णयरूपज्ञानेच्छा यस्येत्यर्थः । अधीतवेदस्यापि शिक्षाकल्पव्याकरणादीनां वेदाङ्गानामध्ययनाभावे सति व्युत्पत्तेरभावात् जिज्ञासाहेतुभूतापातप्रतिपत्तिरपि न सम्भवेदित्यभिप्रेत्याधीतसाङ्गस्वाध्यायस्येत्युक्तम् । न च निर्दोषवेदान्तजन्यायाः ब्रह्मात्मप्रतिपत्तेः कथमापातत्वमिति वाच्यम् । 'नाहं ब्रह्म' इतिप्रत्यक्षविरोधादिशङ्कया प्रमारूपायामपि ब्रह्मात्मप्रतिपत्तावप्रामाण्यशङ्कास्पदत्वरूपस्यापातत्वस्य सम्भवादिति भावः । वेदान्तश्रवणे श्रोतव्य इति विधिः प्रतीयमानः इति सम्बन्धः । तज्ज्ञानायेति । अप्रामाण्यशङ्कानास्पदब्रह्मात्मज्ञानायेत्यर्थः । खलुशब्देनापूर्वविधित्वादिप्रकारत्रयस्य पूर्वतन्त्रे प्रसिद्धिः सूच्यते । कालत्रयेऽपीति । कथमपि दृष्टार्थत्वेनादृष्टार्थत्वेन वा केनापि प्रकारेण कालत्रयेऽपि कदापि विधिं विना प्राप्तिरहितस्य मोक्षणादेः प्राप्तिफलको विधिराद्यः अपूर्वविधिरित्यर्थः ।

येऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिराद्यः । यथा "व्रीहीन्प्रोक्षति" इति । नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विना नियोगं मानान्तरेण कथमपि प्राप्तिरस्ति ।

पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्द्वितीयः । यथा "व्रीहीनवहन्ति" इति । अत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिर्भविष्यतीति न तत्प्राप्त्यर्थोऽयं विधिः, किन्त्वाक्षेपादवहननप्राप्तौ तद्वदेव लोकावगतकारणत्वाविशेषात् नखविदलनादिरपि पक्षे प्राप्नुयादिति अवहननाप्राप्तांशस्य सम्भवात् तदंशपरिपूरणफलकः ।

द्वयोः शेषिणोरेकस्य शेषस्य वा एकस्मिञ्छेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिस्तृतीयः । यथा अग्निचयने—"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति, यथा वा चातुर्मा-

---

व्रीहीनिति द्वितीयाश्रुत्या व्रीहीणां संस्कार्यत्वावगमात् प्रोक्षणस्य संस्कारकर्मत्वमुक्तमिति मन्तव्यम् । नियोगमिति । विधायकशब्दमित्यर्थः । पुरोडाशेति । दर्शपूर्णमासयोराग्नेयादियागानामुत्पत्तौ पुरोडाशद्रव्यं विहितम् । व्रीहयस्तूत्पन्ने यागे यागानुवादेन विहिताः । तथा च व्रीहीणामुत्पन्नशिष्टानामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे साक्षात्साधनत्वायोगात् पुरोडाशप्रकृतिद्रव्यत्वेन यागसाधनत्वं पर्यवस्यति । पुरोडाशप्रकृतित्वं च व्रीहीणां तण्डुलनिष्पत्तिद्वारकम् । तण्डुलनिष्पत्तिश्च स्वकारणमाक्षिपति । तण्डुलनिष्पत्तौ च कारणमन्वयव्यतिरेकाभ्यामवहननं निश्चितमिति विधिं विना विधित्सितावहननप्राप्तिरस्तीत्यर्थः । नन्ववहननस्य लोकतः प्राप्तौ तस्य लोकत एव नित्यप्राप्तिरपि स्यादित्यत आह—किन्त्वित्यादिना । आक्षेपादिति । तण्डुलनिष्पत्त्याक्षेपादित्यर्थः । किन्त्ववहननाप्राप्तांशसद्भावात्तदंशपरिपूरणफल इति सम्बन्धः । द्वयोरिति । द्वयोः शेषिणोरेकस्य शेषस्य नित्यप्राप्तौ शेष्यन्तरस्य निवृत्तिफलकः, एकस्मिन् शेषिणि

---

१ पुरोडाशादीत्यादिशब्दघटितः पाठः २ पु० ।

स्यान्तर्गतेष्टिविशेषे गृहमेधीये "आज्यभागौ यजति" इति। अग्निचयने अश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेति द्वयमनुष्ठेयम्। तत्राश्वरशनाग्रहणे "इमामगृभ्णन्" इति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपान्नित्यं प्राप्नोतीति न तत्प्राप्त्यर्थः, तदप्राप्तांशपरिपूरणार्थो वा विधिः, किं तु लिङ्गाविशेषात् गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः। तथा गृहमेधीयस्य दर्शपूर्णमासप्रकृतिकत्वादतिदेशादेवाज्यभागौ नित्यं प्राप्नुत इति न तत्र विधिः तत्प्राप्त्यर्थः, तन्नियमार्थो वा, किन्त्वतिदेशात् प्रयाजादिकमपि प्राप्नुयादिति तन्निवृत्त्यर्थः। गृहमेधीयाधिकरण[१०-७-९]पूर्वपक्षरीत्येदमुदाहरणं यत्र क्वचिदुदाहर्तव्यमित्युदाहृतम्।

न च नियमविधावपि पक्षप्राप्तावहननस्याप्राप्तांशपरिपूरणे कृते तदवरुद्धत्वात् पाक्षिकसाधनान्तरस्य नखविदलनादेर्निवृत्तिरपि लभ्यत इतीतरनिवृत्तिफलकत्वाविशेषान्नियमपरिसङ्ख्ययोः फलतो विवेको न युक्त इति शङ्क्यम्। विधितो

---

द्वयोः शेषयोः नित्यप्राप्तौ शेषान्तरस्य निवृत्तिफलको वा विधिस्तृतीय इति योजना। न तादिति। प्राप्तत्वात् न तत्प्राप्त्यर्थः, नित्यप्राप्तत्वात् न तदप्राप्तांशपरिपूरणार्थो वेत्यर्थः। अतिदेशादेवेति। "प्रकृतिवद्विकृतिः कर्तव्या" इत्येवंरूपादित्यर्थः। न तत्र विधिरिति। "आज्यभागौ यजति" इति विधिराज्यभागयोः प्राप्त्यर्थो न भवति, विधिं विना प्राप्तत्वात्। तयोरप्राप्तांशपरिपूरणार्थो वा न भवति, नित्यप्राप्तत्वात्। किं तु तन्निवृत्त्यर्थ इति योजना। ननु "आज्यभागौ यजति" इति विधेरितराङ्गकलापपरिसङ्ख्यायकत्वं न सिद्धान्तः इत्यत आह—गृहमेधीयाधिकरणेति। नियमविधावपीति। परिसङ्ख्याविधाविव नियमविधावपीत्यर्थः। तदवरुद्धत्वादिति। अवहननेनैवावरुद्धत्वा-

ऽवहननमियमं विना आक्षेपलभ्यस्य नखविदलनादेर्निवर्तयितुमशक्यतया अप्राप्तांशपरिपूरणरूपस्य नियमस्य प्राथम्यात् विधेयावहननगतत्वेन प्रत्यासन्नत्वाच्च तस्यैव नियमविधिफलत्वोपगमात् । तदनुनिष्पादिन्या अविधेयगतत्वेन विप्रकृष्टाया इतरनिवृत्तेः सन्निकृष्टफलसम्भवे फलत्वानौचित्यात् ।

एवं विविक्तासु तिसृषु विधासु किंविधः श्रवणविधिराश्रीयते ।

[वे०सू०मं०] तत्रोपायापरिज्ञानादलौकिकसमीक्षणे ॥
प्रकटार्थकृतः प्राहुरपूर्वं श्रवणं विधिम् ॥ ४ ॥

अत्र प्रकटार्थकारादयः केचिदाहुः—अपूर्वविधिरयम् । अप्राप्त-

---

त्तण्डुलनिष्पत्त्याक्षेपस्य शान्तत्वादित्यर्थः । फलत इति । नियमविधेः पक्षप्राप्तावहननादिक्रियादिविधायकत्वात् । परिसङ्ख्याविधेश्च नित्यप्राप्तक्रियादिविधायकत्वान्नियमपरिसङ्ख्याविध्योस्स्वरूपतो विवेकलाभेऽपि फलतो भेदो न युक्त इत्यर्थः । नियमस्य नियमविधिफलत्वोपगमे हेतुद्वयमाह-प्राथम्यादित्यादिना । प्रत्यासन्नत्वादिति । विधिं प्रति प्रत्यासन्नत्वादित्यर्थः । विधेयक्रियागतत्वं प्रत्यासन्नत्वे हेतुः । इतरनिवृत्त्यपेक्षया प्रथमोपस्थितत्वरूपे प्राथम्ये हेतुमाह—विधित इत्यादिना अशक्यतयेत्यन्तेन । इतरनिवृत्तेर्नियमविधिफलत्वानुपगमे हेतुद्वयमाह—तदनुनिष्पादिन्या इत्यादिना । अप्राप्तांशपरिपूरणोपस्थित्यनन्तरमुपस्थिताया इत्यर्थः । अनेन विलम्बितोपस्थितिकत्वमेको हेतुरुक्त इति मन्तव्यम् । द्वितीयहेतौ विप्रकृष्टत्वे हेतुमाह—अविधेयेति । व्यावृत्तिर्नामाननुष्ठेयता, अनङ्गता वा । सा चाविधेयनखविदलनादिगतेत्यर्थः । इदानीं प्रकृतं श्रवणविधिविचारमारभते—एवमिति । अप्राप्तत्वादिति । ब्रह्मसाक्षात्कारं प्रति वेदान्तश्रवणस्य साधनतया मानान्तरादनधिगतत्वेनाप्राप्तार्थकत्वादित्यर्थः । ननु मानान्तरादनधिगतत्वमसिद्धम्, अन्वयव्यतिरेकाभ्यान्तदवगतिसम्भवात् । तथा हि—वेदान्तश्रवणे सति ब्रह्मसाक्षात्कारो दृश्यते ।

---

१ अलौकिकब्रह्मसाक्षात्कारे । २ आदिशब्दाघटितः पाठः २ पु० ।

त्वात्। न हि 'वेदान्तश्रवणं ब्रह्मसाक्षात्कारहेतुः' इत्यत्र अन्वयव्यतिरेकप्रमाणमस्ति। लोके कृतश्रवणस्यापि बहुशस्तदनुत्पत्तेः, अकृतश्रवणस्यापि गर्भगतस्य वामदेवस्य तदुत्पत्तेरुभयतो व्यभिचारात्। न वा 'श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारहेतुः' इति शास्त्रान्तरश्रवणे गृहीतः सामान्यनियमोऽस्ति। येनात्र विशिष्य हेतुत्वग्राहकाभावेऽपि सामान्यमुखेनैव हेतुत्वं प्राप्यत इत्याशङ्क्येत। गान्धर्वादिशास्त्रश्रवणस्य षड्जादिसाक्षात्कारहेतुत्वाभ्युपगमेऽपि कर्मकाण्डादिश्रवणात् तदर्थधर्मादिसाक्षात्कारादर्शनेन

---

असति च तस्मिन् दृश्यत इति तत्राह—न हीति। तदनुत्पत्तेरिति। साक्षात्कारानुत्पत्तेरित्यर्थः। वामदेवस्येति। तथा च श्रुतिः—"गर्भ एवैतच्छयानो वामदेव एवमुवाच" इति। एवं पूर्वोक्तप्रकारेण, एतद् ब्रह्मज्ञानजन्मना स्वकीयां शक्तिमुवाचेत्यर्थः। ननु गान्धर्वशास्त्रश्रवणे षड्जादिस्वरसाक्षात्कारः, तदभावे तदभाव इति दृष्टम्। तत्र श्रोतव्यार्थविशेषस्वरसाक्षात्कारं प्रति गान्धर्वशास्त्रविचारात्मकस्य श्रवणविशेषस्य कारणत्वग्रहकाले लाघवात् श्रोतव्यार्थसाक्षात्कारत्वावच्छिन्नं[२] प्रति श्रवणमात्रस्य कारणत्वं गृह्यते। तथा च ब्रह्मसाक्षात्कारवेदान्तश्रवणयोर्विशिष्य कार्यकारणभावग्रहणाभावेऽपि ब्रह्मसाक्षात्कारस्यापि श्रोतव्यार्थसाक्षात्कारत्वात् वेदान्तश्रवणस्यापि श्रवणत्वादुक्तसामान्यरूपेण वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वं प्राप्तमेवेति नापूर्वविधिरिति, नेत्याह—न वा श्रवणमात्रमिति। धर्मश्रवणस्थले अदृष्टरूपस्य, अलौकिकश्रेयस्साधनताविशिष्टयागादिरूपस्य वा धर्मस्य साक्षात्कारायोग्यतया साक्षात्कारादर्शनेन उक्तसामान्यकार्यकारणभावस्य व्यभिचारात् न लाघवावतार इति। तत्र गान्धर्वशास्त्रश्रवणस्यान्वयादिना स्वरसाक्षात्कारहेतुत्वग्रहेऽपि वेदान्तश्रवणस्य न ब्रह्मसाक्षात्कारहेतुत्वप्राप्तिरित्याह—गान्धर्वादीति। कर्मेति। अत्रादिपदेन हिरण्यगर्भादिदेवताप्रतिपादकवाक्यजातं गृह्यते। धर्मादीत्यादिपदेन हि-

---

१ शास्त्रान्तरे इति पाठः २ पु०। २ तादृशसाक्षात्कारत्वावच्छिन्नत्वादित्यर्थः। एवं श्रवणत्वादित्यत्रापि श्रवणत्वावच्छिन्नत्वादित्यर्थो बोध्यः।

व्यभिचारात् । तस्मादपूर्वविधिरेवायम् ।

भाष्येऽपि "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो

---

रण्यगर्भादिदेवता श्रूयते । तस्मादिति । प्राप्त्यभावादित्यर्थः । अत्रार्थे सम्मतिमाह—भाष्येऽपीति । भाष्येऽप्यपूर्वविधिरेवाङ्गीकृत इति सम्बन्धः । अयमर्थः बृहदारण्यके श्रूयते—"तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इति । यस्मादतिक्रान्ता ब्राह्मणाः श्रवणादिसाधनैरात्मानं विदित्वा जीवन्मुक्तिव्यञ्जकं सकलविक्षेपराहित्यं परमहंसाश्रमं प्राप्ताः, तस्मादिदानीन्तनोऽपि ब्राह्मणो ब्रह्मसाक्षात्कारार्थी पाण्डित्यं निर्विद्य बाल्येन स्थातुमिच्छेत् । विचारप्रयोजकापातरूपा बुद्धिः (अविद्यानिवृत्त्यादिकार्याक्षमत्वात्) पण्डा साऽस्य सञ्जातेति पण्डितः, तस्य कृत्यं पाण्डित्यं श्रवणमित्यर्थः । बाल्यं नाम बालस्य शिशोः कृत्यं दम्भदर्पादिराहित्यम्, न तु बाले प्रसिद्धं यथेष्टचेष्टारूपम्, तस्य बहिर्मुखत्वापादकत्वेन विद्याविरोधित्वात् । दम्भादिराहित्यरूपभावशुद्धिवाचकेन बाल्यपदेन भावशुद्धिसाध्यं मननं लक्ष्यते, श्रवणानन्तरभावित्वात्तस्य । बाल्यं च पाण्डित्यं च निर्विद्य निश्चयेन लब्ध्वा तदुभयं सम्यगनुष्ठायेति यावत् । अथ अनन्तरं मुनिः स्यान्मननशीलो भवेदिति विधिः । ध्यानमत्र मननम् । ध्याननिष्ठे व्यासादौ मुनिशब्दप्रयोगदर्शनात्, ध्यानं विना विचारमात्रविश्रान्ते तदप्रयोगाच्च । तथा चापूर्वत्वाद्यथा श्रवणे विधिः, एवं मौनस्य विद्यासहकारिणः विद्योत्पत्तौ साधनस्य विधिरेवाश्रयितव्यः अपूर्वत्वादेवेति भाष्यार्थः । सूत्रार्थस्तु—तद्वतः श्रवणमननजनिततत्त्वनिर्णयरूपविद्यावतस्तत्त्वसाक्षात्कारार्थिनः सन्न्यासिनः पाण्डित्यबाल्यापेक्षया तृतीयं मौनम् "अथ मुनिः" इति वाक्येन विधीयते । ननु पाण्डित्यबाल्याभ्यां निर्णीततत्त्वस्तत्त्वसाक्षात्कारार्थी ध्याने स्वयमेव प्रवर्तते रत्नतत्त्वसाक्षात्कारार्थीव रत्नतत्त्वगोचरप्रत्ययसन्ततौ । न च तत्त्वसाक्षात्कारार्थिनस्तत्साधनश्रवणादावपि स्वयमेव प्रवृत्तिस्स्यादिति तत्रापि विधिवैयर्थ्यशङ्का तुल्येति वाच्यम् । विधिं विना वेदान्तश्रवणे प्रवृत्त्यसम्भवस्य साधितत्वात् । तथा च मौनविधिः व्यर्थ इत्यत्राह—पक्षेणेति । मौनस्य सहकार्यन्तरस्य

---

१ अयं पाठः २ पुस्तके नास्ति । २ पारोक्ष्येणेति शेषः ।

विद्यादिवत्" ( ३-४-४७ ) इत्यधिकरणे "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवाद्विधिरेवाश्रयितव्यः अपूर्वत्वाद्" इति-पाण्डित्यशब्दशब्दिते श्रवणे अपूर्वविधिरेवाङ्गीक्रियते इति ।

(वे०सू०मं०) विचारस्य विचार्यार्थनिर्णयं प्रति हेतुता ॥
अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता ॥ ५ ॥
प्राप्तैव, किन्त्वनियता भ्रान्तिः प्राप्ताऽन्यसाधनैः ॥
ततो नियम इत्याहुः सर्वे विवरणानुगाः ॥ ६ ॥

अन्येतु—वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहेतुत्वं न अ-

विधिरङ्गीकर्तव्यः, पक्षेणाप्राप्तिमत्त्वात् । साक्षात्कारार्थं ध्याने स्वयमेव प्रवृत्तस्यापि विपयदर्शनप्राबल्यात् ध्यानस्य कदाचिदप्राप्तिसम्भवति । तथा च मौनविधेरपूर्वविधित्वाभावेऽपि नियमविधित्वं सिद्ध्यत्येव । सति च नियमविधौ तदतिक्रमे नियमादृष्टालाभेन साक्षात्कारानुदयभीत्या स्वभावप्राप्तमपि विपयदर्शनं यत्नेन निवार्य ध्यान एव प्रवर्तत इति पक्षेणेतिसूत्रभागाभिप्रायः । ननु ब्रह्मविद्याप्रधाने प्रकरणे कथं ध्यानादिविधिः, वाक्यभेदप्रसङ्गादिति, नेत्याह—विध्यादिवदिति । अङ्गविधिवदित्यर्थः । यथा प्रधानविधिपरे प्रकरणे अवान्तरवाक्यभेदेन प्रयाजाद्यङ्गविधिः, तथा ब्रह्मविद्याङ्गध्यानादिविधिरित्यर्थः । उक्तरीत्या मौनविधेर्नियमविधित्वे स्थिते भाष्यगतापूर्वत्ववचनं मौनविध्यंशे पाक्षिकाप्राप्त्यभिप्रायं द्रष्टव्यम् । यथासूत्रं पक्षे प्राप्त्यभावादित्येव वक्तव्ये भाष्ये अपूर्वत्वादिति वचनं श्रवणविधिरपूर्वविधिरेवेति ज्ञापनार्थम् । अप्राप्तिमात्रे च दृष्टान्तदार्ष्टान्तिकभावो विवक्षित इति प्रकटार्थकारादीनामाशयः ।

अपूर्वविधित्वपक्षं दूपयति—वेदान्तश्रवणस्येति । विचारविशिष्टवेदान्तरूपस्य श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वं विधिं विनाऽपि प्राप्तमित्यर्थः।

---

१ मननस्येति पा० २ पु० ।

२ अत्र अङ्गसाधनध्यानेतिपाठ उपलभ्यते स साधनत्वेनाङ्गभूतध्यानादेर्विधिरित्यर्थकरणेन कथं चिन्नेयः । ध्यानादिशब्देन त्रितयस्य ब्रह्मविद्याऽङ्गत्वेनैव विवक्षा । अत एव दृष्टान्तसङ्गतिः । एवञ्च न पुनरुक्तिर्नवा प्रस्तुतहानिरिति बोध्यम् ।

३ वेदान्तशब्दज्ञानरूपस्येत्यर्थः । अन्यथा वेदान्तानां शब्दत्वात्कथं

प्राप्तम्। अपरोक्षवस्तुविषयकप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य प्राप्तेः शाब्दापरोक्षवादे व्यवस्थापनात् । तदर्थमेव हि तत्प्रस्तावः। न च तावता ब्रह्मप्रमाणत्वेनापातदर्शनसाधारणब्रह्मसाक्षात्कारहेतुत्वप्राप्तावप्यविद्यानिवृत्त्यर्थमिष्यमाणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वं श्रवणस्य न प्राप्तमिति वाच्यम् । विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य, ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तशब्दज्ञानरूपस्य श्रवणस्य तद्धेतुत्वप्राप्तेः । न चो-

---

ननु वाक्यस्य कथं साक्षात्कारहेतुत्वम्, इन्द्रियजन्यज्ञानस्यैव साक्षात्कारत्वात् ? अत आह—अपरोक्षवस्त्विति । अपरोक्षवस्तुविषयकत्वं ज्ञानस्यापरोक्षत्वम्, न त्विन्द्रियजन्यत्वम् । वस्त्वापरोक्ष्यं च वस्तुव्यवहारानुकूलचैतन्याभिन्नत्वमिति शाब्दापरोक्षवादे वक्ष्यते । तथा च नित्यापरोक्षत्वेन श्रुतिसिद्धब्रह्मरूपवस्तुविषयकत्वाद्वेदान्तजन्यज्ञानस्य साक्षात्कारत्वसिद्धिरित्यर्थः । नन्वस्मिन् शास्त्रे शाब्दापरोक्षवादस्य का सङ्गतिः ? अत आह— तदर्थमेव हीति । वेदान्तानां ब्रह्मापरोक्षप्रमितिजनकत्वसिद्ध्यर्थमेव तद्वादसङ्गतिः, नान्यार्थमित्येतत् प्रसिद्धमित्यर्थः । नन्वपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति शाब्दापरोक्षवादे प्रसाधनेन वेदान्तानामपि स्वविषये नित्यापरोक्षे ब्रह्मणि अपरोक्षज्ञानसामान्यहेतुत्वमेव प्राप्तं, न तु सत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वम् । तच्च विचारविशिष्टवेदान्तरूपश्रवणस्यैव युक्तम् । अन्यथा विचारात् प्रागपि सत्तानिश्चयप्रसङ्गात् । न च वाक्यजन्यसाक्षात्कारमात्रादेवाविद्यानिवृत्तिलक्षणफलसम्भवात् सत्तानिश्चयरूपत्वं साक्षात्कारस्य नान्वेषणीयमिति वाच्यम् । तत्र तत्र ब्रह्मोपदेशप्रदेशेषु यावत्संशयनिवृत्ति पुनः पुनः प्रश्नप्रतिवचनलिङ्गेन, "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिश्रुत्या, श्रुतब्रह्मणोऽपि यथापूर्वं संसारानुवृत्त्यनुमिताविद्यानिवृत्त्यभावरूपलिङ्गेन च श्रवणमननध्यानशमदमभक्तिवैराग्यादीनां ज्ञानपरिपाकहेतूनां विधिदर्शनलिङ्गेन च सत्तानिश्चयरूपब्रह्मसा-

---

श्रवणत्वं स्यात् । शब्दज्ञानस्यैव वाक्यार्थज्ञानप्रयोजकत्वात् । अत एव मूले ज्ञानशब्दघटितः प्रयोगः । टीकायामप्यग्रे ज्ञानशब्दघटितः पाठः । एवञ्च अत्र वेदान्तपदं तज्ज्ञाने लाक्षणिकम्, वाक्यस्येति पदमपि तथेति बोध्यम् ।

क्त उभयतो व्यभिचारः, सहकारिवैकल्येनान्वयव्यभिचारस्यादोषत्वात् । जातिस्मरस्य जन्मान्तरश्रवणात् फलसम्भवेन व्यतिरेकव्यभिचाराभावात् । अन्यथा व्यभिचारेणैव हेतुत्वबाधे श्रुत्याऽपि तत्साधनताज्ञानासम्भवात् । घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव ब्रह्मसाक्षात्कारे श्रवणातिरेकेण उपायान्तरमस्तीतिशङ्काया व्यतिरेकव्यभिचारस्याप्यदोषत्वात् । तथा च प्राप्तत्वान्नापूर्वविधिः ।

---

क्षात्कारस्यैवाविद्यानिवृत्त्यर्थमिष्यमाणत्वात् । तथा च वेदान्तश्रवणस्योक्तरूपसाक्षात्कारहेतुत्वमप्राप्तमेवेति शङ्कते—न च तावतेति । वेदान्तानामिति शेषः । अपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति प्रसाधनमात्रेणेत्यर्थः । अपरोक्षवस्तुविषयकं प्रमाणमपरोक्षज्ञानहेतुरिति स्थिते, विचारो विचार्यनिर्णयहेतुरिति च स्थिते कार्यकारणभावद्वयमेलनेन प्रकृते विचारविशिष्टवेदान्तज्ञानरूपं श्रवणं सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुरिति सिध्यतीत्याह—विचारमात्रस्येति । सहकारीति । चित्तैकाग्र्यादिरूपसहकारिवैकल्येनेत्यर्थः । उक्तकार्यकारणभावद्वयरूपप्रमाणबलेन श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे सिद्धे वामदेवस्य जन्मान्तरीयं श्रवणादिकं कल्प्यते । यथा जातमात्रे जन्तौ दृश्यमानभोगस्य कारणतया प्राग्भवीयं कर्म कल्प्यते, तद्वत् । अतो न व्यतिरेकव्यभिचार इत्याह—जातिस्मरस्येति । पूर्वजातिं स्मरतो वामदेवस्येत्यर्थः । अन्यथेति । उक्तरीत्या द्विविधव्यभिचारपरिहारानुपगमे इत्यर्थः । व्यभिचारानिश्चयेन हेतुत्वाभावरूपबाधनिश्चयात् श्रवणविधेरबोधकतापत्त्या तत्राप्यपूर्वविधिर्न स्यादित्यर्थः । ब्रह्मसाक्षात्कारे श्रवणमिव तपोविशेषादिकम्, उत्कृष्टजन्मप्राप्तिरूपं वा कारणान्तरमस्तीति शङ्काकाले वामदेवस्य कारणान्तरात् ज्ञानमुत्पन्नमिति शङ्कासम्भवेन श्रवणस्य वामदेवे व्यतिरेकव्यभिचारज्ञानं श्रवणस्य साक्षात्कारहेतुत्वग्रहप्रतिबन्धकं न भवति । न चैकस्य पदार्थस्य ज्ञाने परस्परनिरपेक्षकारणद्वयासम्भवेन ब्रह्मसाक्षात्कारे कारणान्तरसत्त्वशङ्कैव न जायत इति वाच्यम् । लोके तथा दृष्टत्वादित्याह—घटेति । वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे विधिं विनैव प्राप्ते फलितमाह—तथा

अत एव "आवृत्तिरसकृदुपदेशात्" ( ४-१-१ ) इत्यधिकरणभाष्ये "दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति। यथाऽवघातादीनि तण्डुलनिष्पत्तिपर्यवसानानि" इति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दार्शपूर्णमासिकावघातन्यायप्राप्तावावृत्त्युपदेशः। अपूर्वविधित्वे तु स न सङ्गच्छते सर्वौषधावघातवत्। अग्निचयने—"सर्वौषधस्य पूरयित्वाऽवहन्ति अथैतदुपदधाति" इत्युपधेयोलूखलसंस्कारार्थत्वेन विहितस्यावघातस्य

---

चेति। श्रवणादिविधेः नियमविधित्वे ससेवावृत्त्यधिकरणं सङ्गच्छते इत्याह—अत एवेति। अपूर्वविधित्वाभावादेवेत्यर्थः। अत एवावृत्त्युपदेश इति सम्बन्धः। "दर्शनपर्यवसानानि" इत्यारभ्य "तण्डुलनिष्पत्त्यवसानानि" इत्यन्तस्य भाष्यस्येयं योजना—दृष्टार्थानि श्रवणादीन्यावर्त्यमानानि सन्ति दर्शनपर्यवसानानि भवन्ति। यथाऽवघातादीन्यावर्त्यमानानि तण्डुलनिष्पत्त्यवसानानि भवन्तीति। दृष्टार्थानीत्यत्र दृष्टं फलमात्मदर्शनमेव। अयं भावः—"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यः" इत्यादिना आत्मदर्शनोद्देशेन श्रवणादीनि विधीयन्ते। तत्र किमेतानि सकृदनुष्ठेयानि, किं वा यावदात्मदर्शनमावर्त्यानीति संशये सकृदेवानुष्ठेयानि, तावता विधेश्चारितार्थ्यात्। यथा अग्निचयने—"सर्वौषधस्य पूरयित्वाऽवहन्ति" इति वाक्यविहितं सर्वौषधीनामवहननमुपधेयोलूखलसंस्काररूपं सकृदेवानुष्ठीयते, तद्वत्। तथा च सकृदनुष्ठितश्रवणादिजन्यमदृष्टं जन्मान्तरे ब्रह्मदर्शनहेतुरित्यपूर्वविधित्वं श्रवणादिविधीनामिति प्राप्ते, सिद्धान्तः—श्रवणाद्यावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। तथा हि—भृगुवल्ल्यां भृगुं प्रति पिता असकृत् "तपसा ब्रह्म विजिज्ञासस्व" इत्युपदिशति। तपः आलोचनं ब्रह्मविचारः। तथा छान्दोग्यषष्ठाध्याये श्वेतकेतुं पुत्रं प्रति पिता विचारपूर्वकमसकृत् "तत्त्वमसि" इत्युपदिशति। किं च श्रवणादिभिरात्मदर्शनफले जननीये श्रवणाद्यावृत्तिरूपदृष्टद्वारसम्भवे अदृष्टद्वारकल्पनायोगात्, तत्त्वम्पदार्थयोश्श्रवणाद्यावृत्तिं विना दुर्बोधत्वाच्च तण्डुलनिष्पत्तिफलकावघातवदावृत्तिरेव, न त्वग्निचयनान्तर्गतावघातवदनावृत्तिः, तदन्तर्गतावघातस्यादृष्टार्थत्वेन वैषम्यादिति व्युत्पादितमावृत्त्यधिकरणे। तद् अपूर्वविधिवादिनां न सङ्गच्छते इति भावः।

दृष्टार्थत्वाभावान्नावृत्तिरिति हि तन्त्रलक्षणे (११-१-६) स्थितम्। अतो नियमविधिरेवायम्। तदभावे हि यथा वस्तु किञ्चिच्चक्षुषा वीक्षमाणस्तत्र स्वागृहीते सूक्ष्मे विशेषान्तरे केनचित् कथिते तदवगमाय तस्यैव चक्षुषः पुनरपि सप्रणिधानं व्यापारे प्रवर्तते, एवं मनसा 'अहम्' इतिगृह्यमाणे जीवे वेदान्तैरध्ययनगृहीतैरुपदिष्टं निर्विशेषब्रह्मचैतन्यरूपत्वमाकर्ण्य तदवगमाय तत्र सावधानं मनस एव प्रणिधाने कदाचित् पुरुषः प्रवर्तेतेति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यात्। "अप्राप्य मनसा सह" इति श्रुतिः

---

तन्त्रलक्षणम् एकादशाध्यायः। अत इति। प्राप्तत्वादित्यर्थः। अस्य हेतोरेवकारार्थे अपूर्वविधित्वाभावे अन्वयः। नियमविधित्वे हेतुमाह—तदभावे हीति। तदभावे मनस एव सावधानं तत्र निधाने कदाचित् पुरुषः प्रवर्तेत इति सम्बन्धः। मनसा गृह्यमाणात्मगतविशेषग्रहणाय मनोव्यापार एव यत्नेन प्रवृत्तौ दृष्टान्तमाह—यथेति। किञ्चिदिति। रत्नादीत्यर्थः तत्रेति। रत्नादावित्यर्थः। तस्यैवेति। न तु व्यापारान्तरे, इत्येवकारार्थः। पुनरपि चक्षुषो व्यापारे प्रवर्तेत इति सम्बन्धः। प्रणिधानं यथा भवति तथा प्रवर्तेत इति प्रवृत्तिक्रियाविशेषणं प्रणिधानम्। तच्च रत्नादिवस्त्वभिमुखतया चक्षुषः स्थापनम्। अनन्तरमुन्मीलनव्यापारानुकूलयत्नः प्रवृत्तिरिति प्रणिधानप्रवृत्त्योर्भेदः। वेदान्तैरिति। "नेह नानाऽस्ति किञ्चन", "प्रज्ञानं ब्रह्म", "अहं ब्रह्मास्मि" इत्यादिभिरित्यर्थः। इह ब्रह्मणि नाना ज्ञातृज्ञानज्ञेयरूपेण भिन्नं विशेषणजातं किञ्चिदपि नास्ति। प्रकृष्टं ज्ञानं प्रज्ञानं नित्यस्वप्रकाशजीवचैतन्यं ब्रह्म। अहं बुद्ध्यादिसाक्षिभूतश्चिदात्मा ब्रह्म अस्मि भवामीति श्रुतीनामर्थः। अध्ययनपदं साङ्गाध्ययनपरम्। आकर्ण्य परोक्षतया ज्ञात्वा। श्रुतौ श्रद्दधानः। तदवगमायेति। निर्विशेषस्वरूपत्वाधिगमायेत्यर्थः। तत्रेति। "अहम्" इति गृह्यमाण आत्मनीत्यर्थः। सावधानमैकाग्र्यं यथा भवति तथा। ननु 'अहम्' इतिगृह्यमाणे जीवे विशेषाकर्णनानन्तरं वेदान्तश्रवण इव कदाचित् मनोव्यापारे वेदान्तविचारानिरपेक्षेऽपि प्रवृत्तिस्स्यादित्ययुक्तम्, श्रुत्या ब्रह्मणि मनोविषयत्वनिषेधात्, साङ्गाध्ययनवतस्तन्निषेधावगतिसम्भवादिति, नेत्याह—अप्राप्येति। श्रुतिः अन-

"मनसैवानुद्रष्टव्यम्" "दृश्यते त्वग्र्यया बुद्ध्या" इत्यपि श्रवणेनानवहितमनोविषयेति शङ्कासम्भवात् ।

अथवा "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिश्रवणात् भिन्नात्मज्ञानान्मुक्तिरिति भ्रमसम्भवेन मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपे शास्त्रान्तरश्रवणेऽपि पक्षे प्रवृत्तिस्स्यादित्यद्वैतात्मपरवेदान्तश्रवणनियमविधिरयमस्तु । इहात्मशब्दस्य "इदं सर्वं यदयमात्मा" इत्यादि—

---

वहितमनोविषयेति सम्बन्धः । वाचः सत्यज्ञानादिशब्दाः अप्राप्य शक्त्या ब्रह्माप्रतिपाद्य मनसा सह निवर्तन्ते लक्षणामाश्रयन्त इतिश्रुत्यर्थः । मनसा सहेत्यनेन मनसोऽपि ब्रह्मणि प्राप्तिर्निषिध्यते इति भावः । ब्रह्मणि मनोविषयत्वनिषेधवत्तद्विषयत्वमपि श्रुत्या उच्यते । तथा च श्रुत्योः विरोधे सति मनश्शब्दितबुद्धिगम्यत्वप्रतिपादकश्रुतौ बुद्धेरग्र्यत्वविशेषणबलाद्विषयत्वनिषेधश्रुतेरनवहितमनोविषयत्वनिषेधार्थकत्वप्रतीतः । तथा च साङ्गाध्ययनवत उक्तव्यवस्थाप्रतीतिसम्भवान्मनस एव व्यापारे प्रवृत्तिः दुर्वारत्याह—मनसैवेति । अनवहितत्वमेकाग्रताशून्यत्वम् । शङ्कासम्भवादिति । अग्र्यात्वविशेषणसामर्थ्येन यथोक्तव्यवस्थानिश्चयसम्भवादिति वक्तव्ये शङ्कासम्भवादित्युक्तेरयमाशयः—निर्गुणब्रह्मसाक्षात्कारे मनसः करणत्वं नास्ति, औपनिषदत्वश्रुतिविरोधात् । सोपाधिकात्मसाक्षात्कारेऽपि न तस्य करणत्वं, तत्साक्षात्कारस्य नित्यसाक्षिरूपत्वात् । "मनसैवानुद्रष्टव्यम्" इत्यादौ तृतीया वाक्योत्थवृत्तिसाक्षात्कारं प्रति साधनत्वाभिप्रायेत्यादिकं सर्वं शाब्दापरोक्षवादे वक्ष्यते । तथा च वस्तुतो मनसः करणत्वाभावात् मनस एव व्यापारे पुरुषः कदाचित् प्रवर्तेतेत्युत्प्रेक्षितं नियमविधिव्यावर्त्यमसङ्गतमेवेति ।

अत एव व्यावर्त्यान्तरमाह—अथवेति । अधीतसाङ्गस्वाध्यायस्य हि "तरति शोकमात्मवित्" इत्यादिश्रुत्या 'आत्मज्ञानं मुक्तिसाधनम्' इति ज्ञानं भवति । न च साङ्गाध्ययनवतोऽपि लोके विचारमन्तरेणात्मतत्त्वज्ञानजन्मास्ति । आत्मप्रतिपादकवेदान्तेषु नानाविधयोजनासम्भावनया तात्पर्यभ्रमसंशयादेरनुभवसिद्धत्वात् । ततश्च मुक्तिसाधनज्ञानार्थी तज्ज्ञानप्र-

तिवन्धकतात्पर्यभ्रमसंशयादिनिरासाय वेदान्तविचारे प्रवर्तमानो यथा ब्रह्ममीमांसाशास्त्रे प्रवर्तते, तथैव न्यायसाङ्ख्यादिशास्त्रविचारे ऽपि प्रवर्तेत, तत्रापि तदभिमतयोजनया वेदान्तविचारसत्त्वात्। न च साङ्ख्यादितर्कशास्त्रगतात्मविचारस्याद्वितीयात्मविचाररूपत्वाभावेन तादृशात्मनि वेदान्तानां तात्पर्यभ्रमसंशयाद्यनिवर्तकत्वात्, विशिष्य स्वयमेव तत्र तात्पर्यभ्रमादिहेतुत्वाच्च न तत्रात्मज्ञानार्थिनां प्रवृत्तिः सम्भवतीति वाच्यम्। 'जीवभिन्नपरमात्मज्ञानं मुक्तिसाधनम्' इति भ्रमेण तत्रापि प्रवृत्तिसम्भवात्। न च साङ्गाध्ययनवतो 'भिन्नात्मज्ञानं मुक्तिसाधनम्' इति भ्रमो न सम्भवति, "अहं ब्रह्मास्मि" "ब्रह्मविदाप्नोति परम्" इत्यादिवेदान्तेषु जीवाभिन्नपरमात्मज्ञानस्यैव मुक्तिसाधनत्वप्रतीतेरिति वाच्यम्। "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति श्रुतिगतान्यशब्देन भ्रमसम्भवात्। यदा ईशम्—सन्निधिमात्रेण बुद्ध्यादिप्रवर्तकम्। अन्यम्—वस्तुगत्या बुद्ध्यादिभ्यो भिन्नञ्च। भ्रान्त्या बुद्ध्याद्यभिन्नत्वेन चिदात्मनो गृहीतत्वात् भिन्नत्वोपदेशः सफलः। न तु जीवभिन्नमित्यर्थः। जीवब्रह्मभेदस्य प्रत्यक्षसिद्धतया उपदेशानपेक्षत्वात्। जुष्टम्—ऋषिसङ्घैः सेवितम्। "ऋषिसङ्घजुष्टम्" इति श्रुत्यन्तरात्। पश्यति ईशोऽहमिति साक्षात्करोति, तदा अस्य ईशस्य महिमानं महत्त्वोपलक्षितं स्वरूपम् इति एति प्राप्नोति, वीतशोकश्च भवतीति श्रुतेर्वास्तवार्थः। ननु श्रोतव्यवाक्ये आत्मविचारमात्रं प्रतीयते, न त्वद्वैतात्मविचारः। ततश्च कथमनेन विधिना भिन्नात्मविचारव्यावृत्तिलाभ इत्यत आह—इहेति। अत्रादिपदेन "आत्मनि दृष्टे सर्वं विदितं भवति" इति प्रतिज्ञावाक्यं गृह्यते। आत्मनस्सर्वाधिष्ठानतया सर्वात्मकत्वे हि सति आत्मनि विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवति, 'सर्वमात्मैव' इति सामानाधिकरण्यं च सिध्यति, नान्यथा। तथा च श्रोतव्यवाक्यस्थमात्मपदमद्वितीयात्मपरमेवेति तद्विचारविधिना भिन्नात्मविचारव्यावृत्तिः लभ्यत इति भावः। ननु तण्डुलनिष्पत्ताववहननस्येव नखविदलनादेरपि वस्तुतस्साधनत्वात्तन्निवृत्तिफलको नियमविधिर्युक्तः। इह त्वद्वितीयब्रह्मसाक्षात्कारे भिन्नात्मविचारस्य न वस्तुतस्साधनत्वमस्ति, अतस्तन्निवृत्तिफलको नियमविधिर्न युज्यते। न च—मा भूत् भिन्नात्मविचारस्य व्यावर्त्यत्वम्। नैतावता नियमविध्यनुपपत्तिः प्रकृतेऽस्ति। गुरुनिरपेक्षविचारभाषाप्रबन्धे-

१ वेदान्तानां तादृशात्मनीति सम्बन्धः। २ छान्दसत्वादिणो न गुणः।

प्रकरणपर्यालोचनया अद्वितीयात्मपरत्वात् । न हि वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति कुलधर्मः । येन वेदान्तश्रवणनियमार्थवत्त्वाय नियमादृष्टजन्यस्वप्रतिबन्धककल्मषनिवृत्तिद्वारा सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य वेदान्तश्रवणैकसाध्यत्वस्याभ्युपगन्तव्यत्वेन तत्र वस्तुतः साधनान्तराभावान्न नियमविधिर्युज्यत इति आशङ्क्येत । किं तु यत्र साधनान्तरतया सम्भाव्यमानस्य[1] पक्षे प्राप्त्या, विधित्सितसाधनस्य[2] पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते, तत्र नियमविधिः । तावतैवाप्राप्तांशपरिपूरणस्य तत्फलस्य सिद्धेः ।

---

तिहासपुराणादीनामुदाहरिष्यमाणानां सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुत्वसत्त्वेन व्यावर्तकत्वसम्भवाद्—इति वाच्यम् । तेषामप्यनन्तरमेव वक्ष्यमाणरीत्या अविद्यानिवर्तकसत्तानिश्चयरूपसाक्षात्कारप्रतिबन्धककल्मषनिवृत्तिद्वारा गुर्वधीनवेदान्तविचारवत् साक्षात्काराहेतुत्वेन वस्तुतस्साधनत्वाभावात् । तथा च न नियमविधिस्सम्भवतीत्याशङ्क्याह—न हीति । कुलधर्म इति । कुलक्रमागतधर्मस्य यथा आवश्यकता, तथा वस्तुसत्साधनान्तरप्राप्तेरावश्यकत्वं न हीत्यर्थः । येनेति । आवश्यकत्वेनेत्यर्थः । नियमार्थवत्त्वायेति । विधित्सितगुर्वधीनवेदान्तश्रवणेनेव गुरुनिरपेक्षविचारादिनाऽपि सत्तानिश्चयरूपसाक्षात्कारस्वरूपोत्पत्तिसम्भवे सति गुर्वधीनवेदान्तश्रवणनियमस्य दृष्टप्रयोजनाभावान्नियमादृष्टमुपेयम्, तस्य च कल्मषनिवृत्तिद्वारा विद्यासाधनत्वं च कल्पनीयमेवेत्यर्थः । अदृष्टजन्यत्वं कल्मषनिवृत्तेः विशेषणम् । स्वपदं साक्षात्कारपरम् । आशङ्क्येतेति । येनाशङ्क्येतेति सम्बन्धः । यत्र विधित्सितसाधनस्याप्राप्तिः पाक्षिकी निवारयितुं न शक्यते, तत्र नियमविधिरित्यत्र हेतुमाह—तावतैवेति । अप्राप्तांशलाभमात्रेणेत्यर्थः । विधित्सितसाधनस्य पाक्षिक्यामप्राप्तौ हेतुमाह—साधनान्तरतयेति । सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य दृष्टफलतया तत्स्वरूपे वेदान्तविचारवद्भाषाप्रबन्धादेरप्यन्वयव्यतिरेकाभ्यामेव साधनत्वबुद्धिस्सम्भाव्यते । पूर्वोक्तरीत्या वस्तुतः साधनत्वाभावात् सम्भाव्यमानस्येत्युक्तम् ।

---

[1] सम्भावनस्येति पाठः २ पु० । [2] साधनान्तरस्येति पाठः २ पु० ।

अथवा गुरुमुखाधीनाध्ययनादिव निपुणस्य स्वप्रयत्नमात्रसाध्या-दपि वेदान्तविचारात् सम्भवति सत्तानिश्चयरूपं ब्रह्मापरोक्षज्ञानम्, किन्तु गुरुमुखाधीनवेदान्तवाक्यश्रवणनियमादृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेनोपयुज्यत इति तदभावेन प्रतिबद्धमविद्या-मनिवर्तयत् परोक्षज्ञानकल्पमवतिष्ठते। न च ज्ञानोदये अज्ञा-नानिवृत्त्यनुपपत्तिः। प्रतिबन्धकाभावस्य सर्वत्रापेक्षितत्वेन स-त्यपि प्रत्यक्षविशेषदर्शने उपाधिना प्रतिबन्धात् प्रतिबिम्बभ्रमा-

---

व्याख्यान्तरमाह—अथवेति। मात्रपदेन गुरुः व्यवच्छिद्यते। तदुक्तब्रह्मापरोक्षज्ञानेनैवाविद्यानिवृत्तिलक्षणफलसिद्धेः किं गुर्वधीनश्रवण-विधिनेति शङ्कते—किं त्विति। श्रवणनियमविध्यर्थवत्त्वाय नियमादृ-ष्टस्य ब्रह्मापरोक्षज्ञानेन स्वफलसिद्ध्यर्थमपेक्षणीयत्वकल्पनात् नोक्तापरोक्ष-ज्ञानादविद्यानिवृत्तिसिद्धिरिति परिहरति—गुरुमुखेति। निरासेनेति। निरासद्वारेत्यर्थः। इतीत्यनन्तरं कल्पनीयत्वेनेति शेषः। तदभावेनेति। कल्मषनिरासाभावेन। कल्मपेणेत्यर्थः। कल्पमिति। तुल्यमित्यर्थः। न च नियमार्थवत्त्वायेत्यादिपूर्वग्रन्थे नियमादृष्टस्य कल्मषनिवृत्तिद्वारा ज्ञानोत्पत्तौ हेतुत्वमुक्तम्, अत्र चोत्पन्नेन ज्ञानेनाविद्यानिवृत्तौ जननीयायां तत्र प्र-तिबन्धककल्मषनिरासद्वारा श्रवणनियमादृष्टस्य साधनत्वोक्तौ पूर्वापरविरोध इति वाच्यम्। मतभेदेन विरोधाभावात्। नन्वेवमप्युत्पन्ना ब्रह्मविद्या स्वकार्याविद्यानिवृत्तये नियमादृष्टसाध्यां कल्मषनिवृत्तिमपेक्षत इत्ययुक्तं प्रमात्वात् शुक्त्यादिप्रमावदिति मत्वा शङ्कते—न च ज्ञानोदय इति। अनिवृत्त्यनुपपत्तिरिति। अज्ञाननिवृत्तिरेव स्यादित्यर्थः। शुक्ति-प्रमास्थले अन्यापेक्षाभावेऽपि प्रतिबिम्बभ्रमस्थले विशेषदर्शनस्य प्रतिबन्ध-काभावापेक्षादर्शनेन ब्रह्मविद्याया अपि तदपेक्षोपपत्तेरिति परिहरति—प्र-तिबन्धकाभावस्येति। यद्यपि प्रतिबन्धकाभावस्य सिद्धान्ते न कुत्रापि हेतुत्वं, तथापि 'अप्रतिबद्धा सामग्री कार्यहेतुः' इत्युपगमादस्येतावच्छेदक-तया प्रतिबन्धकाभावापेक्षेति भावः। तदनिवृत्त्युपपत्तेरिति। गुरु-रहितविचारसाध्यविद्यया अविद्यानिवृत्त्यभावोपपत्तेरित्यर्थः। श्रवणनिय-

---

१ परोक्षकल्पमित्येवं पाठः २ पु०। २ प्रतिबिम्बरूपेति पाठः २ पु०।

निवृत्तिवत् तदनिवृत्त्युपपत्तेः । एवं च लिखितपाठादिनाऽपि स्वाध्यायग्रहणप्रसक्तौ गुरुमुखाधीनाध्ययननियमविधिवत् स्वप्रयत्नमात्रपूर्वकस्यापि वेदान्तविचारस्य सत्तानिश्चयरूपब्रह्मसाक्षात्कारार्थत्वेन पक्षे प्राप्तौ गुरुमुखाधीनश्रवणनियमविधिरयमस्तु।

न च "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति गुरूपसदनविधिनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्विफलो नियमविधिरिति शङ्क्यम् । गुरूपसदनस्य श्रवणाङ्गतया श्रवणवि-

---

मविधिं सदृष्टान्तमुपपादयति—एवं चेति । गुरुरहितविचारस्य व्यावर्त्यस्य लाभे सतीत्यर्थः । लिखितेति । अभ्युदयनिःश्रेयसकामस्य वेदार्थानुष्ठानं विना नाभ्युदयादिसिद्धिः । तदनुष्ठानं च वेदार्थज्ञानं विना न सम्भवति । तदर्थज्ञानं च स्वाध्यायपदवाच्यवेदावाप्तिं विना न सम्भवति । वेदावाप्तिं प्रति च गुरुमुखोच्चारणानूच्चारणलक्षणमध्ययनं लिखितपाठादिच साधनत्वेन लोके प्रसिद्धम् । तथा चाध्ययनविधिवाक्येन वेदाध्ययनं नियम्यते 'अध्ययनेनैवाक्षरावाप्तिं सम्पादयेत्' इति । तेन च लिखितपाठादिव्यावृत्तिर्लभ्यते यथा, तथा प्रकृतेऽपीत्यर्थः । ननु ब्रह्मविज्ञानार्थं गुर्वभिगमनं श्रूयते । न च तस्य श्रुतिजन्ये ब्रह्मज्ञाने साक्षात्साधनत्वमस्ति । अतस्तेन ज्ञाने जननीये द्वारापेक्षायां गुर्वधीनविचार एव योग्यतया द्वारत्वेन कल्प्यते, न त्वदृष्टम् । दृष्टद्वारसम्भवे अदृष्टकल्पनायोगात् । गुर्वभिगमनस्य गुर्वधीनविचारद्वारा ज्ञानसाधनत्वे अभिगमनविधिना सिद्धे तेनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्निष्फलः श्रोतव्यवाक्ये श्रवणनियमविधिरिति शङ्कते—न चेति । "ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इति पूर्ववाक्ये निर्दिष्टो ब्राह्मणः 'सः' इति परामृश्यते । निर्वेदं वैराग्यं प्राप्नुयादिति यावत् । केन प्रकारेणेत्यत आह श्रुतिः—अकृतो नित्यो मोक्षः कृतेन कर्मणा नास्तीति । अतो मोक्षं ब्रह्मज्ञानसाध्यं ज्ञात्वा तज्ज्ञानार्थं गुरुमभिगच्छेदित्यर्थः । श्रोतव्यवाक्येन गुर्वधीनविचारे नियमिते सति तदङ्गतया गुर्वभिगमनं विधीयते । श्रवणविध्यभावे तूपगमनाविधेरात्मलाभाभावात् न श्रवणविधिवैफल्यापादकतेति परिहरति—गुरूप-

ध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्याप्रसक्तेः । अन्यथा अध्ययनाङ्गभूतोपगमनविधिनैव लिखितपाठादिव्यावृत्तिरित्यध्ययननियमोऽपि विफलस्स्यात् ।

अथवा अद्वैतात्मपरभाषाप्रबन्धश्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणे नियमविधिरस्तु । न च "न म्लेच्छितवै" इत्यादिनिषेधादेव तदप्राप्तिः । शास्त्रव्युत्पत्तिमान्द्यात् वेदान्तश्रवणमशक्यमिति पुरुषार्थनिषेधमुल्लङ्घ्यापि भाषाप्रबन्धेनाद्वैतं जिज्ञासमानस्य तत्र प्रवृत्तिसम्भवेन नियमविधेरर्थवत्त्वोपपत्तेः ।

---

सदनस्येति । अङ्गविधिना प्रधानविधिवैफल्यापादनेऽतिप्रसङ्गमाह—अन्यथेति । विधिनैवेति । गुरूपगमनस्याक्षरावाप्तिं प्रति अध्ययनरूपदृष्टद्वारसम्भवे तस्यागायोगादिति भावः ।

व्यावर्त्यान्तरमाह—अथवेति । नियमविधिरस्त्विति । अद्वैतं जिज्ञासमानेन वेदान्ता एव विचारणीयाः, न भाषाप्रबन्धा इति विचारविषयनियमविधिरस्त्वित्यर्थः । ननु म्लेच्छशब्दितस्य भाषाप्रबन्धरूपाव्यक्तशब्दस्योच्चारणं पुरुषेण न कर्तव्यम्, अन्यथा पुरुषः प्रत्यवायी भवेदिति निषेधबलादेव श्रवणाधिकारिणो भाषाप्रबन्धव्यावृत्तिसिद्धेः किं विधिनेति शङ्कते—न च नेति । यदि भाषानिषेधस्य ज्ञानाङ्गत्वं स्यात् तदा तन्निषेधमुल्लङ्घ्य तत्र प्रवृत्तौ ज्ञानानुत्पत्तिभयेन तत्र न प्रवर्तेत । न त्वेतदस्ति, पुरुषार्थत्वात्तन्निषेधस्य । तथा च तन्निषेधमुल्लङ्घ्यापि कदाचित् भाषाप्रबन्धादिश्रवणे प्रवृत्तिस्सम्भवतीति परिहरति—शास्त्रव्युत्पत्तीति । उल्लङ्घने हेतुमाह—अशक्यमितीति । अशक्यत्वे हेतुः व्युत्पत्तिमान्द्यम् । ननु यस्याधिकारिणो व्युत्पत्तिमान्द्याद्वेदान्तश्रवणमशक्यं तं प्रति वेदान्तविचारे नियमविधिः कथम् ? अशक्यार्थे विध्यनुपपत्तेरिति चेत्, न । मन्दस्य भाष्यादिरूपवेदान्तविचारासम्भवेऽपि वेदान्तप्रकरणविचारस्य मन्दाधिकारिणोऽपि सम्भवात् । तदुक्तं पञ्चदश्याम्— मन्दप्रज्ञं तु जिज्ञासुमात्मानन्देन बोधयेत् । बोधयामास मैत्रेयीं याज्ञवल्क्यो निजां प्रियाम् ॥ इति । आत्मानन्दनामकप्रकरणेनेस-

---

१ न म्लेच्छितव्यमिति पाठः २ पु० । २ व्यक्तत्वं साधुत्वं तदभावादव्यक्तत्वं बोध्यम् ।

अभ्युपगम्यते हि कर्त्रधिकरणे व्युत्पादितं—पुरुषार्थे अनृतवद-ननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चिद्धेतोरङ्गीकृतनिषे-धोल्लङ्घनस्याविकलां क्रतुसिद्धिं कामयमानस्यानृतवदने प्रवृत्ति-स्स्यादिति पुनः क्रत्वर्थतया दर्शपूर्णमासप्रकरणे "नानृतं वदेत्" इति निषेध इति क्रत्वर्थतया निषेधस्यार्थवत्त्वम्।

यद्वा यथा 'मन्त्रैरेव मन्त्रार्थस्मृतिः साध्या' (पूर्वमी० अ० २ पा० १ अधि० ६) इति नियमः। तन्मूलकल्प-सूत्रात्मीयग्रहणकवाक्यादीनामपि पक्षे प्राप्तेः तथा वेदान्तमूले-

र्थः। पुरुषार्थनिषेधमुल्लङ्घ्यापि महाफलसिद्ध्यर्थं निषिद्धे प्रवृत्तिः, त-न्निवर्तनेन विधेरर्थवत्ता च मीमांसकैरपि स्वीकृतेत्याह—अभ्युपगम्य-ते हीति। अङ्गीकृतं निषेधोल्लङ्घनं येन, स तथोक्तः। कुतश्चिदित्यनेन सूचितं हेतुमाह—अविकलामिति। अर्थवत्त्वमिति। व्युत्पादित-मिति पूर्वेणान्वयः।

व्याप्त्यन्तरमाह—यद्वेति। मन्त्रैरवेति। "अग्निर्मूर्धा" इत्यादयो मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः। ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकारं कुर्वन्ति, उत दृष्टेनैवार्थस्मरणेनेति सन्देहे—कल्पसूत्रादिनाऽपि अनुष्ठेयाद्यर्थस्मृतिसम्भवाददृष्टार्था मन्त्रा इति प्राप्ते, राद्धान्तः—मन्त्राणाम-र्थप्रकाशनद्वारा क्रतूपकारकत्वम्। दृष्टद्वारसम्भवे ऽदृष्टकल्पनानुपपत्तेः। तथा च फलवदनुष्ठानापेक्षितक्रियातत्साधनस्मरणद्वारा मन्त्राणां कर्माङ्ग-त्वम्। न च क्रियातत्साधनस्मरणस्य मन्त्रैरिव कल्पसूत्रादिभिरपि स-

१ कर्त्रधिकरणे व्युत्पादितमर्थवत्त्वमभ्युपगम्यते इत्यन्वयः॥

२ इदं हि अनृतवदनस्य क्रतुधर्मत्वप्रतिपादकाधिकरणत्वेन प्रसिद्धम्। अस्मिंश्च "नानृतं वदेत्" इति निषेधस्य तत्समानाकारेण स्मार्तेन वचनेन, "सत्यं वद" इत्यादिनोपनयनकालिकोपदेशेन वा सिद्धौ दर्शपूर्णमासप्रकरणे पुनरारभ्यमाणमिदं नियमार्थमिति पूर्वपक्षे उक्तस्मार्तनिषेधस्य पुरुषार्थत्वेन पुरुषप्रत्यवायमात्रबोधकत्वेऽपि, उपदेशस्य च अविहिताप्रतिषिद्धन्यायेन अ-नृतवदने गुणदोषाभावबोधकत्वेऽपि क्रतुवैगुण्याबोधकत्वेन तदर्थं क्रत्वर्थो ऽयमपूर्वविधिरिति सिद्धान्तितम्। प्रपञ्चितमेतद्विस्तरेण तन्त्रवार्तिके, सुबो-धिन्यां जैमिनिसूत्रवृत्तौ (अ० ३ पा० ४ अधि० ४) चेति तत एवावधार्यम्। उत्तरमीमांसाप्रसिद्धं कर्त्रधिकरणं भिन्नमस्मात्।

तिहासपुराणपौरुषेयप्रबन्धानामपि पक्षे प्राप्तिसम्भवान्नियमोऽयमस्तु। सर्वथा नियमविधिरेवायम्।

'सहकार्यन्तरविधिः'(अ० ३पा० ४अधि० १४सू० ४७)इत्यधिकरणभाष्ये अपूर्वविधित्वोक्तिस्तु नियमविधित्वेऽपि पाक्षिकाप्राप्तिसद्भावात् तदभिप्रायेति तत्रैव "पक्षेण" इति पाक्षिकाप्राप्तिकथनपरसूत्रपदयोजनेन स्पष्टीकृतमिति विवरणानुसारिणः।

म्भवात् न तस्य द्वारत्वमिति वाच्यम्। 'मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः' इति नियमविधिसम्भवात्। नियमस्तु अदृष्टार्थो भविष्यति। तदुक्तम्—'यत्र दृष्टं न लभ्येत स्यात्तत्रादृष्टकल्पना' इति। तथा च यथा मन्त्रनियमविधिना मन्त्रमूलककल्पसूत्रादिव्यावृत्तिः क्रियते, तथा अधीतसाङ्गस्वाध्यायेन ब्रह्मजिज्ञासुना वेदान्ता एव विचार्या इति वेदान्तनियमे कृते तन्मूलेतिहासादीनां व्यावृत्तिः लभ्यत इति दृष्टान्तदार्ष्टान्तिकग्रन्थयोरर्थः। याज्ञिकैः प्रणीतमनुष्ठानसमवेतपदार्थसङ्ग्राहकं वाक्यं ग्रहणकवाक्यम्। इतिहासो महाभारतम्। पौरुषेयप्रबन्धः प्रबोधचन्द्रोदयादिः। उदाहृतानि व्यावर्त्यान्युपलक्षणम्, अन्येषामपि व्यावर्त्यानां सम्भवात्। तथा हि "तत्कारणं साङ्ख्ययोगाभिपन्नम्" इति श्रुतौ ब्रह्मप्रतिपत्तिद्वारा तत्प्राप्तिं प्रति उपायद्वयं निर्दिष्टम्—श्रवणमननध्यानात्मकस्साङ्ख्यशब्दार्थ एकः, तृतीयपरिच्छेदे वक्ष्यमाणो योगशब्दोदितः उपासनामार्गस्त्वपरः। तत् प्रकृतं कारणं जगत्कारणत्वोपलक्षितं ब्रह्म साङ्ख्ययोगाभ्यां ज्ञानद्वाराभिपन्नम्—आभिमुख्येन प्रसक्त्वेन प्राप्तमिति श्रुत्यर्थः। तथा सगुणब्रह्मोपासनम् उपासकस्य ब्रह्मलोकं गतस्य तत्त्वसाक्षात्कारद्वारा ब्रह्मप्राप्तिहेतुरिति ब्रह्ममीमांसायां(४–४–२२)प्रसिद्धम्। तथा तपोविशेषादिकं साक्षात्तत्त्वज्ञानसाधनत्वेन पुराणादिप्रसिद्धमुदाहर्तव्यम्। तथा च गुरुवेदान्तेषु श्रद्धावतः कुशलस्य श्रवणाधिकारिणस्तत्त्वज्ञानार्थमुक्तेषु योगमार्गसगुणब्रह्मोपासनतपोविशेषादिष्वपि वेदान्तश्रवणे इव कदाचित् प्रवृत्तिस्स्यादिति तन्निवृत्तिफलको नियमविधिः सम्भवति। नियमविधिपक्षमुपसंहरति—सर्वथेति। ननु नियमविधित्वपक्षे 'सहकार्यन्तरविधिः' इत्यधिकरणभाष्यविरोध इत्यत आह-सहकार्यन्तरेति। अपूर्वविधित्वस्य निराकृतत्वादिति भावः। तत्रै-

१ अपूर्वत्वोक्तिरिति पाठः २ पु०।

(वे०सू०मं०) तथा तदीयाः शब्दस्तु परोक्षज्ञानकृत्पुरा ॥
मननादियुतोऽध्यक्षं कुर्याद्विधुरचित्तवत् ॥ ७ ॥

कृतश्रवणस्य प्रथमं शब्दान्निर्विचिकित्सं परोक्षज्ञानमेवोत्पद्यते । शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्यानतिलङ्घनात् । पश्चात्तु कृतमनननिदिध्यासनस्य सहकारिविशेषसम्पन्नात् तत एवापरोक्षज्ञानं जायते । तत्तांशगोचरज्ञानजननासमर्थस्यापीन्द्रियस्य तत्समर्थसंस्कारसाहित्यात् प्रत्यभिज्ञानजनकत्ववत् स्वतोऽपरोक्षज्ञानजननासमर्थस्यापि शब्दस्य विधुरपरि-

---

वेति । तदधिकरणभाष्य एवेत्यर्थः ।

श्रोतव्यवाक्येन निर्विचिकित्सपरोक्षशाब्दज्ञानोद्देशेनैव श्रवणं विधीयते, न तु शाब्दसाक्षात्कारोद्देशेन । शब्दस्य स्वतः परोक्षज्ञानजननस्वाभाव्यात् । विचारसहकृतस्यापि शब्दस्य क्वापि साक्षात्कारहेतुत्वादर्शनाच्च । परोक्षज्ञानफलकोऽप्ययं नापूर्वविधिः । विधिं विनाऽपि शब्दे शाब्दज्ञानहेतुत्वस्य, विचारे विचार्यनिर्णयहेतुत्वस्य च प्राप्तौ तदुभयबलेन विचारविशिष्टवेदान्तरूपश्रवणस्य निर्विचिकित्सशाब्दज्ञानहेतुत्वप्राप्तेः साधितत्वात् । किं तु पूर्वोक्तान्येव व्यावर्त्यान्यादाय नियमविधिरेवेति मतमाह—कृतश्रवणस्य प्रथममिति । ननु मनननिदिध्यासने किं निर्विचिकित्सशाब्दपरोक्षज्ञानोद्देशेनैव विधीयेते, किं वा शाब्दापरोक्षं प्रति ? । नाद्यः । मननाद्यनुष्ठानात् प्राक् श्रवणमात्रादेव तत्सिद्धेः । न द्वितीयः । शब्दस्य परोक्षज्ञानजनन एव सामर्थ्यस्य त्वदभिमतत्वादित्याशङ्कां द्वितीयपक्षपरिग्रहेण परिहरति—पश्चादिति । शाब्दनिर्विचिकित्सपरोक्षज्ञानानन्तरमित्यर्थः । कृते मनननिदिध्यासने येन,स तथोक्तः । तत एवेति । शब्दादेवेत्यर्थः । सहकारिवैचित्र्यात् कार्यवैचित्र्यदर्शनादिति भावः । तदेवोदाहरणेन दर्शयति—तत्तांशेति । तत्समर्थेति । तत्तांशगोचरज्ञानजननसमर्थेत्यर्थः । शब्दस्येति । शब्दस्यापरोक्षज्ञानजनकत्वं युक्तमित्युत्तरत्र सम्बन्धः । ननु तत्तासंस्कारस्य इन्द्रियसहकारित्वेन क्लृप्तावपि भावनाप्रचयस्य ज्ञानकरणसहकारित्वेन साक्षात्कारजननसामर्थ्यं न क्वापि क्लृप्तमित्याशङ्क्याह—विधुरेति । तत्समर्थेत्यत्र साक्षात्कारजननं तच्छब्दा-

भावितकामिनीसाक्षात्कारस्थले तत्समर्थत्वेन क्लृप्तभावनाप्रचय-साहित्यादपरोक्षज्ञानजनकत्वं युक्तम् । ततश्च शब्दस्य स्वतः स्वविषये परोक्षज्ञानजनकत्वस्य भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेन विधुरान्तःकरणवदपरोक्षज्ञानजनकत्वस्य च प्राप्तत्वात् पूर्ववन्नियमविधिरिति तदेकदेशिनः ॥

(वे०सू०मं०) अन्ये परोक्ष एवात्मज्ञाने नियममास्थिताः ॥
मनसैवेदमाप्तव्यमित्यादिश्रुतिदर्शनात् ॥ ८ ॥

वेदान्तश्रवणेन न ब्रह्मसाक्षात्कारः, किन्तु मनसैव । "मनसैवानुद्रष्टव्यम्" इति श्रुतेः । "शास्त्राचार्योपदेशशमदमादि-

---

र्थः । नन्वेवमपि शब्दसहकारित्वेन मननध्यानात्मकभावनाप्रचयस्य मानान्तरेण शाब्दसाक्षात्कारं प्रति हेतुत्वाप्राप्तेः मननादिविधेरपूर्वविधित्वप्रसङ्ग इति, नेत्याह—ततश्चेति । परोक्षज्ञानजनकत्वस्यापरोक्षज्ञानजनकत्वस्य च प्राप्तत्वादिति सम्बन्धः । परोक्षज्ञानहेतुत्वस्य प्राप्त्यभिधानं श्रवणविधेर्नियमविधित्वार्थमिति द्रष्टव्यम् । विधुरेति । भावनासहकृतस्य विधुरान्तःकरणस्य कामिनीसाक्षात्कारहेतुत्वदर्शनस्थले 'बहिरस्वतन्त्रमप्यन्तःकरणं बाह्यवस्तुभावनासहकृतं सत् तत्साक्षात्कारहेतुः' इति विशिष्य कार्यकारणभावे ग्रहीतव्ये लाघवात् बाधकाभावाच्च 'भावनाप्रचयसहकृतं ज्ञानकरणत्वावच्छिन्नमपरोक्षज्ञानं प्रति हेतुः' इति कार्यकारणभावो गृह्यते इति भावः । अत्र शब्दस्य परोक्षज्ञानजननस्वाभाव्यमेवासिद्धम् । ज्ञानगतपरोक्षत्वादेः *करणविशेषप्रयुक्तत्वस्य निराकरिष्यमाणत्वात् । अतश्शाब्दापरोक्षं प्रति मननादेरिव श्रवणस्यापि विधिर्नानुपपन्न इत्यस्वरसं सूचयति—तदेकदेशिन इति । विवरणैकदेशिन इत्यर्थः ।

मतान्तरमाह—वेदान्तश्रवणेन न ब्रह्मसाक्षात्कार इति । शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्यानतिलङ्घनादिति हेतुरत्रापि मते द्रष्टव्यः । किं तर्हि ब्रह्मसाक्षात्कारे करणम् ? इति पृच्छति—किं त्विति । 'मन एव करणम्' इति मत्वा तत्र मानमाह—मनसैवेति । क्वचित् 'किन्तु'

---

* करणविशेषपरोक्षत्वस्य चेति पाठः ।

संस्कृतं मन आत्मदर्शने करणम्'' इति गीताभाष्यवचनाच्च। श्रवणं तु निर्विचिकित्सपरोक्षज्ञानार्थमिति तादर्थ्येनैव नियमविधिरिति केचित्।

(वे०सू०मं०) गान्धर्वशास्त्रवत् चित्तसहकारितयेष्यते॥
आत्माऽपरोक्षे श्रवणं, तत्रैव नियमरूपरे॥ ९॥

अपरोक्षज्ञानार्थत्वेनैव श्रवणे नियमविधिः। "द्रष्टव्यः" इति फलकीर्तनात्। तादर्थ्यं च तस्य करणभूतमनःसहकारितयैव, न साक्षात्। शब्दादपरोक्षज्ञानानङ्गीकरणात्।

न च तस्य तेन रूपेण तादर्थ्यं न प्राप्तमित्यपूर्वत्रि-

---

इत्यनन्तरं मनसैवेति पाठोऽपि पृथगस्ति, तदा नानुपपत्तिः। तत्रैव भाष्यसम्मतिमाह—शास्त्रेति। शास्त्रं "तत्त्वमसि" इत्यादिवाक्यम्। आचार्योपदेशः–आचार्यकर्तृकवाक्यार्थविवरणरूपः। आदिपदं दमतितिक्षादिसङ्ग्रहार्थम्। तथा चात्र ब्रह्मसाक्षात्कारस्य मानसत्वप्रतिपादनेन तत्करणमनस्सहकारितयैव मनननिदिध्यासनयोर्विधिः, न तु पूर्वमते इव शाब्दसाक्षात्कारकरणशब्दसहकारितयेति पूर्वमतादस्य मतस्य विशेषस्सूचितो भवति। श्रवणे तु पूर्वमतादविशेषमाह–श्रवणं त्विति। तादर्थ्येनैवेति। निर्विचिकित्सशाब्दपरोक्षज्ञानार्थत्वेनैवेत्यर्थः।

मतान्तरमाह–अपरोक्षज्ञानेति। ननु तर्करूपविचारात्मकस्य श्रवणस्य स्वतस्साक्षात्कारफलकत्वायोगात्तदनुग्राह्यं प्रमाणं वक्तव्यम्, तच्च किम्, इत्यपेक्षायामाह–तादर्थ्यं चेति। साक्षात्कारार्थत्वं चेत्यर्थः। तस्येति। वेदान्तश्रवणस्येत्यर्थः। करणभूतेति। ब्रह्मसाक्षात्कारकरणभूतेत्यर्थः। नतु ब्रह्मसाक्षात्कारकरणशब्दसहकारितयेत्येवकारार्थः। नसाक्षादिति। वेदान्तश्रवणस्य स्वातन्त्र्येण साक्षात्कारजनकत्वं नास्ति, तस्य तर्करूपतया स्वतः प्रमाणत्वाभावादिति भावः। मनस्सहकारितयैवेत्येवकारार्थे हेतुमाह–शब्देति। तस्येति। वेदान्तश्रवणस्येत्यर्थः। तेन रूपेणेति। साक्षात्कारकरणमनस्सहकारित्वरूपेणेत्यर्थः। साक्षात्कारकरणमनस्सहकारित्वेन प्राप्त्यभावेऽपि तत्करणेन्द्रियसहकारित्वेन प्राप्तिरस्तीत्या-

धित्वप्रसङ्गः । श्रावणेषु षड्जादिषु समारोपितपरस्पराविवेकनिवृत्त्यर्थं गान्धर्वशास्त्रश्रवणसहकृतश्रोत्रेण परस्परासङ्कीर्णतद्याथार्थ्यापरोक्ष्यदर्शनेन प्रकाशमाने वस्तुन्यारोपिताविवेकनिवृत्त्यर्थशास्त्रसद्भावे तच्छ्रवणं तत्साक्षात्कारजनकेन्द्रियसहकारिभावेनोपयुज्यते इत्यस्य क्लृप्तत्वादित्यपरे ॥

(वे॰सू॰मं॰) ऊहापोहात्मिका चित्तक्रियैव श्रवणं विधेः ॥
अपरोक्षं परोक्षं वा नामानस्यास्य तत्फलम् ॥१०॥
तस्मात्पुन्दोषतात्पर्यभ्रान्तिसंस्कारशान्तये ॥
नियमोऽस्येति सङ्क्षेपशारीरिककृतो विदुः ॥ ११ ॥

वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूल-

---

ह—श्रावणेष्विति । श्रोत्रजन्यप्रत्यक्षविषयेष्वित्यर्थः । षड्जादिष्विति । षड्जादयो ध्वनिविशेषाः । तेषु गान्धर्वशास्त्रश्रवणरहितस्य परस्परमविवेकस्समारोपितो वर्तते । परस्परमविवेकः(१) परस्परतादात्म्यरूपः परस्परधर्मवत्तारूपश्चेति बोध्यम् । गान्धर्वशास्त्रविचारवतश्च तद्विचारसहकृतश्रोत्रेन्द्रियेणैव षड्जादयः परस्परं विविक्ततयाऽनुभूयन्ते । एवं मनसाऽन्तरिन्द्रियेणानुभूयमानेषु चिदात्ममनःप्राणशरीरादिषु परस्परं तादात्म्यादिरूपाविवेकः प्राणिनामनुभवसिद्धः । अत्रापि यद्यारोपनिवर्तकं शास्त्रमस्ति, तदा तत्सहकृतमन्तरिन्द्रियमेव बुद्ध्यादिविविक्तमात्मानं ब्रह्मस्वरूपतया वेदान्तैः प्रतीयमानं साक्षात्कारयेदिति विचारवान् पुरुषः षड्जादिस्वरसाक्षात्कारस्थले कार्यकारणभावं कल्पयतीत्याह—प्रकाशमान इति । तच्छ्रवणं शास्त्रश्रवणम् । तत्साक्षात्कारेति । प्रकाशमानवस्तुसाक्षात्कारेत्यर्थः । उपयुज्यते—विविक्ततया वस्तुसाक्षात्कारहेतुर्भवतीत्यर्थः । इत्यस्येति । इति उक्तप्रकारेणास्य साक्षात्कारकरणभूतेन्द्रियसहकारित्वस्य वेदान्तश्रवणे विधिं विनैव प्राप्तत्वान्नापूर्वविधित्वप्रसङ्ग इत्यर्थः । उक्तेषु पक्षेषु शाब्दाद्यपरोक्षोद्देशेन वा शाब्दपरोक्षोद्देशेन वा श्रवणविधिरिति स्थितम् ।

इदानीं प्रतिबन्धनिरासोद्देशेनैव तद्विधिरिति मतान्तरमाह—वेदा-

---

१ परस्पराविवेको नामेति पाठः ॥

न्यायविचारात्मकचेतोवृत्तिविशेषरूपस्य श्रवणस्य न ब्रह्मणि परोक्षमपरोक्षं वा ज्ञानं फलम् । तस्य शब्दादिप्रमाणफलत्वात् । न चोक्तरूपविचारावधारिततात्पर्यविशिष्टशब्दज्ञानमेव श्रवणमस्तु तस्य ब्रह्मज्ञानं फलं युज्यत इति वाच्यम् । ज्ञाने विध्यनुपपत्तेः । श्रवणविधेर्विचारकर्तव्यताविधायकजिज्ञासासूत्रमूलत्वोपगमाच्च

---

न्तवाक्यानामिति । प्रमेयासम्भावनानिवृत्त्यनुकूलन्यायविचारात्मकमननव्यावृत्तये तात्पर्यनिर्णयानुकूलेत्युक्तम् । तन्निर्णयानुकूलन्यायाश्चोपक्रमोपसंहारैकरूप्यादय(१) इति बोध्यम् । चेतोवृत्तिविशेषपदेन यत्नसाध्यक्रियारूपा वृत्तिः विवक्षिता, न तु तदसाध्या ज्ञानरूपा वृत्तिः विवक्षिता, ज्ञानस्य विध्ययोग्यताया वक्ष्यमाणत्वात् । ब्रह्मणीति विषयसप्तमी । तस्येति । ज्ञानस्येत्यर्थः । शब्दादीत्यादिपदं प्रत्यक्षादिसङ्ग्रहार्थम् । ज्ञानोद्देशेन श्रवणं विधीयत इति मताभिमतं श्रवणशब्दार्थमनूद्य निराकरोति—न चोक्तरूपेति । ब्रह्मजिज्ञासासूत्रस्य (व्या० १-१-१) 'साधनचतुष्टयसम्पन्नेन ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्यः' इत्यर्थः । सौत्रजिज्ञासापदस्य विचारलक्षकत्वात् । तस्य च सूत्रस्य श्रोतव्यवाक्यं मूलम् । ततश्च श्रोतव्यवाक्ये यदि श्रवणं ज्ञानरूपम्, तदा 'श्रोतव्यः' इत्यस्य श्रवणरूपज्ञानकर्तव्यता अर्थस्स्यात् । तथा च जिज्ञासासूत्र-श्रोतव्यवाक्ययोः मूलमूलिभावो न स्यात्, एकार्थत्वाभावादित्याह—श्रवणविधेरिति । ऊहः न्यायाभासेभ्यो निष्कृष्य

---

१ उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ १ ॥

तत्र—छान्दोग्यषष्ठे "सदेव सोम्य" इत्यद्वितीयं ब्रह्मोपक्रम्य "ऐतदात्म्यमिदꣳ सर्वम्" इत्युपसंहारात्तत्रत्यसकलसन्दर्भस्याद्वितीयब्रह्मपरत्वं निर्णीयते इति आद्यमुपक्रमोपसंहाररूपं तात्पर्यलिङ्गम् । "तत्त्वमसि" इत्यादेर्नवकृत्वोऽभ्यासदर्शनादद्वितीयपरत्वानिर्णायकं द्वितीयमभ्यासरूपम् । "यं वै सोम्यैतमणिमानं न निभालयसे" इत्यादिनाऽद्वितीयब्रह्मणो मानान्तरायोग्यत्वकथनादपूर्वत्वरूपं तृतीयम् । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्यनेन विदुषो विदेहकैवल्यरूपं फलं चतुर्थम् । "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यादिनाऽद्वितीयज्ञानार्थोऽर्थवादः पञ्चमः । "एकेन मृत्पिण्डेन" इत्यादिदृष्टान्तेनोपपत्तिरूपषष्ठमिति षड्लिङ्गानि प्रदर्शितानि एभिः षड्भिर्लिङ्गैः सर्वत्र तात्पर्यनिर्णयो भवति ।

ऊहापोहात्मकमानसक्रियारूपविचारस्यैव श्रवणत्वौचित्यात्। न च विचारस्यैव तात्पर्यनिर्णयद्वारा, तज्जन्यतात्पर्यभ्रमादिपुरुषापराधरूपप्रतिबन्धकविगमद्वारा वा ब्रह्मज्ञानं फलमस्त्विति वाच्यम्। तात्पर्यज्ञानस्य शाब्दज्ञाने कारणत्वानुपगमात्,(१) कार्ये क्वचिदपि प्रतिबन्धकाभावस्य कारणत्वानुपगमाच्च तयोर्द्वारत्वानुपपत्तेः। ब्रह्मज्ञानस्य विचाररूपातिरिक्तकारणजन्यत्वे तत्प्रा-

---

न्यायानामुपादानम्। न्यायाभासनिराकरणमपोहः। ननु "सदेव सोम्य" इत्यादि "तत्सत्यं स आत्मा तत्त्वमसि" इत्येतदन्तं वाक्यजातमद्वितीयवस्तुपरं तत्प्रतिपादकोपक्रमोपसंहारवत्त्वात्—इत्येवमात्मकस्य विचारस्यानुमितिरूपं तात्पर्यनिर्धारणं साक्षात्फलम्; तद्द्वारा तात्पर्यभ्रमादिरूपप्रतिबन्धकनिवृत्तिः विचारस्य फलम्; तन्निवृत्तौ च वाक्यमप्रतिबद्धं सद् अद्वितीयब्रह्मबोधं जनयति; एवं श्रुत्यन्तरेष्वपीति वस्तुगतिः। तथा च श्रवणस्य साक्षाद् ब्रह्मज्ञानफलकत्वाभावे ऽपि परम्परया तत्फलकत्वं स्यादिति शङ्कते—न च विचारस्यैवेति। अप्यर्थ एवकारः। तथा च यथा ज्ञानं शब्दप्रमाणस्य फलं, तथा तद्विचारस्यापि फलमस्तु। शब्दप्रमाणफले ज्ञाने विचारस्यापि तात्पर्यनिर्णयद्वारा, तदधीनप्रतिबन्धनिरासद्वारा वा हेतुत्वसम्भवादित्यर्थः। तज्जन्यत्वं विगमविशेषणम्। भ्रमादिरेव पुरुषापराधः। तात्पर्यज्ञानस्य द्वारत्वाभावे हेतुमाह—तात्पर्यज्ञानस्येति। प्रतिबन्धनिरासोपजननेनान्यथासिद्धत्वादिति भावः। तात्पर्यज्ञानस्य शाब्दबोधं प्रति हेतुत्वाभावे विचारस्य तात्पर्यनिर्णयसाध्यप्रतिबन्धकनिवृत्तिद्वारा शा-

---

(१) अयं भावः—तात्पर्यज्ञानस्य शाब्दबोधं प्रति हेतुत्वे तस्य तन्नियतपूर्ववर्तित्वमपेक्षितम्। तच्च शुकाद्युदीरितवाक्यात्, मूर्खबालककृतोत्तमकाव्यात् सत्यपि वक्तृतात्पर्यव्यतिरेकनिश्चये बोधदर्शनेन व्यभिचारितम्। 'अस्मादर्थद्वयविषयको बोधो जायते तात्पर्यं तु क्वेति न जानीमः' इति सर्वजनीनानुभवेन तस्याहेतुत्वमेव युक्तम्। ऐश्वरतात्पर्यज्ञानाद्युक्तेरपि फलैकोन्नेयत्वेन प्राग् दुर्वचत्वात्। शब्दसमभिव्याहारात्तात्पर्यं निर्णीय बोध इति तु 'अहो विमलं जलं नद्याः कच्छे महिषाश्चरन्ति' इत्यादौ व्यभिचारि। 'पय आनीयताम्' इत्यादावर्थबोधोत्तरं श्रोतुः 'दुग्धं जलं वा' इति प्रश्नदर्शनाच्चासम्भवदुक्तिका हेतुत्वोक्तिरिति।

माण्यस्य परतस्त्वापत्तेश्च। तस्मात्तात्पर्यनिर्णयद्वारा पुरुषापराधनिरासार्थत्वेनैव विचाररूपे श्रवणे नियमविधिः। "द्रष्टव्यः" इति तु दर्शनार्हत्वेन(१) स्तुतिमात्रम्, न श्रवणफलसङ्कीर्तनमिति सङ्क्षेपशारीरकानुसारिणः॥

(वे०सू०मं०) चिकित्साशास्त्रवत् प्राप्तव्यापारान्तरवारिणी॥
श्रवणे परिसङ्ख्येयमिति वार्तिकवेदिनः॥ १२॥

ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य चिकित्साज्ञानार्थं चरकसुश्रुतादिश्रवणे प्रवृत्तस्येव मध्ये व्यापारान्तरेऽपि प्रवृत्तिः प्रस-

---

ब्दबोधहेतुत्वं दूरापास्तमिति मत्वा प्रतिबन्धकाभावस्याहेतुत्वे हेतुमाह—कार्ये क्वचिदपीति। 'सत्यामपि सामग्र्यां प्रतिबन्धवशात् कार्यं न जातम्' इति लोकव्यवहारविरोधात् प्रतिबन्धकाभावस्य सामग्र्यामन्तर्भावो नाङ्गीक्रियते, किन्तु 'अप्रतिबद्धा सामग्री कार्यहेतुः' इति स्वीकृत्य सामग्र्या(२)अवच्छेदकतया दण्डत्वादिवदन्यथासिद्धिरेव स्वीक्रियते इति भावः। तात्पर्यानुमितिहेतुविचारात्मकानुमानस्य शाब्दप्रमितिहेतुत्वे दूषणमाह—ब्रह्मज्ञानस्येति। अतिरिक्तेति। शब्दप्रमाणातिरिक्तेत्यर्थः। परतस्त्वापत्तेरिति। प्रामाण्याश्रयज्ञानस्यातिरिक्तकारणजन्यत्वरूपं प्रामाण्यस्योत्पत्तौ परतस्त्वं स्यादित्यर्थः। ततश्चापसिद्धान्त इति भावः। यदि श्रवणस्य न ब्रह्मज्ञानं फलं, तर्हि किमुद्देशेन तद्विधिः? अत आह—तस्मादिति। ब्रह्मज्ञानफलकत्वासम्भवादित्यर्थः। ननु तर्हि कथं 'द्रष्टव्यः' इति श्रवणफलकीर्तनम्? तत्राह—द्रष्टव्य इति त्विति। स्तुतिमात्रमिति। आत्मनः इति शेषः। स्तुतिश्च तच्छ्रवणादौ प्रवृत्त्यर्थेति भावः।

परिसङ्ख्याविधिपक्षमाह—ब्रह्मज्ञानार्थमिति। ननु वाचस्पतिमते वक्ष्यमाणरीत्या वेदान्तश्रवणस्य नियमाप्तिं सिद्धां कृत्वा परिसङ्ख्याविधिपक्षप्रवृत्तिः वाच्या; तथाच सति ज्ञानमुद्दिश्य श्रवणाद्यनुतिष्ठतः कथं व्यापारान्तरं प्रसज्येत, यतस्तन्निवृत्तिफलकः परिसङ्ख्याविधिस्सम्भ-

---

(१) तथाचोक्तं सङ्क्षेपशारीरके—
अर्हे कृत्यतृचश्च पाणिनिवचः स्पष्टं विधत्ते यतः
तस्माद्दर्शनयोग्यतां वदति नस्तव्यो न तत्त्वान्तरमिति २ अ० ५१ श्लो०
(२) सामग्र्येति तृतीयान्तम्।

ज्यत इति तन्निवृत्तिफलकः "श्रोतव्यः" इति परिसङ्ख्याविधिः।

"ब्रह्मसंस्थोऽमृतत्वमेति" (छा० २। २३। १) इति छान्दोग्ये अनन्यव्यापारत्वस्य मुक्त्युपायत्वावधारणात्सम्पूर्व-

---

वेदित्याशङ्क्य ब्रह्मज्ञानसाधनत्वेन व्यापारान्तराप्रसक्तावपि भेदवासनाव-शाद्व्यापारान्तरं सम्भवतीति सदृष्टान्तमाह—चिकित्सेति। चिकित्सा औषधं, तज्ज्ञानस्य वैद्यकग्रन्थैकसाध्यत्वेन तज्ज्ञानाय चरकसुश्रुतादिसञ्ज्ञक-ग्रन्थश्रवणे प्रवृत्तस्य तादर्थ्येन व्यापारान्तराप्रसक्तावपि यथा वि-षयवासनावशादेव तत्प्रसक्तिः तद्वदित्यर्थः। ननु सुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्य व्यापारान्तरसत्त्वेऽपि यथा चिकित्साज्ञानं निष्प्रत्यूहमुत्प-द्यते, तथा प्रत्यहं वेदान्तश्रवणमनुतिष्ठतो मध्ये मध्ये लौकिकवैदिक-व्यापारसत्त्वेऽपि ब्रह्मज्ञानोदयसम्भवान्निष्फलः परिसङ्ख्याविधिरित्या-शङ्क्य श्रवणविध्यर्थवत्त्वाय निरन्तरमनुष्ठितश्रवणस्यैव ज्ञानसाधनत्वं, न कादाचित्कस्येति विधेरनैष्फल्यमिति परिहारमभिप्रेत्य यथोक्तार्थे श्रुतिस्मृति-वाक्यान्युदाहरति—ब्रह्मसंस्थ इति। न विद्यते अन्यो व्यापारो यस्य पुरु-षस्य स तथा, तस्य भावस्तत्त्वम्, तस्येत्यर्थः। ब्रह्मविषयकश्रवणा-दिव्यापारात् शमदमाद्युपबृंहितादन्यव्यापारशून्यत्वस्येति यावत्। तथा च सन्न्यासाधिकरणभाष्यम्(१)—( व्या० ३ अ० ४ पा० २० सू० ) 'शमदमाद्युपबृंहितं ब्रह्मनिष्ठत्वं तस्य स्वधर्मः, तदतिक्रमे च तस्य प्रत्यवायः' इति। अवधारणं निश्चयः। ब्रह्मसंस्थपदेनाय-मर्थः कथं लभ्यते? इत्यत आह—सम्पूर्वस्येति। न च ब्रह्मणि समाप्तिर्नाम विदेहकैवल्यरूपो लय एवास्त्विति वाच्यम्। तथा सति पुनः "अमृतत्वमे-

---

(१) एतदेव परामर्शाधिकरणे "ब्रह्मसंस्थोऽमृतत्वमेति" इतिश्रुत्या ब्रह्मसंस्थतायाः स्तुत्या 'यत्स्तूयते तद्विधीयते' इतिन्यायात् विधेयत्वेन प्रतिपन्ना, सा च चतुर्भिरप्याश्रमिभिर्विधेया आहोस्वित् परिव्राजकेनैवेति संशये, ब्रह्मणि संस्था ब्रह्मसंस्था इति अवयवार्थपरिग्रहेण ब्रह्मार्पणबुद्ध्या कर्म कुर्वतां गृहस्था-दीनामपि ब्रह्मणि तात्पर्यलक्षणाया ब्रह्मनिष्ठायाः कर्तुं शक्यत्वात् सर्वैर्विधेयेति पूर्वपक्षे, अनन्यव्यापाररूपब्रह्मसंस्थायाः स्वाश्रमविहितकर्मानुष्ठातृषु गृहस्था-दिषु असम्भवः। संन्यासिभिस्तु सर्वकर्मसंन्यासाद् सामञ्जस्येन विधातुं शक्यते, इति तैरेव विधेयेति सिद्धान्तितम्॥

स्य तिष्ठतेः समाप्तिवाचितया ब्रह्मसंस्थाशब्दशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापाररूपत्वात् । "तमेवैकं जानथ अन्या वाचो विमुञ्चथ" इत्याथर्वणे कण्ठत एव व्यापारान्तरप्रतिषेधाच्च । "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इत्यादिस्मृतेश्च । न च–ब्रह्मज्ञानानुपयोगिनो व्यापारान्तरस्य एकस्मिन् साध्ये श्रवणेन सह समुच्चित्य प्राप्त्यभावान्न तन्निवृत्त्यर्थः परिसङ्ख्याविधिर्युज्यते इति वाच्यम् । "सहकार्यन्तरविधिः" (उ० मी० अ० ३ पा० ४ अधि० १४ सू० ४७ ) इत्यादिसूत्रे 'यस्मात् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति, तस्मान्नियमविधिः'इति तद्भाष्ये च कृतश्रवणस्य शाब्दज्ञानमात्रात् कृतकृत्यतां मन्वानस्याविद्यानिवर्तकसाक्षात्कारोपयोगिनि निदिध्या-

---

ति" इति भागत्रैयर्थ्यापत्तेः । अतोऽमृतत्वप्राप्तिं प्रति ब्रह्मसंस्थता उपायत्वेन विधीयत इति वक्तव्यम् । अतो ब्रह्मणि समाप्तेरनन्यव्यापारत्वे पर्यवसानं भाष्ये कृतम् । तथा चानन्यव्यापारत्वस्य मुक्त्युपायबोधकवाक्येनार्थान्मुमुक्षोः व्यापारान्तरनिवृत्तिः क्रियत इति भावः । साक्षान्निवृत्तिबोधकवाक्यमुदाहरति–तमेवैकमिति । यस्मिन्नाधारे द्यावापृथिव्यादि समस्तं जगदध्यस्तं, तमेवाधारमेकरूपमात्मानं जानथ हे मुमुक्षवः । ज्ञानसाधनत्वेन चानात्मप्रतिपादकशब्दोच्चारणादित्यागः कर्तव्य इत्याह श्रुतिः–'अन्या वाचो विमुञ्चथ' इति ।

नियमविधिवादी शङ्कते–न च ब्रह्मज्ञानानुपयोगिन इति । प्रतिबन्द्या समाधत्ते–सहकार्यन्तरेति । न प्राप्नोति मौनमिति शेषः । उदाहृतसूत्रभाष्ययोः नियमविधिवादिसम्मतं तात्पर्यं परिसङ्ख्याविधिवादी दर्शयति–कृतश्रवणस्येति । मन्वानस्येत्यनन्तरं व्यापारान्तरेऽपि प्रवर्तमानस्येति शेषः । सूत्रे भाष्ये च अतत्साधनपक्षप्राप्तिमात्रेण नियमविधेरभ्युपगतत्वेति सम्बन्धः । वार्तिके अत्रेत्यस्य श्रोतव्यवाक्ये इत्यर्थः । अत्र नियमो विध्यर्थो भवेदित्येकस्सम्बन्धः । यदि नित्यप्राप्तत्वात् नियमविधिर्न सम्भवति, तदा परिस-

सने प्रवृत्तिर्न स्यादिति अतत्साधनपक्षप्राप्तिमात्रेण निदिध्यासने नियमविधेरभ्युपगततया तन्न्यायेनासाधनस्य समुच्चित्य(१)प्राप्तावपि तन्निवृत्तिफलकस्य परिसङ्ख्याविधेः सम्भवादिति ।

नियमः परिसङ्ख्या वा विध्यर्थोऽत्र भवेद्यतः ॥
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥ १ ॥
इति वार्तिकवचनानुसारिणः केचिदाहुः ॥

(वे०सू०मं०) श्रवणं त्वागमाचार्यवाक्यजं ज्ञानमिष्यते ॥
अयोग्येऽत्र विधिर्नेति वाचस्पतिमतानुगाः ॥१३॥

"आत्मा श्रोतव्यः" इति मननादिवत् आत्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजन्यमात्म(२)ज्ञानमेव, न तु तात्पर्यविचाररूपमिति न तत्र कोऽपि विधिः ।

---

ङ्ख्या वा विध्यर्थो भवेदिति सम्बन्धः । परिसङ्ख्याया विध्यर्थत्वे हेतुः यत इत्यादिः । परात्मोपासने अन्यव्यापाररहिते वयं मुमुक्षवो यतः प्रवृत्ता इत्यर्थः ।

श्रवणादीनां विधेयत्वपक्षं मतभेदेन दर्शयित्वा तेषां विध्यभावपक्षमाह -आत्मा श्रोतव्य इत्यादिना । निबध्यमानमिति । यथा आत्मविषयकत्वेनोच्यमानं मननं निदिध्यासनं च ज्ञानरूपम्, तथा श्रवणमपि ज्ञानरूपमेवेत्यर्थः । नेति । विचारस्यानुष्ठेयक्रियारूपस्य साक्षादात्मविषयकत्वानुपपत्तेरिति भावः । ननु मननादिवदिति दृष्टान्तोऽनुपपन्नः । मनननिदिध्यासनयोः ज्ञानत्वाभावात् । मननं हि युक्त्याऽऽलोचनरूपो व्यापारः । 'ध्यै चिन्तायाम्' इत्यनुशासनानुरोधेन निदिध्यासनं ध्यानक्रिया, न ज्ञानम् । अतः कथं मननादिवदिति मनननिदिध्यासनयोः ज्ञानत्वं सिद्धतया निर्दिश्यते इति चेत् । उच्यते । आत्मा ब्रह्मस्वभावः चिद्रूपत्वात् ब्रह्मवत्, बुद्ध्यादिः कल्पितः दृश्यत्वात् शुक्तिरजतादिवत्, इत्याद्यनुमितेरेव मननत्वोपगमात् । तदुक्तं चतुर्थे मैत्रेयीब्राह्मणवार्तिके–

---

(१) समुच्चित्य प्राप्तावपि पाठः । (२) आत्मविषयं ज्ञानमिति पाठः ।

आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ।
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते ॥
पदार्थविषयस्तर्कः तथैवानुमितिर्भवेत् ।

इति श्रुतार्थदार्ढ्याय तर्करूपं मननं विधीयते । सोऽपि तर्कः श्रुत्यविरुद्ध एव मननत्वेन विधीयते । तच्च मननं तत्त्वंपदार्थविषयकमेव, न तु वाक्यार्थविषयकम् । तस्य वाक्यैकमेयत्वात् । तथाशब्दः समुच्चयार्थः । यथा मननात्मकतर्कस्य वेदाविरोधित्वम्, तथाऽनुमितिरूपत्वं चेत्यर्थः । अत एव न्यायतन्त्रेऽपि मननस्यानुमितिरूपत्वमिष्यते । निदिध्यासनमपि वार्तिककारमते ज्ञानमेव । तथाहि बृहदारण्यके चतुर्थाध्यायषष्ठाध्यायगतयोः मैत्रेयीब्राह्मणयोराम्नायते—"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति । अनन्तरं चतुर्थे "मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन" इति । षष्ठे तु "मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते" इति । तत्रोभयत्राक्षेपवार्तिकम्—

अनुवादे यथोक्तानां प्रक्रान्ते दर्शनादिषु ।
विज्ञानेनेत्यथ कथं निदिध्यासनमुच्यते ॥ इति ।

अथ 'आत्मा द्रष्टव्यः' इत्यादिना उक्तानामनुवादे प्रक्रान्ते सति दर्शनादिषु मध्ये श्रुतं निदिध्यासनं विज्ञानेनेति पदेन कथमुच्यतेऽनूद्यते । दर्शनादीनां समानपदैरेवानुवाददर्शनेन निदिध्यासनस्यापि तद्वन्निदिध्यासनेनेत्यनुवादस्स्याव, न तु विज्ञानपदेनेत्यर्थः । तस्य समाधानवार्तिकम्—

ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते ।
निदिध्यासनशब्देन ध्यानमाशङ्क्यते यतः ॥ इति ।

निदिध्यासनशब्दस्य ध्यानवाचित्वात् श्रवणमननानन्तरमनुभवाङ्गत्वेन ध्यानं 'निदिध्यासितव्यः' इत्यनेन विधीयते इति यतः पूर्ववादिभिराशङ्क्यते, अतस्तदाशङ्कानिवृत्त्यर्थमनुवादावसरे स्थित्वा पूर्ववाक्ये निदिध्यासनं विज्ञानरूपं विवक्षितम्, न तु ध्यानम्, अतो नात्र ध्यानविधिशङ्काऽवकाश इत्याशयवती श्रुतिर्विज्ञानपदेन निदिध्यासनमनुवदतीति वार्तिकार्थः । ध्यानस्यानुभवाङ्गत्वे को दोषः ? यतस्तदाशङ्का निरस्यते श्रुत्येत्यत आह तदनन्तरं वार्तिकार्द्धम्—

विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषम् । इति ।

ध्यानस्य, तन्नियोगस्य वा विज्ञानोत्पत्तिहेतुत्वं प्रति यद् दूषणं वक्तव्यम्, तद् प्रागेव सम्बन्धग्रन्थादावुक्तत्वानस्मीत्यर्थः । तत्र ह्युक्तम्—'तत्त्वंपदार्थगोचरश्रवणमननाभ्यामसकृदभ्यस्ताभ्यां तत्त्वंपदलक्ष्यार्थनिर्णये सति वाक्यार्थज्ञानस्यैक्यार्थज्ञानस्यैवावसरप्राप्तत्वेन ध्यानविधेरनवकाशात् । न च ताभ्यां प्रमाणप्रमेयासम्भावनानिवृत्तावपि विपरीतप्रत्ययेन प्रतिबन्धात् न वाक्यार्थबोधोत्पत्तिरिति वाच्यम् । श्रवणमननयोरेवासकृदभ्यासमहिम्ना विपरीतप्रत्ययस्यापि निवृत्तिसम्भवात् । वाक्यार्थबोधनिवर्त्यस्य विपरीतप्रत्ययस्य तदप्रतिबन्धकत्वाच्च । लोके विपर्ययस्य स्वविरोधिदर्शनोत्पत्तिप्रतिबन्धकत्वादर्शनात्' इति । ननु यदि निदिध्यासनं न ध्यानं, किं तर्हि तद् ? इत्यत आह वार्तिकम्—

अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ।

ध्यानस्यैव पुरुषप्रयत्नानपेक्षत्वमपरायत्तत्वम् ।

यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ।
श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नतः ॥
मननमादिपदार्थः ।

श्रुत्वा मत्वाऽथ तं साक्षादात्मानं प्रतिपद्यते ।

अथ श्रवणमननपरिपाकजनिततत्त्वंपदलक्ष्यार्थनिर्णयानन्तरमेव वाक्येन ब्रह्मात्मज्ञानं साक्षात् अपरोक्षतया प्रतिपद्यते अनुभवतीत्यर्थः । वाक्यार्थज्ञानवतः कृतकृत्यतामाह—

अनन्यायत्तविज्ञाने श्रवणादेरुपायतः ।
जाते नापेक्षते किञ्चित् प्रतीचोऽनुभवात्परम् ॥ इति ।

वृत्तिज्ञाने जाते सति तेन प्रतीचो ब्रह्मत्वस्फुरणादनन्तरं न किञ्चिदपेक्षते इत्यर्थः ।

एवं वार्तिककारमते निदिध्यासनस्य ज्ञानत्वाभ्युपगमात् न मननादिवदिति दृष्टान्तासिद्धिः । न च वार्तिककारमते 'निदिध्यासितव्यः' इत्यस्य 'द्रष्टव्यः' इत्यनेन पौनरुक्त्यं स्यादिति वाच्यम् । दर्शनोद्देशेन श्रवणमननविधानानन्तरं पुनः फलकीर्तनस्य तदुपसंहारपरत्वोपपत्तेः ।

अथवा 'द्रष्टव्यः' इति विचारप्रयोजकापातदर्शनानुवादः, "निदिध्यासितव्यः" इति तु विचारफलभूतसाक्षात्कारानुवादः इति पौनरुक्त्यपरिहारसम्भवात् । श्रवणादौ विध्यभावे भाष्यसम्मतिमाह—

अत एव समन्वयसूत्रे (उ०मी०अ० १ पा० १ सू० ४) आत्मज्ञानविधिनिराकरणानन्तरं भाष्यम्-'किमर्थानि तर्हि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादीनि वचनानि विधिच्छायानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः' इत्यादि ।

---

अत एवेति । श्रवणमनननिदिध्यासनानां दर्शनवत् ज्ञानरूपत्वेन क्रियारूपत्वेऽपि वक्ष्यमाणविधया नित्यप्राप्तत्वेन च विध्ययोग्यत्वादेवेत्यर्थः । किमर्थानीति । व्यर्थानि स्युरिति यावत् । आदिपदं 'श्रोतव्यः' इत्यादेस्तङ्ग्रहार्थम् । विधिच्छायानीति । 'अध्येतव्यः' इति प्रसिद्धविधितुल्यानीत्यर्थः । अत्र तव्यप्रत्ययैः दर्शनश्रवणादिगता प्रशंसा लक्ष्यते । तथा च-'यो हि मुमुक्षुरात्मदर्शनश्रवणादीन्येव मुक्तिसाधनानीति ज्ञात्वाऽपि सन्न्यासब्रह्मचर्यादिसहितश्रवणाद्यनुष्ठानक्लेशमनुसन्धिन्त्य न तत्र सर्वोत्साहेन प्रवर्तते, किंतु यथाप्राप्तान्येव वर्णाश्रमानुरूपाणि कर्माणि, उपासनानि चानुतिष्ठन् तत्रापि निर्वृतिं न लभते, तैरात्यन्तिकपुरुषार्थालाभानुसन्धानेन तं प्रत्यात्मदर्शनश्रवणादिप्रशंसार्थं प्रवर्तते 'आत्मा वा' इत्यादिवाक्यं 'तस्य सर्वोत्साहेन श्रवणादावेव प्रवृत्तिर्भवतु' इत्याशयेन । अतो न विधिप्रत्ययानां वैयर्थ्यम्' इति भाष्यकारः परिहरति—स्वाभाविकेति । आदिपदेन 'यो हि बहिर्मुखः प्रवर्तते पुरुषः 'इष्टं मे भूयादनिष्टं मा भूत्' इति न च तत्रात्यन्तिकं पुरुषार्थं लभते । तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात् कार्यकरणसङ्घातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः इत्यादीनि' इत्यन्तं भाष्यं सङ्गृह्यते । स्वाभाविकत्वं विषयविशेषणम् । सङ्ग्रहभाष्यं(१) विवृणोति-यो हीति । प्रवर्तते इति । नानाविधकर्मोपासनान्यनुतिष्ठतीत्यर्थः । 'इष्टं मे भूयादनिष्टं मे मा भूत्' इत्यनेन दुःखसामान्यास्पृष्टसुखकामना ब्रह्मानन्दरूपात्यन्तिकपुरुषार्थगोचर इह विवक्षिता । अत एवाह 'न च तत्रात्यन्तिकं पुरुषार्थं लभते' इति । बाह्यसाधनं तत्रशब्दार्थः । स्वाभाविकादिति । स्वभावो अविद्या, तत्कार्यभूतादित्यर्थः । सङ्घातस्य प्रवृत्तिः कर्मोपासनयोरनुष्ठानम् । तद्गोचरात्-द्रव्यदेवतामन्त्रादिरूपादित्यर्थः । प्र-

---

(१) भाष्यकारः इति शेषः ।

यदि च वेदान्ततात्पर्यविचाररूपं(१) श्रवणं तदा तस्य तात्पर्यनिर्णयद्वारा वेदान्ततात्पर्यभ्रमसंशयरूपप्रतिबन्धकनिरास एव

---

त्यगात्मनि विषये स्रोतः चित्तप्रावण्यं यस्य, स प्रत्यगात्मस्रोताः तस्य भावस्तत्ता, तयेत्यर्थः । तं बाह्यसाधनाद्विमुखीकृत्य श्रवणादिष्वेव प्रवर्तयन्तीत्यर्थः ।

एवं श्रवणादेः ज्ञानरूपत्वात् नं तत्र कोऽपि विधिरित्युक्तम् । इदानीं श्रवणादेः क्रियारूपत्वमुपेत्यापि न तत्र कोऽपि विधिरित्याह—यदि चेति । तस्य क्रियारूपत्वं च वार्तिककारैरेवोक्तम्—

श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नतः ॥ इति ।

आदिपदेन मननस्य सङ्ग्रहः, न ध्यानस्य । वार्तिककारमते श्रवणमननानन्तरं ध्यानानुष्ठानाभावस्योक्तत्वात् । नच ध्यानस्याननुष्ठेयत्वे 'ओमित्येवं ध्यायथ आत्मानम्' 'विद्यामेतां योगविधिं च कृत्स्नम्' इत्यादिबहुवाक्यविरोध इति वाच्यम् । तेषां 'साङ्ख्ययोगाभिपन्नम्' इति श्रुतिगतयोगपदोदितमार्गान्तरप्रतिपादकतायास्तृतीयपरिच्छेदे ध्यानदीपोक्तप्रकारेण वक्ष्यमाणत्वात् । न च 'तत्कारणम्'इतिश्रुतिगतसाङ्ख्यपदोदितविचारमार्गेऽपि ध्यानान्तर्भावः पूर्वमुक्त इति वाच्यम् । निदिध्यासनपदस्य ध्यानार्थकत्वमताभिप्रायेण तदन्तर्भावस्योक्तत्वात् । ध्यानस्य साङ्ख्यमार्गात् बहिर्भाव एव भाष्यकाराणामपि सम्मतः । तथा च 'एतेन योगः प्रत्युक्तः'(उ०मी०अ०२पा०२सू०३)इत्यधिकरणभाष्यम्—'तत्कारणं साङ्ख्ययोगाभिपन्नमित्यत्र वैदिकमेव ज्ञानं ध्यानं च साङ्ख्ययोगशब्दाभ्यामभिलप्येते' इति । ध्यानपदं ज्ञानाभ्यासपरम् । वैदिकं वेदोक्तम् । 'एतेन वेदविरोधादिना योगशास्त्रं निराकृतम्' इति सूत्रार्थः । साङ्ख्यमार्गे ध्यानाभावमभिप्रेत्यैव सर्वज्ञात्ममुनिभिरपि निदिध्यासनपदस्य ज्ञानार्थकत्वमुक्तम्—

श्रवणमननबुद्ध्योर्जातयोर्यत्फलं तन्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ।
अनुभवनविहीना यैवमेवेति बुद्धिश्श्रुतमननसमाप्तौ तन्निदिध्यासनं हि ॥

इति ।

अस्य श्लोकस्याश्रमश्रीचरणानां व्याख्यानमिदम्—

निदिध्यासने पक्षान्तरमाह—श्रवणेति । श्रवणमननबुद्ध्योः जातयोर्यत्फलं, तद्दर्शनाय निपुणमतिभिरुच्चैरुच्यत इति सम्बन्धः । तदेव विश-

---

(१) तात्पर्यविचारः इति पाठः ।

फलं, न प्रतिबन्धकान्तरनिरासो ब्रह्मावगमो वा। तत्फलक-

दयति—अनुभवनविहीनेति। श्रुतं श्रवणम्। दीर्घकालादरनैरन्तर्यानुष्ठानेन श्रवणमननपरिपाके सतीत्यर्थः। अनुभवनविहीना साक्षात्काररहिता। अविद्यानिवर्तकवृत्तिसाक्षात्कारभिन्नेति यावत्। या एवमेवेति बुद्धिः 'अहं चिदात्मा ब्रह्मस्वभाव एव, ब्रह्म च चिदेकरसप्रत्यगात्मस्वभावमेव' इति तत्त्वंपदलक्ष्यनिर्णयात्मिका बुद्धिः, तदेव निदिध्यासनं नाम, न ध्यानम्।

अस्मिन् पक्षे श्रवणमननयोरेवानुष्ठेयत्वम्। निदिध्यासनं तु नानुष्ठेयम्। दीर्घकालमनुष्ठितश्रवणमननफलरूपा बुद्धिर्यदा भवति, तदैव साक्षात्कारोत्पत्तेः। पूर्वपक्षे तु निदिध्यासनमपि पृथगनुष्ठेयमिति भेद इति। साङ्ख्यमार्गे ध्यानाभावमभिप्रेत्यैव यावज्ज्ञानोदयं विचारस्यैव कर्तव्यत्वं ध्यानदीपे विद्यारण्यगुरुभिरप्युक्तम्—

विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत्।
आपरोक्ष्यावसानत्वात् भूयो भूयो विचारयेत् ॥ ३२ ॥
विचारयन्नामरणं नैवात्मानं लभेत चेत्।
जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति ॥ ३३ ॥ इति ॥

एवमानन्दपञ्चकेऽपि आत्मानन्दावसाने साङ्ख्यमार्गस्य ध्यानरहितस्यापि ध्यानेन सर्वांशेऽपि तुल्यफलत्वं बहुधा प्रपञ्चितमिति सङ्क्षेपः।

एवकारव्यवच्छेद्यमाह—नेति। वाकारो नञनुकर्षणार्थः। विचारस्य प्रतिबन्धनिरासद्वारा ब्रह्मावगमोपयोगसम्भवेऽपि न साक्षात् तत्फलकत्वम्। ज्ञानस्य प्रमाणफलत्वादित्युक्तत्वादिति भावः। ननूक्तप्रतिबन्धनिरासद्वारा विचारस्याविद्यानिवर्तकसाक्षात्कारोपयोगित्वप्राप्तावपि तादृशसाक्षात्कारप्रतिबन्धकपापनिवृत्तिद्वारा साक्षात्कारसाधनत्वस्य मानान्तरादप्राप्तत्वात् 'श्रोतव्यः' इत्यत्र श्रवणस्य पापनिवृत्तिद्वारा विद्यासाधनत्वमुपदिश्यते। न च विद्याप्रतिबन्धकपापनिवृत्तेर्यज्ञादिनैव सिद्धत्वाद्विधिवैयर्थ्यमिति वाच्यम्। प्रतिबन्धकपापानामानन्त्येन केषांचिद्यज्ञानुष्ठानेन, केषांचित् श्रवणानुष्ठानेन निवृत्तिरिति विभागकल्पनोपपत्तेः। तथा च प्राप्तं पुनरपूर्वविधित्वम्। एवं च 'सह कार्यन्तरविधिः'इत्यधिकरणभाष्ये पाण्डित्यशब्दितश्रवणे अपूर्वत्वोक्तिश्च सङ्गच्छते इति शङ्कां वारयति—प्रतिबन्धकान्तरनिरास इति। तात्पर्यभ्रमसंशयरूपप्रतिबन्धकापेक्षया अन्यत् पापरूपं प्रतिबन्धकं प्रतिबन्धकान्तरम्, तन्निरासो न श्रवणफलम्। अतो न तद्द्वारा ज्ञानाय श्रवणं

त्वं च तस्य लोकत एव प्राप्तम्। साधनान्तरं च किञ्चिद्विकल्प्य समुच्चित्य वा न प्राप्तमिति न तत्र विधित्रयस्याप्यवकाशः।

विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसम्भवे अदृष्टकल्पनायोगात् गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थं(१) पर्यवस्यतीति। अत एव स्वप्रयत्नसाध्यविचारव्यावृत्तिः। अध्ययनविध्यभावे तूपगमनं विधीयमानमक्षरावाप्त्यर्थत्वेनाविधीयमानत्वान्न तदर्थं गुरुमुखोच्चारणाविधेयमित्यर्थः।

अय भावः—'श्रोतव्यः' इत्यस्यापूर्वविधित्वमयुक्तम्। तस्यावृत्त्याधिकरणे (उ०मी० अ० ४ पा० १ अधि० १ सू० १०२) निरस्तत्वात्। विवरणाद्युक्तरीत्या वेदान्तश्रवणस्यान्वयव्यतिरेकप्रमाणसिद्धतात्पर्यभ्रमादिलक्षणप्रतिबन्धकनिवृत्तिरूपदृष्टफलकत्वमुपजीव्य श्रवणेनैव ज्ञानं प्रतिबन्धकनिवृत्तिश्च सम्पादयेदिति नियमविधित्वसम्भवे, 'स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः' इत्यादिभाष्यानुसारेण ब्रह्मप्रतिपत्तिसाधनश्रवणादिस्तुतिद्वारा तत्र प्रवृत्तिविशेषकारणत्वमात्रेण ब्रह्मप्रकरणनिवेशसम्भवे वा अपूर्वविधित्वायोगात्। भाष्यकारीयापूर्वत्वोक्तेः पाक्षिकाप्राप्त्यभिप्रायकत्वसम्भवाच्चेति। तत्फलकत्वं चेति। भ्रमादिरूपप्रतिबन्धकनिरासफलकत्वं चेत्यर्थः। ननु प्राप्तत्वेऽपि नियमविधित्वादिसम्भवात् कथं विधित्रयाभावः? इत्यत आह—साधनान्तरं चेति।

ननु गुर्वधीनविचारेण सह गुरुरहितविचारस्य विकल्पेन प्राप्तिरस्तीत्यत आह—विचारविध्यभावेऽपीति। अत एवेति। उपगमनविधित एवेत्यर्थः। 'व्यावृत्तिः' इत्यनन्तरं 'लभ्यते इति श्रोतव्यवाक्ये गुर्वधीनविचारनियमविधिरनर्थकः' इति शेषः। न चोपगमनविधेः विचारविध्यङ्गतया तदभावे उपगमनविधेरात्मलाभ एव नास्तीत्युक्तमिति वाच्यम्। गुरूपसदनस्य ब्रह्मज्ञानं प्रति द्वाराऽपेक्षायां लोकसिद्धस्यैव गुर्वधीनविचारस्य द्वारत्वेन स्वीकारोपपत्तौ श्रोतव्यविध्यपेक्षाऽभावेन तच्छेषत्वासिद्धेः विचारवदुपगमनस्यापि विद्याङ्गत्वोपपत्तेश्चेति भावः। पूर्वोक्तातिप्रसङ्गं परिहरति—अध्ययनविध्यभावे त्विति। अध्ययनविध्यभावे तु लिखितपाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियमविधिरिति सम्बन्धः। तदर्थमिति। अक्षरावाप्त्यर्थमित्यर्थः।

(१) विज्ञानार्थे इति पाठः।

नूच्चारणमध्ययनं द्वारीकरोतीति लिखितपाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियमविधिः ।

न च तात्पर्यादिभ्रमनिरासाय वेदान्तविचारार्थिनः कदाचित् द्वैतशास्त्रेऽपि प्रवृत्तिः स्यात् । तत्रापि तदभिमतयोजनया वेदान्तविचारसत्त्वात् इत्यद्वैतात्मपरवेदान्तविचारनियमविधिरर्थवानिति वाच्यम् । स्वयमेव तात्पर्यभ्रमहेतोस्तस्य तन्निरासकत्वाभावेन साधनान्तरप्राप्त्यभावात् । तन्निरास-

---

अध्ययनाङ्गोपगमनस्य विध्यार्थोपगमनापेक्षया विशेषार्थकस्तुशब्दः । तमेवाह—उपगमनमित्यादिना । अध्ययनस्याक्षरावाप्तिफलकत्वं विवरणादौ साधितमिति भावः ।

व्यावर्त्यान्तरं दूषयति—न च तात्पर्यादीति । ननु वस्तुतस्तन्निरासकत्वाभावेऽपि 'भिन्नात्मज्ञानं मुक्तिसाधनम्' इति भ्रमद्वारा तद्भ्रमात्तत्र प्रवृत्तिः सम्भवतीत्युक्तमिति, नेत्याह—तन्निरासकत्वभ्रमेणेति । इह जन्मनि जन्मान्तरे वा यज्ञाद्यनुष्ठानजनितदृढविविदिषावतः साधनचतुष्टयसम्पन्नस्य श्रवणविधावधिकार इत्यविवादम् । यज्ञादिजनितादृष्टं च निष्प्रपञ्चाद्वितीयब्रह्मसाक्षात्कारस्य साङ्गाध्ययनलब्धैर्वेदान्तैः मुक्तिसाधनत्वनिश्चयं सम्पाद्य तादृशब्रह्मसाक्षात्कारे दृढेच्छां च विविदिषाशब्दितामुत्पाद्य तद्द्वारा अद्वितीयात्मसाक्षात्कारसाधनभूताद्वितीयात्मश्रवणादावेव मुमुक्षुं प्रवर्तयति, न तु जीवभिन्नात्मज्ञानस्य मुक्तिसाधनत्वभ्रमापादनद्वारा भिन्नात्मज्ञानतत्साधनविचारादाविच्छाप्रवृत्त्यादिकमप्युत्पादयति । तदिच्छादेर्भिन्नात्मविचारद्वारा यज्ञादिफलभूतनिष्प्रपञ्चब्रह्मसाक्षात्कारहेतुत्वाभावात् । तथा च स्मृतिः—

ईश्वरानुग्रहादेव पुंसामद्वैतवासना । इति ।

यज्ञादिसम्पादितादीश्वरानुग्रहादेव पुंसामद्वैतब्रह्मज्ञानेच्छारूपा तद्वासना भवतीति तदर्थः ।

तथा च यथोक्तभ्रमवतः अद्वैतब्रह्मतत्त्वसाक्षात्कारादाविच्छाश्रद्धादिशून्यस्य श्रवणविधावनधिकारान्न तं प्रति नियमविधिरर्थवा-

क्त्वभ्रमेण तत्रापि कस्यचित्प्रवृत्तिः स्यादित्येतावता "श्रोतव्यः" इति नियमविधेरभ्युपगम इत्यपि न। ईश्वरानुग्रहफला(१)द्वैतश्रद्धारहितस्य श्रोतव्यवाक्येऽपि पराभिमतयोजनया सद्वितीयात्मविचारविधिपरत्वभ्रमसम्भवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेनाप्यपरिहार्यत्वात् ।

न च व्यापारान्तरनिवृत्त्यर्था परिसङ्ख्येति वाच्यम्(२)। असन्न्यासिनो व्यापारान्तरनिवृत्तेरशक्यत्वात् । सन्न्यासिनस्तन्निवृत्तेः ब्रह्मसंस्थया सह सन्न्यासविधायकेन "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्यन्तरेण सिद्धतया सन्न्यासविधायकश्रुत्यन्तरमपेक्ष्य श्रोतव्यवाक्येन तस्य व्यापारान्तरनिवृत्त्युपदेशस्य व्यर्थत्वात् ।

---

निराह—ईश्वरानुग्रहेति । पराभिमतेति । "आत्मा श्रोतव्यः" इति श्रुतावात्मशब्दस्तावत् जीवपर एव, न परमात्मपरः । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति पूर्ववाक्ये जीवस्य प्रकृतत्वात् । न च "इदं सर्वं यदयमात्मा" इति वाक्यशेषे सर्वात्मकस्य परमात्मनः प्रतिपादनात् श्रोतव्यवाक्यस्थमात्मपदमद्वितीयात्मपरमिति वाच्यम् । तत्रापि तत्प्रतिपादनासिद्धेः । न हि प्रपञ्चपरमात्मनोरभेदस्सम्भवति । चेतनाचेतनयोरैक्यस्य विरुद्धत्वात्, श्रुतेरभेदध्यानविधिपरत्वोपपत्तेश्चेत्यादियोजना पराभिमता द्रष्टव्या । अन्यत्रेति । भिन्नात्मविचार इत्यर्थः ।

परिसङ्ख्याविधिं दूषयति—न चेति । श्रवणविधिना किं गृहस्थादेर्व्यापारान्तरनिवृत्तिरुपदिश्यते, किंवा संन्यासविधिसिद्धस्य सन्न्यासिनः ? इति विकल्पं मनसि निधाय क्रमेण दूषयति—असन्न्यासिन इति । अशक्यत्वादिति । विध्यन्तरविरोधापत्तिः अशक्यत्वे हेतुः । तन्निवृत्तेस्सिद्धतया उपदेशस्य व्यर्थत्वादिति सम्बन्धः । "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्यन्तरस्य ब्रह्मसंस्थताधर्मकसन्न्यासाश्रमविधायकत्वं 'प-

---

(१) अनुग्रहलब्धाद्वैतेति पाठः ।
(२) युक्तमिति पाठः ।

न च विचारविध्यसम्भवेऽपि वि(१)चारविषयवेदान्तनियमविधिः सम्भवति, भाषाप्रबन्धादिव्यावर्त्यसत्त्वादिति शङ्क्यम्। सन्निधानादेव वेदान्तानियमस्य लब्धत्वेन विधिविषयत्वायोगात्, "स्वाध्यायोऽध्येतव्यः" इत्यर्थावबोधार्थनियमविधिबलादेवाध्ययनगृहीतवेदोत्पादितं वेदार्थज्ञानं फलपर्यवसायि, न कारणान्तरोत्पादितमित्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादीनामप्राप्तेश्च। न च 'सहकार्यन्तरविधिः'इत्यधिकरणे बाल्यपाण्डित्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधिरभ्युपगत इति वाच्यम्। विचारे विचार्य्यतात्पर्यनिर्णयहेतुत्वस्य वस्तुसिद्ध्यनुकूलयुक्त्यनुसन्धानरूपे मनने तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्त्ववगमवैशद्यहेतुत्वस्य च लोकसिद्धत्वेन तेषु

---

रामर्शी जैमिनिः' (उ० मी० अ० ३–पा० ४ सू० १८) इत्यधिकरणभाष्ये स्फुटमिति भावः।

विचारविषयत्वेन वेदान्तनियमविधिरिति पक्षं दूषयति—न च विचारेति। सन्निधानादेवेति। अधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्नब्रह्मात्मजिज्ञासोः जिज्ञासानिवर्तकनिर्णयाय कर्तव्यत्वेन विचारे प्राप्ते सति विचारविषयमन्वेषमाणस्य वेदान्तानां बुद्धिस्थत्वात् 'वेदान्ता एव मया विचारणीयाः' इति बुद्धिरुत्पद्यते। तथा च विधिं विनैव वेदान्तनियमस्य लब्धत्वेन विधिना तन्नियमनं व्यर्थमित्यर्थः। विधिं विनैव वेदान्तनियमलाभे हेत्वन्तरमाह—स्वाध्याय इति। अर्थावबोधेति। मीमांसकमतमाश्रित्योक्तम्। अक्षरावाप्तिफलकोऽध्ययनविधिरिति सिद्धान्तेऽपि येषां वाक्यानामध्ययनावाप्तानामर्थज्ञानद्वारा पुरुषार्थोपयोगस्सम्भवति, तेषां वाक्यानामर्थज्ञानमध्ययनलब्धैः वाक्यैरेवोत्पादितं फ(२)लवत्, न तदतिरिक्तभाषाप्रबन्धादिजनितमिति रीत्या अध्ययनविधिफलाक्षरावाप्तेः पुरुषार्थपर्यवसानकल्पनात् न भाषाप्रबन्धादिप्रसक्तिरित्यर्थः। इतिहासपुराणमादिपदार्थः। श्रवणादीनामविधेयत्वे सूत्रभाष्यविरोधं शङ्कते—न चेति। अभ्युपगत इति। सूत्रभाष्यकाराभ्यामिति शेषः। विरोधं परिहर्तुं प्रथमं श्रवणादीनां वि-

---

(१) विचारविषये वेदान्ते इति पाठः। (२) फलपर्यवसायीति पाठः

त्विध्यनपेक्षणात् विधिच्छायार्थवादस्यैव प्रशंसाद्वारा प्रवृत्त्यतिधियोग्यक्रियारूपत्वेऽपि नित्यप्राप्तत्वात् न विधेयत्वमित्याह–विचार इति। तत्प्रत्ययेत्यत्र तत्पदं वस्तुपरम् । अवगमस्य वैशद्यं प्रतिबन्धराहित्यम् । सूत्रभाष्ययोः श्रवणादिविधित्वव्यवहारो गौणः, मुख्यासम्भवस्य दर्शितत्वादिति विरोधं परिहरति–विधिच्छायार्थवादस्यैवेति । "विष्णुरुपांशु यष्टव्यः" इत्यादेरिवेत्यर्थः । तथाहि–"उपांशुयाजमन्तरा यजति" इत्याम्नाय पुनराम्नायते–'विष्णुरुपांशु यष्टव्यः, प्रजापतिरुपांशु यष्टव्यः, अग्नीषोमावुपांशु यष्टव्यौ' इति । अत्रान्तरावाक्यमाग्नेयाग्नीषोमीयपुरोडाशयोरन्तरालकालविशिष्टयागविधायकम् । विष्ण्वादिवाक्यत्रयं तु मन्त्रवर्णप्राप्तैकैकल्पिकदेवतानुवादेन, अन्तरावाक्यविहितयागस्तावकमर्थवादमात्रमिति व्यवस्थापितं पूर्वतन्त्रे ( पू० मी० अ० २ पा० २ अधि० ४ ) । तदत्र दृष्टान्तत्वेन उदाहृतमिति द्रष्टव्यम् ।

यत्तु "तत्कारणं साङ्ख्ययोगाभिपन्नम्" इति श्रुतौ योगपदोपात्तस्य व्यावर्त्यस्य सम्भवाद्विचारसमर्थाधिकारिणं प्रति तद्व्यावृत्तिफलको नियमविधिस्सम्भवतीति, तन्न । विचारसमर्थस्याधिकारिणः कालान्तरे स्वोद्भावितानुपपत्तिवशेनान्योद्भावितानुपपत्तिवशेन वा पुनस्तत्त्वसंशये सति अवधारणात्मकं वेदान्तार्थज्ञानं न सम्भवतीति योग्यतावशेन तं प्रति विधिं विना विचारस्यैव नित्यतया प्राप्तत्वात् । यत्तु सगुणब्रह्मोपासनं व्यावर्त्यमुक्तम्, तन्न । श्रवणविध्यधिकारिणः सर्वतो निस्पृहस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिसाधनसगुणोपासने पक्षेऽपि प्रवृत्तेरसम्भवेन तस्य व्यावर्त्यत्वासम्भवात् । सगुणोपासनस्यापि श्रवणादिद्वारैव विद्यासाधनत्वेन नखविदलनादेरवघाततुल्यकक्षत्ववत् सगुणोपासनस्य श्रवणादिना सह विकल्पेन प्राप्त्यभावाच्च न तद्व्यावृत्तिफलको नियमविधिस्सम्भवति । न च सगुणोपासनया श्रवणादिकं विनैव सगुणसाक्षात्कारवत् निर्गुणसाक्षात्कारोदयः सम्भवतीति वाच्यम् । प्रमाणप्रमेयासम्भावनादिप्रतिबन्धनिवृत्तिद्वारा श्रवणादेस्सत्तानिश्चयरूपब्रह्मज्ञानोपायत्वग्राहकतया पूर्वोक्तप्रमाणानुरोधेन श्रवणादेः नित्यवदनुवादलिङ्गेन च सगुणोपासनया क्रमेण परममुक्तिप्रतिपादकशास्त्रस्यापि श्रवणादिद्वारकज्ञानोत्पत्त्यविरोधित्वकल्पनात् । श्रवणादिकं विना सगुणोपासनमहिम्नैव तत्त्वज्ञानोदयोपगमे देवताधिकरण(उ०मी०अ० १ पा०३ अधि०९ सू० २६) विरोधाच्च ।

तदधिकरणे हि—देवादीनां शरीराद्यभावाव सगुणब्रह्मोपासनेषु निर्गुणब्रह्मविद्यासाधनश्रवणादिषु च नास्ति सामर्थ्यम्, अतो न तेष्वधिकारः इति पूर्वपक्षयित्वा मन्त्रार्थवादेतिहासपुराणप्रामाण्याव तेपामपि शरीरादिसद्भावात् अस्त्यधिकार इति सिद्धान्तितम् ।

तत्रेदं पूर्वपक्षप्रयोजनमुक्तम्—देवानां श्रवणाद्यधिकाराभावे क्रममुक्तिफलकब्रह्मोपासनया प्राप्तदेवभावस्यापि श्रवणाद्यसम्भवेन विद्योदयासम्भवाव पुनरावृत्त्यापत्तौ क्रममुक्तिकामस्य सगुणोपासनेषु प्रवृत्त्यभाव इति । सिद्धान्ते तु देवानां श्रवणाद्यधिकारसत्त्वादुक्तप्रवृत्तिसिद्धिरिति प्रयोजनं दर्शितम् । इदं च प्रयोजनं देवताधिकरणावसानभाष्ये सङ्क्षेपेण दर्शितम् । तथा च भाष्यम्—

"ततश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यपि एवमेवोपपद्यन्ते" इति ।

एवमेवेत्यस्य देवादीनां श्रवणाद्यधिकारे सत्येवेत्यर्थः । तेषां श्रवणाद्यधिकारे यानि श्रौतलिङ्गानि पूर्वमुपन्यस्तानि "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणाम्" "एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास" इत्येवमादीनि, तानि यथा उपपद्यन्ते तथेत्यपिशब्दस्यार्थः ।

ननु सगुणब्रह्मोपासकानामपि सर्वेषां श्रवणादिनैव ज्ञानोदय इति नियमो नास्ति । सगुणोपासकस्यापि हिरण्यगर्भस्य बृहदारण्यकभाष्ये पुरुषविधब्राह्मणव्याख्यानावसरे श्रवणादीनां प्रणिपातादीनां चाभावेऽपि ज्ञानजन्मप्रतिपादनादिति चेव, न । हिरण्यगर्भस्यापि वामदेववत् जन्मान्तरीयश्रवणादिनैव ज्ञानजन्मसम्भवाव । तत्रैव भाष्ये 'श्रवणमनननिदिध्यासनानां साक्षाज्ज्ञेयविषयत्वाव' इति वाक्ये साक्षात्पदेन श्रवणादेः ज्ञेयब्रह्मव्यञ्जकस्य प्रणिपाताद्यपेक्षयाऽऽवश्यकत्वसूचनेन जन्मान्तरीयश्रवणादिकल्पनस्य तद्भाष्यवाक्याभिप्रेतत्वे अवगम्यमाने सति तत्पूर्वभाष्ये श्रवणादिकं विना कार्यकारणशुद्ध्यादिमात्रेण ज्ञानजन्मप्रतिपादनस्याभ्युपगमवादत्वोपपत्तेः । हिरण्यगर्भस्य वामदेवादेरिव जन्मान्तरीये ज्ञानसाधने कल्पनीये सति क्लृप्तश्रवणादिकल्पनस्यैव न्याय्यत्वाच्च । नच हिरण्यगर्भस्य पूर्वजन्मनि सगुणोपासननिष्ठत्वेन निर्गुणविचारो न सम्भवतीति वाच्यम् । हिरण्यगर्भस्य

पूर्वकल्पे जन्मभेदेन सगुणनिर्गुणोपासनयोः सम्भवात् । न ह्येकस्मिन् जन्मनि कृतात् सगुणोपासनामात्रादेव हिरण्यगर्भपदप्राप्तिरस्ति । तथासति सगुणोपासकानां सर्वेषामेव साक्षात् हिरण्यगर्भत्वप्रसङ्गात् । किन्तु हिरण्यगर्भस्य ब्रह्मलोकस्वामित्वं सरस्वतीभर्तृत्वं जन्मप्रभृतितत्त्वसाक्षात्कारसम्पन्नत्वं सर्वज्ञत्वं सकलभौतिकजगत्सृष्ट्यादिसामर्थ्यं भक्तानां त्रैलोक्यैश्वर्यप्रदानसामर्थ्यं कार्यविशेषेषु शिवविष्ण्वादिप्रवर्तकत्वं ललाटाद्रुद्रप्रादुर्भावहेतुत्वं महाविष्णुनाभिकमलजातत्वाद्यैश्वर्यञ्च श्रुत्यादिभ्यो निश्चित्य आगामिकल्पे यथोक्तहिरण्यगर्भत्वाय तत्साधनानि सगुणनिर्गुणोपासनानि तयोर्विशेषरूपाणि च बहुषु जन्मसु ध्रुवप्रह्लादविश्वामित्रागस्त्यभृग्वादिवदनुष्ठितवतो महापुरुषस्य कस्यचिदेव निरतिशयेश्वरप्रसादाद्धिरण्यगर्भत्वं सम्पद्यते इति हिरण्यगर्भस्यापि जन्मान्तरीयश्रवणकल्पनं वामदेवस्येव नानुपपन्नम् । हिरण्यगर्भस्य पूर्वजन्मन्यनुष्ठितश्रवणादेः हिरण्यगर्भपदप्राप्तिकामनया प्रतिबद्धत्वेन तदा तत्त्वसाक्षात्कारानुत्पादकत्वोपपत्तेः ।

तदुक्तं वृद्धैः—

ब्रह्मलोकाभिवाञ्छायां सम्यक् सत्यां निरुध्य ताम् ॥
विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ॥ १ ॥ इति ॥

न च ज्ञानोत्पत्तिस्थले सर्वत्र श्रवणादिनियमो नास्ति । योगमार्गे प्रवृत्तस्य श्रवणाद्यभावेऽपि तत्त्वसाक्षात्कारोदयस्वीकारादिति वाच्यम् । "ओमित्यात्मानं युञ्जीत, ओमित्येवं ध्यायथात्मानम्" इत्यादिध्यानविधिबलेन "तत्कारणं साङ्ख्ययोगाभिपन्नम्" "विद्यामेतां योगविधिं च कृत्स्नम्" इत्यादिश्रौतलिङ्गसहकृतेन विचारासमर्थस्य योगमार्गे अधिकार इति तृतीयपरिच्छेदे वक्ष्यमाणतया विचारसमर्थस्य विचारं विना ज्ञानोत्पत्त्यनभ्युपगमात् । एवं यद्यत् साधनमदृष्टद्वारा तत्त्वज्ञानसाधनत्वेन शास्त्रसिद्धम्, तत् सर्वं सगुणोपासनवत् दृष्टसामग्रीभूतसाङ्ख्यमार्गेण, तदशक्तौ योगमार्गेण वा तत्त्वज्ञानसाधनमिति कल्प्यते । न त्वदृष्टमात्रात् ज्ञानलाभः कल्पयितुं युक्तः । अन्यथा जीवनादृष्टमात्रादेव स्तन्यपानादिप्रवृत्तिकल्पनापत्त्या तत्रापीष्टसाधनतास्मरणं जन्मान्तरीयसंस्कारहेतुकं सर्वसम्प्रतिपन्नं न कल्पनीयं स्यात् । क्लृप्तदृष्टकारणं विना कार्योत्पत्त्ययोगस्योभयत्र तुल्यत्वात् । अत एव पञ्चदश्यां तत्त्वज्ञानं प्रति मार्गद्वयनियम उक्तः साङ्ख्ययोगौ प्रकृत्य—

शयकरत्वमात्रेण तत्र विधिव्यवहारात् । एवं च श्रवणविध्यभावात् कर्मकाण्डविचारवत् ब्रह्मकाण्डविचारोऽप्यध्ययनविधिमूल इत्याचार्यवाचस्पतिपक्षानुसारिणः ॥ १ ॥

(वे.सू.मं.) जगज्जन्मस्थितिलयेष्वेकैकं ब्रह्मलक्षणम्
प्रत्येकं ब्रह्मलिङ्गत्वात् इत्याहुः कौमुदीकृतः ॥ १४ ॥

(२) विचार्यस्य च ब्रह्मणः जगज्जन्मस्थितिलयकारणत्वं लक्षण-

---

इति मार्गौ विचार्याथ जगाद परमेश्वरः । इति ।

सङ्ग्रहकर्ताऽपि तृतीयपरिच्छेदे साङ्ख्ययोगशब्दितमार्गद्वयमेव विद्याऽवाप्त्युपायत्वेन वक्ष्यति—'एवं श्रवणमननादिसाधनानुष्ठानमवणस्य विद्याऽवाप्तिरित्यस्मिन्नर्थे सर्वसम्प्रतिपन्ने स्थिते भारतीतीर्थाः ध्यानदीपे विद्याऽवाप्तावुपायान्तरमप्याहुः' इतिग्रन्थेन । तदयं निष्कर्षः—विद्याधिकारिणो विचारसमर्थस्य प्रतिषेधाभावे वेदान्तश्रवणमनुष्ठेयम्, सति तु प्रतिषेधे इतिहासपुराणभाषाप्रबन्धादिश्रवणमनुष्ठेयम् । विद्याधिकारिणो विचारासमर्थस्य तु त्रैवर्णिकस्य योगशब्दितनिर्गुणोपासनमनुष्ठेयम् । मार्गद्वयासम्भवे च तत्सम्भवयोग्यजन्मप्राप्त्या तदन्यतरानुष्ठानद्वारा ज्ञानलाभ इति । तथा च श्रवणाधिकारिणः श्रवणस्य नित्यप्राप्तत्वात् तत्तुल्यकक्षतया साधनान्तरस्य कस्यचिद्विकल्प्य समुच्चित्य वा प्राप्त्यभावात् न तत्र विध्यवकाश इति सिद्धम् ।

एवं ब्रह्मसाक्षात्कारं प्रति श्रवणादेः नित्यप्राप्तत्वात् विधिं विनैव श्रवणाद्यनुष्ठानं सिध्यतीति प्रतिपादितम् । इदानीं विचारानुष्ठापकविध्यपेक्षायामपि यथा कर्मकाण्डश्रवणं 'कर्मवाक्यविचारः कर्तव्यः' इति पृथग्विध्यभावेऽपि अध्ययनविधिबलादेव सिध्यति, एवं वेदान्तश्रवणमपि तद्बलादेव सिध्यतीति न श्रोतव्यवाक्ये पृथग्विचारविध्यपेक्षाऽस्तीत्याशयेनोपसंहरति—एवं चेति । लोकत एव श्रवणादेः प्राप्तत्वे सति श्रवणविध्यपेक्षाऽभावादित्यक्षरार्थः ॥१॥

श्रोतव्यवाक्यार्थविचारेण प्रथमसूत्रार्थस्सङ्गृहीतः । क्रमप्राप्तं द्वितीयसूत्रार्थं सङ्गृह्णाति—विचार्यस्य चेति । चकारोऽवधारणार्थस्सन्(१) 'श्रुत्या' इत्यनेन सम्बध्यते । श्रुत्यैव लक्षणमुक्तम्, न तु व्याप्त्यादिलक्षणवत्

---

(१) सन्नेति पाठः ।

मुक्तं "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्या। जगज्जन्मस्थितिलयेषु एकैककारणत्वमप्यनन्यगामित्वाल्लक्षणं

---

पुरुषोत्प्रेक्षितमित्यर्थः। "येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म" इति वाक्यशेषः आदिपदार्थः। श्रुतौ 'यतः' इति यच्छब्देन ब्रह्मवल्ल्यां निरूपितं सत्यज्ञानानन्दानन्तात्मकं ब्रह्म परिगृह्यते। सर्वनाम्नः प्रकृतप्रधानपरामर्(१)र्शकत्वस्वाभाव्यात्। ततश्च यच्छ्रु(२)तिसामर्थ्यादेव ब्रह्मणस्सच्चिदानन्दस्वरूपात्मकं स्वरूपलक्षणं लभ्यते। पञ्चमी च प्रकृतित्वं हेतुत्वसामान्यं वा वक्ति। हेतुत्वसामान्यं च प्रकृतिकर्त्रुभयसाधारणमित्यविशेषादभिन्ननिमित्तोपादानत्वरूपं लक्षणं लभ्यते। इदंशब्देन प्रत्यक्षाद्युपस्थितं सर्वमुच्यते। भूतशब्दश्च पृथिव्यादिमहाभूतेषु प्राणिषु च रूढः। प्रकृते च विनिगमनाविरहेण रूढ्योरनुन्मेषात् भवन्तीति व्युत्पत्त्या कार्यमात्रं भूतशब्देनोच्यते। जीवन्ति स्थितिं लभन्ते। प्रयन्ति लीयमानानि सन्ति यत् अभिसंविशन्ति येन तादात्म्यं गच्छन्तीति यावत्। तत् कारणं ब्रह्म। तद् विजिज्ञासस्व विशेषेण सच्चिदानन्दैकरसपूर्णप्रत्यग्रूपेण ज्ञातुं साक्षात्कर्तुमिच्छ। इच्छामात्रेणोक्तसाक्षात्कारालाभात् सन्प्रत्ययेन विचारो लक्ष्यते। उक्तलक्षणमुखेन ब्रह्म विचारयेत्यर्थः। अत्र 'यतो भूतानि जायन्ते, तत् ब्रह्म, येन जीवन्ति तद् ब्रह्म, यदभिसंविशन्ति तद् ब्रह्म' इति श्रुतिपाठे सति जगज्जन्मकारणत्वम्, तत्स्थितिकारणत्वम्, तल्लयकारणत्वं च प्रत्येकमेव श्रुत्या ब्रह्मलक्षणमुक्तं स्यात्। न तु तथा पाठोऽस्ति। अतो जन्मादित्रितयकारणत्वं श्रुत्या लक्षणमुक्तमिति प्रतिभाति। तदाक्षिपति—जगज्जन्मस्थितिलयेष्विति। निर्धारणार्था सप्तमी। 'यतो भूतानि जायन्ते' इत्युपक्रम्य 'तद्ब्रह्म' इति श्रुत्या लक्ष्ये ब्रह्मणि कारणत्वस्य सत्त्वप्रतिपादनात् नासम्भवः, 'तद्ब्रह्म' इत्येकवचनेन लक्ष्यब्रह्मव्यक्तेरेकत्वावगमात् नाव्याप्त्यवकाश इति दोषद्वयाभावं सिद्धं कृत्वा अतिव्याप्तिरपि नास्तीत्याह—अनन्यगामित्वादिति। ब्रह्मान्यगामित्वाभावादित्यर्थः। ननु प्रधानेऽतिव्याप्तिः। तस्य साङ्ख्यैरुपादानत्वाभ्युपगमेन उपादानतया जगज्जन्महेतुत्वस्य, आधारतया स्थितिहेतुत्वस्य, लयाधारतया लयहेतुत्वस्य च तत्रापि सत्त्वात् इति चेत्, न। तत्तत्कर्तृत्वस्यापि लक्षणे विशेषणत्वेन विवक्षिततया जडे प्रधाने तदयो-

---

(१) परामर्शित्वेत्यादिपाठः। (२) यच्छब्देत्यर्थः।

भवितुमर्हतीति चेत् सत्यम् । लक्षणत्रयमेवेदं परस्परनिरपेक्षम् । अत एव 'अत्ता चराचरग्रहणात्' इत्याद्यधिकरणेषु ( उ० मी० अ० १ पा० २ अधि० १ सू० ९ ) सर्वसंहर्तृत्वादिकं ब्रह्मलिङ्गतयोपन्यस्तमिति कौमुदीकारः ।

---

गात् । न च तत्तत्कर्तृत्वमेव प्रत्येकं लक्षणमस्तु, किं तदुपादानत्वरूपविशेष्येणेति वाच्यम् । अदृष्टद्वारा जगज्जन्मादिकर्तरि जीवे अतिव्याप्तिवारकत्वात् । परिच्छिन्नजीवस्य च तदुपादानत्वायोगात् । न च साक्षाज्जगज्जन्मकर्तृत्वम्, नियन्तृतया जगत्स्थितिहेतुत्वम्, सञ्जिहीर्षया जगत्संहर्तृत्वं च लक्षणमिति विवक्षायां जीवेऽतिव्याप्त्यभावादुपादानत्वरूपं विशेष्यं व्यर्थमेवेति वाच्यम् । तर्ह्युपादानत्वमपि पृथगेव लक्षणमस्तु । मायाया ब्रह्मोपादानतामात्रघटकत्वेन पृथगुपादानत्वाभावात् । प्रधानादिकारणान्तरस्य चाप्रामाणिकत्वेनातिव्याप्त्यभावादिति भावः । प्रत्येकं लक्षणत्वसम्भवमङ्गीकरोति—सत्यमिति । तर्हि श्रुत्या त्रितयकारणत्वं कथं लक्षणमुक्तमित्याशङ्क्य श्रुतेरपि प्रत्येकलक्षणे एव तात्पर्यम्, मेलनस्य प्रयोजनाभावादित्याशयेनाह— लक्षणत्रयमेवेदमिति । इदं जगत्कारणत्वं जन्मादीनां मध्ये एकैकनिरूपितं परस्परनिरपेक्षं सत्लक्षणत्रयमेव श्रुत्यभिमतम्, न तु त्रितयनिरूपितकारणत्वरूपमेकं लक्षणमित्यर्थः । त्रयपदमनेकपरम्, न तु त्रित्वनियमपरम् । ततोऽप्याधि(१)क्यस्य शङ्काऽवसरे दर्शितत्वादिति बोध्यम् । जगत्संहर्तृत्वादेः प्रत्येकं ब्रह्मलक्षणत्वे सूत्रकारादिसम्मतिमाह—अत एवेति । अत्रादिपदेन अन्तर्याम्यधिकरण(उ० मी० अ० १ पा० २ अधि० ५ सू० १८ ) जगद्वाचित्वाधिकरणयोः (उ० मी० अ० १ पा० ४ अधि० ५ सू० १६) सङ्ग्रहः ।

अयमर्थः कठवल्ल्यां पठ्यते—

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ इति ।

अत्र ब्रह्मक्षत्रयोः प्रयुक्त ओदनशब्दस्तावन्न मुख्यः, किं तु गौणः । लोके च ओदनशब्दमुख्यार्थस्यादनीयत्वप्रसिद्धेरदनीयत्वेन गुणेन

---

( १ ) उपादानत्वरूपलक्षणेनेत्यर्थः ।

तयोरोदनशब्दः प्रवर्तते । तथा च यस्य ब्रह्मक्षत्रे ओदनवददनीये इत्युक्तौ यच्छब्दार्थस्यात्तृत्वं प्रतीयते। अनेनैवाभिप्रायेणोक्तं सूत्रे 'अत्ता' इति। ओदनपदवाच्यार्थस्यादनीयत्वं द्विविधमस्ति—भुजिक्रियाकर्मत्वात्मकभोज्यत्वरूपमेकम्, विनाश्यत्वरूपमपरम् । परन्तु भोज्यत्वगुणः प्रसिद्धः, न तु विनाश्यत्वगुणः । गौणप्रयोगे च प्रसिद्धगुण एव गृह्यते। यथा 'अग्निर्माणवकः' इत्यत्राग्निगतशुचित्वादिगुण एवोपादीयते, प्रसिद्धत्वात्, न तु तद्गतोऽपि विनाश्यत्वादिगुणः, एवं प्रकृतेऽपि लोकप्रसिद्धिबलात् भोज्यत्वगुण एवौदनशब्दात् प्रतीयते । अस्ति च ब्रह्मक्षत्रयोरपि स्त्रीपिण्डरूपयोर्भोज्यत्वं पुमांसं प्रति। ब्रह्मक्षत्रयोश्च भोज्यत्वप्रतीतौ सत्यां तत्प्रतिसम्बन्धिनि यच्छब्दार्थे पूर्वं प्रतीतमत्तृत्वं भोक्तृत्वरूपं जीवलिङ्गं पर्यवस्यति। यदा त्वोदनपदस्य मृत्यूपसेचनपदसन्निधानात् ब्रह्मक्षत्रयोः विनाश्यत्वगुणस्स्वीक्रियते, न तु भोज्यत्वगुणः, स्त्रीपिण्डरूपब्रह्मक्षत्रकर्मकभुजिक्रियायां मृत्योरुपसेचनत्वासम्भवेन 'मृत्युर्यस्योपसेचनम्' इत्यंशस्यानन्वयप्रसङ्गात्, ब्रह्मक्षत्रयोः विनाशने तु मृत्योः सहायत्वरूपमुपसेचनत्वमस्तीति न तदनन्वयप्रसक्तिः, तदा तत्प्रतिसम्बन्धिनि यच्छब्दार्थे पूर्वं प्रतीतमत्तृत्वं संहर्तृत्वरूपं पर्यवस्यति ।

विनाशित्वगुणग्रहणपक्षे त्वयं विशेषो लभ्यते—लोके हि दध्यादिरूपमुपसेचनं स्वमिश्रितान्नादिनाशे साधनं दृष्टमिति मृत्यूपसेचनपदयोगबलात् समृत्युकस्य चराचरात्मकस्य जगतो विनाशनं प्रतीयते। तदनुसारात् ब्रह्मक्षत्रपदयोरजहल्लक्षणया कृत्स्नजगत्परत्वं च प्रतीयते । तत्प्रतिसम्बन्धिन्यपि यच्छब्दार्थे कृत्स्नजगत्संहर्तृत्वरूपं ब्रह्मलिङ्गं भाति ।

एवं स्थिते प्रथममदनीयत्वगुणयोगात् प्रतीतोऽत्ता किं जीवः परमात्मावेति संशयः। तत्र पूर्वपक्षः जीव एवेति । लोकप्रसिद्ध्यनुसारेण अत्तृत्वस्य भोक्तृत्वरूपताप्रतीतेः। न परमात्मा। "अनश्नन्"इति वचनेन तस्य भोक्तृत्वनिषेधादिति ।

सिद्धान्तस्तु—अत्ता परमात्मा । कुतः ? चराचरग्रहणात् । मृत्यूपसेचनपदानुरोधेन पूर्वोक्तरीत्या अत्तृत्वस्य चराचरात्मकसकलजगत्संहर्तृत्वरूपत्वप्रतीतेः । न च परमात्मनोऽन्यस्य जगत्संहर्तृत्वं सम्भवति। न च लोकप्रसिद्धिबलादत्तृत्वं भोक्तृत्वरूपं भातीत्युक्तमिति वाच्यम्। तत्प्रसिद्ध्यपेक्षया वाक्यशेषाधीनविनाश्यत्वगुणप्रसिद्धेः शीघ्रतरत्वेन बलवत्त्वात्। अतो अत्ता पर एवेति निर्णयः।

स संहर्ता परमेश्वरो यत्र निर्विशेषे भेदकल्पनया वर्तते, तं निर्विशेषं परमात्मानम्, इत्था इत्थं को वेद न कोऽपीति तस्य दुर्विज्ञेयत्वम् उदाहृतमन्त्रचतुर्थपादेन विवक्षितमिति बोध्यम् ।

"अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" (उ०मी० अ०१ पा०२ अधि० ५ सू० १८)।

"य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" (बृ० ३ । ७ । १) इत्युपक्रम्य "यः पृथिव्यां तिष्ठन्" "यो ऽप्सु तिष्ठन्" इत्यादिना कांश्चित् पर्यायानुक्त्वा "इत्यधिदैवतम्" इत्युपसंहृत्य पुनः "यस्सर्वेषु भूतेषु तिष्ठन्, यस्सर्वेषु लोकेषु, यस्सर्वेषु वेदेषु,(१) यस्सर्वेषु यज्ञेषु" इत्यादयः केचन पर्यायाः काण्वमाध्यन्दिनपाठभेदेनाम्नाताः । तत्राधिदैव(२)भूतलोकवेदयज्ञादिषु श्रुतोऽन्तर्यामी परमात्मा । कुतः ? तद्धर्मव्यपदेशात् । तद्धर्मस्य परमात्मधर्मस्य विशेषेण सर्वस्थितिकर्तृत्वरूपसर्वनियन्तृत्वस्य "येन जातानि जीवन्ति"इतिश्रुतिसिद्धस्य वाक्योपक्रमे "य इमं च लोकम्"इत्यादिना व्यपदेशात् न जीवादिरन्तर्यामी । तस्योक्तधर्मासम्भवादिति सूत्रार्थः।

"जगद्वाचित्वात्" (उ० मी० अ० १ पा० ४ अधि० ५ सू० १६)।

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिं ब्राह्मणं प्रति अजातशत्रोर्वचनं श्रूयते—

"यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः पुरुषः" ( कौ० ४ । १९ ) इति ।

अत्र वेदितव्यत्वेन श्रुतः पुरुषः 'जीवः परो वा' इति संशये जीव इति पूर्वपक्षः । पुरुषपदस्य जीवे रूढत्वात् । "पुण्यो वै पुण्येन कर्मणा भवति" "कर्म हैव तदूचतुः" इत्यादौ वेदे, लोके च 'पुण्यकर्माऽयं, यतस्सुखी वर्तते' इत्यादौ कर्मपदस्य धर्मादौ प्रयोगदर्शनेन तत्र रूढत्वाच्च । ऊचतुः आर्तभागयाज्ञवल्क्यावित्यर्थः । कर्मसम्बन्धी पुरुषो जीव एव, न परमात्मा । तस्य धर्माद्यभावात् । न च "एतेषां पुरुषाणां कर्ता" इति वाक्येन वेदितव्यपुरुषस्य प्रकृतादित्यचन्द्रादिपुरुषकर्तृत्वमुच्यमानं जीवे कथं सम्भवतीति वाच्यम् । भोगोपकरणभूतानादित्यादिपुरुषान् प्रति भोक्तुः जीवस्याऽदृष्टद्वारा कर्तृत्वोपपत्तेः । अत एव "यस्य वैतत् कर्म" इति वाक्यं सङ्गतम् । अदृष्टद्वारा प्रकृतपुरुषकर्तृत्वोपपादकत्वात् इत्येवं प्राप्ते सिद्धान्तः—

कर्मशब्दस्य न धर्मादौ रूढिः । 'चलनात्मकं कर्म' इति प्रसिद्ध्य-

( १ ) देवेष्विति पाठः ।        ( २ ) अधिदैवादिदेवभूतेति पाठः ।

(वे०सू०मं०) उपादानत्वविज्ञत्वचस्त्वन्तरनिराक्रिया: ॥
व्युत्क्रमाल्लिङ्गधुमाद्यश्रुरन्ये संवलितं त्रयम् ॥ १९ ॥

---

नुरोधेन परिस्पन्दे तस्य रूढत्वात् । कथं तर्हि धर्मादौ तत्प्रयोगनिर्वाहः ? । विहितप्रतिषिद्धरूपदेहादिपरिस्पन्दजन्ये धर्मादौ लक्षणया प्रयोगोपपत्तेः । न च देवताध्यानादिरूपमनोमात्रव्यापारजन्ये धर्मादौ परिस्पन्दजन्यत्वाभावेन लक्षणया प्रयोगायोगे सति परिस्पन्द इव धर्मादावपि रूढिरपरिहार्येति वाच्यम् । तर्हि प्रकृते विनिगमनाविरहेण रूढ्योरलुम्पे सति 'क्रियते इति कर्म' इति व्युत्पत्त्या कर्मपदं कार्यमात्रमाह । एतत्पदमपि प्रत्यक्षाद्युपस्थितवस्तुमात्रमाह । प्रकृतस्य तत्परामर्शयोग्यस्य कस्यचिदभावात् । तथा च एतत् कृत्स्नं जगत् यस्य कर्म कार्यमित्यर्थलाभेन वेदितव्यपुरुषस्याशेषजगदुत्पत्तिकर्तृत्वं सिध्यति । तच्च ब्रह्मलिङ्गम् । आदित्यादिपुरुषकर्तृत्वमपि न मुख्यं जीवस्य सम्भवति । "एतेषां पुरुषाणां कर्ता" इत्यत्र मुख्यकर्तृग्रहणसम्भवे गौणकर्तृग्रहणायोगात् । न चाशेषजगत्कर्तृत्वोक्तौ तत एवादित्यादिकर्तृत्वस्यापि लाभात् पृथक् तदुक्तिर्व्यर्थेति वाच्यम् । मन्त्रार्थवादादिष्वादित्यचन्द्रादिपुरुषाणां महामहिमसङ्कीर्तनेन तेषु सञ्जातपरब्रह्मत्वभ्रान्तिनिवर्तकत्वेन पृथगुक्तिसाफल्यात् ।

पुरुषपदस्यापि न जीवे रूढिः । 'पूरणात् पुरुषः' इति क्लृप्तयोगेनैव कृत्स्नजगद्व्यापिनि ब्रह्मणीव कृत्स्नशरीरव्यापिनि जीवेऽपि प्रयोगोपपत्त्या तत्र रूढेरकल्पनात् । तत्कल्पनेऽपि योगवत् रूढेरपि जीवब्रह्मसाधारणचेतनमात्रे कल्पनोपपत्तेश्च न पुरुषश्रुतिः जीवपक्षपातिनी । श्रुतिपाठे क्वचित् पुरुषपदाश्रवणाच्च ।

तथाचायं सूत्रार्थः—वेदितव्यः पुरुषः परमात्मा । कृत्स्नजगत्कर्तृत्वात् । न च हेत्वसिद्धिः । कर्मपदस्य जगद्वाचित्वात् । तस्माद्वेदितव्यः पुरुषः परमात्मेति सिद्धम् ।

एवं च 'सर्वसंहर्तृत्वादिकम्' इत्यत्रादिपदेनान्तर्याम्यधिकरणोक्तं सर्वनियन्तृत्वरूपसर्वस्थितिकर्तृत्वम्, जगद्वाचित्वाधिकरणोक्तं सर्वजगदुत्पत्तिकर्तृत्वं च गृह्यते ।

ननु "यतः" इत्यादिश्रुत्या जीवव्यावृत्तेतरस्य तत्पदवाच्यस्य ब्रह्मणो लक्षणमुक्तमिति तात्पर्यवर्णनमयुक्तम् । "तद्विजिज्ञासस्व तद्ब्रह्म" इतिवाक्यशेषानुसा-

अन्ये तु—जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात् उपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि लयो दर्शितः । अस्तु ब्रह्म जगदुपादानं, तज्जन्मनि घटजन्मनि कुलालवत्, तत्स्थितौ राज्यस्थेमनि राजवच्च उपादानादन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव जगज्जननजीवननियामक-

---

रेण श्रुतेः वाक्यार्थभूताद्वितीयजिज्ञास्यब्रह्मलक्षणप्रतिपादकत्वस्यैवावगमादित्याशङ्क्य श्रुतेस्तथाभूतब्रह्मलक्षणपरत्वमुपगच्छतां मतमाह—अन्ये त्विति । चेतनाचेतनात्मककृत्स्नभूतोपादानत्वप्रतिपत्तिर्हि ब्रह्मणोऽद्वितीयत्वबोधहेतुः । न च चेतनानां नित्यत्वात् कथं तदुपादानत्वं ब्रह्मण इति वाच्यम् । तेषां स्वरूपेण नित्यत्वेऽपि शरीरद्वयविशिष्टतया कार्यत्वोपगमात् । न चैवमपि ब्रह्मापेक्षया द्वितीयस्य तत्कार्यजगत एव विद्यमानत्वात् कथं तदुपादानत्वमद्वितीयत्वप्रत्यायकमिति वाच्यम् । कार्यस्य हि उपादानमेव वास्तवं स्वरूपम्, न तु तदतिरिक्तं वास्तवं स्वरूपमस्ति । नामरूपात्मकजगद्रूपं तु मिथ्याभूतम् इति आरम्भणाद्यधिकरणेषु ( उ० मी० अ० २ पा० १ अधि० ६ ) व्यवस्थापितत्वात् । अतस्सर्वोपादानत्वं सर्वस्य वास्तवं स्वरूपं ब्रह्मैवेति बोधनद्वारा ब्रह्मणो वास्तवाद्वितीयत्वबोधहेतुर्भवति । अद्वितीयब्रह्मबोधश्च मुक्तिहेतुरिति मुक्तिप्रयोजनकब्रह्माद्वितीयत्वबोधहेतुभूतोपादानत्वप्रत्यायनार्थं "यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतिभागेन ब्रह्मणि सर्वभूतलयो दर्शित इत्याह—उपादानत्वेति । ननु घटाद्युपादाने मृदादौ घटादिलयाधारत्ववत् जन्मादिकारणत्वस्यापि सत्त्वेन तद्बलादपि उपादानत्वप्रत्ययस्स्यादिति, नेत्याह—जन्मकारणत्वस्येति । निमित्तं कुलालदण्डचक्रादि । तर्हि श्रुतौ जन्मादिकारणत्वप्रतिपादनं व्यर्थम्, लयमात्रप्रतिपादनादेवेष्टसिद्धेरिति, नेत्याह—अस्त्वित्ति । घटजन्मन्युपादानमृदतिरिक्तकुलालवत् जगज्जन्मन्यपि उपादानब्रह्मापेक्षया अन्यत् कर्तृरूपं निमित्तं भविष्यतीति भ्रमव्यवच्छेदाय तस्यैव ब्रह्मण एव श्रुतौ जगज्जननकर्तृत्वमुक्तम् । तथा राज्यस्थेम्नि पालनरूपे पालनीयप्रजाद्युपादानातिरिक्तराजवत् जगतस्स्थितौ जगदुपादानब्रह्मापेक्षया अन्यत् निमित्तं नियन्तृतया स्थितिहेतुभूतं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव ब्रह्मणो जगज्जीवननिया-

त्वमुक्तम्। तथाचैकमेवेदं लक्षणम् अभिन्ननिमित्तोपादानतया-ऽद्वितीयं ब्रह्मोपलक्षयतीत्याहुः ॥ २ ॥

(वे०सू०मं०) तत्रोपादानता विश्वविवर्तास्पदता चितः ॥
स्वाभिन्नन्यूनसत्ताऽर्थो विवर्त इति कथ्यते ॥१३॥

२ ब्रह्मणश्च उपादानत्वम् अद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनामिवारम्भकत्वरूपं, न वा प्रकृतेरिव परिणामित्वरूपं, किं त्वविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वलक्षणम्।

---

मकत्वं श्रुत्या उक्तमित्यर्थः। तथा चेति। जगज्जननजीवननियामकत्वाभ्यां जगदुपादानब्रह्मण एव तन्निमित्तत्वप्रतीतौ सिद्धायामित्यर्थः। इदं श्रुत्युक्तं लक्षणमेकं सदेवाभिन्ननिमित्तोपादानत्वे पर्यवस्यदद्वितीयं ब्रह्म लक्षयति—ब्रह्मव्यतिरिक्तवस्त्वस्तित्वशङ्कानिराकरणद्वारेण ज्ञापयति, न तु प्रत्येकलक्षणं सदित्यर्थः। निमित्तं च तदुपादानं चेति निमित्तोपादानम्। अभिन्नं च तन्निमित्तोपादानं चेति पुनः कर्मधारयः। आद्यकर्मधारयादेव निमित्तोपादानयोरभेदे सिद्धेऽपि पुनरभिन्नपदं कर्मधारयात्वगताभेदः ऐक्यलक्षण एव, न नीलोत्पलादौ गुणगुणिनोरिव तादात्म्यरूप इति ज्ञापनार्थमिति बोध्यम् ॥ २ ॥

ननु "यतः" इति पञ्चमीश्रुत्या, सर्वभूतलयाधारत्वलिङ्गेन च निश्चितं ब्रह्मण उपादानत्वं प्रधानस्येव परिणामित्वरूपं वा, परमाणूनामिवारम्भकत्वरूपं वा, रज्ज्वादेरारोपितसर्पाद्युपादानस्येव जगद्रूपविवर्ताधिष्ठानत्वरूपं वा वाच्यम्। तत्र नाद्यः। ब्रह्मणः कूटस्थत्वात्। परिणामवादे हि परिणामपरिणामिनोः वास्तवाभेदस्वीकारेण ब्रह्मणः परिणामित्वे परिणामजन्मादयोऽपि ब्रह्मणि प्रसज्येरन्। तथा च जन्ममरणादिविकारशून्यत्वलक्षणं श्रुतिसिद्धकूटस्थत्वं तस्य भज्येत। ततश्च कूटस्थत्वात् तस्य परिणामित्वं न सम्भवति। न द्वितीयः। अद्वितीयत्वाद् ब्रह्मणः। ब्रह्मणस्सद्वितीयत्वे हि परमाणुद्वयसंयोगवदसमवायिकारणलाभसम्भवादारम्भकत्वं भवेदित्याशयेनाह—ब्रह्मणश्चेति। तृतीयप्रकारः परिशिष्यते इत्याह—किं त्वित्यादिना।

ननु ब्रह्मतद्विवर्तप्रपञ्चयोरभेदः सिद्धान्ते उपेयते। आ-

**वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामः, तदसमसत्ताको विवर्त इति वा; कारणसलक्षणो ऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्त इति वा;**

---

रम्भवादे तु आरभ्यमारम्भकादत्यन्तभिन्नमुपेयते इति आरभ्य-विवर्तयोः भेदः स्पष्टः, सिद्धान्त इव परिणामवादेऽपि साङ्ख्याद्यभिमते परिणामपरिणामिनोरभेदाभ्युपगमाद विवर्तपरिणामयोर्भेदः कथमवगन्तव्य इत्याशङ्क्य लक्षणभेदादित्याह—वस्तुन इति। वस्तुन उपादानत्वाभिमतस्य। अन्यथा—पूर्वरूपापेक्षया रूपान्तरेण, भावः—भवनमवस्थानम्, अन्यथाभावः अवस्थाविशेष इति यावत्। तत्समसत्ताकः तेन वस्तुना समा सत्ता यस्य अन्यथाभावस्य, स तथा। तथा च उपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तत्परिणामत्वमिति परिणामलक्षणं पर्यवस्यति। तत्र विवर्तवारणाय सत्यन्तम्। घटस्य तन्तुपरिणामत्ववारणाय विशेष्यम्।

विवर्तलक्षणमाह—तदिति। वस्तुनस्तदसमसत्ताकोऽन्यथाभावो विवर्त इति सम्बन्धः। उपादानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तद्विवर्तत्वमिति विवर्तलक्षणम्। उपादानत्वाभिमतमृद्वस्तुसत्ताविषमसत्ताकत्वं चैतन्यस्याप्यस्तीति तस्य मृद्वस्तुविवर्तत्ववारणाय विशेष्यम्। परिणामवारणाय सत्यन्तम्। ब्रह्मचैतन्यस्य पारमार्थिकी सत्ता, घटादिप्रपञ्चस्य व्यावहारिकी सत्ता, शुक्तिरजतादेः प्रातिभासिकी सत्तेति सत्तात्रैविध्याङ्गीकारमते लक्षणभेद उक्तः।

ब्रह्मणि घटादौ शुक्तिरजतादौ च सर्वत्र ब्रह्मस्वरूपभूता एकैव सत्ता, न तदतिरिक्तेति मतसाधारण्येन लक्षणान्तरमाह—कारणसलक्षण इति। उपादानत्वाभिमतवस्तुसलक्षणत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वमिति परिणामलक्षणम्। अत्र सालक्षण्यं जडत्वरूपं बोध्यम्। परिणामपरिणामिनोः जडत्वनियमान्न व्याप्यव्याप्तिशङ्का। मृद्वस्तुनो घटपरिणामत्ववारणाय विशेष्यम्। प्रपञ्चस्य संवित्परिणामत्ववारणाय सत्यन्तम्।

विवर्तलक्षणमाह—तदिति। उपादानत्वाभिमतवस्तुविलक्षणत्वे

**कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्तः इति वा विवर्तपरिणामयोर्विवेकः ॥ ३ ॥**

---

सति तदवस्थाविशेषत्वं तद्विवर्तत्वमिति विवर्तलक्षणम् । अत्र चित्त्वजडत्वरूपं वैलक्षण्यं विवक्षितम् । वियदादिप्रपञ्चवत् शुक्तिरजतादेरपि तत्तदवच्छिन्नचैतन्य एवाध्यासाङ्गीकारात् जडमात्रे चैतन्यविवर्ते तद्विलक्षणत्वमस्तीति लक्षणसङ्गतिः । उपादानत्वाभिमतजडविलक्षणे चैतन्ये जडविवर्तत्ववारणाय विशेष्यम् । मृत्परिणामे घटादौ मृद्विवर्तत्ववारणाय सत्यन्तम् ।

प्रकारान्तरेण विवर्तपरिणामयोः लक्षणमाह—कारणाभिन्नमिति । कारणत्वाभिमतवस्त्वभिन्नत्वे सति तत्कार्यत्वं तत्परिणामत्वम् । वियदादौ ब्रह्मकार्यत्वमस्ति तत्परिणामत्वं तु नास्ति इति तद्वारणाय सत्यन्तम् । ब्रह्मप्रपञ्चयोरारोपिताभेदसत्त्वेऽपि लक्षणे विवक्षितस्य धर्मिद्वयसमानस्वभावाभेदस्याभावान्नातिव्याप्तिः । परिणामवादे मृदोऽपि घटाद्यभिन्नत्वमस्तीति तस्याः घटादिपरिणामत्ववारणाय विशेष्यम् ।

तदभेदमिति । वस्तुतः तदभेदं विनैवेत्यर्थः । व्यतिरेको भेदः । अस्मिन् लक्षणे कार्यत्वमविवक्षितम् । अनाद्यविद्यादेरपि विवर्तत्वाङ्गीकारात् । यद्वा कार्यरूपस्यैव विवर्तस्येदं लक्षणम् । तथा च उपादानत्वाभिमतवस्तुनस्सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति कार्यत्वं कार्यरूपविवर्तलक्षणम् । अत्राविद्यां प्रति उपादानत्वाभिमतचैतन्याद्वस्तुतो भेदाभेदाभ्यां निरूपयितुमशक्यायामविद्यायामतिव्याप्तिवारणाय विशेष्यम् । आरम्भवादे उपादानाद्भेदेन दुर्निरूपकार्ये अतिव्याप्तिवारणाय भेदेत्युक्तम् । परिणामवादे उपादानात् भेदेन दुर्निरूपकार्ये अतिव्याप्तिवारणायाभेदेत्युक्तम् । सिद्धान्ते कार्यकारणयोर्भेदोपगमादसम्भववारणाय वस्तुत इत्युक्तम् ।

ननु कार्यकारणयोः वास्तवौ भेदाभेदौ कथं दुर्निरूपाविति, उच्यते—तत्र तयोः भेदस्तावत् दुर्निरूपः । निम्नोन्नतादियुक्तमृद्वस्तुव्यतिरेकेण घटाद्यनुपलम्भात्, संयोगविशेषयुक्ततन्त्वतिरेकेण पटानुपलम्भाच्च । 'मृत् घटः, तन्तवः पटः, सुवर्णं कुण्डलम्, इत्यादिसामानाधिकरण्याच्च । न हि वस्तुतो भिन्नयोः सामानाधिकरण्यप्रत्ययः सम्भवति । किं च कारकव्यापारात् पूर्वं मृदादौ घटादेस्सत्त्वमभ्युपगन्तव्यम् । तद-

सत्त्वे शशशृङ्गादिवदुत्पत्त्यनुपपत्तेः, उत्पत्तिक्षणात् पूर्वमसतः कार्यस्य उत्पत्तिक्रियां प्रति कर्तृत्वानुपपत्तेश्च । पूर्वसिद्धस्यैव कर्तृत्वदर्शनात् । उत्पत्तिक्षणे उपादानेन सह कार्यस्य सम्बन्धानुपपत्तेश्च । पूर्वसिद्धयोरेव हि पश्चात् सम्बन्धसम्भवः । अन्यथा शशशृङ्गादेरपि कारणसम्बन्धस्य दुर्वारत्वात् । कारकव्यापारात् पूर्वं कार्यस्य तुच्छवैलक्षण्यानङ्गीकारे तद्वदेव पश्चादात्मलाभासम्भवस्य दुर्वारत्वाच्च । सिद्धे च प्राक्कार्यस्य सत्त्वे प्राक्काले कार्यकारणयोर्भेदे मानाभावादभेदसिद्धौ पश्चादपि तयोरभेद एव स्वीकर्तव्य इति कार्यकारणाभेदवादिनः साङ्ख्यादयः ।

तद्भेदवादिनः तार्किकादयस्तु वदन्ति—कार्यकारणयोरभेदो न सम्भवति। तद्भावविरोधात् ।न हि तस्यैव तत्कार्यत्वं तत्कारणत्वं च सम्भवति । अर्थक्रियाभेदाभावप्रसङ्गाच्च । न हि जलाहरणाद्यर्थक्रिया मृद्वस्तुनस्सम्भवति। घटोत्पत्तेः प्रागपि तत्प्रसङ्गात् । नापि मृदोऽर्थक्रिया घटस्य सम्भवति । मृद्वत् घटस्यापि घटोत्पादकत्वप्रसङ्गात् । कार्यस्य कारकव्यापारात्पूर्वं सत्त्वे च कारकव्यापारवैयर्थ्यप्रसङ्गात्, तदा मृद्वदेवोपलम्भप्रसङ्गाच्च । तदुक्तं पञ्चदश्याम्—

स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात् ।
नाप्यभिन्नः पुरा पिण्डदशायामनवेक्षणात् ॥ इति ।

वियोगे सति मृदस्सकाशात् बुद्ध्या विवेचने क्रियमाणे इत्यर्थः । एवं कार्यकारणयोः भेदवादिभिरभेदवादिभिश्च दर्शितैः परस्परं प्रतिक्षेप्तुमशक्यैः न्यायैः कार्यस्य कारणात् भेदाभेदाभ्यां प्रागुत्पत्तेः सत्त्वासत्त्वाभ्यां च दुर्निरूपत्वात् तस्यानृतत्वं सिद्धम् । कारणं तु कार्योत्पत्तेः पूर्वकाले कार्यकाले चानुवर्तमानं कार्यात् भेदेन सत्त्वेन च निरूपयितुं शक्यत्वात् सत्यमेव कार्यापेक्षया । एवं मृदादेरवान्तरकारणस्य तत्तत्कार्यापेक्षया सत्यत्वे सिद्धेऽपि परमार्थसत्यत्वं नोपेयते । श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्यैव बाधितत्वात् । ब्रह्मणस्तु परमार्थसत्यत्वं सर्वात्मना बाधशून्यत्वात् अभ्युपगम्यते । अत एव जगत्कारणस्य सत्यत्वे मृदादिसत्यत्वम्, जगतो मिथ्यात्वे च मृदादिकार्यस्य घटादेरनृतत्वं च दृष्टान्तत्वेन श्रुत्या उपादीयते ।

तदुक्तं पञ्चदश्याम्—

एवं मायामयत्वेन विकारस्यानृतात्मताम् ।

(वे०सू०मं०) अथ शुद्धमुपादानमीश्वरो जीव एव वा ॥
शुद्धं सङ्क्षेपकमते ज्ञेयलक्षणवर्णनात् ॥ १७ ॥

४ अथ शुद्धं ब्रह्म उपादानमिष्यते, ईश्वररूपं, जीवरूपं वा।

---

विकाराधारमृद्वस्तुनस्सत्वं चाब्रवीच्छ्रुतिः ॥ इति–
श्लोके विकारानृतत्वादौ पूर्वोक्तन्यायकलापः एवंशब्दार्थः । दृष्टान्तत्वेनेति शेषः ।

उक्तं च भामतीनिबन्धे –

'तदनेन प्रमाणेन विकारजातस्यानिर्वाच्यतया सिद्धमनृतत्वम्, कारणस्य निर्वाच्यतया सिद्धं सत्यत्वं च "मृत्तिकेत्येव सत्यम्" इत्यादिना प्रबन्धेन दृष्टान्ततयाऽनुवदति श्रुतिः' इति ।

"वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इति श्रुतिरित्यर्थः।

विकारो घटादिः, वाचा 'घटशरावादिरस्ति' इत्यादिशब्देन आरभ्यते व्यवह्रियते इत्यारम्भणम् । वाचा व्यवह्रियते एव, न वस्तुतोऽस्ति विकारः, तस्य दुर्निरूपत्वादिति भावः । कथं तर्हि 'मृद्वस्तुनः सकाशात् घटादिः जातः' इति कार्यकारणयोर्भेदव्यवहारः ? इत्यत आह नामधेयम्—भेदव्यवहारो नाममात्रम् अर्थशून्यम् । यथा 'राहोश्शिरः' 'पुरुषस्य चैतन्यम्' इति व्यवहारः । विकारवत् भेदोऽप्यनिर्वचनीय इति भावः । किं तर्हि सत्यम् ? तत्राह—मृत्तिकेति । मृत्तिका इत्यनेन मृत्तिकात्वेन रूपेण घटशरावादिविकारेषु प्रतीयमानं कारणरूपं वस्तु सत्यम् । विकारसत्यत्वमेवकारेण व्यवच्छिद्यते ।

तत्र सिद्धं(१) दुर्वचत्वं कारणात् भेदाभेदाभ्यां कार्यस्येति पृच्छति–अथेति । ननु वाक्यार्थभूतशुद्धब्रह्मण एव श्रुतौ लक्षणमुक्तम्, "तद्विजिज्ञासस्व" इति वाक्यशेषे लक्षणीयस्य ब्रह्मणो जिज्ञास्यत्वाभिधानात्, तथा च निश्चितेऽर्थे प्रश्नानुपपत्तिरिति चेत् । यथा शुद्धस्य जिज्ञास्यत्वम्, एवं तत्त्वंपदार्थभूतयोः जीवेश्वरयोरपि शुद्धब्रह्मप्रतिपत्तिहेतुत्वेन जिज्ञास्यत्वमस्ति, तथा तयोरपि वक्ष्यमाणरीत्याऽभिन्ननिमित्तोपादानत्वं च सम्भवतीति जिज्ञास्यत्वकारणत्वयोः साधारणत्वेन प्रश्नोपपत्तेरिति भावः ।

---

(१) तत् प्रसिद्धमिति पाठः।

अत्र सङ्क्षेपशारीरकानुसारिणः केचिदाहुः—शुद्धमेवोपादानम्। जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः।

तथा च "आत्मन आकाशस्सम्भूतः" इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैवेति॥

---

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्यातच्चितोर्योगः षडस्माकमनादयः॥

इति संप्रदायविद्वचने चैतन्यत्रैविध्यस्यैव प्रसिद्धत्वात्तदनुसारेण त्रेधा प्रश्नः। सामान्यज्ञानस्य विशेषबुभुत्साहेतुत्वात्।

ब्रह्मणः सामान्यरूपेणोपादानत्वज्ञानानन्तर्यमथशब्दार्थः। प्रश्नो वा तदर्थः। ईश्वररूपं जीवरूपं वा ब्रह्म नोपादानमित्येवकारार्थः।

'जन्माद्यस्य यतः' (उ०मी०अ० १ पा०१ सू०२) इति सूत्रम्, जन्म आदिरस्येति बहुव्रीहिः। जन्मस्थितिभङ्गमन्यपदार्थः। जन्मादीति नपुंसकैकवचनेनान्यपदार्थे समाहारद्वन्द्वसूचनात्। अन्यपदार्थभूतजन्मस्थितिभङ्गेष्वितरेतरयोगद्वन्द्वाश्रयणे तु जन्मादय इति सूत्रापत्तेः। जन्मन आदित्वं च जायमानपदार्थेषु स्थितिभङ्गावपेक्ष्य दृष्टमिति सूत्रे जन्मनः प्राथम्यरूपादित्वनिर्देशः। 'अस्य' इति सर्वनाम्ना सूत्रकर्तुः बुद्धिस्थसकलप्रपञ्चनिर्देशः। षष्ठ्या च जगतो जन्मादेश्च सम्बन्धनिर्देशः। 'यतः' इति कारणनिर्देशः। सूत्रे तत्पदाध्याहारः। पूर्वसूत्रात् ब्रह्मपदानुषङ्गः। तथा च—यतः कारणादस्य जगतो जन्मादि, तत् ब्रह्मेति सूत्रार्थः।

ज्ञेयब्रह्मेति। वाक्यार्थभूतशुद्धब्रह्मण एव प्राधान्येन लक्षणीयत्वात्तस्यैव जन्मादिसूत्रे लक्षणमुच्यते। 'अथातो ब्रह्मजिज्ञासा' (उ० मी० अ० १ पा० १ सू० १) इति पूर्वसूत्रे शास्त्रविषयसमर्पकेण ब्रह्मपदेन शुद्धब्रह्मण एवोपात्तत्वेन तस्यैव लक्षणाकाङ्क्षणाच्चेति भावः। ननु "आत्मन आकाशस्सम्भूतः" "सोऽकामयत" "यस्सर्वज्ञस्सर्ववित्" इत्यादिकारणवाक्येषु ईश्वररूपब्रह्मणः कारणत्वमुच्यते, न शुद्धस्य। तस्य कामयितृत्वसर्वज्ञानकर्तृत्वाद्यनुपपत्तेः। अतस्तद्वाक्यगतात्मपदतत्पदसर्वज्ञादिपदानां शबलवाचित्वात् न कारणवाक्येभ्यश्शुद्धस्योपादानत्वसिद्धिरिति, नेत्याह—तथा चेति। जन्मादिसूत्रतद्भाष्ययोस्स्वारस्येन शुद्धस्योपादानत्वावगमे सतीत्यर्थः। लक्षणैव स्वीक्रियते, अतः कारणवाक्येभ्यः

(वे०सू०मं०) सार्वात्म्यस्येशलिङ्गत्वात् यः सर्वज्ञ इति श्रुतेः॥
मायोपाहितमीशं तदाहुर्विवरणानुगाः॥ १८॥

विवरणानुसारिणस्तु—"यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" इति श्रुतेः सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्म उपादानम्।

अत एव भाष्ये 'अन्तस्तद्धर्मोपदेशात्' (उ०मी०अ०१ पा०१ सू०२०) 'सर्वत्र प्रसिद्धोपदेशात्' (उ०मी०अ०१ पा०२ सू० १) इत्याद्यधिकरणेषु "सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्।

---

शुद्धस्य कारणत्वावगतिर्युक्तेति भावः॥

'अथ शुद्धं ब्रह्मोपादानम्' इत्यादिप्रश्ने द्वितीयपक्षमादाय प्रतिवचनमुत्थापयति—विवरणेति। यस्य प्रकृतस्य भूतयोनेः पूर्वमन्त्रोपात्तं तपः ज्ञानमयं स्वरूपज्ञानविकारः, मायावृत्तिप्रतिबिम्बरूपमिति यावत्। तस्मात् सर्वज्ञात् भूतयोनेस्सकाशात् एतत् सन्निहितम् अपरकालीनं कार्यरूपमिति यावत्। ब्रह्म हिरण्यगर्भाख्यं जायते इति श्रुतेरीश्वररूपमेव ब्रह्मोपादानमिति सम्बन्धः। न शुद्धं जीवरूपं वेत्येवकारार्थः। सर्वज्ञत्वादीत्यादिपदेन सर्वविच्त्वकामयितृत्वसर्वेश्वरत्वादीनि गृह्यन्ते। मायोपाधिनिरूपितबिम्बत्वविशिष्टं सर्वज्ञत्वादिगुणयुक्तं च यद् ईश्वररूपं ब्रह्मचैतन्यं तदेवोपादानमित्यर्थः। 'अथ शुद्धं ब्रह्मोपादानमिष्यते' इति प्रश्नस्य प्रतिवचनावसरे 'ईश्वररूपमेव ब्रह्मोपादानम्' इत्येतावति वक्तव्ये तस्य मायाशबलत्वविशेषणम् 'ईश्वरोऽपि शुद्धचैतन्यमेव' इति भ्रान्तिनिरासार्थम्। तस्य सर्वज्ञत्वाद्यनेकविशेषणोपादानमीश्वररूपब्रह्मण उपादानत्वे "यस्सर्वज्ञः" इत्यादिकारणवाक्यानां सर्वेषामैककण्ठ्यप्रदर्शनार्थमिति मन्तव्यम्।

जीवशुद्धब्रह्मव्यावृत्तेश्वररूपब्रह्मण उपादानत्वे भाष्यसम्मतिमाह—अत एवेति। ईश्वररूपब्रह्मण एवोपादानत्वाभ्युपगमादेवेत्यर्थः। इत्यादिश्रुत्युक्तं

जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न

सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वमीश्वरलिङ्गमित्युपवर्णितं भाष्ये इति सम्बन्धः। यस्य सर्वोपादानत्वं तस्य सर्वात्मकत्वम्, उपादानोपादेययोस्तादात्म्यात्, नान्यस्येत्यविवादम् । यदि प्रतिबिम्बत्वविशिष्टचैतन्यरूपे जीवे, बिम्बत्वविशिष्टचैतन्यरूपे ईश्वरे च विशेष्यतया अनुस्यूतशुद्धचैतन्यरूपब्रह्मणस्सर्वोपादानत्वमिष्यते, तदा तस्यैव सर्वात्मकत्वं स्यात्, नेश्वरस्येति सार्वात्म्यस्य भाष्ये जीवव्यावृत्तेश्वरलिङ्गत्वोपन्यासो न स्यात् ।

न च विशेष्यभूतशुद्धब्रह्मगतं सर्वात्मकत्वं बिम्बत्वविशिष्टचैतन्यरूपेश्वरलिङ्गतया भाष्ये वर्णितमिति वाच्यम् । तथासति तस्य जीवव्यावृत्तत्वं न स्यात् । विशेष्यधर्मस्य सर्वात्मकत्वस्य ईश्वरधर्मत्ववत् जीवधर्मत्वस्यापि सत्त्वादित्याशयेनाह—जीवेश्वरानुस्यूतेति । छान्दोग्ये श्रूयते—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" इत्युपक्रम्य "तस्य ऋक्च साम च गेष्णौ" इत्युक्त्वा उत्तरत्र "य एषोऽन्तरक्षिणि(१) पुरुषो दृश्यते सैव ऋक् तत् साम तदुक्थं तद्यजुः तद्ब्रह्म"इति चोक्त्वा "तद्य इमे वीणायां गायन्ति एनं ते गायन्ति" इति । अस्यार्थः—

आदित्ये अन्तर्यः पुरुषः शास्त्रतो दृश्यते, एष हिरण्मयः ज्योतिर्मयः स्वतः स्वप्रकाशचैतन्यस्वरूप इत्यर्थः । तस्योपासनार्थं शरीरमाह—हिरण्यश्मश्रुरित्यादिना । हिरण्यसुवर्णशब्दौ ज्योतिःपरौ । प्रणखो नखाग्रम् । आङ् अभिव्याप्तौ । तस्य हिरण्मयपुरुषस्य ऋक्सामनी गेष्णौ परिमलोत्करीत्या स्तुतिसाधनीभूते इत्यर्थः । इह ऋक्सामगेष्णत्वं समस्तऋक्सामस्तुत्यत्वरूपं हिरण्मयपुरुषविशेषणम् । तस्य वेदे ऋक्सामस्तुत्यतया प्रसिद्धेन्द्राद्यात्मकत्वमादाय पर्यवस्यति । हिरण्मयपुरुषस्येन्द्रादिभ्यस्सकाशात् भिन्नत्वे तु तद्विशेषणं न सिध्यति । अन्यस्तुतेरन्यविषयकत्वायोगात् । तस्यैव पुरुषस्यादित्यस्थानवदुपासनार्थं स्थानान्तरमाह—य एषोऽन्तरक्षणीति । सैव ऋगित्यादौ विधेयापेक्षया लिङ्गव्यत्यासः । स एव ऋक् । स पुरुषः साम । सः उक्थम् । स यजुः । स ब्रह्म वेदः । ब्रह्मपदम् ऋगाद्यतिरिक्तवेदपरम् । तथा च गेष्णवाक्येन सर्ववेदात्मकत्वमुक्तम् । "सैव ऋक्"इति वाक्येन सर्ववेदात्मकत्वमुक्तम् । तथा

(१) छान्दसत्वादनङ्भावः ।

'ये इमे प्रसिद्धाः गायका वीणायां लौकिकपुरुषं गायन्ति, तेऽपि एनं प्रकृतं हिरण्मयपुरुषं गायन्ति' इत्युक्त्या इन्द्राद्यात्मकत्ववत् लौकिकपुरुषात्मकत्वमपि सिध्यति । तथा च सर्वदेवात्मकत्वसर्ववेदात्मकत्वसर्वलौकिकपुरुषात्मकत्वानि मिलित्वा सर्वात्मकत्वे पर्यवस्यन्ति । तिर्यगात्मकत्वस्याप्युक्तप्रायत्वात् । एवं स्थिते संशयः—आदित्ये अक्षिणि चान्तः श्रूयमाणो हिरण्मयपुरुषः मण्डलाभिमानिदेवताविशेषो वा, नित्यसिद्धपरमेश्वरो वेति. ।

तत्र देवताविशेष एव हिरण्मयपुरुषः। तस्य संसारित्वेन हिरण्यश्मश्रुत्वादिरूपवत्त्वोपपत्तेः सर्वात्मकत्वस्याप्युपासनार्थं तत्रारोपोपपत्तेश्च । न परमेश्वरः । तस्य शरीरासम्भवादिति प्राप्तम् । एवं प्राप्ते ब्रूमः—

'अन्तस्तद्धर्मोपदेशात्'इति ।

आदित्यादावन्तरवस्थितो हिरण्मयपुरुषो नित्यसिद्धपरमेश्वर एव । कुतः ? । तद्धर्मस्य सर्वात्मकत्वस्य "सैव ऋक् तत् साम" इत्यादावुपदेशात् । सर्वात्मकत्वं हि ईश्वरस्यैव धर्मः । तस्य सर्वोपादानत्वेन सर्वात्मकत्वोपपत्तेः । न च मुख्यसम्भवे सति आरोपकल्पना न्याय्या । परमेश्वरस्यापि साधकानुग्रहार्थमिच्छावशान्मायागतशुद्धसत्त्वांशपरिणामरूपशरीरसम्भवात् । "उमासहायं परमेश्वरं प्रभुम्" इत्यादिश्रुतिषु, 'जन्म कर्म च मे दिव्यम्'इत्यादिस्मृतिषु च प्रसिद्धत्वाच्चेति निर्णयः ।

"सर्वं खल्विदं ब्रह्म" इति प्रकृत्य "स क्रतुं कुर्वीत" इति वाक्येन क्रतुशब्दवाच्यमुपासनं विधाय उपास्याकाङ्क्षायां पठ्यते—"मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः । एष म आत्माऽन्तर्हृदये" इति । अयमर्थः—मनोमयः मनःप्रधानः । प्राणः शरीरमस्येति प्राणशरीरः । भाश्चैतन्यं रूपमस्येति भारूपः । सत्याः अप्रतिहताः सङ्कल्पाः सृष्ट्यादिगोचराः अस्य । आकाशवदात्मा व्यापकत्वनिर्लेपत्वसूक्ष्मत्वादियुक्तं स्वरूपमस्य । सर्वाणि कर्माणि क्रियन्त इति व्युत्पत्त्या कार्याणि अस्य ।यद्वा भूतगुणगन्धरसादिसान्निधानात् कर्मपदं परिस्पन्दपरम् । सर्वे परिस्पन्दा अस्येत्यर्थः । सर्वे कामा इच्छारूपा अस्य, सुखविशेषरूपा वा । सर्वे गन्धाः पुण्यरूपा अस्य । 'पुण्यो गन्धः पृथिव्यां च' इति स्मृतेः । सर्वे रसा अस्य । इदं दृश्यं सर्वम् अभि आभिमुख्येन तादात्म्येनात्तः व्याप्तः । वागेव वाकः वाको अस्यास्तीति वाकी न वाकी अवाकी, वागिन्द्रियशून्य इति यावत् । वाग्ग्रहणं कर्मेन्द्रियाणाम्, मु-

तज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात् । सङ्क्षेपशारीरके शबलो-
पादानत्वनिराकरणमपि मायाविशिष्टोपादानत्वनिराकरणाभिप्रायम्,

---

त्त्यमाणस्य च उपलक्षणम् । क्रियाशक्तिमत्त्वाविशेषात् । आदरः कामः सोऽस्य नास्तीत्यनादरः । आदरनिषेधेन तत्परिणामि मनो निषिद्धं भवति । मनोनिषेधेन च ज्ञानेन्द्रियाणां निषेधस्सिद्धो भवति । ज्ञानशक्तिमत्त्वाविशेषात् । अत्र परिस्पन्देच्छागन्धरसवत्त्वं तदाश्रयैः वायुमनःपृथिवीजलैः भूतविशेषैस्तादात्म्यं विना न सम्भवतीति सर्वकर्मत्वादिवचनेन अविशेषेण सर्वतादात्म्यप्रतिपादकसर्वमिदमभ्यात्त इति वचनेन च मनोमयत्वादिगुणकस्य सर्वात्मकत्वं प्रतीयते । तच्च ब्रह्मण एवोपपद्यते । तस्य सर्वोपादानत्वेन सर्वात्मकत्वोपपत्तेः । न जीवो मनोमयत्वादिगुणकः । तस्य सार्वात्म्यासम्भवात् । न च मनोमयत्वप्राणशरीरत्वयोः जीवधर्मयोः ब्रह्मण्यसम्भव इति वाच्यम् । भूततादात्म्येन गन्धादिमत्त्ववत् जीवतादात्म्येन मनोमयत्वाद्युपपत्तेरिति ।

सूत्रार्थस्तु—मनोमयत्वादिगुणकं ब्रह्मैवोपास्यत्वेनेह निर्दिश्यते । कुतः ? । सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मणः "सर्वं खल्विदं ब्रह्म" इति पूर्ववाक्ये स्वशब्देनैवोपदेशात् । अस्मिन्नपि वाक्ये प्राणशरीरमस्येत्यादिविग्रहवाक्येषु प्रकृतब्रह्माकर्षकसर्वनामश्रुतीनां सत्त्वाच्च ब्रह्मैव सगुणमुपास्यमत्रेति सिद्धम् ।

सर्वोपादानत्वे त्विति । शुद्धब्रह्मवज्जीवस्य सर्वोपादानत्वोपगमेऽपि सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गं न स्यादिति तुशब्दार्थः।

ननु सङ्क्षेपशारीरके मायाशबलस्य उपादानत्वं निरस्तमिति तद्विरोध इत्यत आह—सङ्क्षेपशारीरके इति । मायाया अपि बिम्बभूतेश्वरविशेषणतया उपादानत्वाश्रयकोटौ निवेश एव तत्र दूषितः, न तु बिम्बत्वविशिष्टचैतन्यरूपेश्वरस्य तन्निरस्तमिति न तद्विरोध इत्यर्थः । ननु शबलस्योपादानत्वं निराकृत्य जगदुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वसमर्थनपरस्य सङ्क्षेपशारीरकग्रन्थस्य कथमेवमभिप्रायः कल्पयितुं शक्यते, स्वरसतस्तस्य बिम्बप्रतिबिम्बानुगतशुद्धब्रह्मोपादानत्वप्रतिपादनपरत्वावगमादिति, नेत्याह—तत्रैवेति । सङ्क्षेपशारीरके एवेत्यर्थः । न च तत्पदार्थवृत्तित्वं तत्पदलक्ष्यार्थवृत्तित्वं विवक्षितं, लक्ष्यार्थश्च शुद्धं

न तु निष्कृष्टेश्वररूपचैतन्योपादानत्वनिराकरणपरम् । तत्रैव प्रथमाध्यायान्ते जगदुपादानत्वस्य तत्पदार्थवृत्तित्वोक्तेः । एवं च ईश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखाचन्द्रमसमिव तटस्थतयोपलक्षयितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति मन्यन्ते ॥

---

ब्रह्मेति न सङ्क्षेपशारीरकग्रन्थस्य पूर्वापरविरोधः, न वा तेन बिम्बभूतेश्वरस्य उपादानत्वलाभ इति वाच्यम् । लक्ष्यार्थत्वस्य वाक्यार्थसाधारणतया तत्पदार्थवृत्तित्वविशेषणवैयर्थ्यापत्तेः । अतस्तत्पदार्थवृत्तित्वं तत्पदवाच्यार्थवृत्तित्वमेव वक्तव्यमिति तदविरोधाय सर्वज्ञत्वादिगुणकेश्वरस्य जगत्कारणत्वप्रतिपादकबहुश्रुत्यविरोधाय च शबलोपादानत्वनिराकरणं मायाविशिष्टोपादानत्वनिराकरणरूपमेव वक्तव्यमिति न सङ्क्षेपशारीरकविरोध इति भावः ।

तर्हि जन्मादिसूत्रतद्भाष्ययोः ज्ञेयब्रह्मणलक्षणत्वोक्तिविरोध इति, नेत्याह—एवंचेति । अभिन्ननिमित्तोपादानत्वरूपलक्षणस्यान्तस्तद्धर्माद्यधिकरणभाष्यपर्यालोचनया बिम्बभूतेश्वरगतत्वे सिद्धे सतीत्यर्थः। अपिशब्दः चैतन्यमित्यनेन सम्बध्यते । 'कारणत्वम्'इत्यनन्तरमीश्वरमितरव्यावृत्ततया बोधयत्सदिति शेषः। तदनुगतमिति । बिम्बत्वविशिष्टचैतन्यरूपेश्वरानुगतमित्यर्थः। अखण्डचैतन्यमिति। विशेष्यभूतशुद्धचैतन्यमित्यर्थः । तटस्थत्वं च लक्ष्यस्वरूपबहिर्भूतत्वं वा, लक्ष्यावृत्तिधर्मत्वं वा, उपलक्षणत्वं वा बोध्यम् । 'क्व चन्द्रः' इति प्रश्ने 'शाखायाम्' इत्युत्तरं भवति। तत्र यथा शाखा दिगन्तरगतनक्षत्रव्यावृत्तं चन्द्रमुपलक्षयति, तथेश्वरगतं कारणत्वमीश्वरमितरव्यावृत्ततया बोधयत् सत् तटस्थतयेश्वरानुगतमखण्डचैतन्यमपीतरव्यावृत्ततया उपलक्षयितुं शक्नोतीत्यर्थः । ईश्वरगतेनाभिन्ननिमित्तोपादानत्वेन बिम्बत्वविशिष्टचैतन्यरूपेश्वरस्य जगदुपादानत्वसम्भवशून्यात् जीवात् तत्कर्तृत्वसम्भवरहितात् प्रधानादेश्च सकाशाद्व्यावृत्तौ गम्यमानायां सत्यां विशेष्यभूतज्ञेयब्रह्मणोऽपि प्रधानादिव्यावृत्तिर्गम्यते इत्यभिप्रेत्य तस्य ज्ञेयब्रह्मलक्षणत्वं जन्मादिसूत्रतद्भाष्ययोस्सङ्क्षेपशारीरके चोक्तमिति भावः । एवं तटस्थलक्षणेन प्रधानादिव्यावृत्तत्वेनावगतं ब्रह्म 'कीदृक्स्वरूपम्' इति विशेषजिज्ञासायां सत्यज्ञानानन्दात्मकं ब्रह्मेति स्वरूपलक्षणं प्रवर्तते ।

अनेनैवाभिप्रायेण भाष्यकारैरुक्तम्–'तस्य च निर्णयवाक्यम् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इति' । यतो वेत्यादिवाक्येन यस्मात् कारणादिमानि भूतानि जायन्ते इत्युक्तम्, तद्वस्तुतस्सत्यज्ञानानन्तस्वरूपादानन्दादेव नान्यस्मात् कारणादित्येतद्धि प्रसिद्धं पूर्ववल्लयामिति श्रुत्यर्थः । अनेन स्वरूपलक्षणेन बिम्बभूतेश्वरानुगतं तत्पदलक्ष्यं वस्तुतो वाक्यार्थभूतं ज्ञेयं ब्रह्म विशेषतो निर्धारितं भवति । इयं च स्वरूपलक्षणविवक्षा मूले अखण्डपदेन सूचिता ॥

जगत्प्रकृतिभूतमायाप्रतिबिम्ब ईश्वरः, माया चेश्वराश्रिता । न च प्रतिबिम्बत्वस्य मायाकल्पितत्वात् तद्विशिष्टचैतन्याश्रितत्वं मायाया न सम्भवति । प्रतिबिम्बत्वकल्पनात्प्रागेव तस्याश्चैतन्याश्रितत्वस्य वक्तव्यत्वादिति वाच्यम् । मायावत् प्रतिबिम्बत्वस्याप्यनादित्वेन तस्यास्तद्विशिष्टचैतन्याश्रितत्वोपपत्तेः । वस्तुतो निर्विशेषचैतन्ये अनादिकालमारभ्य कल्पितप्रतिबिम्बत्वस्थितेरनिर्वचनीयमायाधीनत्वमात्रेण प्रतिबिम्बत्वस्य तत्कल्पितत्वम् । न तु प्रतिबिम्बत्वस्य वियदादेरिव मायापरिणामित्वमुपेयते । तथासति प्रतिबिम्बभूतेश्वरस्य सादित्वप्रसङ्गात् । न च माया अनादिकालमारभ्य चैतन्ये प्रतिबिम्बत्वस्य तत्कल्पितत्वं घटयति, तद्विशिष्टमेव च चैतन्यमाश्रयते इति कथं सम्भावयितुं शक्यमिति वाच्यम् । मायाया अघटितघटनापटीयस्त्वात् । न च शुद्धचैतन्याश्रितैव माया तत्र प्रतिबिम्बभावं घटयतीति कुतो नाश्रीयते इति वाच्यम् । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिविरोधात् । मायिनमितिपदेन मायाया ईश्वराश्रितत्वप्रतीतेः । जीवास्त्वविद्याप्रतिबिम्बाः । "जीवेशावाभासेन करोति" इति श्रुतेः । प्रकृता मूलप्रकृतिः जीवेशौ प्रतिबिम्बरूपौ करोतीत्यर्थः । न ह्युपाधिभेदं विना प्रतिबिम्बभेदस्सम्भवति । न चैकस्मिन्नपि दर्पणे अनेकप्रतिबिम्बदर्शनात् प्रतिबिम्बभेदः उपाधिभेदव्याप्यो न भवतीति वाच्यम् । एकस्मिन् दर्पणे बिम्बभेदेन प्रतिबिम्बभेदेऽपि सूर्यादिबिम्बैक्यस्थले उपाधिभेदं विना प्रतिबिम्बभेदादर्शनात् । बिम्बभूतचैतन्यस्य चैकत्वात् । तस्मादीश्वरोपाधिमायापेक्षया भिन्ना एव जीवोपाधिभूता अविद्याः स्वीकर्तव्याः । न च मूलप्रकृतिं प्रकृत्य प्रवृत्तायां "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इतिश्रुतौ जीवेशरूपप्रतिबिम्बाधारयोर्मायाविद्ययोः "स्वयमेव" इत्यनेन प्रकृतमूलप्रकृत्यात्मकत्वप्रतिपादनं मायाविद्य-

(वे॰सू॰मं॰) ईश्वरो वियदादौ स्यात् जीवेशौ लिङ्गतद्गते(१)॥
मायाऽविद्याभिदावादाः केचिदेवं प्रचक्षते ॥ १९ ॥

वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानम् । अन्तःकरणादिकं तु ईश्वराश्रितमायापरिणाममहाभूतोपसृष्टजीवाविद्याकृतभूतसूक्ष्मकार्यमिति तत्रोभयोरुपादान-

---

योर्भेदपक्षे विरुध्यत इति वाच्यम् । मायाया वियदादिप्रकृतित्ववत् अविद्याया अपि लिङ्गशरीरादिप्रकृतित्वस्य वक्ष्यमाणत्वेन मायाऽविद्ये प्रकृतित्वेनैकीकृत्य "स्वयमेव" इत्येकप्रकृत्यात्मकत्वप्रतिपादनस्याविरोधात् । "अविद्या च" इत्येकवचनस्यापि जात्यभिप्रायत्वोपपत्तेः न तन्नानात्वविरोधोऽपि । बिम्बैक्यस्थले उपाधिभेदं विना प्रतिबिम्बभेदासम्भवस्य दर्शितत्वात् । प्रतिबिम्बजीवानां च नानात्वात् । अदृश्यत्वाधिकरण(उ॰ मी॰ अ॰ १ पा॰२ अधि॰ ६ सू॰ २१) भाष्येऽप्यव्याकृतमीश्वराश्रयं तस्यैवोपाधिभूतमिति मायाया ईश्वरोपाधित्वतदाश्रयत्वयोरुक्तत्वात् ।

तथा आनुमानिकाधिकरणभाष्ये (उ॰ मी॰ अ॰ १ पा॰ ४ अधि॰ १ सू॰ १) मुक्तानां च न पुनरुत्पत्तिः, तस्या अविद्याबीजशक्तेः विद्यया दाहादित्यत्र जीवनानात्वस्य तदुपाधिभूताविद्यानानात्वस्य च स्पष्टमभिहितत्वात् । भामतीनिबन्धने तद्भाष्यस्य जीवोपाधिभूताविद्यैक्यनिराकरणपरतयैव व्याख्यातत्वाच्च ।

'आभास एव च' (उ॰ मी॰ अ॰ २ पा॰ ३ सू॰ ५०) इति सूत्रतद्भाष्ययोः जीवानां प्रतिबिम्बत्वरूपतायाः स्पष्टमभिहितत्वाच्च ।

तथा च मायाऽविद्याभेदश्रुत्यादिसम्मत इति ये मन्यन्ते, तेषां मतमुपन्यस्यति—वियदादिप्रपञ्च इत्यादिना । पूर्वमते ईश्वररूपं ब्रह्मोपादानमित्युक्तम् । तत् सत्यमेव । परं तु क्वचिज्जगति जीवस्याप्युपादानत्वमभ्युपगन्तव्यमित्यभिप्रायेणास्य मतस्य प्रवृत्तिर्बोध्या । ईश्वराश्रितमायापरिणाम इति । "मायां तु प्रकृतिं विद्यात्" इतिश्रुतेरिति भावः । तत्रेति । वियदादावीश्वर एव उपादानमित्यर्थः । अन्तःकरणादौ तुशब्दसूचितविशेषं दर्शयति—ईश्वरेति । भूतैरुपष्टम्भकलक्षणैस्संसृष्टत्वं भूतोपसृष्ट-

---

(१) तद्गते—लिङ्गशरीरधर्मसुखादौ ।

त्वम् । अत एव "एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुतौ कलाशब्दवाच्यानां प्राणमनःप्रभृतीनां विदुषो विदेहकैवल्यसमये विद्यानिवर्त्याविद्याकार्यांशाभिप्रायेण विद्ययोच्छेदो दर्शितः ।

"गताः कलाः पञ्चदश प्रतिष्ठाः" इति श्रुत्यन्तरे तदनिवर्त्यमायाकार्यमहाभूतपरिणामरूपोपष्टम्भकांशाभिप्रायेण तेषां स्वस्वप्रकृतिषु लयो दर्शित इति मायाऽविद्याभेदवादिनः ॥

---

त्वम् । तच्च जीवाविद्याकृतानां भूतसूक्ष्माणां विशेषणम् । भूतानां सूक्ष्मत्वं परिच्छिन्नत्वम् । अत एवेति । अन्तःकरणादौ जीवाविद्यापरिणामसूक्ष्मभूतानां तदुपष्टम्भकतया, मायापरिणाममहाभूतानां च उपादानतया प्रविष्टत्वादेवेत्यर्थः ।

यथा गङ्गाद्या नद्यः समुद्रं प्राप्यास्तं गच्छन्ति, एवमेवास्य विदुषः परितः सर्वत्रात्मानं पूर्णं पश्यतः कलाः लिङ्गशरीरैकदेशभूताः पुरुषायणाः पुरुषश्चिदात्मा अयनमधिष्ठानं यासां ताः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति पुरुषे लीयन्ते इत्यर्थः । दर्शित इति । पुरुषे इति शेषः ।

प्रतिष्ठा इति । द्वितीयाबहुवचनम् । मायापरिणामात्मकमहाभूतानीति द्वितीयाबहुवचनार्थः । पञ्चदश कलाः प्रतिष्ठाः प्रति गताः, तासु लीना इति यावत् । तदनिवर्त्येति । ईश्वरोपाधिभूतमायाया जीवगतविद्यानिवर्त्यत्वाभावादिति भावः । यदि कलानां जीवाविद्यामात्रपरिणामत्वम्, तदा तासामशेषतः पुरुषे एव लयस्स्यात्, तथा च तासां भूतेषु लयप्रतिपादकवचनं निर्विषयं स्यात्, अतो मायाकार्यमहाभूतानामपि लिङ्गशरीरोपादानत्वं वाच्यमिति तत्र उभयोरुपादानत्वे श्रुतिद्वयव्यवस्थासिद्धिरेव फलमित्यर्थः । न च मायायास्तत्त्वज्ञाननिवर्त्यत्वाभावे मिथ्यात्वसिद्धिर्न स्यादिति वाच्यम् । ब्रह्मणि सर्वदृश्यनिषेधश्रुतिबलाद् दृश्यत्वादिलिङ्गैश्च तन्मिथ्यात्वसिद्धेः । न च मायाया विद्यया निवृत्त्यभावे निवर्तकान्तराभावात् सर्वमुक्तावपि तदनुवृत्तिप्रसङ्ग इति वाच्यम् । महाप्रलयकाले सर्वप्राणिभोगप्रदकर्मणां युगपदुपरमे सति ईश्वरसङ्कल्पमात्रादेव सर्वप्रपञ्चलयवत् सर्वमुक्तिकाले 'इतः परं सकार्याया मायायाः प्रयोजनं नास्ति' इति अनुसन्धानवत ईश्वरस्य सत्यसङ्कल्पस्य 'माया

(वे०सू०मं०) लिङ्गादौ जीव एवेति केचित्तत्रैकदेशिनः ॥
महाभूतलयोक्तिस्तु कलानामन्यदृष्टितः ॥ २० ॥

यथा वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्र ईश्वर उपादानम्, तथाऽन्तःकरणादि जीवाश्रिताविद्यामात्रपरिणाम इति तत्र जीव एव उपादानम् ।

न चान्तःकरणादौ मायाकार्यमहाभूतानामप्यननुप्रवेशे उदाहृतश्रुतिद्वयव्यवस्थाऽनुपपत्तिः। कलानां विद्ययोच्छेदश्रुतिरतत्त्वविद्दृष्टिविषया । "गताः कलाः" इति श्रुतिस्तु तत्त्वविदि म्रियमाणे समीपवर्तिनः पुरुषाः नश्यद्घटवत्तदीयशरीरादीनामपि भूम्यादिषु लयं मन्यन्ते इति तटस्थपुरुषप्रतीतिविषयेति व्यवस्थायाः कलालयाधिकरणभाष्ये स्पष्टत्वात्, इति मायाऽविद्याभेदवादिष्वेकदेशिनः ॥

---

स्वकार्यैस्सह मायि वस्तुतश्चिदेकरसे निश्शेषं लयं यातु' इत्येवंरूपादेव मायापरिणामलक्षणसङ्कल्पात्तल्लयोपपत्तेः । श्रुतिस्मृतिपुराणादिषु तत्त्वज्ञानात् मायानिवृत्तिप्रतिपादकग्रन्थजातमविद्यानिवृत्त्यभिप्रायम् ।

यद्वा तत्त्वज्ञानमात्रमविद्याया इव मायाया निवर्तनयोग्यमपि नानाप्राणिकर्मप्रतिबन्धात् न तस्या निवर्तकम्, चरमं मुच्यमानस्यैव तु तत्त्वज्ञानं प्रतिबन्धकाभावात्तन्निवर्तकमित्यादि कल्पनीयमिति सङ्क्षेपः ।

अन्तःकरणादावुभयोरुपादानत्वमसिद्धम्, श्रुतिद्वयव्यवस्थाया भाष्यकारैरेवान्यथा प्रतिपादितत्वादिति मतान्तरं दर्शयति—यथा वियदादीति । तत्त्वविदो दृष्टिस्तत्त्वसाक्षात्कारः। अत्र दृष्टिपदेन तत्फलभूतः कलाक्षयो विवक्षितः । तद्विषया पुरुषे कलाप्रलयश्रुतिरित्यर्थः । भूतेषु कलाप्रलयवचनं तु कलानामपि मायापरिणाममहाभूतकार्यत्वभ्रमवतां भ्रान्तिसिद्धार्थानुवादकमिति भावः । चूर्णीभावपर्यन्तो घटनाशो यथा भूमौ दृश्यते, तद्वद् मन्यन्ते इत्यक्षरार्थः । प्रतीतिविषयेति । प्रतीतिरत्र भ्रान्तिरूपा । तद्विष(१)यविषयकेत्यर्थः। स्पष्टत्वादिति । "तानि परे तथा ह्याह" इति ( उ० मी०

---

(१) तद्विषयातद्विषयकेत्यर्थः इति पाठः।

(वे०सू०मं०) मायाऽविद्यैक्यवादेऽपि जीवतादात्म्यदर्शनात् ॥
जीव एव हि लिङ्गादेरुपादानमितीतरे ॥ २१ ॥

तदभेदवादिष्वपि केचित्—यद्यपि वियदादिप्रपञ्चस्य ईश्वर उपादानम्, तथाऽप्यन्तःकरणादीनां जीवतादात्म्यप्रतीतेः जीव एवोपादानम् ।

अत एवाध्यासभाष्ये अन्तःकरणादीनां जीवे एवाध्यासो दर्शितः । विवरणे च प्रतिकर्मव्यवस्थायां ब्रह्मचैतन्यस्यो-

---

अ० ४ पा० २ अधि० ७ सू० १६) तदधिकरणसूत्रम् । तानि मनआदीनि परे पुरुषे निरवशेषं लीयन्ते । तथा हि श्रुतिराह "एवमेवास्य" इत्याद्या श्रुतिः निरवशेषं लयमाह हीति सूत्रार्थः ।

अन्तःकरणादीनां मायाकार्यत्वाभावे ईश्वरस्यान्तःकरणाद्युपादानत्वप्रतिपादकश्रुतिविरोध इति दोषं सूचयति—एकदेशिन इति ।

मायैवाविद्या । सा चेश्वरस्यैवोपाधिः । जीवानां तु प्रतिबिम्बरूपाणामन्तःकरणान्येवोपाधय इति मायाऽविद्ययोरभेदवादिनोऽपि केचिदन्तःकरणादौ जीवस्यैवोपादानत्वं तद्भेदवादिन इव वदन्तीत्याह—तदभेदवादिष्वपीति । अपिशब्दः क्वचिदंशे पूर्वमतसाम्यार्थकः । तच्च तत्साम्यं तथाऽपीत्यादिना स्पष्टं भविष्यति । ननु वियदादिप्रपञ्चेऽपि जीव एवोपादानं किं न स्यादित्यत आह—यद्यपीति । ईश्वराश्रितमायापरिणामत्वात् ईश्वर एव वियदादावुपादानं न जीव इत्यर्थः । ननु मायाऽविद्ययोरभेदोपगमे अविद्यापरिणामान्तःकरणादीनामपीश्वराश्रितमायापरिणामत्वाविशेषादीश्वर एवान्तःकरणादावप्युपादानमिति वक्तुमुचितमिति, नेत्याह—तथाऽपीत्यादिना । जीवेति । 'अहं कर्ता, अहं प्राणिमि, अहं काणः, अहं मूकः, अहं स्थूलः' इत्यादिप्रकारेणान्तःकरणादीनां शरीरान्तानां जीवतादात्म्यं प्रतीयते । तच्च तेषां जीवेऽध्यस्तत्वं विना न सम्भवतीति जीवस्यैव तदधिष्ठानत्वरूपमुपादानत्वम्, नेश्वरस्येत्यर्थः । प्रतिकर्मव्यवस्थेति । ब्रह्मणस्स्वरूपचैतन्येन सर्वदा सर्वावभासकत्वरूपे सर्वज्ञत्वे उक्ते तर्हि जीवस्यापि स्वरूपचैतन्येनैव सर्वदा सर्वद्रष्टृत्वमिति दोषप्रसक्तौ जीवं प्रति विषयव्यवस्थाप्रतिपादकग्रन्थे इत्यर्थः । ब्रह्मेति । बिम्बचैतन्यरूपब्रह्मणस्सर्वोपादानतया घटादितादात्म्य-

पादानतया घटादिसङ्गित्वम् , जीवचैतन्यस्य तदसङ्गित्वेऽप्यन्तः-करणादिसङ्गित्वं च वर्णितमित्याहुः ॥

(वे०सू०मं०) इष्ट ईश उपादानं सर्वस्मिन्व्यावहारिके ॥
प्रातिभासिककार्ये तु जीव इत्यपरे जगुः ॥ २२ ॥

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ॥

इत्यादिश्रुतेः कृत्स्नव्यावहारिकप्रपञ्चस्य ब्रह्मैव उपादानम् । जीवस्तु प्रातिभासिकस्य स्वप्नप्रपञ्चस्य च । 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (उ० मी० अ २ पा० १ अधि० ७ सू० २६)

---

रूपस्संसर्गः क्लृप्त इत्यर्थः । अविद्याया व्यापकत्वेन तत्प्रतिबिम्बरूपजीवस्य व्यापकत्वेऽपि न घटादिभिस्तस्य तादात्म्यम् उपादानत्वाभावात् । अन्तःकरणादिभिस्तु जीवस्य तादात्म्यलक्षणस्संसर्गोऽस्तीति प्रतिपादितं विवरणे इत्यर्थः । अनेन जीवस्यान्तःकरणादावुपादानत्वमुक्तं भवति । अन्यथा घटादिभिरिवान्तःकरणादिभिरप्युक्तसंसर्गित्वं जीवस्य न स्यात् । उपादानत्वाभावाविशेषादिति भावः । अत्रान्तःकरणादिपरिणाम्युपादानभूताया अविद्याया ईश्वराश्रितमायया सहाभेदाङ्गीकारे ईश्वरस्यैवान्तःकरणादावुपादानत्वं वक्तुमुचितम् । यदि जीवतादात्म्यप्रतिपत्त्यादिभिरुक्तहेतुभिः जीवस्यैवान्तःकरणादावुपादानत्वं वक्तव्यं, तदाऽन्तःकरणादिपरिणामिभूताविद्याया जीवाश्रितत्वमीश्वराश्रितमायायास्सकाशात् भिन्नत्वं च वक्तव्यम् । कार्यात्मना परिणममानप्रकृत्याश्रयत्वातिरिक्तस्य चैतन्यगतोपादानत्वस्याभावात् । अतो मायाऽविद्ययोरभेदाङ्गीकारो, जीवस्यैवान्तःकरणादावुपादानत्वाङ्गीकारश्च परस्परविरुद्ध इत्यस्वरसः तदभेदवादिष्वपीत्यपिशब्देन सूचितः ॥

ईश्वरस्यान्तःकरणादावप्युपादानत्वमुपेत्यापि तस्य कार्यमात्रे उपादानत्वं नास्तीति विशेषं वक्तुं मतान्तरमवतारयति—एतस्मादिति । प्रकृतादीश्वरादित्यर्थः । प्रकृतित्वं पञ्चम्यर्थः । जीवस्त्विति तुशब्दः अवधारणार्थः । 'स्वप्नप्रपञ्चस्य' इत्यनन्तरम् 'उपादानम्' इत्यनुषङ्गः । किं कृत्स्नं

इत्यधिकरणे ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माभावो वा, एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्यते इति पूर्वपक्षे 'आत्मनि चैवं विचित्राश्च हि' (उ० मी० अ २ पा १ सू०२८) इति सूत्रेण विवर्तवादाभिप्रायेण स्वप्नदृशि जीवात्मनि स्वरूपानुपमर्देनानेकाकारस्वाप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरुपपद्यते इति सिद्धान्तितत्वादित्यन्ये ॥

(वे०सू०मं०) स्वात्मसंमोहात्समस्तस्य सेश्वरस्य प्रकल्पकः ॥
स्वप्नवज्जीव एवैको नापरोऽस्तीति केचन ॥ २३ ॥

जीव एव स्वप्नद्रष्टृवत् स्वस्मिन्नीश्वरत्वादिसर्वकल्पकत्वेन

---

ब्रह्म जगदाकारेण परिणमते, एकदेशेन वा ?। नाद्यः इत्याह—तस्येति। यथा दध्याकारेण परिणतस्य क्षीरस्य पूर्वरूपात् प्रच्युतिः, एवं ब्रह्मणोऽपि स्वरूपात् प्रच्युतिः स्यादित्यर्थः। ब्रह्मण एकदेशः परिणमते इतिद्वितीयकल्पं दूषयति—एकदेशेनेति। पूर्वपक्षे इति। उभयथाऽपि ब्रह्मण उपादानत्वं न सम्भवतीति पूर्वपक्षे प्राप्ते सतीत्यर्थः। यदि ब्रह्मण उपादानत्वं क्षीरपृथिव्यादिवत् परिणामित्वरूपमभ्युपगम्येत, तदा कृत्स्नप्रसक्त्यादिदोषः प्रसज्येत, न तु तथाऽभ्युपगम्यते, किं तु रज्ज्वादेः सर्पाद्युपादानत्ववद्विवर्तोपादानत्वं ब्रह्मण उपेयते, अतो नोक्तदोषावकाश इति सिद्धान्तयति—आत्मनि चेति। एकश्चकारो यथाशब्दसमानार्थकः। द्वितीयश्चकारस्तथाशब्दसमानार्थकः। हिशब्दो हेत्वर्थः। ततश्च—यथा आत्मनि जीवे स्वप्नद्रष्टरि विचित्रा रथादिसृष्टयो जीवचैतन्यस्वरूपोपमर्दं विनैव भवन्ति, स्वप्नावस्थानिवृत्त्यनन्तरमपि बुद्ध्यादिसाक्षितया जीवचैतन्यस्य यथापूर्वमवस्थानात्, एवं ब्रह्मणि तत्स्वरूपप्रच्युतिं विनैव विचित्राः वियदादिसृष्टयस्सम्भवन्ति। सृष्टिस्थितिसंहारेषु सच्चिदानन्दस्वरूपेण ब्रह्मानुवृत्तेः श्रुतिसिद्धत्वादिति सूत्रार्थः ॥

'अथ शुद्धं ब्रह्मोपादानम्' इत्यादिप्रश्ने तृतीयं पक्षमादाय प्रतिवचनमवतारयति—जीव इति। परिपूर्णश्चिदात्मा अविद्यया अवच्छेदप्रतिवि-

सर्वकारणम् इत्यपि केचित् ॥ ४ ॥

(वे०सू०मं०) अहेतुत्वादमायस्य मायाशबलतेष्यते ॥

साऽप्युपादानमेवेति तत्त्वनिर्णयकृन्मतम् ॥ २४ ॥

५ अथ "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः, मायाजाड्यस्य घटादिष्वनुगमाच्च माया जगदुपादानं प्रतीयते, कथं ब्रह्मोपादानम् ? ।

---

स्वभावौ विनाऽपि प्राप्तजीवभावस्सन् आत्मानमेव सर्वेश्वरं कल्पयति। प्राप्तेश्वरभावात् स्वस्मादेव गगनादिसृष्टिं कल्पयति। स्वस्य स्वकल्पितादीश्वरात् भेदं तन्नियम्यत्वं च कल्पयति। तथा क्रमेण मनुष्यादिभावं कल्पयति। यथा वियदादिप्रपञ्चो व्यावहारिकसत्यः, स्वप्नप्रपञ्चः प्रातिभासिक इति पक्षे स्वप्नद्रष्टा जीव एव देवतिर्यङ्मनुष्यादिभावेन, तन्नियन्तृपरमेश्वररूपेण, ततो भिन्नत्वादिरूपेण चात्मानं कल्पयति, तद्वत्। तथा च स्वस्मिन्नेव सर्वप्रपञ्चकल्पकत्वात् जीवभावापन्नं ब्रह्म सर्वोपादानमिति दृष्टिसृष्टिवादिन आहुरित्यर्थः।

जीवभावापन्नब्रह्मणस्सर्वोपादानत्वमित्यस्मिन् पक्षे जीवादधिकस्येश्वरस्याभावादीश्वरस्य सर्वजीवनियन्तृत्वप्रतिपादकश्रुतिस्मृतिन्यायसूत्रभाष्यादिविरोधो बन्धमोक्षव्यवस्थाऽनुपपत्तिश्चेति दोषं सूचयति—इत्यपि केचिदिति। तथा च जीवेऽतिव्याप्त्यभावादीश्वररूपमेव ब्रह्म सर्वोपादानमिति स्थितम् ॥ ४ ॥

इदानीं ब्रह्मलक्षणस्योपादानत्वस्यासम्भवमाशङ्कते—अथेति। श्रुतौ तुशब्दो मायायाः प्रकृतित्वमवधारयति। यथा मृदादिगतश्लक्ष्णत्वादेः घटादावनुगमात् घटादौ मृदादेरुपादानत्वम्, तथा मायागतजाड्यस्य जगत्यनुगमनात्तस्यास्तदुपादानत्वमिति युक्तिमप्याह—मायाजाड्यस्येति। कथमिति। ननु ब्रह्मण उपादानत्वं बहुश्रुत्युदाहरणेन पूर्वं दर्शितम्। सत्यं दर्शितम्, तत्तु न सम्भवति। निरवयवस्य तस्य मृदादेरिव परिणाम्युपादानत्वासम्भवात्। न च विवर्तोपादानत्वं निरवयवस्यापि सम्भवति, गगनादौ नैल्याद्यारोपदर्शनादिति वाच्यम्। परिणामिष्विव विवर्ताधिष्ठानेषु लोके उपादानत्वप्रसिद्ध्यभावेन तत्रोपादानत्वाभ्युपगमस्य परिभाषामात्रत्वादित्याक्षेपाभिप्रायः।

अत्राहुः पदार्थतत्त्वनिर्णयकाराः—ब्रह्म माया चेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः, सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च । तत्र ब्रह्म विवर्तमानतयोपादानम्, अविद्या परिणममानतया ।

न च विवर्ताधिष्ठाने पारिभाषिकमुपादानत्वम् । स्वात्मनि कार्यजनिहेतुत्वस्योपादानलक्षणस्य तत्राप्यविशेषादिति ॥

केचित् उक्तामेव प्रक्रियामाश्रित्य विवर्तपरिणामोपादानद्वयसाधारणमन्यल्लक्षणमाहुः—स्वाभिन्नकार्यजनकत्वमुपादानत्वम् । अस्ति च प्रपञ्चस्य सद्रूपेण ब्रह्मणा विवर्तमानेन जडेनाज्ञा-

---

उपादानत्वघटितब्रह्मलक्षणस्यासम्भवं निराचष्टे—अत्राहुरित्यादिना । सत्तेति । न च बाधायोग्यस्वरूपभूतायास्तस्याः ब्रह्मस्वरूपत्वात् सत्तायास्तद्धर्मत्वोक्तिरयुक्तेति वाच्यम् । 'राहोश्शिरः' इतिवत् भेदकल्पनया तद्धर्मत्वव्यवहारोपपत्तेरिति भावः । ननु उपादानद्वयं व्यर्थमिति, नेत्याह—तत्रेति ।

यद्वा निरवयवस्य ब्रह्मण उपादानत्वमनुपपन्नमिति, नेत्याह—तत्रेति । मायाब्रह्मणोः मध्ये इत्यर्थः । आक्षेपाभिप्रायमनूद्य निराचष्टे—न चेति । मृदादिषु प्रसिद्धस्योपादानलक्षणस्य विवर्ताधिष्ठानेष्वपि सत्त्वात्तेषूपादानत्वाभ्युपगमस्य परिभाषामात्रत्वं नास्तीत्यर्थः । स्वात्मनीति । अत्र स्वशब्द उपादानत्वाभिमतवस्तुपरः । तथा च कार्याधारत्वे सति कार्यजनिहेतुत्वमुपादानत्वम् । निमित्तकारणवारणाय सत्यन्तम् । भूतलादेरपि कार्याधारत्वात्तद्वारणाय विशेष्यम् । तत्रापीति । विवर्ताधिष्ठानेऽपीत्यर्थः ।

उक्तामेवेति । प्रपञ्चे उभयोरपि मायाब्रह्मणोरुपादानत्वम्, तत्र च परिणामितया मायाया उपादानत्वम्, अधिष्ठानतया च ब्रह्मण उपादानत्वम्, उभयोरुपादानत्वे श्रुतिन्याययोरुपपत्तिश्चेत्येतामित्यर्थः ।

स्वाभिन्नेति । स्वशब्देन घटाद्युपादानमृदादिजगत्परिणाम्युपादानभूतमज्ञानं जगद्विवर्तोपादानभूतं ब्रह्म च गृह्यते । तत्र घटादेः मृदादेस्सकाशात् अभेदः स्फुटः 'मृदेव घटः' इत्यनुभवात् । अज्ञाने ब्रह्मणि च कार्याभेदमनुभवेन दर्शयति—अस्ति चेति । ननु 'मृत् घटः' इतिवत् 'ब्रह्म घटः,

नेन परिणामिना चाभेदः । 'सन् घटः, जडो घटः' इति सामानाधिकरण्यानुभवात् ।

न च 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (उ.मी.अ० २ पा. १

---

ब्रह्म पटः' इत्यनुभवो नास्ति । तथा 'अज्ञानं घटः' इत्याद्यनुभवोऽपि नास्ति । अतः प्रपञ्चस्याज्ञानेन ब्रह्मणा च कथमभेदोऽस्तीति शङ्कानिरासाय ब्रह्मणस्सद्रूपत्वविशेषणं दत्तम्, अज्ञानस्य च जडत्वम् । तथा च ब्रह्माज्ञानाभ्यां सह ब्रह्मत्वाज्ञानत्वाकारेणाभेदानुभवाभावेऽपि सत्त्वजडत्वरूपेण ताभ्यां सह प्रपञ्चस्याभेदानुभवोऽस्तीत्याह- -सन् घटः इत्यादिना । ननु घटोत्पत्तेः पूर्वं तत्कारणद्रव्यस्य मृत्त्वानुभवान्मृत्त्वस्य कारणधर्मत्वे सिद्धे सति 'मृत् घटः' इति प्रत्यक्षानुभवः कार्यकारणद्रव्ययोरभेदावगाहीति युक्तम् । सत्त्वजडत्वयोस्तु कारणधर्मत्वे किं मानम्, येन 'सन् घटः' 'जडो घटः' इत्यनुभवबलेन सद्रूपजडरूपाभ्यां ब्रह्माज्ञानाभ्यां प्रपञ्चस्य अभेदः सिध्येत् ? इति चेत्, उच्यते—ब्रह्मणस्सद्रूपत्वं "सदेव" इत्यादिश्रुतिसिद्धम् । "तदेतज्जडं मोहात्मकम्" इति श्रुत्या अज्ञानस्य जडत्वं सिद्धम् । तथा च घटादौ मृद्द्रव्याभेदात् मृत्त्वानुभववत् सद्वस्त्वादिरूपकारणद्रव्याभेदादेव प्रपञ्चे सत्त्वजडत्वानुभवोपपत्तौ पृथक्सत्त्वादिधर्मो नोपेयते । तथा च 'सन् घटः, जडो घटः' इत्याद्यनुभवोऽपि कार्यकारणद्रव्याभेदावगाहीति भावः । न च जडरूपाज्ञानस्य प्रपञ्चाभेदसिद्धावपि मायायाः किमायातमिति वाच्यम्, तयोरभेदाभ्युपगमादिति भावः ।

कार्यकारणयोरभेदाभ्युपगमे अपसिद्धान्तं शङ्कते—न चेति । तयोः कार्यकारणयोरनन्यत्वमुपगन्तव्यम् । कुतः, आरम्भणशब्दादिभ्यः । वाचारम्भणश्रुतिः, आरम्भणशब्दार्थः । "आत्मैवेदꣳ सर्वम्" इत्यादिसार्वात्म्यप्रतिपादकश्रुतिः "नेह नानाऽस्ति किञ्चन" इत्यादिनिषेधश्रुतिश्चादिपदार्थः । वाचारम्भणश्रुतिः विवर्तलक्षणकथनावसरे व्याख्याता । कार्यस्य कारणात्तत्त्वान्तरत्वे जगत्कारणस्य ब्रह्मणस्सर्वात्मकत्वश्रुतिरनुपपन्ना स्यात् । तथा ब्रह्मोपादानकस्य जगतस्सत्यत्वे ब्रह्मणि जगन्निषेधो न स्यात् । अतः कारणीभूतब्रह्मानन्यत्वं प्रपञ्चस्याभ्युपगन्तव्यमिति भावः ।

ननु सौत्रानन्यत्वपदेन कार्यकारणयोरैक्यं प्रतीयते, तद् अनुपपन्नम् । कार्यकारणभावविरोधात्, चिज्जडयोः ब्रह्मप्रपञ्चयोरैक्यायोगाच्चेति

अधि. ६ सू. १४ ) इति सूत्रे 'अनन्यत्वं व्यतिरेकेणाभावः । न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु ? भेदं व्यासेधामः' इति भाष्यभामतीनिबन्धनाभ्यां प्रपञ्चस्य ब्रह्मभेदनिषेधादभेदाभ्युपगमे

---

शङ्कां निराकर्तुं सौत्रानन्यत्वपदं व्याचष्टे भाष्यकारः—अनन्यत्वं व्यतिरेकेणाभाव इति । न च कारणव्यतिरेकेण कार्यस्याभावे कथं कार्यकारणभाव इति वाच्यम् । कारणसत्त्वव्यतिरेकेण कार्यसत्त्वाभावस्य विवक्षिततया कार्यस्वरूपापलापशङ्कानवकाशात् । सौत्रानन्यत्वपदतात्पर्यप्रदर्शकं भाष्यभामतीनिबन्धनवाक्यमुदाहरति—न खल्विति । 'अनन्यत्वम्' इतिपदेन कार्यकारणयोरभेदं न ब्रूमः । चेतनाचेतनयोरभेदानुपपत्तिस्तन्निषेधहेतुः खलुशब्देन द्योत्यते । तर्हि कारणब्रह्मविज्ञानात् सर्वविज्ञानं श्रुतिसिद्धं न सम्भवेत्, अभेदानभ्युपगमादिति शङ्कते—किं त्विति । परिहरति—भेदमिति । कार्यकारणयोस्सत्त्वभेदं व्यासेधामः इत्यर्थः । तथा च कारणब्रह्मस्वरूपभूतं सत्त्वमेव कार्यस्य वास्तवं स्वरूपमिति तस्मिन् विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवतीति नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः । न च ब्रह्मस्वरूपज्ञानेन सर्वप्रपञ्चस्य वास्तवस्वरूपे विदितेऽपि तत्तदसाधारणरूपज्ञानासम्भवात् प्रतिज्ञाविरोधस्तदवस्थ एवेति वाच्यम् । "आत्मनि विदिते सर्वं विदितं भवति" इत्यादिप्रतिज्ञावाक्येषु सर्वपदस्य सर्वतत्त्वपरत्वेन तत्तदसाधारणरूपेण सर्वज्ञानस्याविवक्षितत्वात् । न च तथा कल्पनायां किं विनिगमकमिति वाच्यम् । सर्वप्रपञ्चतत्त्वज्ञानमात्रेणाद्वितीयब्रह्मज्ञानस्य मुक्तिसाधनस्य लाभेन तत्तदसाधारणरूपज्ञाननैष्फल्यस्यैव विनिगमकत्वात् । कारणे ब्रह्मणि विदितेऽपि सर्वप्रपञ्चगततत्तदसाधारणरूपज्ञानस्यासम्भवेन, सर्वविज्ञानश्रुतेस्तत्परत्वे प्रामाण्याभावप्रसङ्गाच्च भेददर्शनस्यानर्थहेतुतया श्रुतिषु तत्र तत्र निन्दितत्वाच्च प्रतिज्ञाश्रुतेः न नानारूपज्ञाने तात्पर्यम् । तदुक्तं पञ्चदश्याम्—

अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः ।
सर्वबोधः श्रुतो नैव नानात्वस्य विवक्षया ॥ इति ।

अस्यार्थः—अत्र वेदान्तेष्वेकस्य ब्रह्मणो बोधेन सर्वस्य प्रपञ्चस्य बोधः अद्वैते ब्रह्मणि मुमुक्षुमभिमुखीकर्तुमेव मुमुक्षोरद्वितीयब्रह्मबोधार्थमेव श्रुतः । अद्वितीयब्रह्मबोधश्च 'सर्वस्य ब्रह्मैव वास्तवं स्वरूपम्' इति ज्ञान-

अपसिद्धान्त इति वाच्यम् । तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्तिरजतयोरिव प्रातीतिकाभेदाभ्युपगमेऽपि विरोधाभावादिति ॥

(वे०सू०मं०) ब्रह्ममात्रमुपादानं माया तु द्वारकारणम् ॥
मृल्लक्षणतावत्संक्षेपशारीरककृतां नये ॥ २९ ॥

सङ्क्षेपशारीरककृतस्तु—ब्रह्मैवोपादानम् । कूटस्थस्य स्वतः

मात्राव सिध्यतीति भावः । ननु "ब्रह्मणि विदिते सर्वं विदितं भवति" इति श्रुतौ स्वरसतः प्रतीयमानं तत्तदसाधारणरूपेण सर्वज्ञानमेव श्रुत्यर्थः किन्न स्यादिति, नेत्याह—नैवेति । नानात्वबोधविवक्षया सर्वबोधो नैव श्रुत इति योजना । प्रयोजनाभावात् बाधितत्वान्निन्दितत्वाच्चेति भावः ।

तयोरिति । भाष्यभामतीनिबन्धनयोरित्यर्थः । न च प्रपञ्चब्रह्मणोः वास्तवाभेदनिषेधे सति वास्तवो भेदस्स्यादिति वाच्यम् । भेदस्य वास्तवत्वं हि धर्मिप्रतियोगिनोः वास्तवत्वापेक्षम् । तत्र ब्रह्मणो वास्तवत्वेऽपि प्रपञ्चस्यारम्भणशब्दादिभ्यो मिथ्यात्वावगमेन तयोर्भेदस्य सत्यत्वायोगादिति भावः । प्रातीतिकेति । यथा 'इदं रजतम्' इति भ्रान्तिसिद्धं रजतेदमर्थयोरभिन्नत्वम्, तथा 'सन् घटः' इत्यादिभ्रान्तिसिद्धाभेदोपगमे सिद्धान्तविरोधाभावादिति भावः । "मायां तु प्रकृतिं विद्यात्" इति श्रुत्या अवधारणार्थकतुशब्दवत्या मायाया एवोपादानत्वावगमेन ब्रह्मण उपादानत्वाभावादुपादानत्वघटितब्रह्मलक्षणस्यासम्भवशङ्कायां सत्यां मायाब्रह्मणोरुभयोरपि प्रकृतित्वमस्ति । श्रुतियुक्त्योरविशेषात् । "मायां तु" इति श्रुतौ तुशब्दो नावधारणार्थः, किन्तु सद्रूपब्रह्मापेक्षया मायाया वैलक्षण्यद्योतनार्थः । तच्च वैलक्षण्यं परिणामित्वरूपं प्रकृतित्वं मायाया इत्याशयवतां पदार्थतत्त्वनिर्णयकारादीनां मतभेदेन लक्षणासम्भवशङ्का परिहृता ।

इदानीं ब्रह्मैवोपादानम्, न माया, अतो न लक्षणासम्भवशङ्काऽवकाश इति मन्यमानानां मतद्वयमाह—सङ्क्षेपशारीरककृतस्त्वित्यादिना । तर्हि व्यर्था मायेति, नेत्याह—कूटस्थस्येति । यदि मायां विनैव ब्रह्म उपादानं स्यात्, तदा ब्रह्मणस्स्वतः परिणामित्वमेव स्यात् । तथा च परिणामवादिभिः परिणामपरिणामिनोः वास्तवाभेदाभ्युपग-

कारणत्वानुपपत्तेः । माया द्वारकारणम् । अकारणमपि द्वारं कार्येऽनुगच्छति । मृद इव तद्गतश्लक्ष्णत्वादेरपि घटे अनुगमनदर्शनादित्याहुः ॥

(वें०सू०मं०) ब्रह्मैव जीवाश्रितया ऽविद्यया विषयीकृतम् ॥
वाचस्पतिमते हेतुर्माया तु सहकारिणी ॥ २६ ॥

---

मात् परिणामस्य जन्मादिविकारैः ब्रह्मापि विकारवदेव स्यात् । न चेष्टापत्तिरत्र वक्तुं शक्यते, "न जायते" इत्यादिबहुश्रुतिषु ब्रह्मणो जन्मादिविकाररहितस्वरूपकूटस्थत्वप्रतिपादनविरोधात् । अतो मायाद्वारा ब्रह्मणः कारणत्वं वक्तव्यमिति न व्यर्था मायेत्यर्थः । यथा मृद्वस्तुन उपादानत्वेऽपि तद्गतश्लक्ष्णत्वादिसंस्कारो द्वारकारणम् । न ह्यसंस्कृतस्य मृद्वस्तुनः घटाद्युपादानत्वं घटते, तथा कूटस्थचैतन्यरूपे ब्रह्मणि समारोपिता माया तत्र जगत्प्रकृतित्वं घटयन्ती सहकारिकारणमुपेयते इति भावः । न च मायाया उपादानत्वाभावे "मायां तु प्रकृतिं विद्यात्" इति श्रुतिविरोध इति वाच्यम् । ब्रह्मगतप्रकृतित्वनिर्वाहकतामात्रेण तस्यां प्रकृतित्वश्रुत्युपपत्तेः । मायायाः प्रकृतित्वनिर्वाहकत्वमात्रं, न स्वतः प्रकृतित्वमस्तीत्याशयेनैव तस्यां शक्तित्वव्यवहारः श्रुतौ दृश्यते—"पराऽस्य शक्तिर्विविधैव श्रूयते" इति । न हि मृदादिपदार्थगतशक्तेः किञ्चित्कार्यं प्रत्युपादानत्वं प्रसिद्धं लोके । अत एव विनिगमकाभावान्मायाब्रह्मणोरुभयोरप्युपादानत्वमिति निरस्तम् । मायाया ब्रह्मशक्तित्वे तस्या स्वतः उपादानत्वासम्भवात् । न च तस्याः प्रकृतित्वानुपगमे जगतः परिणाम्युपादानं न स्यात् । ब्रह्मणः परिणामितायाः कूटस्थत्वविरोधेनासकृत् प्रत्युक्तत्वादिति वाच्यम् । वाचस्पतिमत इव प्रपञ्चस्य चिदध्यस्तमायाविपयीकृतब्रह्मविवर्तत्वमात्राङ्गीकारोपपत्तेः । न च सङ्क्षेपशारीरकग्रन्थे तत्र तत्र मायायाः परिणामित्वव्यवहारविरोध इति वाच्यम् । तथाव्यवहारस्य मतान्तराभिप्रायत्वोपपत्तेः । ननु जडभूतमायाप्रकृतिकत्वाभावे प्रपञ्चस्य जाड्यं न स्यादिति, नेत्याह—अकारणमपीति । अनुपादानमपीत्यर्थः ।

जगत्यनुगतं जाड्यं न कारणगुणः, किं तु जगत एव स्वाभाविकम् । अतस्तत्सिद्धये मायाया उपादानत्वं, कार्यानुगतद्वारकारणत्वं वा

वाचस्पतिमिश्रास्तु—जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानमिति माया सहकारिमात्रम्, न कार्यानुगतं द्वारकारणमित्याहुः॥

---

न कल्पनीयमित्याशयेनाह—वाचस्पतिमिश्रास्त्विति। जीवाश्रितेति। नन्वक्षरब्राह्मणे आकाशशब्दिताया मायाया अक्षरशब्दितनिरस्तचैतन्याश्रितत्वस्य प्रतिपादितत्वात् कथं तस्या जीवाश्रितत्वमुपेयते, "मायिनं तु महेश्वरम्" इति श्रुतिविरोधाच्च। अत्र 'मायिनम्'इत्यनेन महेश्वरशब्दितब्रह्माश्रितत्वप्रतिपादनात्। किं च जीवस्य मायाश्रयत्वे तस्यैव जगदुपादानत्वं स्यात्। प्रपञ्चस्य मायापरिणामत्वात्। प्रपञ्चपरिणामिमायाश्रयत्वं हि ब्रह्मणः प्रपञ्चोपादानत्वम्। जीवस्य मायाश्रयत्वे तु तस्यैव जगदुपादानत्वं स्यात्, न ब्रह्मणः। किं च 'जीवाश्रितमायाविषयीकृतं ब्रह्म' इति मते ब्रह्मण उपाध्यनङ्गीकारेण नियन्तृत्वजगत्कर्तृत्वादेरभावप्रसङ्गश्च, इति चेत्, उच्यते—जीवाश्रितेतिपदेन जीवत्वविशिष्टचैतन्याश्रितत्वं विवक्षितं न भवति, किं त्वक्षरब्राह्मणानुरोधेन चैतन्याश्रितत्वमेव। जीवत्वं तु मायापदवेदनीयाविद्यायाश्चैतन्ये वृत्तौ अवच्छेदकमिति जीवाश्रितमायेत्युच्यते। न च जीवत्वस्यापि चैतन्ये वृत्तौ मायैवावच्छेदिका वाच्येति परस्पराश्रयप्रसङ्ग इति वाच्यम्। द्रव्यत्वगुणाश्रयत्वयोरिव परस्परस्थितिप्रयोजकतया परस्परापेक्षत्वलक्षणपरस्पराश्रयत्वस्यादोषत्वात्। परस्पराश्रयो ह्युत्पत्तौ ज्ञप्तौ वा दोषो भवेत्। स च प्रकृते नास्ति। अविद्याजीवत्वयोरनादित्वात् नित्यसाक्षिभास्यत्वाच्च। न च जीवत्वस्याविद्यास्थितिं प्रति नियामकत्वकल्पनं व्यर्थमिति वाच्यम्। ब्रह्मणि तस्यास्स्थितिनिवारकत्वात्। "निरवद्यं निरञ्जनम्" इति श्रुत्या ब्रह्मणो निर्दोषत्वावगमेन तस्याविद्यारूपदोषाश्रयत्वानुपपत्तेः। न च वस्तुतो निर्दोषत्वपरा सा श्रुतिरिति वाच्यम्। तथासङ्कोचे मानाभावात्, ईश्वररूपब्रह्मवत् जीवस्यापि वस्तुतो निर्दोषत्वाच्च। न च "मायिनं तु महेश्वरम्" इति श्रुतिविरोधः। 'गृही धनी देवदत्तः' इत्यादौ देवदत्तस्य गृहाद्याश्रयत्वाभावेऽपि प्रत्ययस्य स्वस्वामिभावलक्षणसम्बन्धान्तरबोधकत्ववत् महेश्वरशब्दितब्रह्मणो मायाश्रयत्वाभावेऽपि मायाब्रह्मणोः विषयविषयिभावलक्षणसम्बन्धान्तरबोधकतया

(वे०सू०मं०) अपूर्वानपरं ब्रह्म नोपादानं जगत्स्थितेः ॥
माया तु मुख्योपादानमिति मुक्तावलीकृतः ॥ २७ ॥

सिद्धान्तमुक्तावलीकृतस्तु—मायाशक्तिरेवोपादानं न ब्रह्म "तदेतद् ब्रह्मापूर्वमनपरमबाह्यम्" "न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतेः जगदुपादानमायाधिष्ठानत्वेन उपचारादुपादानम्,

---

"मायिनम्" इति श्रुत्युपपत्तेः। प्रपञ्चस्य च जीवाश्रितमायाविषयीकृतब्रह्मविवर्तत्वमात्राभ्युपगमात् न जीवस्य जगदुपादानत्वप्रसङ्गः। ब्रह्मण उपाध्यभावेऽपि सर्वनियन्तृत्वादि जीवाविद्याविषयीकृतब्रह्मविवर्ततया ब्रह्मधर्मत्वेनैव कल्प्यते न जीवाविद्यापरिणामतया जीवधर्मत्वेनानुभवविरोधात्। ब्रह्मणि च सर्वनियन्तृत्वसर्वकर्तृत्वसर्वज्ञत्वादिप्रतिपादकशास्त्रस्य कल्पकस्य सत्त्वाच्च। तस्मात्सिद्धं जीवाश्रितमायाविषयीकृतं ब्रह्म प्रपञ्चाकारेण विवर्त्तमानतया उपादानमिति। उक्तं चारम्भणाधिकरणभाष्ये—

मूलकारणमेव आऽऽन्त्यात्कार्यात्तेन तेन कार्य्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते इति।

आऽऽन्त्यात्कार्यादिति अन्त्यकार्यपर्यन्तमित्यर्थः। नटो हि द्रष्टृभिरविज्ञातनिजरूप एव तत्तदभिनेयासत्यरूपतां प्रतिपद्यते, एवं जीवैरविज्ञाततत्त्वं सद्ब्रह्मासत्यवियदादिप्रपञ्चाकारतां तद्द्वारा व्यवहारविषयतां च प्रतिपद्यते इति भाष्यार्थः। अत्र नटदृष्टान्तोक्त्या वाचस्पतिमतं भाष्याभिमतं निश्चीयते। तदुक्तं कल्पतरौ—

अज्ञातनटवत् ब्रह्म कारणं शङ्करो ब्रवीत्।
जीवाज्ञानं जगद्बीजं जगौ वाचस्पतिस्तथा ॥ इति।

इदानीं मायाया एव "मायां तु प्रकृतिं विद्यात्" इति श्रुतिस्वारस्यानुरोधेन मुख्यमुपादानत्वमिति स्वीकृत्यापि ब्रह्मलक्षणासम्भवं परिहरति—सिद्धान्तमुक्तावलीकृतस्त्विति। तत् प्रकृतम्। एतद् बुद्ध्यादिसाक्षिरूपं पूर्वं कारणं न विद्यते यस्य तदपूर्वम्। अपरं कार्यं न विद्यते यस्य तदनपरम्, तस्य ब्रह्मणः, करणं च जगत्सृष्टिसाधनं चेत्यर्थः। इत्यादिश्रुतेर्न ब्रह्मोपादानमित्यर्थः। तर्हि ब्रह्मणो जगदुपादानत्वप्रतिपादकश्रुतिसूत्रभाष्यादिविरोधः इत्यत आह—जगदिति। तुशब्दोऽवधारणे। तादृशमेवेति। जगदुपादानमायाधिष्ठानत्वमेवेत्यर्थः ॥ ८ ॥

ताद्दशमेवोपादानत्वं लक्षणे विवक्षितमित्याहुः ॥ ५ ॥

(वे०सू०मं०) क ईश्वरोऽथ को जीवः ? प्रकटार्थकृतो विदुः ॥
ईशं मायाचिदाभासं जीवमाविद्यकं च तम् ॥ २८॥
अनादिविश्वप्रकृतिर्माया चिन्मात्रसंश्रया ॥
तदेकदेशो ऽविद्या तु विक्षेपावरणान्विता ॥ २९ ॥

(६)अथ क ईश्वरः को वा जीवः ? । अत्रोक्तं प्रकटार्थविवरणे—

---

पूर्वत्र ईश्वरस्य जगदुपादानत्वमुक्तम्, जीवाश्रितमायेत्यादौ जीवोऽपि व्यवहृतः । इदानीं तयोः स्वरूपं निरूपयितुं प्रश्नमवतारयति—अथेति । "मायां तु प्रकृतिम्" इति श्रुतौ या भूतप्रकृतित्वेन माया प्रसिद्धा तस्यां चैतन्यप्रतिविम्ब ईश्वरः । ननु "मायिनं तु महेश्वरम्" इति वाक्यशेषे मायाया ईश्वराश्रितत्वप्रतिपादनादीश्वरस्य मायाप्रतिविम्बत्वं न भवति, उपाधेः प्रतिविम्बाश्रितत्वादर्शनादिति शङ्कां निराचष्टे—चिन्मात्रसम्बन्धिनीति । चिन्मात्राश्रितेत्यर्थः । मात्रपदेन विम्बत्वादेर्व्यवच्छेदः । वाक्यशेषेऽपि महेश्वरपदं चिन्मात्रलक्षकमिति भावः।साङ्ख्याभिमतप्रकृतेरिव मायायाः सत्त्वं वारयति—अनिर्वाच्येति । माया तावद् ब्रह्मचैतन्यान्न वस्तुतो भिन्ना, ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वप्रतिपादकश्रुतिविरोधेन वस्तुतः तस्यास्ततो भेदासम्भवात् । नाप्यभिन्ना, चैतन्यजडयोरैक्यायोगात् । नापि चैतन्याद्भिन्नाभिन्ना । एकत्र भिन्नत्वाभिन्नत्वयोर्विरोधेनासम्भवात् । एवं न तावन्माया सती, अद्वैतश्रुतिविरोधादेव । नाप्यसती, भूतप्रकृतित्वानुपपत्तेः । नापि सदसती, सत्त्वासत्त्वयोरेकत्र विरोधात् । एवं न तावन्माया सावयवा, तस्याः सादित्वप्रसङ्गेन तत्प्रतिविम्बभूतेश्वरस्यापि सादित्वप्रसङ्गात् । मायायाः सादित्वे तत्प्रकृतित्वेन मायान्तरापेक्षायामनवस्थाप्रसङ्गाच्च । नापि निरवयवा, प्रकृतित्वाभावप्रसङ्गात् । सावयवपदार्थानामेव लोके प्रकृतित्वदर्शनात् । नाप्युभयरूपा, सावयवत्वनिरवयवत्वयोरेकत्र विरोधात् । तस्मात्सर्वप्रकारेण निर्वक्तुमशक्यतया माया अनिर्वाच्येत्यर्थः । तस्याः परिच्छिन्नानन्तप्रदेशेषु चैतन्यप्रतिविम्बो जीवः न साक्षात्, तस्यामेव चित्प्रतिविम्बो जीव इत्येवकारार्थः । प्रदेशानां परिच्छिन्नत्वविशेषणं तत्प्रतिविम्बरूपजीवानां परिच्छिन्नत्वलाभार्थम् । तथा च भाष्ये तत्र तत्र जीवानां परिच्छिन्नत्वनिरूपणं सङ्गच्छते । तथाहि—'सर्वत्र प्रसिद्धोपदेशात्' ( उ० मी० अ० १ पा० २ अधि०

अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया । तस्यां चित्प्रतिबिम्ब ईश्वरः, तस्या एव परिच्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बो जीव इति ॥

(वे०सू०मं०) उक्ता तत्त्वविवेके तु शुद्धसत्त्वमयी स्फुटा ॥
माया रजस्तमोध्वस्ता ऽविद्या, शेषं तु पूर्ववत् ॥३०॥

तत्त्वविवेके तु—त्रिगुणात्मिकाया मूलप्रकृतेः "जीवेशावाभा-

---

१ सू० १ ) इत्यधिकरणे सौत्रशारीरपदव्याख्यानरूपं भाष्यं शारीर इति शरीरे भव इत्यर्थः । 'नन्वीश्वरोऽपि शरीरे भवति, सत्यं शरीरे भवति, नतु शरीर एव भवति । "आकाशवत्सर्वगतश्च नित्यः" इतिव्यापित्वश्रवणात् । जीवस्तु शरीर एव भवति, तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्' इति । तथा द्युभ्वाद्यधिकरणगतं ( उ० मी० अ० १ पा० ३ अधि० १ सू० १ ) भाष्यम्—

"न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक् सम्भवति" इति । प्राणभृतो जीवस्य द्युभ्वादिशब्दितजगदायतनत्वं मुख्यं न सम्भवति अविभुत्वात् इति भाष्यार्थः । पटस्यारम्भकतन्तव इव मायाया न प्रदेशाः सन्ति, तस्या अनादित्वात्, किन्तु मायायां विक्षेपावरणशक्तीनां आनन्त्याद्विक्षेपावरणशक्तिमद्भागा एव प्रदेशा विवक्षिता इत्याशयेनाह—आवरणविक्षेपशक्तिमत्स्विति । ब्रह्मचैतन्यावरणानुकूला शक्तिरावरणशक्तिः । आवरणं च 'ब्रह्म नास्ति, न प्रकाशते' इति व्यवहारयोग्यत्वम् । विक्षेपपदेन तत्तज्जीवासाधारणदुःखादिकं विवक्षितम् । तदनुकूलशक्तिः विक्षेपशक्तिरित्यर्थः । ननु मायाप्रदेशानां जीवोपाधित्ववर्णनमनुपपन्नम् । आनुमानिकाधिकरण( उ० मी० अ० १ पा० ४ अधि० १ सू० १ )भाष्यादौ अविद्याजीवोपाधित्वव्यवहारविरोधप्रसङ्गात्, अत आह—अविद्याभिधानेष्विति । मायाप्रदेशानामेव भाष्यगताविद्यापदाभिलप्यत्वात् न तद्विरोध इति भावः ।

एकस्यामेव मूलप्रकृतौ प्रदेशप्रदेशिभावेनानिर्वचनीयं भेदं कल्पयित्वा जीवेश्वरयोः प्रतिबिम्बरूपत्वमुक्तम् । इदानीं तस्यामेव

सेन करोति माया चाविद्या च स्वयमेव भवति''इति श्रुतिसिद्धौ द्वौ रूपभेदौ । रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधाना माया, तदभिभूतमलिनसत्त्वा अविद्येति मायाऽविद्याभेदं परिकल्प्य, मायाप्रतिबिम्ब ईश्वरः, अविद्याप्रतिबिम्बो जीव इत्युक्तम् ॥

(वे०सू०मं०) विक्षेपशक्तिप्राधान्याद मायेशोपाधिरुच्यते ॥
अविद्याऽऽवरणोत्कर्षाद जीवस्येऽपि कश्चन ॥ ३१ ॥

एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दितेश्वरोपाधिः, आवरणप्राधान्येनाविद्या ऽज्ञानशब्दिता जीवोपाधिः । अत एव तस्या जीवेश्वरसाधारणचिन्मात्रसम्बन्धित्वेऽपि जीवस्यैव 'अज्ञोऽस्मि'इत्यज्ञानसम्बन्धानुभवः, नेश्वरस्येति जीवेश्वरविभागः क्वचिदुपपादितः ॥

(वे०सू०मं०) कार्योपाधिर्भवेज्जीवः कारणोपाधिरीश्वरः ॥
प्रतिबिम्बोऽत्र सङ्क्षेपशारीरककृतां नये ॥ ३२ ॥

---

प्रकारान्तरेण रूपभेदं कल्पयित्वा तदुपपादयति—तत्त्वविवेके त्विति । भेदकल्पनावैलक्षण्यद्योतनार्थस्तुशब्दः । रूपभेदाविति । 'स्तः' इति शेषः । रजस्तमोऽनभिभूतत्वमेव शुद्धत्वम् । शुद्धसत्त्वप्रधाना प्रकृतिः माया, मलिनसत्त्वप्रधाना प्रकृतिः अविद्येत्यर्थः । रजस्तमोऽभिभूतत्वमेव सत्त्वस्य मलिनत्वम् ।

सत्त्वशुद्ध्यशुद्धिभ्यां मायात्वाविद्यात्वाख्यौ श्रुत्युक्तरूपभेदौ निरूप्य विक्षेपावरणशक्तिभेदेन श्रुत्युक्तरूपभेदावेव निरूपयति—एकैवेति । अत एवेति । जीवस्यावरणशक्तिमदुपाधिमत्त्वादेवेत्यर्थः । तस्या इति । जीवेश्वरोपाधिभूतायाः प्रकृतेः प्रतिबिम्बरूपजीवेश्वरसाधारणबिम्बचैतन्याश्रितत्वेऽपीत्यर्थः । नेश्वरस्येति । अत्रापि 'अत एव'इत्यस्यानुषङ्गः । आवरणशक्तेरीश्वरोपाधिकोटौ अननुप्रवेशादेवेति तदर्थः । तथा च जीवेश्वरौ प्रति प्रकृतेस्साधारणत्वादेकस्य सर्वज्ञत्वम्, अपरस्याज्ञत्वमिति यद्वैलक्षण्यं श्रुत्यनुभवसिद्धं तद् कथं सम्भवतीति शङ्काया अनवकाश इति भावः ।

सङ्क्षेपशारीरके तु—

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥

इति श्रुतिमनुसृत्याविद्यायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणे चित्प्रतिबिम्बो जीवः । न चान्तःकरणरूपेण द्रव्येण घटेनाकाशस्येव चैतन्यस्यावच्छेदसम्भवात् तदवच्छिन्नमेव चैतन्यं जीवोऽस्त्विति वाच्यम् । इह परत्र च जीवभावेनावच्छेद्यचैतन्यप्रदेशस्य भेदेन कृतहानाकृताभ्यागमप्रसङ्गात् । प्रति-

---

मतान्तरमाह—सङ्क्षेपेति । श्रुतौ कारणपदमविद्यापरम् । कार्यपदमन्तःकरणपरमिति मत्वाऽऽह—अविद्यायामित्यादिना । ननु "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुतिविरोधः । तस्यां श्रुतौ जीवस्य कारणोपाधिकत्वप्रतीतेरिति चेत्, उच्यते—"जीवेशावाभासेन करोति" इति पूर्वभागेन हि जीवेश्वरयोरुभयोरपि प्रतिबिम्बभावः प्रतीयते । न च बिम्बैक्यस्थले उपाधिभेदं विना प्रतिबिम्बभेदस्सम्भवति । सूर्यादिप्रतिबिम्बस्थले उपाधिभेदं विना प्रतिबिम्बभेदादर्शनात् । तथा चोदाहृतश्रुतौ प्रतिबिम्बरूपयोः जीवेशयोर्यथाक्रमं मायाऽविद्यापदाभ्यामुपाधी समर्प्येते । मायापदं चात्र मायाकार्यान्तःकरणपरम् । न चैवं मूलप्रकृतिं प्रकृत्य प्रवृत्तायां "जीवेशौ" इतिश्रुतौ "माया चाविद्या च स्वयमेव भवति" इति वाक्येन मायाऽविद्ययोरुभयोरपि मूलप्रकृत्यभेदोपपादनविरोध इति वाच्यम् । मूलप्रकृत्यविद्ययोरिव मायाशब्दितान्तःकरणमूलप्रकृत्योः मुख्याभेदाभावेऽपि प्रकृतिविकारभावप्रयुक्ताभेदसत्त्वेन, तावता "माया चाविद्या च स्वयमेव भवति" इति वाक्यशेषोपपत्तेरिति भावः । नन्वविद्यावच्छिन्नचैतन्यमेवेश्वरोऽस्तु, तथाऽन्तःकरणावच्छिन्नचैतन्यमेव च जीवोऽस्तु, अविद्याऽन्तःकरणाधिष्ठानचैतन्ययोस्तदवच्छिन्नत्वस्य क्लृप्तत्वात्, तदतिरिक्तप्रतिबिम्बकल्पनायां गौरवाचेत्याशयेन शङ्कते—न चेति । न तु प्रतिबिम्बचैतन्यमित्येवकारार्थः । जीवग्रहणमीश्वरस्याप्युपलक्षणम् । जीवेश्वरयोः प्रतिबिम्बतायाश्श्रुतिसिद्धत्वात् न कल्पनागौरवदोषोऽस्तीत्यभिप्रेत्य जीवस्यावच्छिन्नत्वपक्षे दोषमाह—इहेति । अस्मिन् लोके ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य कर्मकर्तृत्वात् लोका-

बिम्बस्तूपाधेर्गतागतयोरवच्छेद्यवन्न भिद्यते इति प्रतिबिम्बपक्षे नायं दोष इत्युक्तम्।

एवमुक्तेष्वेतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यत् बिम्बस्थानीयं ब्रह्म तत् मुक्तप्राप्यं शुद्धचैतन्यम्॥

(वे०सू०मं०) घटाभ्रवारिणोर्व्योम्नः प्रतिबिम्बाविवात्मनः॥
बुद्धितद्वासनाभासौ जीवेशौ, बुद्ध्युपाधिकः॥३३॥
कूटस्थः शुद्धचित् ब्रह्म चित्रदीपे चतुर्विधम्॥
कूटस्थे कल्पितो जीवः शुद्धे ब्रह्मणि चेश्वरः॥
अहं ब्रह्मेति बाधायामैक्यमित्यपि तन्मतम्॥३४॥

चित्रदीपे—'जीव ईशो विशुद्धा चित्' इति त्रैविध्यप्रक्रिया

---

न्तरे देवादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य चाकर्तुः भोक्तृत्वात् कृतहानादिप्रसङ्गः। येन कर्म कृतं न तस्य भोगः, येन कर्म न कृतं तस्याकृतकर्मफलाभ्यागम इत्यर्थः। न च ब्राह्मणादिशरीरगतस्यैवान्तःकरणस्य लोकान्तरे गमनाभ्युपगमात् तदवच्छिन्नचैतन्यप्रदेशस्यैव तत्रापि गमनमस्त्विति वाच्यम्। घटस्य देशान्तरगमनेऽपि तदवच्छिन्नाकाशप्रदेशस्य गमनादर्शनादिति भावः। प्रतिबिम्बस्यावच्छेद्यचैतन्यापेक्षया वैलक्षण्यद्योतनार्थस्तुशब्दः। गतागतयोरिति। गमनागमनयोस्तयोरपि अवच्छेद्यप्रदेशवन्न भिद्यते इत्यर्थः। सूर्यादिप्रतिबिम्बवति जलपूर्णघटादौ देशान्तरं नीयमानेऽपि प्रतिबिम्बभेदादर्शनादिति भावः।

ननु चन्द्रादिप्रतिबिम्बवतां जलपात्राणां मध्ये एकस्य नाशे तद्गततया प्रतीतस्य प्रतिबिम्बस्य बिम्बेनैकीभावः प्रत्यक्षेणानुभूयते, न तथा प्रतिबिम्बान्तरेण, एवं प्रतिबिम्बरूपजीवस्यापि विदेहकैवल्यसमये बिम्बभूतशुद्धब्रह्मभाव एव स्यात्, न तु प्रतिबिम्बेश्वरभावापत्तिः दृष्टविरोधात्, इत्याशङ्कामिष्टापत्त्या परिहरति—एवमुक्तेष्विति। बिम्बस्थानीयमिति। लोकप्रसिद्धचन्द्रादिरूपबिम्बस्थानीयमित्यर्थः। ननु बिम्बत्वविशिष्टचैतन्यं कथं शुद्धमिति चेत्, न। शुद्धपदेन सर्वज्ञत्वसर्वकर्तृत्वादिधर्मराहित्यस्य विवक्षितत्वादिति॥

चित्रदीपे च त्रैविध्यप्रक्रियां विहाय चैतन्यस्य चातुर्विध्यं परिकल्प्य

विहाय यथा घटावच्छिन्नाकाशो घटाकाशः, तदाश्रिते जले प्रतिबिम्बितस्साभ्रनक्षत्रो जलाकाशः, अनवच्छिन्नो महाकाशः, महाकाशमध्यवर्तिनि मेघमण्डले वृष्टिलक्षणकार्यानुमेयेषु जलरूपतदवयवेषु तुषाराकारेषु प्रतिबिम्बितो मेघाकाशः' इति वस्तुत एकस्याप्याकाशस्य चातुर्विध्यम्, तथा स्थूलसूक्ष्मदेहद्वयस्याधिष्ठानतया वर्तमानं तदवच्छिन्नं चैतन्यं कूटवन्निर्विकारत्वेन स्थितं कूटस्थम्, तत्र कल्पितेऽन्तःकरणे प्रतिबिम्बितं चैतन्यं

---

जीवेश्वरविभागो दर्शित इति सम्बन्धः । तथा च चित्रदीपवचनम्—

> कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ।
> घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा ॥ इति ।

एतच्छ्लोकोपात्तदृष्टान्तभागं सङ्गृह्णाति—यथेत्यादिना । तदाश्रित इति । घट(१)स्थाकाशाश्रित इत्यर्थः । अभ्रनक्षत्रसाहित्यविशेषणमाकाशस्य जले प्रतिबिम्बाभावशङ्कानिरासार्थम् । इत्थं च तन्निरासप्रकारो विवक्षितः—यदा जलेऽभ्रनक्षत्राणां प्रतिबिम्बोऽनुभूयते, तदा तैस्सहाकाशप्रतिबिम्बोऽप्यनुभूयत एवेति नाकाशप्रतिबिम्बाभावशङ्कावकाश इति । अनवच्छिन्न इति । घटानवच्छिन्न इत्यर्थः । मेघमण्डले ये जलरूपास्तदवयवाः, तेषु प्रतिबिम्बित इति सम्बन्धः । तच्छब्दो मेघमण्डलपरः । मेघमण्डले जलानि सन्ति चेत् कुतो नोपलभ्यन्त इत्याशङ्का न कार्या । तेषां तुषारवत् सूक्ष्मरूपत्वादित्याशयेनाह—तुषारेति । तत्र जलसत्त्वे मानमाह—वृष्टिलक्षणेति । श्लोकोपात्तदार्ष्टान्तिकभागं सङ्गृह्णाति—तथेति । सूक्ष्मेति । घ्राणरसनचक्षुश्श्रोत्रत्वगाख्यानि पञ्चज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि, प्राणापानादयः पञ्च वायवः, मनो बुद्धिश्चेत्यन्तःकरणं द्विविधम्, आहत्य(२) सप्तदशकं लिङ्गशरीरम् दार्ष्टान्तिके घटस्थानीयसूक्ष्मदेहशब्दार्थः । देहद्वयावच्छिन्नं चैतन्यं घटाकाशस्थानीयं कूटस्थशब्दार्थः । चैतन्यस्य देहद्वयावच्छिन्नत्वे हेतुरधिष्ठानतया वर्तमानत्वम् । काष्ठविशेषलग्नायःपिण्डविशेषः कूटशब्दार्थः । तद्वदचलतया तिष्ठतीति कू-

---

(१) घटान्तःस्थेति पाठः । (२) मिलित्वेत्यर्थः ।

संसारयोगी जीवः, अनवच्छिन्नं चैतन्यं ब्रह्म, तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वरः इति चैतन्यस्य चातुर्विध्यं परिकल्प्यान्तःकरणधीवासनोपरक्ताज्ञानोपाधिभेदेन जीवेश्वरविभागो दर्शितः।

अयं चापरस्तदभिहितो विशेषः—चतुर्विधेषु चैतन्येषु जीवः 'अहम्' इति प्रकाशमानः कूटस्थे अविद्यातिरोहितासङ्गानन्दरूपविशेषांशे

---

टस्थः। तत्र कूटस्थे कल्पितं घटगतजलस्थानीयं यदन्तःकरणं तस्मिन् प्रतिबिम्बितमित्यर्थः। कूटस्थचैतन्यातिरिक्तचिदाभासकल्पनायाः प्रयोजनमाह—संसारेति। कूटस्थचैतन्यस्य न संसाराश्रयत्वम्। तस्य जन्ममरणादिलक्षणसंसाराश्रयत्वे कूटस्थत्वव्याघातादिति भावः। महाकाशस्थानीयब्रह्माश्रितमेघमण्डलस्थानीये मायाख्यतमसि स्थिताः याः धीवासनाः तासु प्रतिबिम्बितमित्यर्थः। जाग्रत्स्वप्नावस्थाद्वयगतानि स्थूलान्तःकरणानि धियः, तासां सुषुप्त्यवस्थागताः सूक्ष्मावस्थाः वासना विवक्षिताः। अन्तःकरणेति। अन्तःकरणं च धीवासनोपरक्ताज्ञानं च ते एव उपाधी, तयोर्भेदेनेत्यर्थः। धीवासनानानामानन्त्यात्तासु प्रतिबिम्बचैतन्यरूपेश्वरस्य नानात्वशङ्काव्यावृत्त्यर्थं वासनोपरक्ताज्ञानोपाधिकत्वमुक्तम्। पूर्वमतेषु बिम्बप्रतिबिम्बयोः भेदमात्रं कल्पितम्, स्वतस्तयोरभेद एवेतीममर्थं सिद्धं कृत्वा अस्मिन् मते ततो विशेषमाह—अयं चेति। अस्मिन्मते पूर्वं चिच्चातुर्विध्यलक्षण एको विशेषः उक्तः, तदपेक्षया ऽपरः अन्यः प्रतिबिम्बमिथ्यात्वरूपो विशेषः। तदभिहितः—तत्र चित्रदीपे अभिहित इत्यर्थः। अपरं विशेषमेव दर्शयति—चतुर्विधेष्विति। 'अहम्' इति प्रकाशमानो जीवः शुक्तौ रूप्यवदध्यस्त इति सम्बन्धः। नन्विदन्त्वेन सामान्यरूपेण ज्ञाते शुक्तित्वादिविशेषरूपेणाज्ञाते शुक्त्यादौ रूप्याद्यध्यासो दृष्टः। इह तु तथा सामान्यरूपेण ज्ञातं विशेषरूपेण चाज्ञातं किञ्चिदधिष्ठानं नोपलभ्यते इत्याशङ्क्याह—कूटस्थ इति। नन्वविद्यया कूटस्थस्यासङ्गत्वानन्दत्वपूर्णत्वादिविशेषांशस्यावृततया शुक्तित्वादिवदप्रतीतावपि शुक्तेरिदन्त्वेनेव कूटस्थस्य केनचित् सामान्येन रूपेण प्रकाशो न दृश्यते। किञ्च 'इदं रजतम्' इत्यत्राधिष्ठानसामान्यांशस्यारोप्यविशेषांशस्य च सह प्रकाशो दृश्यते। प्रकृते तु अहमर्थरूपो विशेष एव

शुक्तौ रूप्यवदध्यस्तः। अत एवेदन्त्व—रजतत्वयोरिवाधिष्ठानसामान्यांशाध्यस्तविशेषांशरूपयोस्स्वयन्त्वाहन्त्वयोः सह प्रकाशः 'स्वयमहं करोमि' इत्यादौ। अहन्त्वं त्वध्यस्तविशेषांशरूपम्। पुरुषान्तरस्य पुरुषान्तरे 'अहम्' इतिव्यवहाराभावेन व्यावृत्तत्वात्। स्वयन्त्वं चान्यत्वप्रतियोग्यधिष्ठानसामान्यांशरूपम्। 'स्वयं देवदत्तो गच्छति' इति पुरुषान्तरेऽपि व्यवहारेणानुवृत्तत्वात्। एवं पर-

---

'अहम्'इति प्रकाशते, न तु सामान्यांशः कश्चित्। अतोऽहमर्थस्य रूप्यवदध्यस्तत्वकल्पनं न युक्तमित्याशङ्क्याह—अत एवेति। अहमर्थस्य कूटस्थेऽध्यस्तत्वकल्पनादेवेत्यर्थः। स्वयन्त्वाहन्त्वयोरिति। कूटस्थस्य हि स्वयन्त्वं सामान्यरूपम्, न कूटस्थत्वम्, तस्य शास्त्रैकगम्यत्वात्। स्वयन्त्वं च कूटस्थस्याहमर्थारोपकाले तेन सह प्रकाशते। तत्पूर्वकालेऽपि स्वयन्त्वस्य भानमविरुद्धम्। तस्य नित्यचैतन्यात्मककूटस्थरूपत्वाभ्युपगमात्। स्वयन्त्वकूटस्थचैतन्ययोः 'राहोश्शिरः' 'पुरुषस्य चैतन्यम्' इतिवत् भेदकल्पनया धर्मधर्मिभावोपपत्तेश्च। अतः कूटस्थस्य स्वयन्त्वेन सामान्यरूपेण सदा प्रकाशसत्त्वादहमर्थरूपचिदाभासाध्यासाधिष्ठानत्वमविरुद्धमिति भावः। अहमर्थस्य रूप्यवद्विशेषरूपत्वं दर्शयति—अहन्त्वं हीति। अहमर्थ इत्यर्थः। अध्यस्तविशेषांशरूपमिति। शुक्त्यादावध्यस्तो यो विशेषांशः रूप्यादिः, तद्रूपं तत्सदृशमित्यर्थः। सादृश्यं च व्यावृत्तत्वम्। व्यावृत्तत्वादिति। व्यावृत्तत्वावगमादित्यर्थः। तेन न हेतुसाध्ययोरभेदः। व्यावृत्तत्वावगमे हेतुर्व्यवहाराभावः। स्वयंत्वस्य इदंत्ववत् सामान्यरूपत्वं दर्शयति—स्वयन्त्वं चेति। 'स्वयम्, अन्यः'इति लोकव्यवहारे स्वयन्त्वमन्यत्वप्रतिद्वन्द्वितया प्रसिद्धमिति दर्शयितुमन्यत्वप्रतियोगीति स्वयन्त्वस्य विशेषणमिति बोध्यम्। स्वयमिति। तदुक्तं चित्रदीपे—

देवदत्तस्स्वयं गच्छेत्त्वं वीक्षस्व स्वयं तथा।
अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते॥ इति।

ननु 'स्वयमहम्' इतिप्रकाशमानयोः कूटस्थजीवयोश्शुक्तिरजतयोरिव भेदसत्त्वे सर्वेषां कुतो भेदो नोपलभ्यते? तत्राह—एवमिति। अहमर्थ-

---

१ हिशब्दघटितः पाठः। स च युक्तष्टीकानुरोधात्।

स्पराध्यासादेव कूटस्थजीवयोरविवेको लौकिकानाम्। विवेकस्तु तयोर्बृहदारण्यके—"प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" इति जीवाभिप्रायेणोपाधिविनाशानुविनाशप्रतिपादनेन, "अविनाशी वा अरेऽयमात्मा" इति कूटस्थाभिप्रा-

---

जीवस्य शुक्तौ रूप्यवत् कूटस्थाध्यस्तत्वे सतीत्यर्थः। परस्परेति। तयोरभेदाध्यासादेवाविवेकः विवेकाभावो भेदानुभवाभाव इत्यर्थः। ननु 'इदं रजतम्' इति भ्रमस्थले 'शुक्तिरियम्' इति विशेषदर्शनेन 'इदं रजतम्' इति प्रतीतयोस्सामान्यविशेषपदार्थयोः शुक्तित्वरजतत्वरूपाविरुद्धधर्मवत्त्वनिश्चयात्तयोर्भेद उपेयते। इह तु जीवकूटस्थयोः कथं भेदोऽवगन्तव्यः। तदभावे हि 'स्वयमहम्' इति सामान्यविशेषभावेन प्रकाशमानयोस्तयोस्सत्यरजतस्थले रजतेदमर्थयोरिव वस्तुत ऐक्यापत्त्या अहमर्थरूपजीवस्य स्वयंशब्दार्थभूतकूटस्थे कल्पितत्वासिद्धेरित्याशङ्क्य, श्रुत्या तयोः भेदं दर्शयति—विवेकस्त्विति। तुशब्दः शङ्काव्यावृत्त्यर्थः। विवेको भेदानुभवः। एतेभ्यः सन्निहितेभ्यः देहादिसङ्घातरूपेण परिणतेभ्यः उपाधिरूपेभ्यो भूतेभ्यः समुत्थाय साम्येनोत्थाय उपाधिरूपबुद्ध्याद्युत्पत्त्या उत्पत्तिं प्राप्येत्यर्थः। 'यदा तान्युपाधिभूतानि बुद्ध्यादीनि तत्त्वज्ञानेन विनश्यन्ति, तदा तान्यनु विनश्यति' इति श्रुत्या औपाधिकस्यात्मनो विनाशित्वं प्रतिपाद्यते। तच्चान्तःकरणप्रतिबिम्बरूपस्य उपाध्यायत्तस्य जीवस्य मिथ्यात्वे सति सम्भवति। औपाधिकजीवस्य सत्यत्वे तु तस्य विनाशित्वप्रतिपादकवचनं न सङ्गच्छेत। तथा 'अयं प्रज्ञानघन आत्मा अरे मैत्रेयि अविनाशी वा अविनाश्येव' 'न तु उपाधिनाशान्नश्यति' इति कूटस्थचैतन्यस्य श्रुत्या नाशाभावः प्रतिपाद्यते।

एतदुक्तं भवति—"अयमात्मा प्रज्ञानघन एव एतेभ्यो भूतेभ्यस्समुत्थाय" इत्यादिश्रुत्या चिदेकरस आत्मैव उपाध्युत्पत्तिमनूत्पद्यते, तन्नाशमनु नश्यतीत्युपाध्युत्पत्तिविनाशव्यतिरेकेण उत्पत्तिविनाशौ चिदात्मनः प्रतिपाद्येते, अनुविनश्यतीत्यनुशब्दप्रयोगात्। न च तस्य स्वतो विनाशादिमत्त्वं सम्भवति। "अविनाशी वा अरे अयमात्मा" इति वाक्येन विज्ञानघनात्मनो विनाशाभावप्रतिपादनविरोधात्। अतश्चिदात्मन उत्पत्तिविनाशवतो प्रतिबिम्बचैतन्यरूपजीवेन तादात्म्य-

येणाविनाशप्रतिपादनेन च स्पष्टः। अहमर्थस्य जीवस्य विनाशित्वे कथमविनाशिब्रह्माभेदः। नेदमभेदे सामानाधिकरण्यं, किं तु बाधायाम्। यथा 'यः स्थाणुरेष पुमान्' इति पुरुषत्वबोधेन स्था-

---

मादाय विनाशादिवचनमुपपादनीयम् । ततश्च भ्रमस्थलीयरजतेदमर्थयोरिवात्रापि विनाशित्वाविनाशित्वरूपविरुद्धधर्मवत्त्वनिश्चयादेव जीवकूटस्थयोः भेदः स्पष्टं भासते इति ततः प्राक् कूटस्थचैतन्ये जीवरूपाहमर्थस्याध्याससिद्धिरिति। उदाहृतश्रुत्या प्रतिबिम्बजीवस्य विनाशित्वोपगमे श्रुत्यन्तरविरोधमाशङ्कते—अहमर्थेति । अभेद इत्यनन्तरम् "अहं ब्रह्मास्मि" इति वाक्येन प्रतिपाद्यते' इति शेषः । विनाश्यविनाशिनोरभेदायोगादिति भावः । परिहरति—नेदमिति । 'सोऽयम्' इत्यादिसमानाधिकरणवाक्यस्य यथा अभेदो वाक्यार्थो दृश्यते, तथा 'यस्स्थाणुस्स पुरुषः' इत्यादिसमानाधिकरणवाक्यस्य बाधारूपो वाक्यार्थो दृश्यते। 'यस्स्थाणुस्स पुरुषः' इत्यत्र हि पुरुषे आरोपितस्य प्रातिभासिकस्य स्थाणोः व्यावहारिकपुरुषेण सहाभेदो न वाक्यार्थः बाधितत्वात्, किं तु स्थाण्वारोपाधिष्ठानभूते पुरुषे वस्तुतस्स्थाणुतादात्म्याभावरूपा बाधा वाक्यार्थः । तथा च 'यस्स्थाणुस्स पुरुषः' इति वाक्येन 'वस्तुतस्स्थाणुतादात्म्याभाववानयं पुरुषः' इति बोधो जायते । तेन च बोधेन पुरुषे स्थाण्वारोपः सविषयो निवर्तते, एवम् "अहं ब्रह्मास्मि"इति वाक्येनाहमर्थभूतजीवतादात्म्यशून्यं 'ब्रह्मैवाहमस्मि' इति ज्ञानं जायते । तेन ज्ञानेन 'अहं ज्ञाता कर्ता, सुखी, दुःखी'इत्याद्यारोपः कर्तृत्वादिधर्मविशिष्टाहमर्थेन स्वविषयेण सह निश्शेषं निवर्तते । आरोपिताहमर्थनिवृत्तौ च सत्यां जीवस्य यद्वास्तवं रूपं कूटस्थचैतन्यात्मकं, तत् पूर्णब्रह्मरूपेणावतिष्ठते इति न श्रुत्यन्तरविरोध इति भावः ।

अक्षरार्थस्तु—इदं ब्रह्माहंपदयोस्समानविभक्तिमत्त्वरूपं सामानाधिकरण्यम् अभेदरूपेऽर्थे नाभ्युपगम्यते, येनाभेदासम्भवो दोषस्स्यात् । ननु यद्यभेदो न वाक्यार्थः, कस्तर्हि स इति शङ्कते—किं त्विति । बाधाऽत्र वाक्यार्थो विवक्षित इत्याह—बाधायामिति । पुरुषत्वपदेन कल्पितस्थाणुतादात्म्याभाववत्त्वं विवक्षितम् । बाधाया वाक्यार्थत्वस्वीकारात् । 'अहं ब्रह्मास्मि'इत्यत्रेतिपदानन्तरं 'वाक्यजन्येन' इति शेषः । अत्र वाक्यार्थज्ञानस्य 'अहं ब्रह्मास्मि' इत्याकारकत्वाभावात् कूटस्थब्रह्मरूपत्वपदेनापि वस्तुतोऽहमर्थ-

णुत्वबुद्धिर्निवर्त्यते । एवम् 'अहं ब्रह्मास्मि' इति कूटस्थब्रह्मस्वरूपत्वबोधेनाध्यस्ताहमर्थरूपत्वं निवर्त्यते ।

योऽयं स्थाणुः पुमानेष पुन्धिया स्थाणुधीरिव ॥
ब्रह्मास्मीतिधियाऽशेषा ह्यहम्बुद्धिर्निवर्तते ॥ १ ॥

इति नैष्कर्म्यसिद्धिवचनात् । यदि च विवरणाद्युक्तरीत्या इदमभेदे सामानाधिकरण्यम्, तदा जीववाचिनोऽहंशब्दस्य लक्षण-

---

तादात्म्याभाववत् कूटस्थब्रह्मरूपत्वं विवक्षितम् । बाधाया एव वाक्यार्थबोधविषयत्वाभ्युपगमात् दृष्टान्तदार्ष्टान्तिकयोरधिष्ठानस्यारोपितार्थाभाववत्त्वमारोपितासन्ताभावस्याधिष्ठानातिरिक्तत्वमिति मतमाश्रित्यास्माभिरुक्तमिति ध्येयम् । अध्यस्ताहमर्थरूपत्वमिति । अध्यस्तो योऽहमर्थः, तद्रूपत्वं तत्तादात्म्यं निवर्त्यत इति बोधफलमुक्तम् । महावाक्यस्य बाधार्थकत्वं न स्वकपोलकल्पितम् । किं तु सुरेश्वराचार्यैरुक्तमित्याह—योऽयमिति । मन्दान्धकारे 'यस्स्थाणुर्गृहीतः एषोऽयं पुमान्' इत्याप्तवाक्यजन्यया पुंधिया 'वस्तुतो नायं स्थाणुः, किं तु पुमान्'इति धिया 'स्थाणुरयम्'इति धीरारोपितस्थाणुतादात्म्येन सह यथा निवर्त्यते, एवम् 'अहं ब्रह्म' इति वाक्यजन्यया धिया 'अहमर्थभूतजीवतादात्म्यशून्यं ब्रह्मैवास्मि' इत्याकारयाऽहंबुद्धिः 'अहं करोमि, भुञ्जे' इत्यादिबुद्धिरशेषा आरोपिताहमर्थसहिता निवर्त्तते । महावाक्यार्थज्ञानादशेषानर्थनिवृत्तिः विदुषामनुभवसिद्धेति द्योतनार्थो हिशब्दः । ननु समानाधिकरणवाक्येषु अभेदरूपवाक्यार्थस्य मुख्यतया औत्सर्गिकत्वाद्, विवरणादिषु प्रकृते अभेदरूपवाक्यार्थस्यैव स्वीकाराच्च, भगवत्पादैरपि वाक्यवृत्तौ—

तादात्म्यमात्रं वाक्यार्थस्तयोरेव पदार्थयोः ॥

इति श्लोकेन महावाक्येषु तत्त्वंपदार्थयोस्तादात्म्यशब्दिताभेदस्यैव वाक्यार्थतया स्वीकाराच्च, वार्तिककारवचनस्य बाधाया अपि प्रकृते वाक्यार्थता वक्तुं शक्यते इति प्रौढिमाश्रित्य प्रवृत्त्युपपत्तेश्च, तस्मात् 'अहं ब्रह्मास्मि'इत्यत्राभेदो वाक्यार्थ इति स्थिते 'विनाशिजीवस्याविनाशिब्रह्माभेदो न सम्भवति' इति चोद्यं तदवस्थमेवेति अस्वरसादाह—यदि चेति ।

कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ।

इति श्लोकसङ्गृहीतानां कूटस्थब्रह्मजीवेश्वराणां चतुर्णां मध्ये ब्र-

था कूटस्थपरत्वमस्तु। तस्यानध्यस्तस्य(१) ब्रह्माभेदे योग्यत्वात् ।

यस्तु मेघाकाशतुल्यो धीवासनाप्रतिबिम्ब ईश्वर उक्तः, सोऽयं "सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्या-

---

ह्मचैतन्यं तावत् सत्यज्ञानादिवाक्येषु सुप्रसिद्धमिति तत्र वाक्यं प्रमाणत्वेन नोदाहृतम्। कूटस्थचैतन्ये "अविनाशी वा" इति वाक्यं प्रमाणत्वेन दर्शितम् । उपाध्युत्पत्तिविनाशानुविधाय्युत्पत्तिविनाशवचनमन्तःकरणगतचैतन्यप्रतिबिम्बरूपे जीवे प्रमाणमुक्तम् । परिशेषात् पूर्वोक्तेश्वरे प्रमाणं वक्तव्यम्, तदाह—यस्त्विति । तुशब्दोऽवधारणे । य ईश्वर उक्तः, सोऽयं श्रुत्युक्तानन्दमय एव, नान्य इत्यर्थः । सुषुप्तं स्थानमस्येति सुषुप्तस्थानः। जागरणे हि विज्ञानशब्दितान्तःकरणे तादात्म्याध्यासाद्विज्ञानमयत्वमनोमयत्वकर्तृत्वादीनि रूपाणि सन्ति, तथा देहे 'स्थूलोऽहम्' इत्याद्यभेदाध्यासात् स्थूलत्वकृशत्वब्राह्मणत्वादीनि रूपाणि सन्ति, तथा चक्षुरादिषु 'काणोऽहं, मूकोऽहम्' इत्यादिरूपादध्यासात् काणत्वमूकत्वादीनि रूपाणि सन्ति, एवमाकाशादिषु पदार्थेष्वध्याससिद्धानि "आकाशमयो वायुमयः" इत्यादिश्रुतिसङ्गृहीतान्यनन्तरूपाणि जीवस्य सन्ति । सुषुप्ते तु बुद्ध्याद्युपाधिलयेन सर्वप्रकारभ्रान्तिलयात् भ्रान्तिसिद्धानि सर्वाण्यपि रूपाणि लीयन्ते इत्यभिप्रेत्य 'एकीभूतः' इत्युक्तम्। तदुक्तम्—

विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराऽधुना ।
स लयेनैकतां प्राप्तो बहुतण्डुलपिष्टवत् ॥ इति ।

पुरा सुप्तात् पूर्वकाले। लयेन रूपाणां लयेनेत्यर्थः। प्रज्ञानं चैतन्यम्। तच्च जाग्रदादौ वृत्तिभेदेन भेदरूपं शैथिल्यं प्राप्य स्थितम्। सुषुप्ते वृत्तीनां विलयात् पुनरेकत्वं प्राप्तमित्यभिप्रेत्य प्रज्ञानघनत्वमुक्तम् । आनन्दोऽत्र बिम्बभूतो ब्रह्मानन्दो विवक्षितः । तस्य प्रतिबिम्बभूतो जीवः आनन्दमयः। स च स्वरूपभूतमानन्दं सुषुप्तिकाले अविद्यावृत्तिभिर्भुङ्क्ते इत्यानन्दभुगिति श्रुत्यर्थः ।

ननु जाग्रत्स्वप्नयोःस्थूलावस्थान्तःकरणप्रतिबिम्बरूपो जीवो विज्ञानमयः, स्थूलान्तःकरणस्य विज्ञानशब्दवाच्यत्वात् । स एव विज्ञानमयो जीवः स्वापकाले सूक्ष्मरूपेण विलीनावस्थान्तःकरणोपाधिकः सन्

---

(१) तस्याबाध्यस्येति पाठः स च युक्तः ।

नन्दभुक्'' इति माण्डूक्यश्रुतिसिद्धः सौषुप्तानन्दमयः। तत्रैव तदनन्तरम् "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्'' इति श्रुतेः। सर्ववस्तुविषयसकलप्राणिधीवासनोपाधिकस्य तस्य सर्वज्ञत्वस्य तत एव सर्वकर्तृत्वादेरप्युपपत्तेश्च। न चास्मद्बुद्धिवासनोपहितस्य, कस्यचित्

आनन्दमय इत्युच्यते। तथा चानन्दमयस्य जीवत्वादीश्वरत्वमसिद्धमित्याशङ्क्य सौषुप्तानन्दमयस्यैवेश्वरत्वं वाक्यशेषो दर्शयतीत्याह—तत्रैवेति। माण्डूक्यश्रुतावेवेत्यर्थः। सर्वेश्वरत्वं सर्वजगदुत्पत्तिकर्तृत्वम्। योनिरुपादानम्। आनन्दमयस्य सर्वोपादानत्वे हेतुमाह—प्रभवेति। हि यस्माद् भूतानां प्रभवाप्ययौ जन्मलयौ सौषुप्तादानन्दमयाद् भवतः, तस्मादेव सर्वस्य योनिरित्यर्थः। आनन्दमयस्य श्रुत्युक्तसर्वज्ञत्वे युक्तिमप्याह—सर्ववस्त्विति। एकैका धीः किञ्चित्किञ्चिद्विषयीकरोतीति सर्वाभिर्धीभिर्मिलित्वा सर्वं जगद्विषयीक्रियते। एवं च सर्वबुद्धीनां सर्वविषयकत्वे सिद्धे सति सर्वबुद्धिसूक्ष्मावस्थारूपाणां सर्वबुद्धिवासनानामपि सर्वविषयकत्वं सिध्यति। तथा च सर्वप्राणिबुद्धिवासनोपाधिकस्यानन्दमयस्य सर्वज्ञत्वसिद्धिरित्यर्थः। ननु धीवासनोपरक्ताज्ञानोपाधिक ईश्वर इति यदुक्तम् तत्र किं प्रतिबिम्बेश्वरस्याज्ञानमेवोपाधिः? किं वा वासनोपरक्ताज्ञानम्? अथवा सर्वाः धीवासनाः? उत प्रत्येकं वासना?। नाद्यः, 'धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वरः' इत्युक्तिविरोधात्। अज्ञानमात्रस्य ईश्वरोपाधित्वे धीवासनानुसरणवैफल्याच्च। न चाज्ञानोपाधिकस्यैवेश्वरस्य सर्वज्ञत्वलाभार्थं सर्वविषयकधीवासनानुसरणमिति वाच्यम्। अज्ञानगतसत्त्वांशपरिणामरूपाभिस्सर्वविषयकवृत्तिभिरेव सर्वज्ञत्वोपपादनसम्भवेन तदर्थं धीवासनानामनपेक्षणात्। अत एव न द्वितीयः। अज्ञानमात्रस्य तदुपाधित्वसम्भवात्। युगपद् सर्वप्राणिनां सुषुप्त्यसम्भवेन सर्वबुद्धिवासनानां यौगपद्यासम्भवाच्च न तासामज्ञानविशेषणतया ईश्वरोपाधित्वसम्भवः। तासां यौगपद्यासम्भवादेव न तृतीयोऽपि कल्पस्सङ्गच्छते। सर्वासु धीवासनासु व्यासक्ततया एकस्य ईश्वररूपप्रतिबिम्बस्यासम्भवाच्च लोके व्यासज्यवृत्तिप्रतिबिम्बादर्शनात्। तस्माच्चतुर्थः कल्पः परिशिष्यते। तत्रानुभवविरोधमाशङ्कते—न चास्मदिति। अस्माकं प्राणिनामेकैकबुद्धिवासनोपहितस्यान-

सार्वज्ञ्यं नानुभूयते इति वाच्यम् । वासनानां परोक्षत्वेन तदुपहितस्यापि परोक्षत्वादिति ॥

(वे०सू०मं०) ब्रह्मानन्दे विराडादिसमष्टिव्यष्ट्युपाधितः ॥
षोढा चिदानन्दमयव्यष्टिर्जीव इतीरितम् ॥३५॥
शुद्धलिप्ताङ्कितापूर्णवर्णचित्रपटोपमाः ॥
ब्रह्मेशसूत्रवैराजाः पराभाससमोऽसुभृत् ।
चित्रदीपे चित्रपटन्यायेनेत्थं निरूपिताः ॥ ३६ ॥
विराट्सूत्राक्षराण्यादौ विभज्य प्रणवाक्षरैः ।
विलाप्य गौडपादीये तुरीयात्माऽवशेषितः ॥३७॥

ब्रह्मानन्दे तु सुषुप्तिसंयोगात् माण्डूक्योक्त आनन्दमयो जीव इत्युक्तम् । यदाहि जाग्रदादिषु भोगप्रदस्य कर्मणः क्षये निद्रारूपेण विलीनमन्तःकरणं पुनर्भोगप्रदकर्मवशात् प्र-

---

न्दमयस्य अस्यापि स्वापकाले 'अहं सर्वज्ञः' इत्यनुभवो नास्तीत्यर्थः । वासनानामिति । जाग्रदादौ स्थूलावस्थान्तःकरणानामिव सुषुप्तौ वासनात्मकान्तःकरणानां साक्षिप्रत्यक्षयोग्यत्वाभावेन तदुपाधिकानन्दमयानामपि नाहमनुभवयोग्यत्वमित्यर्थः ॥

माण्डूक्यश्रुत्युक्तानन्दमयस्य सकलधीवासनोपाधिकस्य उक्तरीत्या एकस्यासम्भवात्, प्रत्येकमेव धीवासनोपाधिक आनन्दमयो वाच्यः । स च जीव एवेत्याह—ब्रह्मानन्दे त्विति । चित्रदीपे श्रीविद्यारण्यगुरुभिरीश्वरत्वेनोक्तानन्दमयस्य तैरेव ब्रह्मानन्दाख्यग्रन्थे जीवत्वोक्तिरूपविशेषार्थकस्तुशब्दः । सुषुप्तिसंयोगादित्युपलक्षणम् । वासनोपाधिकस्येश्वरत्वे जाग्रदादावीश्वराभावप्रसङ्गादेकैकवासनोपाधिकस्य नानात्वेनेश्वरनानात्वप्रसङ्गात् सकलवासनोपाधिकस्य कस्यचिदसम्भवाच्चेत्यपि द्रष्टव्यम् । तत्रोक्तप्रकारं दर्शयति—यदाहीति । जाग्रदादिषु भोगप्रदं यत् कर्म, तस्य क्षये सतीत्यर्थः । आदिपदं स्वप्नपरम् । बहुवचनं तु जाग्रत्स्वप्नव्यक्तिभेदापेक्षम् । निद्रारूपेणेति । सुषुप्तिरूपेणेत्यर्थः ।

तदुक्तं पञ्चीकरणे—

बोधे घनीभवति, तदा तदुपाधिको जीवः विज्ञानमय इत्युच्यते । स एव पूर्वं सुषुप्तिसमये विलीनावस्थोपाधिकः सन्नानन्दमय इत्युच्यते । स एव माण्डूक्ये "सुषुप्तस्थानः" इत्यादिना दर्शित इति । एवं सति तस्य सर्वेश्वरत्वादिवचनं कथं सङ्गच्छताम् ? ।

इत्थम् । सन्त्यधिदैवतमध्यात्मं च परमात्मनः सविशेषाणि त्रीणित्रीणि रूपाणि । तत्राधिदैवतं त्रीणि शुद्धचैतन्यं चेति चत्वारि रूपाणि चित्रपटदृष्टान्तेन चित्रदीपे समर्थितानि । यथा स्वतश्शुभ्रः पटो धौतः, अन्नलिप्तो घट्टितः, मष्यादिविकारयु-

---

'बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः' इति । आनन्दमयस्य जीवत्वे तस्येश्वरत्वप्रतिपादकवाक्यशेषविरोधं शङ्कते—एवं सतीति । सौषुप्तजीवरूपानन्दमयस्य वस्तुत ईश्वरत्वाभावेऽपि ईश्वराभेदविवक्षया तस्येश्वरत्ववचनं सङ्गच्छते इति परिहरति—इत्थमित्यादिना ।

माण्डूक्यश्रुतौ जीवेश्वरयोरभेदविवक्षां दर्शयितुं पीठिकां करोति—सन्तीति । परमात्मनः अधिदैवतं सविशेषाणि त्रीणि रूपाणि सन्ति, तथा परमात्मनोऽध्यात्मं च सविशेषाणि त्रीणि रूपाणि सन्तीति सम्बन्धः । परमात्मन इत्यस्य निर्विशेषचैतन्यस्येत्यर्थः । 'अधिदैवतम्' इत्यस्य देवतात्मकानीत्यर्थः । 'अध्यात्मम्' इत्यस्य च जीवात्मकानीत्यर्थः । 'अधिदैवतमध्यात्मम्' इति च पदद्वयमव्ययम् । उक्तं प्रपञ्चयति—तत्रेति । अध्यात्माधिदैवतरूपाणां मध्ये इत्यर्थः । जीवस्य त्रीणि सविशेषरूपाणि तुरीयपादात्मकं निर्विशेषरूपं च माण्डूक्यश्रुतौ कण्ठतो नोक्तानि । तानि तु श्रुतितात्पर्याभिज्ञैः श्रीविद्यारण्यगुरुभिः चित्रदीपे सदृष्टान्तं निरूपितानीत्याह—चित्रपटेति । तत्रायं दृष्टान्तसङ्ग्राहकश्लोकः—

स्वतश्शुभ्रोऽत्र धौतस्स्यात् घट्टितोऽन्नविलेपनात् ।
मष्याकारैर्लाञ्छितस्स्याद्रञ्जितो वर्णपूरणात् ॥ इति ।

एतच्छ्लोकसङ्गृहीतं दृष्टान्तं विवृणोति—यथेति ।

स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैष विराडित्युच्यते परः ॥ इति ।

क्तो लाञ्छितः, वर्णपूरितो रञ्जितः, इत्यवस्थाचतुष्टयमेकस्यैव चित्रपटस्य, तथा परमात्मा मायातत्कार्योपाधिरहितः शुद्धः, मायोपहित ईश्वरः, अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः, पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरोपहितो विराट् पुरुष इत्यवस्था(१)चतुष्टयमेकस्यैव परमात्मनः। अस्मिंश्च चित्रपट-

---

श्लोकसङ्गृहीतं दार्ष्टान्तिकं दर्शयति—तथेति। श्लोके परः स्वताश्चिदिति सम्बन्धः। अमुमंशं विवृणोति—परमात्मेति। श्लोके तुशब्दोऽवधारणे। तथा च पर एव मायावी सन् अन्तर्यामीत्युच्यते इति सम्बन्धः। अमुमंशमाह—मायोपहित ईश्वर इति। श्लोके पर एव सूक्ष्मसृष्टितस्सूत्रात्मेति सम्बन्धः। अमुमंशं व्याचष्टे—अपञ्चीकृतेति। अपञ्चीकृतानां भूतानां यत् कार्यं व्यापकं सूक्ष्मशरीरं, तदुपहित इत्यर्थः। न च सूत्रात्मनो हिरण्यगर्भशब्दितस्य श्रुतिस्मृत्योर्जीवत्वप्रसिद्धेः कथं तस्येश्वररूपत्वमिति वाच्यम्। जीवरूपहिरण्यगर्भस्य समष्टिसूक्ष्मशरीराभिमानविशिष्टस्य सत्यलोकस्वामिनः ईश्वरान्यत्वाभ्युपगमात्। ईश्वरस्य तु समष्टिसूक्ष्मशरीराभिमानाभावेऽपि समष्टिसूक्ष्मशरीरनियन्तृतया तदुपाधिकस्य समष्टिसूक्ष्मोपाध्युपहितत्वगुणयोगेन हिरण्यगर्भसूत्रात्मपदाभ्यां निर्देशस्य विवक्षितत्वात्। तथा च गौणमीश्वरस्य हिरण्यगर्भत्वमिति भावः। अत एव चित्रदीपे ईश्वररूपहिरण्यगर्भापेक्षया सत्यलोकाधिपतेर्ब्रह्मणस्तत्त्वद्वाद्यभिमतेश्वरगणनावसरे पृथगुपादानं मन्तव्यम्। श्लोके एष एव परः स्थूलसृष्ट्या विराडित्युच्यते इति सम्बन्धः। अमुमंशं व्याकुर्वन् सङ्गृह्णाति—पञ्चीकृतेति। अयमीश्वररूपो विराट्पुरुषः पुरुषसूक्तवैश्वानरविद्यावाक्यादिरूपश्रुतिसिद्धो द्रष्टव्यः। सत्यलोकाधिपतेर्हिरण्यगर्भस्य पुत्ररूपो विराट्पुरुषस्समष्टिस्थूलाभिमानी जीवो बृहदारण्यकश्रुतिसिद्धोऽन्य एवेत्यपि द्रष्टव्यम्। इत्यवस्थेति। उक्तप्रकारेण वस्तुत एकस्यैव रूपचतुष्टयं द्रष्टव्यमित्यर्थः। एवं प्रकृतोपयुक्तं रूपचतुष्टयं दर्शयित्वा प्रसङ्गादाह—अस्मिन्निति। ननु कृत्स्नस्य जगतः चित्रस्थानीयत्वे तद्वदेव सर्वमचेतनं स्यात्। तथा च चेतनाचेतनविभागो न स्यादिति शङ्कां

---

(१) भेदचतुष्टयमिति पाठः।

स्थानीये परमात्मनि चित्रस्थानीयः स्थावरजङ्गमात्मको निखिलः प्रपञ्चः। यथा चित्रगतमनुष्याणां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते, तथा परमात्माध्यस्तदेहिनामधिष्ठानचैतन्यसदृशाश्चिदाभासाः कल्प्यन्ते ते च जीवनामानः संसरन्तीति। अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन त्रीणि रूपाणि। तत्र सुषुप्तौ विलीने अन्तःकरणे अज्ञानमात्रसाक्षी प्राज्ञः, योऽयमिहानन्दमय उक्तः।

---

दृष्टान्तेन परिहरति—यथेति। वस्त्राभासा इति। वर्णविशेषात्मकवस्त्राणां चित्राधारेण वस्त्रेणाकृतिसाम्येऽपि शीतादिनिवर्तकत्वाभावादाभासत्वम्। देहिनामिति। स्थूलदेहवतामहङ्काराणामित्यर्थः। अन्तःकरणात्मकाहङ्कारेषु चैतन्यस्य प्रतिबिम्बकल्पनस्य प्रयोजनमाह—ते चेति। तथा च चिदाभासयुक्ताः कार्यकरणसङ्घाताश्चेतनाः, अन्ये गिरिसमुद्रादयोऽचेतना इति विभागसिद्धिरिति भावः। एवमीश्वरस्य रूपाणि दर्शितानि। जीवस्य श्रुत्युक्तानि सविशेषनिर्विशेषरूपाणि दर्शयति—अध्यात्मं त्विति। तुशब्दः ईश्वरस्य सविशेषरूपाण्यपेक्ष्य जीवस्य सविशेषरूपाणां वैलक्षण्यसूचनार्थः। तदेव वैलक्षण्यं दर्शयति—विश्वेति। रूपाणीति। सविशेषाणीति शेषः। तत्रेति। रूपत्रयमध्य इत्यर्थः। विलीने इति। अन्तःकरणे विलीने सति सूक्ष्मरूपेण विलीनान्तःकरणोपाधिकस्संपद्यत इति भावः। स्थूलान्तःकरणादिसाक्षित्वव्यवच्छेदार्थं मात्रग्रहणम्। ननु पूर्वं सौषुप्तजीव आनन्दमय इत्युक्तम्, इदानीं कथं स एव प्राज्ञ इत्युच्यते? तत्राह—योऽयमिति। इहेति। माण्डूक्यश्रुतावित्यर्थः। तत्रैव 'आनन्दभुक्' इत्यनन्तरं "चेतोमुखः प्राज्ञस्तृतीयः पादः" इतिवाक्यशेषदर्शनादिति भावः। चेतांसि चित्प्रतिबिम्बोपेतान्यविद्यावृत्तिरूपाणि मुखानि स्वापकालीनानन्दानुभवसाधनानि यस्य स चेतोमुखः। ननु सौषुप्तजीवस्यानन्दभुक्त्वं चेतोमुखत्वं च श्रुतमपि कथमुपपन्नमिति चेत्, उच्यते—सुषुप्तादुत्थितस्य हि 'सुखमस्वाप्सम्' इति स्वापकालीनविशिष्टसुखस्मरणं दृश्यते। तच्च तदा सुखानुभवमन्तरेण न सम्भवति। अननुभूतस्य सुखस्य स्मरणायोगात्। न च सुषुप्तावात्मस्वरूपसुखस्यान्तःकरणवृत्तिभिरेव अनुभवस्सम्भवतीति वाच्यम्। तदा विलीनस्यान्तःकरणस्य वृत्त्युत्पादनयोग्यत्वाभावात्। न च सुक्तिका-

स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानी तैजसः । जागरे व्यष्टिस्थूलशरीराभिमानी विश्वः । तत्र माण्डूक्यश्रुतिरहमनुभवे प्रकाशमानस्यात्मनो विश्वतैजसप्राज्ञतुर्यावस्थाभेदरूपं पादचतुष्टयं "सोऽयमात्मा चतुष्पात्" इत्युपक्षिप्य पूर्वपूर्वपादप्रविलापने-

---

ल इव स्वापकालेऽपि स्वरूपचैतन्येनैव सुखानुभवसम्भवात् किमविद्यावृत्तिप्रतिबिम्बरूपचेतःकल्पनयेति वाच्यम् । जाग्रत्स्वप्नयोश्चैतन्यप्रतिबिम्बोपेतवृत्तिभिरानन्दानुभवदर्शनेन सुषुप्तावपि तथासम्भवे परित्यागायोगाद । मुक्तिकाले चोपाधिमात्रविलयाभ्युगमाद वृत्त्यसम्भव इति वैषम्यसत्त्वाद । सौषुप्तसुखानुभवस्य केवलनित्यसाक्षिरूपत्वे अनुभवनाशरूपसंस्काराभावप्रसङ्गेन 'सुखमस्वाप्सम्' इत्यनुसन्धानाभावापत्तेश्च । तस्माद्यथोक्तार्था श्रुतिरुपपन्नैव । व्यष्टीति । परिच्छिन्नेत्यर्थः । एते पादास्साक्षाच्छ्रुत्युक्ता इत्याह—तत्रेति । उक्तरीत्या पादकल्पनोपपत्तौ सत्यामित्यर्थः । श्रुतिः पादचतुष्टयमुपक्रम्य विश्वादिपादान् न्यरूपयदिति सम्बन्धः । पद्यते गम्यते अवगम्यते ब्रह्मात्मैक्यमेभिरिति पादा विश्वादयः । इमां व्युत्पत्तिमभिप्रेत्य श्रौतपादकल्पनायाः प्रयोजनमाह—पूर्वपूर्वेति । अयमर्थः—"सोऽयमात्मा चतुष्पाद" इति वाक्येन जीवस्य पादचतुष्टयवत्त्वमुपक्रम्य "जागरितस्थानो वैश्वानरः प्रथमः पादः" इत्युक्तम् । अत्र जीवपादानामेव वक्तुमुपक्रान्तत्वात् 'विश्वः प्रथमः पादः' इति वक्तव्ये वैश्वानरशब्दितस्य विराट्पुरुषरूपेश्वरस्य प्रथमपादत्वोक्तिः विश्वे वैश्वानरस्यान्तर्भावं सूचयति । न च हिरण्यगर्भेश्वरौ विहाय वैश्वानरस्यैव विश्वान्तर्भावे किं नियामकं श्रुत्यभिमतमिति वाच्यम् । तयोस्स्थूलोपाधिकत्वरूपसाम्यस्य ईश्वरहिरण्यगर्भव्यावृत्तस्य नियामकतया विवक्षितत्वाद । तथा द्वितीयपादप्रतिपादकवाक्ये "स्वप्नस्थानस्तैजसो द्वितीयः पादः" इत्युक्तम् । अत्र सूक्ष्मोपाधिकत्वसाम्येन हिरण्यगर्भस्य तैजसे अन्तर्भावो विवक्षितः । "वैश्वानरः प्रथमः पादः" इत्युपक्रमानुसाराद । तथा तृतीयपादप्रतिपादकं "सुषुप्तस्थान एकीभूतः" इत्यादिवाक्यं प्रागेवोदाहृतम् । अत्रापि तृतीयपादत्वेनोक्ते प्राज्ञशब्दितानन्दमये सूक्ष्मतरोपाधिकत्वसामान्येन ईश्वरस्यान्तर्भावो विवक्षितः । तथा च वाक्यशेषस्य "एष सर्वेश्वरः" इत्यादेरानन्दमयेश्वरयोरभेदविवक्षया प्रवृत्तत्वान्नानुपपत्तिः । तथा

तुरीयपादप्रतिपादकमिदं वाक्यम्—"अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते" इति ।

अदृश्यं चक्षुराद्यविषयम्, अव्यवहार्यं प्रवृत्तिनिवृत्तिलक्षणव्यवहारागोचरम्, अग्राह्यं कर्मेन्द्रियागोचरम्, अलक्षणम् असाधारणधर्मशून्यम्, अचिन्त्यं शुष्कतर्कागोचरम्, अव्यपदेश्यं शब्दशक्त्यगोचरम्, एकात्मप्रत्ययसारम् एकादिपदचतुष्टयस्य कर्मधारयः । स्वगतभेदशून्यत्वमेकत्वम्, सर्वदेहेषु पूर्णत्वमात्मत्वम्, प्रत्ययत्वं चिद्रूपत्वम्, सारत्वम् आनन्दत्वम्, 'सार आनन्द इत्यर्थः' इत्यानन्दमयाधिकरण( उ०मी०अ० १ पा० १ अधि० ६ सू०१२)भाष्यात् । प्रपञ्चोपशमं प्रपञ्चाभावरूपम्, कल्पितपदार्थाभावस्याधिष्ठानानतिरेकात् । यद्वा प्रपञ्चध्वंसरूपम् । ज्ञानसाध्यायास्सकारणद्वैतनिवृत्तेरधिष्ठानात्मकताया वक्ष्यमाणत्वात् । शिवं शुद्धं सर्वदोषरहितम्, अद्वैतं द्वैतरहितम्, चतुर्थं विश्वतैजसप्राज्ञरूपपादत्रयापेक्षया चतुस्सङ्ख्यापूरकं पादम् मन्यन्ते चिन्तयन्तीति श्रुत्यर्थः । अत्र विश्वतैजसप्राज्ञलक्षणपादेषु वैश्वानरहिरण्यगर्भेश्वराणामन्तर्भाववचनं तैरेतेषामेकत्वचिन्तनपरम्, तथा विश्वादिपादानामोङ्कारावयवभूतमात्राणां चैकत्वचिन्तनमत्र विवक्षितम् । तथा च श्रुतिः—"पादा मात्रा मात्राश्च पादाः" इति । तथा गौडपादीयवचनमपि—

ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ॥ इति ।

'न संशयः' इत्यस्यायमभिप्रायः—विश्वादिपादानां मात्राणां च यावत्संशयनिवृत्ति एकत्वं चिन्तनीयमिति । मात्रास्वरूपं च श्रुत्यैव दर्शितम्—"अकार उकारो मकार इति" इति । एवं विश्वादिपादानां वैश्वानरादीनां मात्राणां चैकत्वचिन्तनं सर्वेषामेतेषां निष्प्रपञ्चब्रह्मात्मकतुर्यपादे चिन्मात्रे प्रविलापनार्थम् । तत्र चायं क्रमः—विश्ववैश्वानराकाराणामेकत्वं प्रथमं सञ्चिन्त्य पश्चात्तैजसहिरण्यगर्भोकाराणामेकत्वं चिन्तयेत् । तत ईश्वरप्राज्ञमकाराणामप्येकत्वं चिन्तयेत् । तथा चिन्ताक्रमेणैव प्रविलापयेत् । अकारादित्रयम् उकारे, उकारादित्रयं मकारे, मकारादित्रं चिन्मात्रे तुर्यपादे प्रविलापयेत् । चिन्मात्रे प्रविलाप्य च चित्तं तत्रैव स्थापयेत् । उकारादौ प्रविलापनं नाम—अकारादित्रयमुकारव्यतिरेकेण नास्तीत्याहार्यनिश्चयः । एवं प्रत्यहमुक्तप्रकारेण समाधिं कुर्वतो ब्रह्मसाक्षात्कारो भवति । ततश्च ब्रह्मप्राप्त्या कृतकृत्यतेति माण्डूक्यश्रुत्यभिप्रायः । इदं सर्वं माण्डूक्य-

श्रुतेस्सङ्ग्रहेण तात्पर्यकथनपरस्य भाष्यकृद्भिः कृतपञ्चीकरणस्य व्याख्यानरूपे वार्तिके सुरेश्वराचार्यैरभिहितम्—

अकारमात्रं विश्वस्स्यादुकारस्तैजसस्स्मृतः ॥
प्राज्ञो मकार इत्येवं परिपश्येत् क्रमेण तु ॥ ४७ ॥

अत्र विश्वादिषु वैश्वानरादीनामन्तर्भावं सिद्धं कृत्वा न पृथगुपादानं कृतमिति मन्तव्यम् ।

समाधिकालात् प्रागेवं विचिन्त्यातिप्रयत्नतः ॥
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत् ॥ ४८ ॥
अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ॥

पुरुषोऽत्र वैश्वानरः ।

उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ ४९ ॥

अत्र समष्टिसूक्ष्मशरीरनियन्तृतया तदुपहितः परमेश्वरस्सूक्ष्मशब्दार्थः ।

मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ॥

अत्रान्तर्यामी मायामात्रोपाधिकः कारणशब्दार्थः ।

चिदात्माहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ५० ॥
परमानन्दसन्दोहवासुदेवोऽहमोमिति ॥

'यतोऽहं चिदात्मावशेषितः, अतोऽहं नित्यशुद्धबुद्धादिरूपो वासुदेवः' इत्यर्थे अङ्गीकारात्मकः ओङ्कार इत्यर्थः । इतिशब्दश्चोत्तरश्लोकान्वयी ।

ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥ ५१ ॥

इत्युक्तप्रकारेण केवलं चिदात्मानमवशिष्टं ज्ञात्वा विवेचकं विलापकं तच्चित्तं साक्षिणि यथोक्ते वासुदेवे विलापयेत् स्थापयेदित्यर्थः ।

चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत् ॥
पूर्णबोधात्मनाऽऽसीनं पूर्णाचलसमुद्रवत् ॥ ५२ ॥

चिरकालं समाधिं कुर्यादिति वार्तिकार्थः ।

एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः ॥
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ ५३ ॥
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ॥
तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो भवेत् सदा ॥ ५४ ॥

यतः तत्त्वनिष्ठाव्यतिरिक्तं पुरुषार्थसाधनत्वेन लोकशास्त्रसिद्धं सर्वं कालत्रयेऽपि दुःखाविनाभूतम्, तस्मात् सर्वं विधिना सन्न्यस्य उ-

न निष्प्रपञ्चब्रह्मात्मकतुर्यपादप्रतिपत्तिसौकर्य्यार्थाय स्थूलसूक्ष्मसूक्ष्मतरोपाधिसाम्यात् विराडादीन् विश्वादिष्वन्तर्भाव्य "जागरितस्थानो बहिःप्रज्ञः" इत्यादिना विश्वादिपादान्न्यरूपयत् । अतः

---

क्तरीत्या तत्त्वनिष्ठां समाधिलक्षणां कुर्यादित्यर्थः । तदेवाह—

इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा ॥
समभ्यसेदिहामुत्र भोगानासक्तधीस्सुधीः ॥ ६४ ॥ इति ।

इमां समाधिलक्षणां विद्यां सुधीरास्तिकतमो विरक्तो भूत्वा सन्ध्यासूपक्रम्य सदाऽभ्यसेदित्यर्थः ।

यः पश्येत् सर्वगं शान्तमनन्तात्मानमद्वयम् ॥
न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वा ऽवशिष्यते ॥ ६९ ॥
कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत् सदा ॥
अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ॥
आनन्दममलं शुद्धं मनोवाचामगोचरम् ॥ ६१ ॥
वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ॥
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ॥ ६२ ॥ इति ।

आभासपदं चिदाभासपरम् । वाच्याः विश्वादयः । वाचकाः अकारादयः, प्रकृतत्वात् । हेयं दुःखम्, उपादेयं विषयसुखमित्यर्थः ।

तथा माण्डूक्यश्रुतौ समाधिनिष्ठाविवक्षामभिप्रेत्य गौडपादीयेऽप्युक्तम्—

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ इति सङ्क्षेपः ।

ननु श्रवणादिरूपेण साङ्ख्यमार्गेणैव तत्त्वप्रतिपत्तिसम्भवात् किं मुमुक्षोर्योगविधिनेत्यत आह—प्रतिपत्तिसौकर्यार्थेति । यस्य मुमुक्षोस्सन्न्यासिनः बुद्धिमान्द्याद्वा कौशलसत्त्वेऽपि न्यायव्युत्पादनकुशलाचार्याद्यभावाद्वा साङ्ख्यमार्गो न सम्भवति, इति तस्यानायासेन ब्रह्मतत्त्वप्रतिपत्तिसाधनतया बुद्धिपूर्वकप्रविलापनक्रमेण समाधिविधानं माण्डूक्यादौ उक्तम् । माण्डूक्यतापनीयपञ्चीकरणादौ विहितब्रह्मोपासनं प्रकृत्य ध्यानदीपे श्रीविद्यारण्यगुरुभिरधिकारी दर्शितः—

अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाऽप्यसम्भवात् ।
यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ ५४ ॥ इति ।

प्राज्ञशब्दिते आनन्दमये अव्याकृतस्येश्वरस्यान्तर्भावं विवक्षित्वा तस्य सर्वेश्वरत्वादितद्धर्मवचनमिति । इत्थमेव भगवत्पादैर्गौडपादीयविवरणे व्याख्यातम् ।

(वे०सू०मं० ) मायाछन्ने चिदाभासः कूटस्थे व्यावहारिकः ॥
तस्मिन्निद्रावृते तादृक् जीवोऽन्यः प्रातिभासिकः॥३८॥
जीवस्त्रिधैवं दृग्दृश्यविवेके प्रतिपादितः ॥
इत्येते दर्शिताः पक्षाः प्रतिबिम्बेशवादिनाम्॥३९॥

दृग्दृश्यविवेके तु चित्रदीपव्युत्पादितं कूटस्थं जीवकोटावन्तर्भाव्य चित्त्रैविध्यप्रक्रियैवालम्बितेति विशेषः ।

तत्र ह्युक्तं जलाशयतरङ्गबुद्बुदन्यायेनोपर्युपरि कल्पना-

---

अव्याकृतस्येति । अनभिव्यक्तजगद्वाचिना अव्याकृतपदेन लक्षणया परमेश्वरस्तत्र तत्र व्यवहृत इति कृत्वा तेन तन्निर्देशः कृतः । माण्डूक्यश्रुत्युक्तानन्दमयस्य ईश्वरत्ववचनं तदभेदविवक्षयेत्येतत् माण्डूक्यश्रुतिव्याख्यानरूपस्य गौडपादीयस्य विवरणरूपे भाष्ये भाष्यकारैरेवोक्तमित्याह—इत्थमेवेति ।

श्रीविद्यारण्यगुरुभिश्चित्रदीपे स्वोक्तं चिचातुर्विध्यं विहाय ग्रन्थान्तरे 'जीव ईशो विशुद्धा चित्' इति वृद्धवचनसिद्धं चित्त्रैविध्यमेवावलम्ब्य जीवस्य त्रैविध्याख्यो विशेष उक्त इत्याह—दृग्दृश्यविवेके त्विति । तुशब्द उक्तविशेषार्थकः । कूटस्थस्य जीवकोटावन्तर्भावमेव दर्शयति—तत्रेति । दृग्दृश्यविवेकाख्यग्रन्थे इत्यर्थः । हिशब्दः प्रसिद्धिद्योतकः । जलाशयतरङ्गेति । यथा समुद्रादिजलाशये तरङ्गा उपरिभावेन तिष्ठन्ति, तेषु चोपरिभावेन बुद्बुदास्तिष्ठन्ति इदं प्रसिद्धमिति हिशब्दार्थः । न्यायो दृष्टान्तः । एवं कूटस्थस्योपरि व्यावहारिकान्तःकरणप्रतिबिम्बरूपो यावद्व्यवहारमनुवर्तमानो व्यावहारिकजीवः कल्प्यते । तस्य चोपरिभावेन स्वप्नकाले वासनामयप्रातिभासिकरथादिवत् वासनामयान्तःकरणप्रतिबिम्बरूपः प्रातिभासिकजीवः कल्प्यते इत्यर्थः । तत्रेति । त्रिविधजीवमध्ये इत्यर्थः । अवच्छिन्न इति । देहद्वयावच्छिन्नकूटस्थचैतन्यरूप आत्मा पारमार्थिकजीव इत्यर्थः । 'अहं ब्रह्मास्मि' इति महावाक्येषु जीवब्रह्मणोरभेदः

जीवः त्रिविधः—पारमार्थिको, व्यावहारिकः, प्रातिभासिकश्चेति। तत्रावच्छिन्नः पारमार्थिको जीवः। तस्मिन्नवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य तस्याकल्पितत्वेन ब्रह्मणोऽभिन्नत्वात्। तमावृत्य स्थितायां मायायां कल्पितेऽन्तःकरणे चिदाभासोऽन्तःकरणतादात्म्यापत्त्या 'अहम्' इत्यभिमन्यमानो व्यावहारिकः, तस्य मायिकत्वेऽपि यावद्व्यवहारमनुवृत्तेः। स्वप्ने तमप्यावृत्य स्थितया

प्रतिपाद्यते। स च पारमार्थिकजीवकल्पने सति निर्वहति। अन्यथा व्यावहारिकप्रातिभासिकजीवयोश्शुक्तिरूप्यादिवत् स्वरूपतो मिथ्यात्वेन सत्यब्रह्माभेदायोगात्। देहद्वयावच्छिन्नकूटस्थरूपपारमार्थिकजीवस्य त्ववच्छेदकीभूतदेहद्वयस्य कल्पितत्वेऽपि स्वतस्सत्यत्वात् सम्भवति ब्रह्माभेद इति पारमार्थिकजीवकल्पनायाः प्रयोजनं दर्शयति—तस्मिन्निति। अवच्छिन्नजीव इत्यर्थः। व्यावहारिकजीवं निरूपयति—तमिति। कूटस्थमात्मानमावृत्याविद्यायां स्थितायां सत्यां कूटस्थात्मनि कल्पितं यदन्तःकरणं तत्र यश्चिदाभासः सः व्यावहारिकजीव इत्यर्थः। तदुक्तम्—

कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिम्बकः॥ २३॥ इति।

अहमित्यभिमन्यमान इति। अहमित्येवमाकारकाभिमानकर्तेत्यर्थः। नन्वहमाकारवृत्तिरूपेण परिणममानेऽन्तःकरणे एवाहमभिमानवत्त्वं युक्तं न तु चित्प्रतिबिम्बस्य, अत आह—अन्तःकरणेति। तस्य व्यावहारिकत्वे युक्तिमाह—तस्येति। न च व्यावहारिकजीवे मानाभावः इति वाच्यम्। 'अहं कर्ता भोक्ता' इत्यादिरूपाहमनुभवस्य तत्र मानत्वात्। कर्तृत्वभोक्तृत्वाद्यात्मकसंसाराश्रयत्वस्यान्यत्रायोगाच्च। न चान्तःकरणे तत्सम्भवः। तस्य चिदाभासशून्यस्य चेतनधर्मत्वेन प्रसिद्धकर्तृत्वाद्याश्रयत्वायोगात्। चिदाभासस्य तु चेतनात्मप्रतिबिम्बतया मिथ्याभूतस्यापि चेतनत्वव्यवहारयोग्यत्वेन तद्धर्माणां चेतनधर्मत्वप्रसिद्धिविरोधाभावात्। पारमार्थिकजीवस्य च संसाराश्रयत्वं न सम्भवति, तस्य कूटस्थत्वादिति भावः। तमपीति। व्यावहारिकजीवमपीत्यर्थः। व्यावहारिकजीवो हि जाग्रद्दशायामात्मानं ब्राह्मणं देवदत्तं यज्ञदत्तपुत्रं विष्णुभक्तं मन्यते। स्वाप्नजीवस्तु स्वप्नावस्थायामात्मानं क्षत्रियं विष्णुशर्मनामानं नारायणपुत्रं महादेवभक्तं मन्यते। अतो जाग्रज्जीवस्यावरणं सिद्धम्। प्रातिभासि-

मायावस्थाभेदरूपया निद्रया कल्पिते स्वाप्नदेहादावहमभिमानी प्रातिभासिकः । स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्जीवस्यापि प्रबोधे निवृत्तेरिति । एवमेते प्रतिबिम्बेश्वरवादिनां पक्षभेदा दर्शिताः ॥

(वे०सू०मं०) अविद्यायां चिदाभासो जीवो बिम्बचिदीश्वरः ॥
स्वातन्त्र्याद्युपपत्तेरित्याहुर्विवरणानुगाः ॥ ४० ॥

विवरणानुसारिणस्त्वाहुः—

त्रिभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ १ ॥

इति स्मृत्यैकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपाद-

---

कजीवकल्पकमाह—निद्रयेति । ननु मायायास्सर्वकल्पकत्वाभ्युपगमात् कथं निद्रायाः कल्पकत्वम् ? अपसिद्धान्तापत्तेरित्याशङ्क्य निद्रायास्तदवस्थारूपत्वाभ्युपगमान्नोक्तदोष इत्याशयेनाह—मायेति । न च निद्रायाः मायालक्षणाभावात् कथं तदवस्थाविशेषरूपत्वमिति वाच्यम् । आवरणविक्षेपशक्तिमत्त्वं हि मायालक्षणम् । तस्य लक्षणस्य जाग्रज्जीवावरिकायां स्वाप्नजगदात्मकविक्षेपकारिण्यां च निद्रायामक्षतत्वादिति भावः । प्रातिभासिकजीवकल्पनायाः प्रयोजनमाह—स्वाप्नदेहादाविति । व्यावहारिकजीवस्यावृतत्वेन स्वप्नकाले अहमभिमानकर्तृत्वासम्भवादिति भावः । तस्य प्रातिभासिकत्वे हेतुमाह—स्वप्नप्रपञ्चेनेति । प्रबोधकाले 'ब्राह्मणोऽहं, न क्षत्रियः' इत्यादिरूपेण बोधेन स्वप्नद्रष्टुः क्षत्रियादिरूपस्य बाधानुभवादिति भावः । ईश्वरविषये उक्तवक्ष्यमाणप्रकारभेदज्ञानार्थमुपसंहरति—एवमिति ।

बिम्बचैतन्यमेवेश्वरो, न प्रतिबिम्बविशेष इति वक्ष्यमाणविशेषार्थकस्तुशब्दः । त्रिभेदजनकत्वं जीवेश्वरभेदस्थितिप्रयोजकत्वं विवक्षितं, न तु यथाश्रुतम् । तद्भेदस्यानादित्वाभ्युपगमात् । आत्यन्तिकमिति । स्वापप्रलयादौ अज्ञानकार्यनाशेन तत्कारणाज्ञानस्यापि नाशोऽस्ति । परिणामपरिणामिनोरभेदात् । स चाज्ञाननाशो नात्यन्तिकः, पुनरुत्थानात् । मुक्तौ तु तत्त्वज्ञानेन स्वरूपेणापि नाशोऽस्ति । स चात्यन्तिकः, पुनरुत्थानाभावादिति मत्वा अज्ञाननाशस्यात्यन्तिकत्वं विशेषणं दत्तम् ।

-न्नात् विम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः, नोभयोरपि प्रतिविम्बभावेन। उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः। बिम्बस्थानीय ईश्वरः। तथा-

---

यद्वा जीवन्मुक्तिकाले अज्ञानस्यावरणांशेन नाशेऽपि विक्षेपभावादनात्यन्तिकस्य नाशः। विदेहमुक्तौ तु आत्यन्तिकोऽज्ञाननाश इति तदभिप्रायं तद्विशेषणमिति भावः। प्रतिबिम्बत्वायोगादिति। न च "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुत्या उभयोः प्रतिबिम्बत्वप्रतिपादनविरोध इति वाच्यम्। प्रतिबिम्बत्ववत् बिम्बत्वस्यापि कल्पिततया श्रुतिगताभासपदेन प्रतिबिम्बवत् बिम्बस्यापि ग्रहणोपपत्तेः। ननु लोके प्रतिबिम्बत्वविशिष्टमुखे मुखाभासत्वव्यवहारवत् बिम्बत्वविशिष्टमुखे तथा व्यवहाराभावादाभासपदं मुख्यवृत्त्या बिम्बचैतन्यं प्रतिपादयितुं न शक्नोतीति खलु प्रतिबिम्बवत् बिम्बस्यापि विशिष्टरूपेण कल्पिततया कल्पितत्वगुणयोगेन बिम्बपरमाभासपदं वक्तव्यम्। तच्च न सम्भवति। सकृदुच्चरितस्याभासपदस्य मुख्यवृत्त्या प्रतिबिम्बपरत्वं गुणवृत्त्या बिम्बपरत्वमिति कल्पनस्य व्युत्पत्तिविरुद्धत्वात्। न चाजहल्लक्षणया आभासपदस्य बिम्बप्रतिबिम्बोभयपरत्वाभ्युपगमे नायं विरोध इति वाच्यम्। उभयोरपि प्रतिबिम्बरूपतामादायाभासपदस्य मुख्यार्थपरत्वे सम्भवति लक्षणाकल्पनाया एव निर्मूलत्वादिति चेत्, उच्यते—यथाश्रुतं जीवेशयोरुभयोरपि प्रतिबिम्बरूपत्वं न सम्भवति। बिम्बभूतचैतन्यस्य सूर्यवदेकत्वेन उपाधिभेदं विना प्रतिबिम्बद्वयासम्भवात्। न च "माया चाविद्या च स्वयमेव भवति" इति वाक्यशेषेण मायाऽविद्यारूपोपाधिद्वयप्रतिपादनात् न प्रतिबिम्बद्वयानुपपत्तिरिति वाच्यम्। तेन स्वयंशब्दोपात्तायाः प्रकृतमूलप्रकृतेर्मायात्वाविद्यात्वलक्षणरूपभेदप्रतिपादनेऽपि प्रतिबिम्बद्वयापेक्षितोपाधिद्वयाप्रतिपादनात्, मायाऽविद्ययोः स्वरूपतो भेदस्य सिद्धान्तविरुद्धत्वाच्च। तस्माद्यथाश्रुतासम्भवादेकस्यैवाज्ञानस्य जीवेशविभागप्रयोजकत्वप्रतिपादकस्मृत्यनुरोधाच्च "जीवेशावाभासेन करोति" इतिश्रुतावाभासपदमजहल्लक्षणया बिम्बप्रतिबिम्बोभयपरमिति विवरणानुसारिणामाशय इति। तत्रापीति। बिम्बप्रतिबिम्बयोरुभयोर्मध्येऽपीत्यर्थः। तत्र युक्तिमाह—तथा सत्येवेति। बिम्बचैतन्यस्यैवेश्वरत्वाभ्युपगमे सतीत्यर्थः। स्वातं-

सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य, तत्पारतन्त्र्यं जीवस्य च युज्यते ।

प्रतिबिम्बगताः पश्यन्नृजुवक्रादिविक्रियाः ॥
पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रियाः ॥ १ ॥

इति कल्पतरूक्तरीत्या 'लोकवत्तु लीलाकैवल्यम्' ( उ० मी० अ० २ पा० १ सू० ३३ ) इति सूत्रमपि सङ्गच्छते ।

---

न्त्र्यमिति । "एष सर्वेश्वर एष भूताधिपतिः" इत्यादिश्रुतिसिद्धमिति शेषः । तत्पारतन्त्र्यमिति । "एष ह्येव साधु कर्म कारयति" "य आत्मानमन्तरो यमयति" "ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" इत्यादिश्रुतिस्मृतिसिद्धमिति शेषः । लौकिकदृष्टान्तमेव कल्पतरुश्लोकोदाहरणेन दर्शयति—प्रतिबिम्बगता इति । यथा लोके कश्चित् पुरुषः स्वप्रतिबिम्बगताः ऋजुवक्रादिविक्रियाः बिम्बभूतस्वप्रयुक्ताः पश्यन् क्रीडति, तथा ब्रह्मापि जीवस्था विक्रियाः प्राणिकर्मानुसारेण स्वप्रयुक्ताः पश्यन् क्रीडतीति योजना । कल्पतरूक्तरीत्या ईश्वरस्य स्वातन्त्र्यप्रतिपत्त्युपयोगिन्या ईश्वरस्य स्वातन्त्र्यप्रतिपादकं सूत्रमपि सङ्गच्छते इत्यर्थः ।

सूत्रार्थस्तु—ईश्वरस्याप्तकामत्वेन प्रयोजनोद्देशाभावात् सृष्ट्यादिव्यापारेषु प्रवृत्तिर्न सम्भवतीति पूर्वपक्षव्यावृत्त्यर्थस्तुशब्दः । ईश्वरस्य सृष्ट्यादिप्रवृत्तिलक्षणक्रिया केवलं प्रयोजनोद्देशं विनैव लीला, लोकवत् । यथा लोके सार्वभौमादेस्सर्वैर्मानुषैः भोगैस्सम्पन्नस्य प्रयोजनाभिसन्धिं विनैव क्रीडा दृश्यते, तद्वत् ईश्वरस्य प्रयोजनोद्देशाभावेऽपि स्वभावादेव सृष्ट्यादिप्रवृत्तिरुपपद्यते । दृश्यते हि सुखोद्रेकानुभवप्रयुक्ता हासगानादिरूपा प्रयोजनोद्देशरहिता लीला प्राणिनां स्वाभाविकी । न हि तत्र प्रयोजनमपि सम्भावयितुं शक्यते । दुःखोद्रेके रोदनवत् सुखोद्रेके हासगानादेः प्रयोजनरहितस्य सर्वानुभवसिद्धत्वात् । अत एव हसितरुदितादिषु कारणमेव पृच्छन्ति न प्रयोजनम् । उक्तं च माण्डूक्यश्रुतौ—

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ इति ।

एष सृष्ट्यादिव्यापार इत्यर्थः । किं च स्वप्नसृष्टिवन्मायामयी प्रपञ्चसृष्टिरस्माभिरुपेयते । न च तत्र प्रयोजनप्रश्नो न्याय्यः । स्वप्नसृष्टौ प्रयोजनप्रश्नादर्शनादिति ।

अज्ञानप्रतिबिम्बितस्य जीवस्यान्तःकरणरूपोऽज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानं सर्वतः प्रसृतस्य सवितृप्रकाशस्य दर्पण इव । अतस्तस्य तदुपाधिकत्वव्यवहारोऽपि । नैतावताऽज्ञानोपाधिपरित्यागः । अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानत्वानुपपत्तेः ।

---

ननु यद्यज्ञानं जीवस्योपाधिः, तर्हि व्यर्थमन्तःकरणस्य जीवोपाधित्ववर्णनं सूत्रभाष्यादिषु, तत्राह—अज्ञानेति । विशेषाभिव्यक्तिस्थानमिति । अविद्याप्रतिबिम्बचैतन्यरूपस्य सुषुप्तिसाधारणस्य प्रमातृत्वकर्तृत्वभोक्तृत्वादिविशेषरूपेण या अभिव्यक्तिः उपलब्धिः तस्यास्स्थानमुपाधिरित्यर्थः । एतदुक्तं भवति—कर्तृत्वादिधर्माणां केवलाज्ञानपरिणामत्वाभावेन तदुपाधिमात्रात् न जीवस्य कर्तृत्वादिधर्मरूपविशेषलाभः, किं तु कर्तृत्वादिविशेषवदन्तःकरणतादात्म्याध्यासादेव तल्लाभ इति न तदुपाधित्वनिरूपणं व्यर्थमिति । अत इति । अन्तःकरणस्य विशेषाभिव्यक्तिस्थानत्वाभ्युपगमादित्यर्थः । व्यवहारोऽपीति । "कार्योपाधिरयं जीवः" इतिश्रुतौ, सूत्रभाष्यादिषु चेति शेषः ।

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ १ ॥

इति विष्णुपुराणवचने जीवस्याज्ञानोपाधिकत्वव्यवहारत्वादित्यपेरर्थः । ननु "कार्योपाधिरयं जीवः" इति श्रुतिबलादज्ञानोपाधिपरित्याग उचितः, कार्योपाधिकत्वविशेषणस्य कारणोपाधिकत्वव्यावर्तकत्वादित्याशङ्क्य स्मृतिविरोधात् न तस्य कारणोपाधिव्यावर्तकत्वमुपेयते इत्याशयेनाह—नैतावतेति । श्रुतौ कार्योपाधिकत्वविशेषणमात्रेणेत्यर्थः । ननु श्रुतिविरोधे स्मृतेरेवान्यथानयनमुचितम् । तन्नयनप्रकारश्चेत्थम्—स्मृतावज्ञानपदं तत्कार्यान्तःकरणपरम् । जीवोपाध्यन्तःकरणस्य नानात्वेऽप्यज्ञानम् इत्येकवचनं जात्यभिप्रायम् । तथा चान्तःकरणावच्छिन्न आत्मा जीवः, तदनवच्छिन्न आत्मा ईश्वर इति जीवब्रह्मविभागप्रयोजकमन्तःकरणमिति स्मृत्यर्थो भविष्यति इति इमामाशङ्कां निवर्तयितुं कार्योपाधिमात्रस्य जीवत्वोपाधित्वं निराकरोति—अन्तःकरणोपाधिपरिच्छिन्नस्यैवेति ।

न च योगप्रभावाद्योगिनोऽन्तःकरणं कायव्यूहाभिव्यक्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यते इति वाच्यम्। 'प्रदीपवदावेशस्तथाहि दर्शयति'(उ.मी.अ.४पा.४सू.१५) इति शास्त्रोपान्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादिवत् भिन्नस्यैव योगप्रभावात् सृष्टेरुपवर्णनात्।

---

नाज्ञानोपाधिकस्येत्येवकारार्थः। अनुपपत्तेरिति। कायव्यूहाधिष्ठानत्वं हि युगपदनेकशरीरनियन्तृत्वम्। तच्च योगिनो योगप्रभावात् निर्मितेषु सर्वशरीरेषु युगपदवस्थितस्य वक्तव्यम्। न चान्तःकरणावच्छिन्नचैतन्यरूपस्य योगिनस्तत् सम्भवति। तस्य परिच्छिन्नत्वात्। अज्ञानस्य जीवोपाधित्वे तु तत् सम्भवति, तस्य व्यापकत्वेन तदुपाधिकस्य योगिजीवस्य युगपत् सर्वशरीरेषु सन्निधानोपपत्तेः। तथा च श्रुत्यपेक्षया स्मृतेर्दुर्बलत्वेऽपि कायव्यूहाधिष्ठानत्वानुपपत्तिसहितस्मृतेर्बलवत्त्वात् तदनुरोधेन "कार्योपाधिरयं जीवः" इति श्रुतौ कार्योपाधिपदं स्वरूपकथनमात्रपरम्, न कारणोपाधिव्यावर्तकविशेषणपरमिति भावः। वैपुल्यमिति। व्यापकत्वमित्यर्थः। अधिष्ठानत्वमिति। प्रेरकत्वमित्यर्थः। प्रदीपवदिति। यथा एकस्य प्रदीपस्य अनेकवर्तिष्वावेशः, तथा योगिनो योगप्रभावादनेकेष्वेकदा आवेशः। यद्यपि प्रदीपस्य वर्त्यविष्टदीपानां च भेदोऽस्ति, योगिनस्तु सर्वदेहेष्वैक्यमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमस्ति, तथापि दीपत्वजात्यभेदं व्यक्तिष्वारोप्य तयोस्सङ्गतिरत्रगन्तव्या। तथा हि दर्शयति श्रुतिः एकस्य योगिनोऽनेकधाभावम्—"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा" इत्यादिका। न च योगिनो युगपदनेकशरीरेष्ववस्थानमन्तरेण श्रुतिसिद्धानेकधाभाव उपपद्यते इति सूत्रार्थः।

सृष्टेरुपवर्णनादिति। तथा च एकस्यैवान्तःकरणस्य कायव्यूहाभिव्यक्तियोग्यवैपुल्याभ्युपगमे भाष्यादिविरोध इति भावः। अत्र यद्यपि योगिनो निजसिद्धान्तःकरणमेव योगप्रभावाद्वैपुल्यं प्राप्य स्वावच्छिन्नचैतन्यस्वरूपस्य योगिनः कायव्यूहाधिष्ठानभोगादिकं घटयति इत्येव भाष्यादीनां तात्पर्यं वक्तुमुचितम्, न तु यथाश्रुतनानाऽन्तःकरणसर्गे, आगन्तुकानेका-

प्रतिबिम्बे बिम्बात् भेदमात्रस्याध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वान्न प्रतिबिम्बरूपजीवस्य मुक्त्यन्वयासम्भव इति न तद-तिरेकेण मुक्त्यन्वयायावच्छिन्नरूपजीवान्तरं वा प्रतिबिम्बजीवा-

---

न्तःकरणसृष्ट्युपगमे असत्कार्यवादापाताव् कल्पनागौरवाच्च । हिरण्यगर्भा-दीनां योगप्रभावादेवाण्डव्यापिसमष्ट्यन्तःकरणाभ्युपगमाच्च । न हि हि-रण्यगर्भादीनां पूर्वजन्मनि यजमानावस्थायां तदीयान्तःकरणानां व्यापित्वे प्रमाणमस्ति । तथा सत्यस्मदाद्यन्तःकरणानामपि व्यापित्वापत्तेः । भाष्या-दिषु अन्तःकरणसृष्टिवर्णनस्य मतान्तराभिप्रायत्वोपपत्तेश्च । 'एवैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया' इति भाष्ये एव मतान्तरोपदर्श-नाव । योगशास्त्रेष्वेव च एषा प्रक्रियेति एवकारान्वयोपपत्तेः । तथा ऽपि शास्त्रोपान्त्याधिकरणयथाश्रुतभाष्याद्यभिप्रायेणेदं दूषणमिति मन्तव्यम् ।

वस्तुतस्तु अन्तःकरणावच्छिन्नचैतन्यं जीवः,तदनवच्छिन्नमीश्वर इति पक्षे अण्डान्तर्गतचैतन्यस्य सर्वात्मना तदवच्छेदादनवच्छिन्नचैतन्यरूपेश्वरस्याण्डाव बहिरेव सत्त्वं स्यादिति वक्ष्यमाणदूषणे तात्पर्यम् । यदि चानवच्छिन्नचैतन्य-मीश्वर इत्यनेन निरुपाधिकं चैतन्यमीश्वर इति विवक्षितम्, तदा तस्य सर्वत्र स-त्त्वेनाण्डाव बहिरसत्त्वापत्तिदोषाभावेऽपि "कारणोपाधिरीश्वरः" इति श्रुति-विरोधदोषो दुर्वारः । तस्माव कारणोपाधिकत्वमीश्वरवज्जीवस्याप्युपगन्त-व्यम्, स्मृत्यनुसारादिति स्थितम् ।

यत्तु चित्रदीपे प्रतिविम्बचैतन्यरूपजीवस्य स्वरूपतो मिथ्यात्वात्तस्य मुक्त्यन्वयायोग इति तदन्वययोग्यं कूटस्थनामकं जीवेश्वरविलक्षणं किञ्चिचै-तन्यं परिकल्प्य चिच्चातुर्विध्यं दर्शितम् ।

यदपि च दृग्दृश्यविवेके प्रतिविम्बमिथ्यात्वमेवाश्रित्य मुक्त्यन्वयायाव-च्छिन्नचैतन्यस्य पारमार्थिकजीवत्वं कल्पितम्, तदुभयमप्ययुक्तम् । विम्बप्र-तिविम्बयोर्भेदमात्रस्य कल्पिततया स्वतस्तयोर्भेदे मानाभावादित्याशयेना-ह—प्रतिबिम्बे बिम्बादिति । स्वरूपस्य कल्पितत्वव्यवच्छेदो मात्र-शब्दार्थः । न तदतिरेकेणेति । प्रतिविम्बजीवातिरेकेण जीवान्तरं वा कूट-स्थशब्दितं चैतन्यान्तरं वा न कल्पनीयमिति सम्बन्धः । एवं व्यावहारिकजीवा-तिरेकेण प्रातिभासिकजीवोऽपि न कल्पनीयः, प्रमाणाभावाव । न च व्याव-

तिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं वा कल्पनीयम् । "अविनाशी वा अरेऽयमात्मा" इति श्रवणं जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यती-

---

हारिकजीवस्य स्वप्नकाले आवृतत्वेन तस्य तदा व्यवहर्तृत्वानुपपत्तिः तत्कल्पने प्रमाणमिति वाच्यम् । जीवचैतन्ये आवरणाभावस्य साक्षिनिरूपणावसरे वक्ष्यमाणत्वेन जाग्रज्जीवस्यैव स्वप्नेऽपि व्यवहारकर्तृत्वोपपत्तेः । 'योऽहं स्वप्ने श्रीकृष्णमद्राक्षम्, स एवेदानीं जाग्रन् पुनस्तं स्मरामि' इति जाग्रत्स्वप्नद्रष्ट्रोरभेदप्रत्यभिज्ञानाच्च । संस्कारोद्बोधाभावादिकारणवशादेव कदाचित् ब्राह्मणत्वाद्यप्रतीत्युपपत्तेश्च । न च स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्बाधदर्शनं प्रातिभासिकजीवकल्पने प्रमाणमिति वाच्यम् । प्रबोधकाले 'नाहं क्षत्रियः' इत्यादिरूपबाधकप्रत्ययस्यात्मन्यारोपितक्षत्रियत्वादिमात्रबाधकत्वेन स्वप्नद्रष्टुर्बाधकत्वाभावात् । अन्यथा पूर्वोदाहृतद्रष्ट्रैक्यप्रत्यभिज्ञानविरोधात् । तस्मात् प्रातिभासिकजीवकल्पनमपि प्रामाणिकं न भवतीति बोध्यम् ।

यदपि चित्चातुर्विध्यवादिभिरुक्तम्,—"तान्येवानु विनश्यति" "अविनाशी वा अरेऽयमात्मा" इति वाक्याभ्यां प्रकृते प्रज्ञानघनात्मनि विनाशित्वाविनाशित्वरूपविरुद्धधर्मद्वयप्रतिपादनात्तदुपपत्तये विनाशिप्रतिबिम्बव्यतिरेकेण विनाशरहितकूटस्थचैतन्यं सिध्यतीति तदपि मन्दम् । अविद्याप्रतिबिम्बचैतन्यरूपे जीवे एव प्रतिबिम्बत्वरूपविशेषणांशनाशाभिप्रायेण विनाशवचनस्य विशेष्यचैतन्यांशाभिप्रायेण विनाशाभावप्रतिपादकवचनस्य चोपपत्तौ धर्मिभेदकल्पनस्य गौरवपराहतत्वादित्याशयेनाह—अविनाशी वेति । नन्वविद्याप्रतिबिम्बो जीवः, तद्बिम्ब ईश्वरः । बिम्बप्रतिबिम्बानुगतं चैतन्यं शुद्धचैतन्यमिति विवरणपक्षे देहद्वयोपादानतया तदवच्छिन्नस्य पारमार्थिकजीवनामकतया कूटस्थनामकतया च चित्चातुर्विध्यवादिभिरङ्गीकृतस्य चैतन्यस्य कुत्रान्तर्भाव उपेयते । न तावज्जीवे, शुद्धचैतन्ये वाऽन्तर्भावस्सम्भवति । तयोरुपादानत्वाभावेन देहद्वयोपादानकूटस्थस्य तयोरन्तर्भावायोगात् । नापि बिम्बभूतेश्वरे तस्यान्तर्भावस्सम्भवति । ईश्वरस्य जीवतदुपाध्यन्तःकरणादिसन्निहिततया देहादिविकारेष्ववस्थाने प्रमाणाभावात् कूटस्थनामकचैत-

त्येतत्परम्, न तदतिरिक्तकूटस्थनामकचैतन्यान्तरपरम्। जीवोपाधिना अन्तःकरणादिनाऽवच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव। "यो विज्ञाने तिष्ठन्" इत्यादिश्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावेन विकारान्तरावस्थानश्रवणादिति॥

---

न्यस्य च कूटस्थवादिभिस्तथात्वाङ्गीकारादित्यत आह—जीवोपाधिनेति। अविद्याप्रतिबिम्बरूपजीवस्य विशेषाभिव्यक्तिप्रयोजकोपाधिनेत्यर्थः। प्राणचक्षुरादिकमादिपदार्थः। ईश्वर एवेति। न शुद्धं ब्रह्म, नापि प्रतिबिम्बरूपजीवः इत्येवकारार्थः। चेतनाचेतनात्मकनिखिलप्रपञ्चोपादानत्वप्रतिपादकश्रुतिस्मृतिसहस्रस्य बिम्बभूतेश्वरस्य देहाद्युपादानतया देहादिविकारेष्वन्तरवस्थाने प्रमाणत्वात् कूटस्थस्य च ततो भेदे मानाभावादिति भावः। न केवलमुपादानत्वप्रतिपादकशास्त्रमेव तत्र प्रमाणम्, किं तु चेतनाचेतनात्मकसकलजगन्नियन्तृत्वप्रतिपादकमन्तर्यामिब्राह्मणमपि बिम्बभूतेश्वरस्य विकारेष्वन्तरवस्थाने प्रमाणमित्याह—यो विज्ञाने तिष्ठन्नित्यादिश्रुत्येति। "विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति" इत्यादि वाक्यमादिपदेन गृह्यते। अत्र विज्ञानपदं जीवपरम्। बृहदारण्यके माध्यन्दिनपाठे "य आत्मनि तिष्ठन्" इति पर्यायस्थाने काण्वपाठे "यो विज्ञाने तिष्ठन्" इति पर्यायाम्नानदर्शनेन काण्वपाठे विज्ञानपदस्य आत्मपदसमानार्थकत्वावगमात्। आत्मपदं चात्र जीवपरम्। तस्य तत्र रूढत्वात्। आत्मपदस्य जीवेश्वरसाधारणत्वेऽपि नियम्यत्वलिङ्गेन प्रकृते जीवपरत्वावश्यम्भावादिति भावः। जीवसन्निधानेनेति। ईश्वरस्य जीवादिनियन्तृत्वं हि व्यवहितराजादेः प्रजानियन्तृत्ववत् न भवति, किं तु नियम्यजीवादिसन्निधानेनैव। "य आत्मनि तिष्ठन्" इति सन्निधानप्रतीतेरित्यर्थः। अन्तर्यामिब्राह्मणवाक्यग्रहणं स्मृतेरप्युपलक्षणम्। तथा च भगवद्गीतास्मृतिः—

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥ (अ०१८ श्लो०६१) इति।

भूतानि प्राणिनः। यन्त्रं शरीरम्। तदारूढत्वं तत्र अहंममाभिमानवत्त्वम्। भ्रामयन्निति। कर्मानुसारेण प्रवर्तयन्निवर्तयंश्चेत्यर्थः। ईश्वरस्य

(वे०सू०भं०) घटसंवृतमित्यादिश्रुतिस्मृतिसमाश्रयात् ॥
अन्येऽन्तःकरणेनावच्छिन्नं जीवं बभाषिरे ॥ ४१ ॥

अन्ये तु—रूपानुपहितप्रतिबिम्बो न युक्तः सुतरां नीरूपे। गगनप्रतिबिम्बोदाहरणमप्ययुक्तम्। गगनाभोगव्यापिनि सवि-

---

नियन्तृत्वं मायोपाधिकमेव, न वास्तवमित्याशयेन माययेत्युक्तम्।

एवं चैतन्यस्य प्रतिबिम्बत्वमुपगच्छतां मतभेदेन जीवेश्वरविभागो दर्शितः। इदानीं तमनभ्युपगन्तॄणां मतेन जीवादिस्वरूपं दर्शयितुं चैतन्यस्य प्रतिबिम्बं निराकरोति—अन्ये त्विति। रूपानुपहितेति। लोके रूपवत एव चन्द्रादेः प्रतिबिम्बो दृश्यते, न रूपरहितस्य वाय्वादेरिति व्याप्तिदर्शनात् नीरूपचैतन्यस्य प्रतिबिम्बासम्भव इत्यर्थः। इतश्च चैतन्यस्य न प्रतिबिम्बसम्भव इत्याह—सुतरां नीरूपे इति। अविद्यान्तःकरणादाविति शेषः। 'रूपवत एव द्रव्यस्य प्रतिबिम्बः' इति नियमस्य वक्ष्यमाणरीत्या गगने व्यभिचारसत्त्वेऽपि 'रूपवत्येवोपाधौ प्रतिबिम्बः' इति नियमस्य न क्वचिदपि व्यभिचार इति मत्वा सुतरामित्युक्तम्। ननु नीरूपगगनस्य कूपजलतडागादौ प्रतिबिम्बानुभवात् 'नीरूपद्रव्यस्य प्रतिबिम्बाभावः' इति नियमो नास्तीत्याशङ्क्याह—गगनेति। कूपजलादौ तावदालोकप्रतिबिम्बस्सम्प्रतिपन्नः। तस्मिन् गगनप्रतिबिम्बत्वभ्रमो लोकानामिति कल्प्यते। न तु वस्तुतस्तत्र गगनप्रतिबिम्बोऽस्ति, उक्तनियमविरोधात्। भ्रमप्रयोजकदोषमाह—गगनाभोगव्यापिनीति। आभोगो विस्तारः। गगनोपरिभागे व्याप्य वर्तमानस्य सवितृकिरणमण्डलादेर्जले प्रतिबिम्बदर्शनात्तदनुगतगगनस्य जले प्रतिबिम्बभ्रम इत्यर्थः। ननु यथा बहिः 'नीलं नभः, विशालं नभः' इत्यादिरूपेण गगनमनुभूयते, एवं कूपतडागादिजलेऽपि 'नीलं नभः विशालं नभः' इत्यादिरूपोऽनुभवस्सर्वसम्प्रतिपन्नः। न च कूपजलादौ प्रतीयमानवैशाल्यादियुक्तं नभो वस्तुतोऽस्ति। अतः प्रतिबिम्बरूपमेव तत्र दृश्यमानं नभ इति वक्तव्यम्। ततश्च कथं गगनप्रतिबिम्बापलापः क्रियते। न च नीरूपस्य प्रतिबिम्बासम्भव इति वाच्यम्। रूपसङ्ख्यापरिमाणादेर्नीरूपस्यापि प्रतिबिम्बदर्शनात्। न च द्रव्यत्वमपि विशेषणं विवक्षितमिति वाच्यम्। सिद्धान्ते द्रव्यगुणादिपरिभाषाया अनभ्युपगमात्। तदभ्युपगमेऽपि गगनप्रतिबिम्बानुभवानुरोधेन रूपोपहितद्रव्यस्य प्रतिबिम्बः

त्किरणमण्डले सलिले प्रतिबिम्बिते गगनप्रतिबिम्बत्वव्यवहारस्य भ्रममात्रमूलकत्वात्।

ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तः। व्यञ्जकतया सन्निधानमात्रेण ध्वनिधर्माणामुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तेः ध्वनेर्वर्णप्रतिबिम्बग्राहित्व(१)कल्पनाया निष्प्रमाणकत्वात्।

प्रतिध्वनिरपि न पूर्वशब्दप्रतिबिम्बः। पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रति-

---

तदुपहितत्वं च वस्तुतः स्वगतरूपेण स्वस्मिन्नारोपितरूपेण वेति नियमकल्पनोपपत्तेश्च। तथा च वहिरारोपितनैल्यादिविशिष्टगगनस्य जलादौ प्रतिविम्बाभ्युपगमे न किञ्चित् बाधकम्। न च जलादौ संप्रतिपन्नालोकप्रतिविम्बातिरिक्तगगनप्रतिबिम्बाभ्युपगमे गौरवमेव बाधकमिति वाच्यम्। आलोकप्रतिविम्बे गगनप्रतिविम्बत्वभ्रमाभ्युपगमेऽपि तद्भ्रमविषयस्य आलोकप्रतिविम्बाधिकरणकस्य शुक्तिरूप्यादिवदनिर्वचनीयस्य गगनप्रतिविम्बत्वस्याभ्युपगन्तव्यत्वेन तुल्यत्वात्, अनुभवानुसारिगौरवस्यादोषत्वाच्च। तस्माद्रूपवत एव द्रव्यस्य प्रतिविम्ब इति नियमस्य गगनप्रतिविम्बस्थले व्यभिचारो दुर्वार इति चेत्, सत्यम्। तथापि चैतन्यस्य प्रतिविम्बो न सम्भवति। नीरूपान्तःकरणादेः प्रतिविम्बोपाधित्वासम्भवादित्यत्रैव तात्पर्यम्।

ननु नीरूपेऽपि ध्वनौ नीरूपद्रव्यात्मकवर्णानां प्रतिविम्बोऽस्तीति वक्तव्यम्। तथासत्येव दर्पणश्यामताया दर्पणगतप्रतिविम्बद्वारेण विम्बमुख इव ध्वनिगतानां तारत्वादीनां ध्वनिगतवर्णप्रतिबिम्बद्वारा वर्णेष्वारोपस्सम्भवति, नान्यथा। एवं नीरूपान्तःकरणादौ नीरूपात्मनः प्रतिविम्बसम्भव इत्याशङ्क्य दृष्टान्तं विघटयति—ध्वनाविति।

ननु पटहाख्यवाद्यविशेषादिशब्दोत्पत्तिकाले पाषाणविशेषादिसन्निहिताकाशप्रदेशेषु प्रतिध्वनिश्श्रूयते। स पूर्वशब्दप्रतिविम्ब एव, न मुख्यध्वनिः। तदुत्पत्तौ कारणाभावात्। तथा च यथा नीरूपाकाशप्रदेशेषु नीरूपध्वनेः प्रतिध्वनिरूपः प्रतिविम्बः, तथा प्रकृते किं न स्यादिति नेत्याह—प्रतिध्वनिरपीति। न च प्रतिध्वनेरुत्पादकाभावश्शङ्कनीयः।

---

१ प्रतिबिम्बोपाधित्वेति पाठः।

ध्वनेरेवाकाशशब्दत्वेन तस्यान्यशब्दप्रतिबिम्बत्वायोगात् । वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः । वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वनेर्मूलध्वानिवदेव वर्णाभिव्यञ्जकत्वेनोपपत्तेः । तस्मात् घटाकाशवदन्तःकरणावच्छिन्नंचैतन्यं जीवः । तदनवच्छिन्नम् ईश्वरः ।

नचैवमण्डान्तर्वर्तिनश्चैतन्यस्य तत्तदन्तःकरणोपाधिभिः सर्वात्मना जीवभावेनावच्छेदात् तदवच्छेदरहितचैतन्यरूपस्येश्वरस्याण्डात् बहिरेव सत्त्वं स्यादिति "यो विज्ञाने तिष्ठन्" इत्यादावन्तर्यामिभावेन विकारान्तरावस्थानश्रवणं विरुध्येत ।

---

आकाशस्यैवोपादानस्य सत्त्वात्, पूर्वशब्दस्य निमित्तकारणस्य सत्त्वाच्च । न च प्रतिध्वनेः प्रतिबिम्बत्वेऽप्याकाशगुणत्वं किं न स्यादिति वाच्यम् । बिम्बप्रतिबिम्बयोर्भेदपक्षे प्रतिध्वनिरूपप्रतिबिम्बस्य प्रातिभासिकत्वेन व्यावहारिकगुणत्वानुपपत्तेः । तदभेदपक्षे बिम्बभूतपृथिव्यादिशब्दापेक्षया प्रतिध्वनिरूपप्रतिबिम्बस्य भेदाभावेन तस्याकाशगुणत्वानुपपत्तेरिति भावः । ननु वर्णरूपप्रतिशब्दस्य वर्णप्रतिबिम्बत्वमवश्यं वाच्यम्, न तु साक्षाद्वर्णरूपत्वम् । प्रतिवर्णाभिव्यक्तिस्थले वर्णव्यञ्जककण्ठताल्वादेरभावात् । तथा च यथा तत्र पर्वतगुहादिसन्निहितेषु नीरूपेष्वाकाशप्रदेशेषु नीरूपाणां वर्णानां प्रतिबिम्बः, तथा प्रकृते किं न स्यादिति नेत्याह—वर्णरूपप्रतिशब्दोऽपीति । प्रतिध्वनिवदित्यपिशब्दार्थः । कण्ठताल्वादिस्थलेऽपि न कण्ठादेर्वर्णव्यञ्जकत्वम्, किं तु कण्ठाद्यभिघातजन्यध्वनेः । तथा च यथा मूलध्वनिर्वर्णव्यञ्जकः, एवं प्रतिवर्णाभिव्यक्तिस्थले उत्पन्नः प्रतिध्वनिरेव तत्र वर्णानां व्यञ्जकः सम्भवतीति न प्रतिवर्णानां प्रतिबिम्बरूपत्वमभ्युपगन्तव्यमित्यर्थः । चैतन्यप्रतिबिम्बनिराकरणमुपसंहरति—तस्मादिति । चैतन्यप्रतिबिम्बासम्भवादित्यर्थः । अन्तःकरणानवच्छिन्नचैतन्यस्येश्वरत्वे अन्तःकरणादिषु सर्वविकारेषु परमेश्वरस्यान्तर्यामिभावेनावस्थानप्रतिपादकश्रुतिविरोधं शङ्कते—न चैवमिति । विरुध्येतेति । तथा च श्रुतिविरोधपरिहाराय प्रतिबिम्बपक्ष एव स्वीकर्तव्य इति भावः । प्रतिबिम्बपक्षाश्रयणेऽपि श्रुतिविरोध-

प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनात् एकत्र द्विगुणीकृत्य वृत्तिरुपपद्यते इति वाच्यम् । यतः प्रतिबिम्बपक्षेऽप्युपाध्यनन्तर्गतस्यैव चैतन्यस्य तत्र प्रतिबिम्बो वाच्यः, न तु जलचन्द्रन्यायेन कृत्स्नप्रतिबिम्बः । तदन्तर्गतभागस्य तत्र प्रतिबिम्बासम्भवात् । न हि मेघावच्छिन्नस्याकाशस्यालोकस्य वा जले प्रतिबिम्बवत् जलान्तर्गतस्यापि तत्र प्रतिबिम्बो दृश्यते । नं वा मुखादीनां बहिःस्थितिसमये इव जलान्तर्निमज्जनेऽपि प्रतिबिम्बोऽस्ति । अतो जलप्रतिबिम्बं प्रति मेघाकाशादेरिवान्तःकरणाद्युपाधिप्रतिबिम्बं प्रति तदनन्तर्गतस्यैव बिम्बत्वं स्यादिति बिम्बभूतस्य विकारान्तरवस्थानायोगात् ईश्वरे अन्तर्यामिब्राह्मणाञ्जस्याभावस्तुल्यः ।

---

माशङ्क्याह—प्रतिबिम्बपक्षे त्विति । तुशब्दसूचितं विशेषमेव दर्शयति—जलगतेति । द्विगुणीकृत्येति । प्रतिबिम्बरूपजीवभावेन तत्तदुपाध्यन्तर्यामिभावेन चेत्यर्थः । प्रतिबिम्बपक्षेऽपि अन्तर्यामिब्राह्मणविरोधो दुष्परिहर इत्याह—यत इति । यतः ईश्वरेऽन्तर्यामिब्राह्मणाञ्जस्याभावस्तुल्यः, अतो न च वाच्यमिति सम्बन्धः । तत्रेति । अन्तःकरणादावित्यर्थः । ननु यथा जले कृत्स्नस्य चन्द्रमण्डलस्य प्रतिबिम्बः, तथा कृत्स्नस्यैव चैतन्यस्यान्तःकरणादौ प्रतिबिम्बोऽस्तु, न तूपाध्यनन्तर्गतचैतन्यभागस्याण्डाद्बहिर्भूतस्य । तथा च बिम्बभूतेश्वरस्याण्डान्तरेऽपि सत्त्वान्नान्तर्यामिब्राह्मणविरोधतौल्यमिति, नेत्याह—न त्विति । असम्भवमेव दर्शयति—न हीति । आलोकस्य वेति । बहिःस्थितस्येति शेषः । जलान्तर्गतस्यापीति । आकाशादेरित्यनुषङ्गः । तत्रेति । जलादावित्यर्थः । उदाहरणान्तरमाह—न वेति । ततः किम् ? तत्राह—अत इति । उपाध्यन्तर्गतभागस्य तत्र प्रतिबिम्बासम्भवादित्यर्थः । तदनन्तर्गतस्यैवेति । चैतन्यस्येति शेषः । दृष्टानुरोधित्वात् कल्पनाया इति भावः । विकारान्तरिति । अण्डान्तर्गतचैतन्यभागस्य उपाध्यन्तर्गतत्वात् तद्बहिस्स्थितस्यैव चैतन्यस्य बि-

---

( १ ) सामञ्जस्येति पाठः ।

न्त्वतं वाच्यमिति बिम्बभूतेश्वरोऽप्यण्डाद् बहिरेव स्यादित्यर्थः । यदि च प्रतिबिम्बपक्षे ईश्वरस्य सर्वान्तर्यामित्वप्रतिपादकश्रुत्याद्यनुसारेण लोकदृष्टिमनादृत्य कृत्स्नचैतन्यप्रतिबिम्बमुपेत्यान्तर्यामिब्राह्मणाञ्जस्यमुपपाद्यते, तदा 'अनवच्छिन्नचैतन्यमीश्वरः' इति पक्षेऽपि 'अन्तःकरणाभावावच्छिन्नचैतन्यमीश्वरः' इति विवक्षितम् । अन्तःकरणस्य कल्पितत्वेन चैतन्येऽन्तःकरणाद्यवच्छेदेनाप्यन्तःकरणाभावस्य वास्तवस्य सत्त्वेन तदवच्छिन्नचैतन्यरूपेश्वरस्य सर्वविकारान्तरवस्थानसम्भवात्तत्प्रतिपादकब्राह्मणाञ्जस्यं तुल्यमिति समाधानं बोध्यम् । अभावस्यापीश्वरोपाधित्वमुक्तं तृप्तिदीपे—

अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते ।
उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ ८५ ॥
यथा विधिरुपाधिः स्यात् प्रतिषेधस्तथा न किम् ॥
सुवर्णलोहभेदेन शृङ्खलात्वं न भिद्यते ॥ ८६ ॥
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥
वेदान्तानां प्रवृत्तिः स्याद् द्विधेत्याचार्यभाषितम् ॥ ८७ ॥ इति ।

श्लोकानामर्थः—

जीवत्वब्रह्मत्वयोरुपाधिरन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते भिद्यते । तत्साहित्यं जीवत्वोपाधिः, तद्राहित्यं ब्रह्मताया उपाधिरिति जीवेश्वरोपाधिभेद इत्यर्थः । नान्यथा न प्रकारान्तरेण । जीवभावाद्युपाधिरित्यर्थः । ननु भावस्यैवोपाधित्वम्, नाभावस्येत्याशङ्क्य विनिगमनाविरहमाह–यथेति । भाववदभावस्य व्यावर्तकोपाधित्वे विशेषो नास्तीत्यत्र दृष्टान्तमाह–सुवर्णेति । शृङ्खलात्वं नाम यथेच्छासञ्चारव्यावर्तकत्वम् । ननु भावरूपान्तःकरणादेर्द्रष्टृत्वादिरूपेण जीवोपलब्धिसाधनत्वात् तस्य जीवोपाधित्वं युक्तमित्याशङ्क्य तर्ह्यन्तःकरणनिषेधस्यापि ब्रह्मोपलब्धिसाधनत्वात् तस्य ब्रह्मोपाधित्वं युक्तमित्यभिप्रेत्य तत्तदुपाधिनिषेधस्य ब्रह्मोपलब्धिसाधनत्वं भाष्यकारैरुक्तमित्याह–अतद्व्यावृत्तीति । अत्र तच्छब्देन ब्रह्मोच्यते । तन्न भवतीत्यतत् अन्तःकरणादिरूपमुपाधिजातं, तस्यातत्तो व्यावृत्तिः निषेधः तद्रूपेण तद्बोधनद्वारेणेत्यर्थः । साक्षाद्विधिमुखेन च—बुद्धेस्साक्षी मनसस्साक्षी सर्वस्य साक्षी, पश्यन् शृण्वन्मन्वानः इत्यादिप्रकारेण च । प्रवृत्तिः बोधकता तया ब्रह्मणि तेषां प्रामाण्यमिति ।

तथा च उक्तरीत्या प्रतिबिम्बावच्छेदपक्षयोरुभयोरप्यन्तर्या-

एतेनावच्छिन्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्रान्तःकरणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात् कृतहानाकृताभ्यागमप्रसङ्ग इति निरस्तम्।

प्रतिबिम्बपक्षेऽपि स्वानन्तर्गतस्य स्वसन्निहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रतिबिम्बस्य वक्तव्यतया तत्र तत्रान्तःकरणस्य गमने बिम्बभेदात् तत्प्रतिबिम्बस्यापि भेदावश्यम्भावेन दोषतौल्यात्। न च 'अन्तःकरणप्रतिबिम्बो जीवः' इति पक्षे दोषतौल्येऽपि 'अविद्याप्रतिबिम्बो जीवः'। तस्य च तत्र तत्र गत्वरमन्तःकरणं जलाशयव्यापिनो महामेघमण्डलप्रतिबिम्बस्य तदुपरि विसृत्वरस्फीतालोक इव तत्र तत्र विशेषाभि-

---

मिव्याञ्जनाज्ञस्याभावाज्ञस्ययोस्तुल्यत्वे सति 'सुतरां नीरूपे' इत्यादिना चैतन्यप्रतिबिम्बासम्भवस्य दर्शितत्वात् प्रतिबिम्बपक्षं त्यक्त्वा अवच्छेदपक्ष एव आदरणीय इति भावः।

एवमवच्छेदपक्षे दोषान्तरमपि वक्ष्यमाणदोषतौल्यादिनैव निरस्तमित्याह—एतेनेति। स्वानन्तर्गतस्येति। प्रागुक्तयुक्तिरत्रानुसन्धेया। स्वसन्निहितस्येति विशेषणस्यायमभिप्रायः—यदि सर्वेष्वन्तःकरणेषु तदनन्तर्गतस्याण्डात् बहिर्विद्यमानस्यैव चैतन्यभागस्यैकस्य प्रतिबिम्बसम्भवेत्, तदा बिम्बचैतन्यप्रदेशभेदाभावात् प्रसन्तःकरणं बिम्बचैतन्यप्रदेशभेदेन प्रतिबिम्बभेदोपादनं न सम्भवेत्। न च तथा सम्भवति। व्यवहितस्य प्रतिबिम्बायोगात्, किं तु तत्र तत्रान्तःकरणे सन्निहितस्यैव चैतन्यप्रदेशस्य बिम्बत्वं वाच्यम्। ततश्चेह परत्र च प्रतिबिम्बभेदापादनं युक्तमिति। दोषतौल्यादिति। कृतहानाकृताभ्यागमप्रसङ्गदोषतौल्यादित्यर्थः। 'अविद्यायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणे चित्प्रतिबिम्बो जीवः' इति पूर्वप्रदर्शिते सङ्क्षेपशारीरकपक्षे दोषतौल्येऽपि विवरणादिपक्षे उक्तदोषाप्रसक्तेस्तस्योपादेयत्वं स्यादिति शङ्कते—न चेति। गत्वरं गमनशीलम्। तदुपरीति। जलाशयोपरीत्यर्थः। विसृत्वरेति। यथा तत्र तत्र जलप्रदेशेषु विसृत्वरो गमनशीलो मेघच्छिद्रेभ्यो निस्सृतः स्फीतालोकखण्डो

व्यक्तिहेतुरिति पक्षे नायं दोषः । अन्तःकरणवदविद्याया गत्यभावेन प्रतिबिम्बभेदानापत्तेरिति वाच्यम् । तथैवावच्छेदपक्षेऽपि 'अविद्यावच्छिन्नो जीवः' इत्यभ्युपगमसम्भवात् । तत्राप्येकस्य जीवस्य क्वचित् प्रदेशे कर्तृत्वं प्रदेशान्तरे भोक्तृत्वमित्येवं कृतहानादिदोषापनुत्तये वस्तुतो जीवैक्यस्यैवशरणीकरणीयत्वेन[1] तन्न्यायादन्तःकरणोपाधिपक्षेऽपि वस्तुतश्चैतन्यैक्यस्य तदवच्छेदकोपा-

महामेघमण्डलप्रतिबिम्बस्य जलाशयव्यापकस्य विशेषेण स्फुरणहेतुः, तथा यत्र तत्रेह परत्र च कर्तृत्वभोक्तृत्वादिविशेषाभिव्यक्तिहेतुरन्तःकरणमिति पक्षे इत्यर्थः । कृतहानादिदोषाभावे हेतुमाह—अन्तःकरणवदिति । यदि प्रतिबिम्बवादिना 'अन्तःकरणप्रतिबिम्बो जीवः' इति पक्षमुक्तदोपतौल्येन परित्यज्य 'अविद्याप्रतिबिम्बो जीवः' इति पक्षस्स्वीक्रियते, तदा अवच्छेदवादिनाऽपि 'अन्तःकरणावच्छिन्नो जीवः' इति पक्षं कृतहानादिदोषयुक्तं त्यक्त्वा उक्तदोषरहितम् 'अविद्यावच्छिन्नो जीवः' इति मतमुपादीयते इत्याह—तथैवेति । जीव इति । उपलक्षणं चैतत् । अविद्यायाः कल्पितत्वेन 'वास्तवतदभावावच्छिन्नश्चिदात्मा ईश्वरः' इत्युपगमसम्भवाच्चेत्यपि द्रष्टव्यम् ।

एवम् 'अविद्याप्रतिबिम्बो जीवः' इति पक्षे कृतहानादिदोषाभावमुपेत्य तत्साम्यमविद्यावच्छिन्नस्य जीवत्वपक्षे दर्शितम् । इदानीमन्तःकरणावच्छेदपक्षे कृतहानादिदोषाभावं समर्थयितुम् 'अविद्याप्रतिबिम्बो जीवः' इति पक्षेऽपि कृतहानादिदोषमाशङ्क्य परिहरति—तत्रापीति । 'अविद्याप्रतिबिम्बो जीवः' इति पक्षेऽपीत्यर्थः । क्वचित्प्रदेशे इति । ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नप्रदेशे इत्यर्थः । प्रदेशान्तरे इति । देवादिशरीरगततदवच्छिन्नप्रदेशे इत्यर्थः । वस्तुत इति । प्रदेशभेदे सत्यपि इह परत्र च अविद्याप्रतिबिम्बरूपजीवैक्यमात्रेण कृतहानादिदोषः परिहर्तव्यः प्रतिबिम्बवादिनां गत्यन्तराभावादित्यर्थः । सोऽयं परिहारप्रकारोऽन्तःकरणावच्छेदपक्षेऽपि समान इत्याह—तन्न्यायादिति । वस्तुत इति । इह परत्र चान्तःकरणावच्छेद्यचैतन्यप्रदेशभेदेऽपि चैतन्यस्य वस्तुत एकत्वात् न कृतहानादिदोष इत्यर्थः । ननु वास्तवचैतन्यैक्यमात्रस्य जीवान्तरसाधारणत्वादन्यकृतकर्मणाऽन्यस्य भोगप्रसङ्ग इत्यत आह—तदवच्छेदकेति ।

१ आदरणीयत्वेनेति पाठः ।

ध्यैक्यस्य च तन्त्रत्वाभ्युपगमेन तद्दोषनिराकरणसम्भवाच्च ।
न चावच्छेदपक्षे "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" 'अत एव चोपमा सूर्यकादिवत्' ( उ० मी०

---

तत्पदं चैतन्यपरम् । तथा च 'एकान्तःकरणावच्छिन्नचैतन्यमेको जीवः, अन्तःकरणान्तरावच्छिन्नचैतन्यमन्यो जीवः' इति स्वीकाराद् नोक्तातिप्रसङ्ग इति भावः । अस्मिन्नवच्छेदपक्षे प्रागुक्तरीत्या वास्तवान्तःकरणाभावावच्छिन्नचैतन्यमीश्वरः, "कारणोपाधिरीश्वरः" इति श्रुत्यनुरोधेन अविद्यावच्छिन्नचैतन्यं वा ईश्वरः इति बोध्यम् । अस्य पक्षस्य श्रुतिसूत्राभ्यां विरोधं शङ्कते—न चावच्छेदपक्षे इति । यथा एको विवस्वान् पात्रभेदेन भिन्ना आपोऽनुगच्छन् बहुजलपात्रेषु प्रतिबिम्बितस्सन्निति यावत् । बहुधा भेदरूपः क्रियते औपाधिकं नानात्वं प्रतिपद्यते, एवं देवस्स्वप्रकाश आत्मा स्वत एकस्सन् क्षेत्रेषूपाधिषु प्रतिबिम्बितो भेदरूपः क्रियते नानात्वं लभते इति यावत् । यथा एकस्य सूर्यस्य बहुषूपाधिषु प्रतिबिम्बितत्वप्रयुक्तो भेदः, एवमात्मनोऽपि क्षेत्रेषु प्रतिबिम्बितत्वप्रयुक्तमेव नानात्वमिह विवक्षितमिति वक्तव्यम् । अन्यथा दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वापत्त्या तयोरसामञ्जस्यप्रसङ्गात् । तथा चावच्छेदपक्षः श्रुतिविरुद्ध इत्यर्थः । एवम्—

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ॥
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

"रूपं रूपं प्रतिरूपो बभूव" "जीवेशावाभासेन करोति" इत्यादिश्रुतयोऽपि चैतन्यस्य प्रतिबिम्बगमकत्वेन द्रष्टव्याः । भूतानां ब्रह्मादिस्तम्बपर्यन्तानामात्मा स्वरूपभूतः परः, भूते भूते इति वीप्सा, तथा सर्वे प्रतिबिम्बोपाधयो गृह्यन्ते । तेषु प्रतिबिम्बिततया व्यवस्थितस्सन् बहुधा दृश्यते । स्वतस्तु शास्त्रादेकधा दृश्यते । रूपशब्द उपाधिपरः । अत्रापि वीप्सा सर्वोपाधिसङ्ग्रहार्था । प्रतिरूपः प्रतिबिम्बः । पुरुषप्रतिबिम्बे 'पुरुषप्रतिरूपोऽयम्' इति प्रयोगदर्शनात् ।

तृतीयाध्यायगतसूत्रमुदाहरति—अत एवेति । यतश्चिदात्मनः स्वाभाविकमेकत्वम्, नानात्वं चौपाधिकं श्रुतिषु विवक्षितम्, अत एव तस्यौपाधिकना-

अ० ३ पा० २ सू० १८ ) इति श्रुतिसूत्राभ्यां विरोधः। 'अम्बुवदग्रहणात्तु न तथात्वम्' ( उ० मी० अ० ३ पा० २ सू० १९ ) इत्युदाहृतसूत्रानन्तरसूत्रेण यथा सूर्यस्य रूपवतः प्रतिबिम्बोदययोग्यं ततो विप्रकृष्टदेशं रूपवज्जलं गृह्यते, नैवं सर्वगतस्यात्मनः प्रतिबिम्बोदययोग्यं किञ्चिदस्ति ततो विप्रकृष्टमिति प्रतिबिम्बासम्भवमुक्त्वा 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' ( उ० मी० अ० ३ पा० २ सू० २० ) इति तदनन्तरसूत्रेण यथा जलप्रातिबिम्बितः सूर्यो जलवृद्धौ वर्धते इव, जलह्रासे ह्रसतीव, जलचलने चलतीवेति तस्या-

---

नात्वे जलादिषु प्रतिबिम्बितस्सूर्यादिर्दृष्टान्तत्वेन श्रुतिषूपादीयते इति सूत्रार्थः ।

"रूपं रूपम्" इति श्रुतौ प्रतिरूपशब्दो न प्रतिबिम्बवाचकः "वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव" इत्यादौ व्यभिचारात्, अतस्सूर्यादिप्रतिबिम्बदृष्टान्तस्वारस्यादेव चैतन्यप्रतिबिम्बो वक्तव्यः । तं प्रतिबिम्बं स्वयमेव सूत्रकृदाक्षिपति—अम्बुवदिति । सूत्रे दृष्टान्तभागस्यार्थमाह—यथेति । प्रतिबिम्बोदययोग्यत्वं स्वच्छत्वम् । उपाध्यन्तर्गतस्य न तत्र प्रतिबिम्ब इत्याशयेनाह—तत इति । बिम्बभूतसूर्यापेक्षयेत्यर्थः । दार्ष्टान्तिकभागं व्याचष्टे—नैवमिति । न तथात्वम्—चिदात्मनः प्रतिबिम्बितसूर्यादितुल्यत्वं नास्ति । कुतः ? अग्रहणात् । अन्तःकरणादेरात्मप्रतिबिम्बोदययोग्यत्वेनाग्रहणात् । न ह्यन्तःकरणमात्मापेक्षया विप्रकृष्टदेशवत् । सर्वगतत्वादात्मनः । नापि तदुद्भूतरूपवत्, अनङ्गीकारात् । चिदात्मनोऽपि सूर्यादिवत् बिम्बत्वयोग्यत्वेनाग्रहणाच्च । तस्य नीरूपद्रव्यत्वात् । तस्मात् प्रतिबिम्बितसूर्यचिदात्मनोर्दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिरिति तुशब्दार्थः । दृष्टान्तदार्ष्टान्तिकयोः प्रतिबिम्बितत्वांशेन साम्याभावेऽपि न तद्भावविरोधोऽस्ति । विवक्षितांशेन साम्यस्य तत्रापि सम्भवात् । न हि तयोस्सर्वसाम्यं क्वचिदपि सम्भवति । तथासति दृष्टान्तदार्ष्टान्तिकभावोच्छेदप्रसङ्गादित्यभिप्रेत्य विवक्षितांशसाम्यं सूत्रकृद्दर्शयति—वृद्धिह्रासेति । तदनन्तरेत्यत्र तत्पदमम्बुवदिति सूत्रपरम् । सूत्रं व्याचष्टे—यथेति । आध्यासिक-

ध्यासिकं जलानुरोधिवृद्धिह्रासादिभाक्त्वम्, तथा आत्मनोऽन्तः-करणादिनाऽवच्छेदेन उपाध्यन्तर्भावादाध्यासिकं तदनुरोधिवृद्धिह्रासादिभाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोस्सामञ्जस्यादविरोध इति स्वयं सूत्रकृतैवावच्छेदपक्षे तयोस्तात्पर्यकथनात् ।

घटसंवृत्तमाकाशं नीयमाने यथा घटे ।

---

मिति । भ्रान्तिसिद्धमित्यर्थः । तथेति । चिदात्मनो बुद्ध्याद्यवच्छिन्नतया बुद्ध्याद्युपाधावन्तर्भावात् गजादिशरीरेऽन्तःकरणवृद्धौ चिदात्मा वर्धते इव, मशकादिशरीरेऽन्तःकरणह्रासे ह्रसित इव, तच्चलने चलित इव, भेदे भिन्न इव, च भाति । तथा च श्रुतिः—"ध्यायतीव लेलायतीव" इति । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव, तस्यां चलन्त्यामात्मा चलतीव, न तु वस्तुतो ध्यायति चलति वेत्यर्थः । एवमध्याससिद्धमन्तःकरणानुरोधिवृद्ध्यादिमत्त्वमात्मनोऽत्र विवक्षितं साम्यमित्यर्थः । तयोरिति । चैतन्यस्य प्रतिविम्बितत्वगमकश्रुतितन्मूलकसूत्रयोः पूर्वमुदाहृतयोरित्यर्थः । अवच्छेदपक्षे न केवलं श्रुतिसूत्रविरोधाभाव एव, किं तु श्रुतिसूत्रानुग्रहोऽप्यस्तीत्याह—घटसंवृत्तमिति । घटसंवृत्तं घटावच्छिन्नमाकाशं प्रसिद्धमस्ति । तच्च घटे नीयमानेऽपि न नीयते । यथा अयं दृष्टान्तः तद्वज्जीवो नभोपमः नभसा तुल्यः । एतदुक्तं भवति—जीवस्य नभोपमशब्देन घटसंवृत्ताकाशतुल्यत्वमभिदधता अवच्छिन्नचैतन्यरूपत्वमुक्तमिति ।

एवं प्रवेशश्रुतिरपि चिदात्मनो बुद्ध्याद्यवच्छेदकृतमेव द्रष्टृत्वादिधर्मलाभं दर्शयति, न प्रतिबिम्बभावकृतम् । तथाहि—"स एष इह प्रविष्ट आनखाग्रेभ्यः" इत्युपक्रम्य "प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः" इति पुरुषविधब्राह्मणे श्रूयते ।

अयमर्थः—सः सर्ववेदान्तेषु प्रसिद्धः, एषः नामरूपव्याकर्तृत्वेन सन्निहितः । इह कार्यकरणसङ्घाते नखाग्रमवधीकृत्य प्रविष्टः । ननु यथा देवदत्तस्य गृहे, सर्पस्य वा विले प्रवेशः प्रसिद्धः, न तथा आत्मनः प्रवेशः कल्पयितुं शक्यते । तस्य सर्वगतत्वात् । नापि जलपात्रेषु सूर्यादेरिव प्रतिविम्बभावलक्षणः प्रवेशस्सम्भवति । तस्य तैत्तिरीयकादौ प्रवेशवाक्यविचारावसरे भाष्यकारैरेव निरस्तत्वात् । अतः कीदृशः प्रवेशः प्रविष्टपदेन विवक्षित इति जिज्ञासायां यथा जले प्रतिविम्बभावेन प्रविष्टस्य सूर्यादेस्तद्धर्मवत्तया उ-

घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥

---

पलभ्यमानत्वमस्ति, एवमात्मनः सङ्घाते अधिष्ठानतया प्राक् सिद्धस्यैव प्राणबुद्ध्यादिधर्मवत्तया उपलभ्यमानत्वमेव प्रकृते प्रविष्टपदेन विवक्षितं न तु मुख्यः प्रवेश इति मन्वाना श्रुतिः स्वयमेव प्रविष्टपदं व्याचष्टे—प्राणन्नेवेत्यादिना । प्राणन् प्राणनचेष्टां प्राणोपाधिद्वारा कुर्वन् "प्राणस्य प्राणम्" इत्यादिश्रुतौ द्वितीयप्राणपदवाच्यो भवति । रूपं पश्यन् रूपगोचरचाक्षुषवृत्तिमन्तःकरणतादात्म्यापत्त्या कुर्वन् "चक्षुषश्चक्षुः" इत्यादिश्रुतौ द्वितीयचक्षुश्शब्दवाच्यो भवति । शृण्वन् शब्दगोचरां श्रोत्रकरणिकां वृत्तिमन्तःकरणतादात्म्यापत्त्यैव कुर्वन् "श्रोत्रस्य श्रोत्रम्" इत्यादिश्रुतौ द्वितीयश्रोत्रशब्दवाच्यो भवति । मन्वानो मननरूपां चक्षुरादिनिरपेक्षां वृत्तिं कुर्वन् "मनसो मनः" इत्यादिश्रुतौ मनश्शब्दवाच्यो भवति । चक्षुरादिव्यापारग्रहणं कार्यकरणसङ्घातव्यापारमात्रस्योपलक्षणम् । सङ्घातधर्माणां सर्वेषामात्मन्युपलभ्यमानत्वात् । नन्वेवमप्यवच्छेदपक्षस्य द्वितीयाध्यायगतेन 'आभास एव च' (उ. मी. अ. २ पा. ३ सू. ५०) इति सूत्रेण तद्भाष्येण च विरोधो दुर्वारः । तयोः चैतन्यप्रतिबिम्बस्य स्पष्टमुक्तत्वात् ।

सूत्रार्थस्तु—आभास एव जीवः परमात्मनः प्रतिबिम्ब एव, न निरुपाधिकः परमात्मैव जीवः । नापि न्यायमते इव परमात्मप्रकाशादत्यन्तभिन्नः । तत्त्वमस्याद्यभेदश्रुतिविरोधात् । प्रतिबिम्बस्य च वस्तुतो बिम्बाभिन्नत्वेन आभासत्वपक्षे उक्तश्रुतिविरोध इति चशब्दार्थ इति चेत्, न । उदाहृतसूत्रतद्भाष्ययोरुक्तप्रतिबिम्बपक्षस्य 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' (उ.मी.अ.२पा.१सू.१३) इति सूत्रोक्तसिद्धान्तवन्मतान्तरत्वोपपत्तेः । न च तथाकल्पने किं विनिगमकमिति वाच्यम् । तृतीयाध्याये स्वयं सूत्रकृतैव न्यायपूर्वकं कृतस्य चैतन्यप्रतिबिम्बनिरासस्य नियामकत्वात् । आभाससूत्रे च जीवस्य प्रतिबिम्बत्वे उपपत्त्यादेरनुपन्यासाच्च ।

भोक्त्रापत्तिसूत्रस्यायमर्थः—"सर्वं खल्विदं ब्रह्म" इति श्रुत्या प्रपञ्चस्य ब्रह्माभेदः प्रतिपाद्यते । "अहं ब्रह्मास्मि" इति श्रुत्या अहंशब्दार्थभूतभोक्तृवर्गस्य च ब्रह्माभेदः प्रतिपाद्यते । तथा च श्रुतिद्वयानुसारेण भोक्तृभोग्यप्रपञ्चयोरेकब्रह्माभेदस्वीकारे भोग्यप्रपञ्चस्य भोक्त्रापत्तेः भोक्त्रभेदापत्तेः । एवं भोक्तुरपि

'अंशो नानाव्यपदेशात्' (उ० मी० अ० २ पा० ३ सू० ४३ ) इति श्रुतिसूत्राभ्यामवच्छेदपक्षस्यैव परिग्रहाच्च । तस्मात् सर्वगतस्य चैतन्यस्यान्तःकरणादिनाऽवच्छेदोऽवश्यम्भावीति आवश्यकत्वात् 'अवच्छिन्नो(१) जीवः' इति पक्षं रोचयन्ते ॥

---

भोग्याभेदापत्तेः । एकब्रह्माभिन्नयोस्तयोः परस्परमप्यभेदावश्यम्भावात् । न चेष्टापत्तिः । तथात्वे सर्वविभागः प्रसज्येत । भोक्तृभोग्ययोर्विभागबोधकप्रत्यक्षादिविरोधः प्रसज्येतेति चेत्, उच्यते—श्रुतिसिद्धं भोक्तृभोग्ययोरेकब्रह्माभिन्नत्वं तयोः प्रत्यक्षादिसिद्धं परस्परं विभक्तत्वं चेत्युभयं लोकवत् स्यात् । उपपद्यते यथा लोके एकसमुद्रविकाराणां फेनबुद्बुदतरङ्गाणामेकसमुद्राभिन्नत्वम् । परिणामानां परिणाम्यभेदस्यानुभवसिद्धत्वात् । तेषामेव फेनादीनां परस्परं भिन्नत्वं चास्ति । भेदस्यानुभवसिद्धत्वात्, एवमेकब्रह्मपरिणामयोर्भोक्तृभोग्ययोरेकब्रह्माभिन्नत्वं परस्परं भिन्नत्वं चोपपद्यते इति नाद्वैतश्रुतीनां प्रत्यक्षादिविरोधप्रसक्तिरिति । अयं च विरोधपरिहारो न सिद्धान्तसम्मतः । कूटस्थनित्यस्य ब्रह्मणः परिणामित्वानभ्युपगमात्, किं तु मतान्तराभिप्रायेणेति भाष्यादिषु घण्टाघोषः, तथा प्रकृतेऽपीति सङ्क्षेपः ।

अंश इति । जीवः ईश्वरस्यांशः । कुतः? नानाव्यपदेशात् । "य आत्मानमन्तरो यमयति" इत्यादिश्रुतिषु नियम्यनियामकभावादिना जीवेश्वरयोर्नानात्वस्य भेदस्य व्यपदेशादिति सूत्रभागस्याक्षरार्थः । अत्रांशत्वं जीवचैतन्यस्य घटाकाशवदन्तःकरणावच्छिन्नत्वरूपं विवक्षितम्, न तु मुख्यमंशत्वम्, निरवयवस्य ब्रह्मणो मुख्यांशासम्भवादिति तदधिकरणभाष्ये स्फुटमिति भावः । अवच्छेदपक्षसमर्थनमुपसंहरति—तस्मादिति । प्रतिबिम्बासम्भवात् अवच्छेदपक्षे विरोधाभावात् बाधकसत्त्वाच्चेत्यर्थः । अवच्छेद्यचैतन्यस्य प्रतिबिम्बपक्षेऽपि सम्मततया उभयसम्प्रतिपन्नस्य तस्यैव जीवत्वादिकल्पनं युक्तम्, लाघवादित्याशयेनाह—अवच्छेदोऽवश्यम्भावीति । अवच्छिन्न इति । अन्तःकरणावच्छिन्नो जीवः । जीवग्रहणमुपलक्षणम् । अविद्यावच्छिन्न ईश्वरः । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतेः । "जीवेशावाभासेन करोति माया चाविद्या च

---

(१) च्छेद इति पाठः ।

(वे०सू०मं०) कौन्तेय इव राधेयो जीवः स्वाविद्यया परः ॥
नाभासो नाप्यवच्छिन्न इत्याहुरपरे बुधाः ॥ ४२ ॥

अपरे तु न प्रतिबिम्बः, नाप्यवच्छिन्नो(१) जीवः । किं तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य ब्रह्मण एव अविद्यया जीवभावः । व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन 'ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते' इति बृहदारण्यकभाष्ये प्रतिपादनात् ।

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ॥

---

स्वयमेव भवति" इति श्रुतौ च आभासपदमवच्छिन्नपरम् । प्रतिबिम्बासम्भवस्योक्तत्वात् । मायापदं च प्रथमोपात्तजीवोपाधिभूतान्तःकरणपरम् । "कार्योपाधिरयं जीवः" इति श्रुतेः । एवं मायापदोपात्तान्तःकरणस्य च मूलप्रकृत्यात्मकत्वं प्रकृतिविकारभावप्रयुक्तम् । पूर्वमनवच्छिन्नस्येश्वरत्वोक्तिस्तृप्तिदीपवचनानुसारेण अभावावच्छिन्नस्येश्वरत्वोक्तेश्च सम्भवमात्रेण, न तु तात्पर्यतः । "कारणोपाधिरीश्वरः" इति श्रुतिविरोधात् । अनवच्छिन्नस्य ईश्वरत्वपक्षे तस्योपाध्यभावेन सर्वज्ञानकर्तृत्वादेरसम्भवाच्च । अभावस्येश्वरोपाधित्वपक्षेऽपि समानोऽयं दोषः । मायाविद्याव्याकृतशक्त्यक्षराकाशादिशब्दितभावरूपोपाधेरिव तस्य सर्वज्ञत्वादिप्रयोजकत्वायोगात् । अत एव वाक्यवृत्तौ भगवत्पादैस्सर्वज्ञत्वादिप्रयोजकोपाधित्वमविद्याया दर्शितम्—'मायोपाधिर्जगद्योनिस्सर्वज्ञत्वादिलक्षणः' इतीति भावः ।

'अथ क ईश्वरः कश्च जीवः' इति प्रश्ने प्रतिवचनत्वेन मतान्तरमुत्थापयति—अपरे त्विति । 'कस्तर्हि जीवः' इति पृच्छति—किं त्विति । दृष्टान्तपूर्वकं 'ब्रह्मैव जीवः' इत्युत्तरमाह—कौन्तेयस्यैवेति । कुन्तीकुमारस्यैव, न तु तत्प्रतिबिम्बादेरित्येवकारार्थः । राधाया अपत्यं राधेयः, तस्य भावस्तत्त्वं, तद्वदित्यर्थः । किं त्वविकृतस्यैवेति सम्बन्धः । अवच्छेदप्रतिबिम्बभावरहितस्येत्यर्थः । तत्र भाष्यवार्तिकसम्मतिं हेतुत्वेन दर्शयति—व्याधेत्यादिना । यथा राजकुले जातः कर्णो जन्मप्रभृति राधेयं मन्यते, न तु स्वतस्सिद्धमपि कौन्तेयत्वमनुभवति । ततश्च कौन्तेयत्वप्रयुक्ताच्छ्रेयसस्सकाशात् प्रच्युतस्सर्वत्र नानाविधशापावमानादिलक्षणं बहुविधदुःखं

---

(१) वच्छेद इति पाठः ।

तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥

इति वार्तिकोक्तेश्च ।

एवं च स्वाविद्यया जीवभावमापन्नस्यैव ब्रह्मणः सर्वप्रपञ्चकल्पकत्वात् ईश्वरोऽपि सह सर्वज्ञत्वादिधर्मैः स्वप्नोपलब्धदेवतावज्जीवकल्पित इत्याचक्षते ॥ ६ ॥

(वे०सू०मं०) एको जीव उतानेकस्तत्रानुपदवादिनः ॥
एकं देहं च तस्यैकमन्यत्स्वप्नसमं विदुः ॥ ४२ ॥

( ७ ) अथायं जीव एकः, उतानेकः ? अनुपदोक्तप्रायत्वात्। स च कदाचिद् भगवता विवस्वता 'कर्ण ! कौन्तेयोऽसि त्वं, न राधेयः' इत्युपदेशं कुर्वता स्मारितनिजरूपस्सन् तया स्मृत्या व्याधत्वराधेयत्वादेरविद्याकृतस्य निवृत्तौ सत्यां व्याधत्वराधेयत्वकृतं नानाविधदुःखं त्यक्त्वा कौन्तेयत्वस्मृतिप्रयुक्तं श्रेयः प्राप्तवान् । तथा ब्रह्माप्यनादिसिद्धया स्वाविद्यया आवृतनिजरूपं सज्जीवभावं प्राप्य स्वतस्सिद्धान्नित्यनिरतिशयानन्दस्वरूपानुभवात् प्रच्युतं भवति, ततश्च संसरति । एवं संसरद् ब्रह्म कदाचित् स्वप्नदशायामिव स्वाविद्याकल्पितेन गुरुणा शास्त्रेण चोत्पादितया स्वगोचरविद्यया जीवभावादिप्रयोजकाविद्यानिवृत्तौ मुच्यते नित्यसिद्धनिरतिशयानन्दमनुभवति स्वरूपचैतन्येनेति भाष्यार्थः । अज्ञस्येति । अज्ञानावृतनिजस्वरूपस्येत्यर्थः । तत्त्वमस्यादीति । गुरूपदिष्टतत्त्वमस्यादिवाक्यजन्यज्ञानेनाज्ञाननिवृत्तौ जीवभाव आत्मनो निवर्तते इत्यर्थः ।

एवं जीवं निरूप्य ईश्वरं निरूपयति—एवं चेति । भाष्यवार्तिकपर्यालोचनया प्रतिबिम्बभावादिरहितस्य पूर्णब्रह्मण एव जीवत्वे सिद्धे सतीत्यर्थः । ईश्वरोऽपि सर्वज्ञत्वादिधर्मैस्सह जीवकल्पित इति सम्बन्धः । यथोक्तजीवस्यैवेश्वरकल्पकत्वे हेतुमाह—स्वाविद्ययेत्यादिना । अन्यस्य कल्पकस्याभावादितितात्पर्यकमवधारणम् । जीवस्येश्वरकल्पकत्वे दृष्टान्तमाह—स्वप्नेति । यथा स्वप्नद्रष्टा जीव एव परां देवतां सर्वज्ञत्वादिधर्मैस्सहितां कल्पयति, कल्पयित्वा च तामहर्निशमुपास्ते, तदुपासनया चाभ्युदयनिश्रेयसलक्षणं फलं लभते, एवं जागरणेऽपीति दृष्टान्तादेरभिप्रायः ॥ ६ ॥

जीवेश्वरनिरूपणप्रसङ्गेन विचारान्तरमारभते—अथेति । अनुपदोक्तेति । 'ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते'

क्षावलम्बिनः केचिदाहुः—

एको जीवः, तेन चैकमेव शरीरं सजीवम् । अन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि । तदज्ञानकल्पितं सर्वं जगत्, तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थाऽपि नास्ति, जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम् । अत्र च सम्भावितसकल-

---

इत्यादिग्रन्थोक्तेरर्थः । एक इति । ब्रह्मण एकत्वात्तत्र च अवच्छेदप्रतिबिम्बभावयोरनङ्गीकाराच्चेत्यर्थः । ननु जीवैक्ये तेनैकमेव शरीरं सजीवं स्यात्, न सर्वशरीराणीत्याशङ्क्यामिष्टापत्त्या परिहरति—तेन चेति । ननु यथा एकशरीरे हिताहितप्राप्तिपरिहारार्थस्पन्दनरूपा चेष्टा दृश्यते, तथा सर्वशरीरेषु दृश्यते । तथा च कथमेकमेव शरीरं सजीवम् ? तत्राह—अन्यानीति । स्वप्नदशायां स्वप्नद्रष्टुश्शरीरमेकमेव सजीवम् । स्वप्नद्रष्ट्रा दृष्टान्यन्यानि शरीराणि तु चेष्टाविशेषवत्तया दृश्यमानान्यपि सजीवानि न भवन्ति । तथा जागरणेऽपीति द्रष्टव्यम् । ननु स्वाप्नस्य जगतः कल्पिका तावत् निद्रा अन्वयव्यतिरेकासिद्धा यथा वर्तते, न तथा जाग्रत्प्रपञ्चस्य कल्पकमन्वयव्यतिरेकासिद्धं किञ्चिदस्तीति जगत् सत्यमेव स्यात्, नेत्याह—तदज्ञानेति । जीवाज्ञानेत्यर्थः । अज्ञानस्य जगत्कल्पकत्वं शास्त्रसिद्धमिति भावः । ननु सर्वव्यवहारस्य स्वप्नव्यवहारवत् कल्पितत्वे तद्वदेव सहसा व्यवहारलोपः प्रसज्येत । तथा च विद्यानर्थक्यमिति, नेत्याह—तस्येति । जीवस्येत्यर्थः । यावन्निद्राक्षयं स्वप्नव्यवहारानुवृत्तिवत् विद्यया यावदविद्यानिवृत्ति सर्वव्यवहारानुवृत्तिर्युज्यते इति न विद्यावैफल्यम्, अविद्यानिवृत्त्यर्थमपेक्षितत्वादिति भावः । ननु जीवैकत्वमते एको जीवो बद्धः, अन्यो जीवो मुक्त इति व्यवस्था शुकादिमुक्तिप्रतिपादकशास्त्रसिद्धा न स्यादित्याशङ्क्य इष्टापत्तिरित्याह—बद्धेति । शुकेति । यथा स्वप्नादुत्थितः स्वप्नभ्रान्तिसिद्धां पुरुषान्तरमुक्तिं परं प्रति बोधयति, तथा जीवभ्रान्तिसिद्धां शुकादिमुक्तिं तं प्रत्येव बोधयति श्रवणादिषु प्रवृत्त्युपयोगितयेति भावः । ननु जीवैक्यमते विद्योपदेष्टुरन्यस्याभावाद्विद्योदयो न स्यात्, जीवेश्वरविभागाभावेन जीवस्येश्वरोपासनादिव्यवहारश्च न स्यादित्याशङ्क्याह—अत्र चेति । यथा स्वप्नदशायां

शङ्कापङ्कप्रक्षालनं स्वप्नदृष्टान्तसलिलधारयैव कर्तव्यमिति ।
(वे०सू०मं०) सूत्रमेकं परं जीवपदाभासान् परान् परे ॥

अन्ये त्वस्मिन्नेकशरीरैकजीववादे मनःप्रत्ययमलभमानाः 'अधिकं तु भेदनिर्देशात्' (उ० मी० अ० २ पा० १ सू० २२) 'लोकवत्तु लीला कैवल्यम् (उ० मी० अ० २ पा० १ सू० ३३) इत्यादिसूत्रैर्जीवाधिक ईश्वर एव जगतः स्रष्टा, न जीवः । तस्याप्तकामत्वेन प्रयोजनाभावेऽपि केवलं लीलयैव जगतः सृष्टिरित्यादि प्रतिपादयद्भिर्विरोधं च मन्यमाना हिरण्यगर्भं एको ब्रह्म-

---

स्वप्नदृक् कंचित् गुरुमीश्वरं च कल्पयित्वा तावुपास्ते, ताभ्यां च विद्यादिकं लभते, तद्वदिति भावः ॥

एकजीववाद एव मतान्तरमाह—अन्ये त्विति । एकशरीरेति एकमेव शरीरं सजीवं यस्मिन्नेकजीववादे, स तथोक्तः । मनःप्रत्ययमिति । मनसो विश्वासं प्रामाणिकत्वनिश्चयमित्यर्थः । एकमेव शरीरं सजीवम्, शरीरान्तराणि निर्जीवानीत्यत्र विनिगमकाभावात् । न च जीवैक्यं विनिगमकमिति वाच्यम् । एकोऽपि जीवः कस्मिन् शरीरे वर्तत इत्यत्र विनिगमकस्य वक्तुमशक्यत्वादिति भावः । अधिकं त्विति । जीवाभिन्ने ईश्वरे वेदान्तानां प्रथमाध्याये निरूपितस्समन्वयो न घटते; तथासतीश्वरगतजगत्स्रष्टृत्वादेर्जीवधर्मत्वप्रसङ्गात्, तथा चानुभवविरोध इति पूर्वपक्षनिरासार्थस्तुशब्दः । अधिकं जीवादुपाधितो भिन्नं ब्रह्म जगत्स्रष्टृत्वसर्वज्ञत्वादिगुणकमभ्युपगम्यते । अतो न ब्रह्मधर्माणां जीवे प्रसक्तिः । औपाधिकभेदस्यापि धर्मव्यवस्थापकताया लोकसिद्धत्वात् । कल्पितभेदाङ्गीकारे हेतुमाह—भेदनिर्देशादिति । "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इत्यादौ नियम्यनियामकभावादिना भेदनिर्देशादिति सूत्रार्थः । लोकवदिति सूत्रं पूर्वमेव व्याख्यातम् । अत्रादिपदेन 'अनुपपत्तेस्तु न शारीरः', (उ० मी० अ० १ पा० २ सू० ३) इत्यादिसूत्रं गृह्यते । मनोमयत्वादिगुणको न शारीरः । तस्मिन् सर्वकर्मत्वादीनामनुपपत्तेरेवेति सूत्रार्थः । विरोधं चेति । मनःप्रत्ययमलभमानाः विरोधं च मन्यमाना इति चशब्दार्थः । जीवातिरिक्तेश्वराभाववादेऽस्मिन्

प्रतिबिम्बो मुख्यो जीवः । अन्ये तु तत्प्रतिबिम्बभूताश्चित्रपटलिखितमनुष्यदेहार्पितपटाभासकल्पाः जीवाभासाः संसारादिभाज इति सविशेषानेकशरीरैकजीववादमातिष्ठन्ते ॥

( वे०सू०म० ) योगीव कायव्यूहेषु जीवोऽन्य इति चापरे ॥४४॥

अपरे तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यं जीवत्वमित्यत्र नियामकं नास्तीति मन्यमाना एक एव जीवोऽविशेषेण सर्वं शरीरमधितिष्ठति ।

---

जगत्सृष्ट्यादिसमर्थस्य व्यावहारिकभेदवत ईश्वरस्यास्तित्वजगत्स्रष्टृत्वसर्वात्मकत्वादिगुणप्रतिपादकैस्सूत्रैर्विरोधमित्यर्थः । ब्रह्मप्रतिबिम्ब इति । अनेन बिम्बभूतं ब्रह्म जीवादधिकमीश्वररूपमस्मिन्मतेऽस्ति । अतो नोदाहृतसूत्रविरोध इति सूचितम् । तदिति । ब्रह्मप्रतिबिम्बभूतहिरण्यगर्भस्य भौतिकजगत्स्रष्टृतया कारणोपाधितया च मुख्यजीवस्य प्रतिबिम्बभूता अन्ये जीवा जीवाभासाः, तद्वत् सृष्ट्यादिसामर्थ्याभावादित्यर्थः । कल्पा इति । तुल्या इत्यर्थः । संसारादिभाज इति । अनेन यथा हिरण्यगर्भशरीरं मुख्यजीवेन सजीवं, तथा इतराण्यपि शरीराणि जीवाभासैस्सजीवानीति पूर्वमताद्विशेषस्सूचितः । अत्रादिपदं मुक्तिसङ्ग्रहार्थम् । जीवाभासानां मुक्तिश्च स्वबिम्बभूतहिरण्यगर्भप्राप्तिः क्रमेण च शुद्धब्रह्मप्राप्तिरिति मन्तव्यम् । सविशेषेति । सविशेषाणि सजीवानि अनेकशरीराणि यस्मिन्नेकजीववादे, स तथा । आतिष्ठन्ते अङ्गीकुर्वन्तीत्यर्थः ॥

अत्राप्यस्वरसं वदन्नेकजीववादमेवाह—अपरे त्विति । एक एवेति । अविद्यायां ब्रह्मप्रतिबिम्बरूपो जीवस्तावदेकः । अविद्याया एकत्वात् । स एव च सर्वं शरीरं स्वभोगाद्यर्थमधितिष्ठति । न त्वविद्यायां ब्रह्मप्रतिबिम्बो हिरण्यगर्भशरीरमधितिष्ठति । अन्यानि तु शरीराणि तत्प्रतिबिम्बा जीवाभासा अधितिष्ठन्ति । कुतः ? इतरजीवानां तत्प्रतिबिम्बत्वे मानाभावादित्येवकारार्थः । अविशेषेणेति । मुख्यामुख्यविभागं विनेत्यर्थः । जीवभेदे हि सति कश्चिन्मुख्यो जीवः, कश्चिच्चामुख्यो जीवाभास इति विभागस्सम्भवेत् । न त्वेतदस्ति, तस्यैकत्वाभ्युपगमादिति भावः ।

ननु देवदत्तस्य शिरः पाणी पादावधितिष्ठत एकस्य यथा "शिरसि

न चैवं शरीरावयवभेद इव शरीरभेदेऽपि परस्परसुखाद्यनुसन्धानप्रसङ्गः। जन्मान्तरीयसुखाद्यनुसन्धानादर्शनेन शरीरभेदस्य तदननुसन्धानप्रयोजकत्वक्लृप्तेः।

योगिनस्तु कायव्यूहसुखाद्यनुसन्धानं व्यवहितार्थग्रहणवद्योगप्रभावनिबन्धनमिति न तदुदाहरणमिति अविशेषानेकशरीरैकजीववादं रोचयन्ते॥

(वे०सू०मं०) बद्धमुक्तव्यवस्थार्थमन्तःकरणभेदतः॥
जीवभेदं परे प्राहुः, व्यवस्था चात्र कीदृशी॥४५॥

इतरे त्वत्रापि बद्धमुक्तव्यवस्थाऽभावस्य तुल्यत्वेन "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इत्यादिश्रुतेः 'प्रति-

---

मे वेदना पादे मे सुखम्' इत्याद्यनुसन्धानं दृश्यते, एवमेकस्यैव जीवस्य सर्वशरीराधिष्ठातृत्वे 'मम देवदत्तशरीरे सुखं यज्ञदत्तनामकशरीरे दुःखम्' इत्यादिरूपेण सर्वस्य सर्वत्रानुसन्धानप्रसङ्ग इति शङ्कते—न चैवमिति। शरीरभेदस्यानुसन्धानप्रयोजकत्वाभ्युपगमान्नोक्तातिप्रसङ्गः। न च तत्र मानाभावश्शङ्कनीयः। जीवस्यातीतशरीरेषु वर्तमानशरीरे चैकत्वेऽपि जन्मान्तरीयसुखाद्यननुसन्धानदर्शनेन तद्भेदस्य तत्प्रयोजकतायाः सम्प्रतिपन्नत्वादिति परिहरति—जन्मान्तरीयेति। ननु योगिनो देहभेदे सत्यप्यनुसन्धानदर्शनात् व्यभिचार इत्यत आह—योगिनस्त्विति। अस्मदादिवैलक्षण्यार्थकस्तुशब्दः। तद्दर्शयति—कायेति। न ह्यस्मदादीनां व्यवहितार्थसाक्षात्कारोऽस्ति। तत्प्रयोजकादृष्टविशेषाभावात्। तथा च शरीरभेदमात्रं न तत्प्रयोजकम्, किं तु अदृष्टविशेषासहकृतशरीरभेदोऽननुसन्धानप्रयोजक इति न योग्यनुसन्धानस्थले व्यभिचार इति भावः। योगपदं योगजादृष्टपरम्। अविशेषेति। अविशेषेणाधिष्ठितान्यनेकशरीराणि यस्मिन्नेकजीववादे, स तथेत्यर्थः॥

अनेकजीववादमुत्थापयति—इतरे त्विति। अत्रापीति। अव्यवहितमतेऽपीत्यर्थः। यद्येकजीववादे व्यवस्था न सिध्यति, ततः को दोष इत्याशङ्क्य श्रुतिस्मृतिभाष्याणामनाञ्जस्यं दोष इत्याह—तद्यो य इति। देवानां मध्ये यो यो देवः तत् ब्रह्म प्रत्यबुध्यत साक्षात्कृतवान्, स एव तद

षेधादिति चेत्, न शारीरात्' (उ०मी०अ०४पा०२ सू०१२) इत्यधिकरणे बद्धमुक्तत्व(१)प्रतिपादकभाष्यस्य च नाञ्जस्यमित्यपरितुष्यन्तोऽन्तःकरणादीनां जीवोपाधित्वाभ्युपगमेनानेकजीववादमाश्रित्य बद्धमुक्तव्यवस्थां प्रतिपद्यन्ते ॥

---

ब्रह्माभवद्, नान्यो ब्रह्मबोधरहित इति विदुषो मुक्तत्वमविदुषो बद्धत्वं च प्रतिपादयन्त्या श्रुत्या बन्धमुक्तिव्यवस्था दर्शिता। आदिपदेन "अजामेकाम्" इति श्रुतिः बन्धमुक्तिव्यवस्थाप्रतिपादकत्वेन भाष्यकारादिभिरङ्गीकृता गृह्यते। श्रुतिग्रहणं 'यद् गत्वा न निवर्तन्ते तद्धाम परमं मम' इत्यादिस्मृतीनामुपलक्षणम्। प्रतिषेधादिति। इदं पूर्वपक्षसूत्रम्। बृहदारण्यके काण्वशाखायां "न तस्य प्राणा उत्क्रामन्ति" इति वाक्येन परब्रह्मतत्त्वविदः प्राणोत्क्रान्तिप्रतिषेधाद् तस्य गत्युत्क्रान्ती न स्तः। उत्क्रान्तिपूर्वकत्वाद्गतेरिति चेदिति सिद्धान्तिशङ्काभागार्थः।

पूर्वपक्षी तां दूषयति—न शारीरादिति। बृहदारण्यक एव माध्यन्दिनशाखायां समानप्रकरणे ब्रह्मविदं शारीरं प्रकृत्य "न तस्मात्प्राणा उत्क्रामन्ति" इति वाक्यं पठ्यते। अत्र तच्छब्देन प्रकृतश्शारीरो गृह्यते, न शरीरम्। तस्य शरीरापेक्षया प्रधानत्वात्। तथा च 'न तस्मात्' इति वाक्येन शारीराज्जीवात् प्राणानामुत्क्रमणं निषिध्यते, न शरीरात्। अतश्शरीरादुत्क्रमणं विदुषोऽप्यस्तीति तस्यापि गत्युत्क्रान्ती स्त एव। 'न तस्य प्राणाः' इति काण्ववाक्यस्यापि तस्य विदुषः प्राणाश्शारीरात् नोत्क्रामन्ति। किं तु तेन सहैव ब्रह्मलोकं गच्छन्तीत्यर्थो बोध्यः। नाञ्जस्यमिति। आञ्जस्याभावः, उपपन्नत्वाभाव इत्यर्थः। अन्तःकरणानामिति। न च नानाजीववादेऽपि ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते इत्यर्थेन बृहदारण्यकभाष्ये प्रतिपादनेन विरोधस्तुल्य इति वाच्यम्। तद्भाष्यप्रतिपादनस्य ब्रह्मैव स्वाविद्यया नानाऽन्तःकरणरूपेण परिणतया नानाजीवभावं प्राप्य संसरति, स्वविद्यया क्रमेण मुच्यते इत्यभिप्रायकत्वोपपत्तेः। श्रुतिस्मृत्युपोद्बलितशुकादिमुक्तिप्रतिपादकभाष्यस्य 'ब्रह्मैव स्वाविद्यया संसरति' इति भाष्यमात्रस्वारस्यमनुसृत्यान्यथानयनायोगात्। न चोदाहृतश्रुतिस्मृतिभाष्याणां ब्रह्मात्मैकत्वपरत्वेन नानाजीववादे तात्पर्या-

---

(१) शुकमुक्तत्वेति पाठः।

(वे०सू०मं०) प्रतिजीवमविद्यांशा भिन्ना ब्रह्मावृतिक्षमाः ॥
तन्नाशक्रमतो मुक्तिव्यवस्था कैश्चिदीर्यते ॥ ४६ ॥

तेषु केचिदेवमाहुः—यद्यपि शुद्धब्रह्माश्रयविषयमेकमेवाज्ञानम्, तन्नाश एव च मोक्षः, तथापि जीवन्मुक्तावज्ञानलेशानुवृत्त्य-

भावात् तेभ्यो जीवनानात्वं न सिध्यतीति वाच्यम् । एकजीववादेऽपि तात्पर्याभावस्य तुल्यत्वात् । न च जीवत्वोपाधिभूतायाः अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति वाच्यम् । उदाहृतश्रुतिस्मृतिभाष्यानुरोधेनाविद्यानानात्वाभ्युपगमसम्भवात् । तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः । अविद्याया एकत्वेऽपि "कार्योपाधिरयं जीवः" इति श्रुत्यनुसारेणान्तःकरणानामेव जीवत्वोपाधित्वोपगमसम्भवाच्चेति भावः ।

नानाजीववादे मतभेदेन बन्धमुक्तिव्यवस्थामुपपादयितुमारभते—तेष्विति । नानाजीववादिषु मध्ये इत्यर्थः । केचिदिति । ननु नानाजीववादेऽपि जीवस्यान्तःकरणोपाधिकत्वपक्षे मूलाज्ञानस्य एकत्वेन शुकादितत्त्वज्ञानेनैव तस्य निवृत्तत्वादिदानीं संसारानुपलब्धिप्रसङ्ग इत्याशयेन शङ्कते—यद्यपीति । शुद्धब्रह्माश्रयेति । जीवेश्वरयोर्विशिष्टरूपयोरज्ञानाश्रयत्वं न सम्भवति । तयोः कल्पितत्वात् । तथा शुद्धस्यैवावृततत्त्वरूपं विषयत्वं, न त्वीश्वरस्यापि । तस्य जीवान्तरवदौपाधिकभेदादेवानुपलब्धिसिद्धौ जीवान् प्रतीश्वरस्याज्ञानावृतत्वरूपविषयत्वकल्पनस्य व्यर्थत्वादिति भावः । एकमेवेति । "अजामेकाम्" "मायां तु प्रकृतिं विद्यात्" "विभेदजनकेऽज्ञाने" इति श्रुतिस्मृतिषु एकवचनश्रवणेन लाघवेन च तस्यैकत्वावगमादिति भावः । तन्नाश एव चेति । "भूयश्चान्ते विश्वमायानिवृत्तिः" "अज्ञाने नाशमासन्तिकं गते" इत्यादिश्रुतिस्मृतिषु सर्वानर्थमूलाज्ञाननिवृत्तेर्मोक्षत्वावगमादिति भावः । एकस्य तत्त्वज्ञानेन कृत्स्नाज्ञाननाशो नाङ्गीक्रियते येन व्यवस्था न स्यात्, किं तु तस्य तस्य ज्ञानेन तत्तदन्तःकरणादिपरिणामिनो मूलाज्ञानांशस्यैव नाश उपेयते । न च तस्य सांशत्वे मानाभाव इति वाच्यम् । जीवन्मुक्तौ आवरणशक्तिमदंशस्य नाशेऽपि विक्षेपशक्तिमदज्ञानांशस्य ज्ञानादनिवृत्तस्य यावद्विदेहकैवल्यमनुवृत्त्युपगमेन तस्य सांशत्वावगमात् । तथा चाज्ञानस्यानिर्वचनीयस्य अनिर्वचनीयानामेव भागरूपांशानामनन्तानां सम्भवात् तानादाय बन्धमुक्तिव्यवस्था सूपपादेति परिहरति—तथाऽपीत्यादिना ।

भ्युपगमेनाज्ञानस्य साशत्वात् तदेव क्वचिदुपाधौ ब्रह्मावगमोत्पत्तौ अंशेन निवर्तते, उपाध्यन्तरेषु यथापूर्वमंशान्तरैरनुवर्तते इति ।

(वे०सू०मं०) आत्मन्यविद्यासंसर्गो हृदयग्रन्थिसंश्रयः ॥
तद्भेदात्तदसंसर्गः क्रमान्मुक्तिक्रमः परैः ॥ ४७ ॥

अन्ये तु यथा न्यायैकदेशिमते भूतले घटात्यन्ताभावस्य वृत्तौ घटसंयोगाभावो नियामक इति अनेकेषु प्रदेशेषु तद्वत्सु संसृज्य वर्तमानो घटात्यन्ताभावः क्वचित्प्रदेशे घटसंयोगोत्पत्त्या तदभावनिवृत्तौ न संसृज्यते । एवमज्ञानस्य चैतन्ये वृत्तौ मनो नियामकमिति तदुपाधिना तत्प्रदेशेषु संसृज्य वर्तमानमज्ञानं

---

अज्ञानसत्त्वं बन्धः, तन्नाशो मोक्ष इतिमतमुक्तम् । इदानीं चैतन्यस्याज्ञानसम्बन्धो बन्धः, तदसम्बन्धो मोक्षः, न तु तन्निवृत्तिः । असम्बन्धमात्रेणैव बन्धनिवृत्तिसिद्धेः । ज्ञानादज्ञाननिवृत्तिप्रतिपादकशास्त्रस्यापि तदसम्बन्धे एव तात्पर्योपपत्तेः । अन्यथा मूलाज्ञानस्य विरोधिज्ञानोदये सति तूलपिण्डस्य विरोध्यग्निसंसर्गमिवावशेषासम्भवेन बन्धमुक्तिव्यवस्थाशास्त्रस्य जीवन्मुक्तिशास्त्रस्य च निरालम्बनत्वप्रसङ्गादिति मन्यमानानां मतमाह—अन्ये त्विति । प्रथमं प्रकृतोपयोगिदृष्टान्तमाह—यथेति । 'भूतले घटो न' इत्यनुभवसिद्धो घटाभावस्त्रैकालिकत्वाभ्युपगमात् घटानयनानन्तरं तदधिकरणेऽपि भूतले वर्तते एव । तथा च घटवत्यपि भूतले 'घटो नास्ति' इति प्रतीतिः प्रमा स्यादितिदोषप्रसक्तौ तत्परिहाराय नैयायिकाः कल्पयन्ति—घटाधिकरणे तदत्यन्ताभावस्य सम्बन्धाभावेन तत्र तत्प्रतीतेर्भ्रान्तित्वोपपत्तिः । न च घटसंयोगोत्पत्तेः पूर्वं भूतले सम्बन्धवतस्तस्य घटसंयोगकाले कथमवृत्तिरूपस्सम्बन्धाभाव इति वाच्यम् । प्रतीत्यनुसारेण भूतलादौ घटात्यन्ताभाववृत्तौ घटसंयोगस्य प्रागभावप्रध्वंसाभावयोरन्यतराभावो नियामक इति कल्पनेन घटसंयोगाधिकरणभूतले घटाभावस्यासम्बन्धोपपत्तेरिति । तदेतन्मतं दृष्टान्तीकरोति—न्यायैकदेशिमत इति । तद्वत्स्विति । घटसंयोगाभाववत्स्वित्यर्थः । तदुपाधिनेति । मन एवोपाधिः तेनेत्यर्थः । क्वचिदिति । चैतन्यप्रदेशे इत्यर्थः । ब्रह्मदर्शनोत्पत्त्या मनसो निवृत्ता-

कचिद् ब्रह्मदर्शनोत्पत्त्या "भिद्यते हृदयग्रन्थिः" इत्युक्तरीत्या मनसो निवृत्तौ न संसृज्यते । अन्यत्र यथापूर्वमवतिष्ठते । अज्ञानसंसर्गासंसर्गावेव च बन्धमोक्षावित्याहुः ॥

(वे०सू०मं०) जातिर्व्यक्तिमिव ध्वस्तां स्वात्मजं यज्जहाति सा ॥
जीवं जीवाश्रिताऽविद्या मुक्तिः सेत्यपि चापरैः॥४८॥

अपरे तु नाज्ञानं शुद्धचैतन्याश्रयम्, किं तु जीवाश्रयं ब्रह्मविषयम् । अतश्चान्तःकरणप्रतिबिम्बरूपेषु सर्वेषु जीवेषु व्यक्तिषु(१) जातिवत् प्रत्येकपर्यवसायितया वर्तमानमुत्पन्नविद्यं कं

---

विति सम्बन्धः । ब्रह्मदर्शनं मनसो निवर्तकमित्यत्र मानमाह—भिद्यत इति । हृदयग्रन्थिरित्यत्र हृदयपदमन्तःकरणपरम् । तच्चान्तःकरणं चिदात्मन्यध्यस्ततया तत्तादात्म्यापन्नं सत् ग्रन्थिरिव ग्रन्थिः स च ब्रह्मदर्शने जाते ब्रह्मण्येव विलीयते इति श्रुत्यर्थः । अन्यत्रेति । चैतन्यप्रदेशान्तरेष्वित्यर्थः ।

नाज्ञानमिति । शुद्धचैतन्यस्य वेदान्तशास्त्रप्रतिपाद्यस्य नाज्ञानाश्रयत्वम् । तस्य 'वेदान्तवेद्यं वस्तु न जानामि' इत्यज्ञानविषयत्वेनैवानुभवादिति भावः । जीवाश्रयमिति । 'न जानामि' इत्यज्ञानाश्रयत्वेन जीवस्यैवानुभवात् । न चाज्ञानस्य स्वकार्यान्तःकरणविशिष्टचैतन्यरूपजीवाश्रितत्वमनुपपन्नमिति वाच्यम् । अन्तःकरणे यत् प्रतिबिम्बभूतं चैतन्यं, तस्यैव जीवत्वाभ्युपगमेन विशिष्टस्य जीवत्वानुपगमात् । न चान्तःकरणस्य सादितया तद्गतप्रतिबिम्बस्यापि सादित्वात् कथं तस्यानाद्यज्ञानाश्रयत्वमिति वाच्यम् । अन्तःकरणस्य स्वापादौ लयश्रवणेन जाग्रदादौ जन्मश्रवणेन च सादित्वावगमेऽपि तस्य स्थूलसूक्ष्मरूपेणानादितायाः 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' ( उ० मी० अ० २ पा० ३ सू० ३१ ) इति सूत्रे व्यवस्थापितत्वात् । यथा पुंस्त्वस्त्रीत्वादेश्शुक्रशोणितस्तनादिरूपस्य बाल्यादावनभिव्यक्तस्य यौवने प्रादुर्भावः, तथा अस्यान्तःकरणस्य स्वापादावनभिव्यक्ततया सत एव स्थूलावस्थाप्राप्तिरूपाया अभि-

---

( १ ) व्यक्तिमिवेति पाठः ।

चित्त्यजति(१) नष्टा व्यक्तिमिव जातिः। स एव मोक्षः। अन्यं यथापूर्वमाश्रयतीति व्यवस्थेत्याहुः ॥

( वे० सू० मं० ) प्रतिजीवमविद्याया भेदमाश्रित्य चेतरे ॥
तद्विनाशक्रमान्मुक्तिव्यवस्थां संप्रचक्षते ॥४९॥

इतरे तु प्रतिजीवमविद्याभेदमभ्युपगम्यैव तदनुवृत्तिनि-

---

व्यक्तेर्युक्तत्वात्। असतश्शशशृङ्गादेरुत्पत्त्यदर्शनादिति सूत्रार्थः। अवि-द्यायाः अनादिचैतन्यप्रतिबिम्बाश्रितत्वस्य मायाऽविद्याभेदवादनिरूपणा-वसरे समर्थितत्वात्। प्रत्येकेति। द्वित्वबहुत्वादिवदज्ञानस्य सर्वजीवव्य-क्तिषु व्यासज्यवृत्तित्वे सर्वेषां प्रत्येकम् 'अहमज्ञः' इति प्रत्यक्षं न स्यात्। व्यासज्यवृत्तिधर्मप्रत्यक्षस्य यावदाश्रयप्रत्यक्षसापेक्षत्वेन एकैकस्य जीवस्य सर्वजीवप्रत्यक्षाभावादित्यर्थः। वस्तुतस्तु अज्ञानस्य व्यासज्यवृत्तित्वेऽपि तत्प्रत्यक्षस्य नित्यसाक्षिरूपतया यावदाश्रयप्रत्यक्षानपेक्षणात्। उक्तनियम-स्य जन्यप्रत्यक्षविषयत्वादिति मन्तव्यम्। कश्चिदिति। उत्पन्नया वि-द्यया मनसो निवृत्तौ तन्निरूपितप्रतिबिम्बभावस्यापि निवृत्ततया तद्विशि-ष्टचैतन्यरूपव्यक्तिनाशादिति भावः। तथा च श्रुतिः—"जहात्येनां भुक्त-भोगामजोऽन्यः" इति। एनामजाशब्दितामविद्यां जीवेन भुक्ताः भोगाः यस्याः, सा भुक्तभोगा। भुज्यन्ते इति व्युत्पत्त्या भोगशब्दितानां विष-याणामविद्यापरिणामत्वादिति भावः। अजो जन्मरहितः अन्यः उत्पन्नवि-द्यो जीव इति श्रुत्यर्थः। स एवेति। त्याग एवेत्यर्थः। अन्यमिति। अज्ञमिति भावः। तथा च श्रुतिः—"अजो ह्येको जुषमाणोऽनुशेते" इति। एकः पुनरजो विवेकरहितः कार्यकरणसङ्घातरूपेण परिणतामविद्यां जु-षमाणः सेवमानः तत्राहम्ममाभिमानवान् सन् अनुशेते तामनुसृत्य शेते वर्तते। न जहातीति यावत्। अत्राज्ञानं कश्चिज्जहाति अन्यमाश्रित्यैव ति-ष्ठतीत्युक्त्याऽपि अज्ञानसम्बन्धासम्बन्धावेव बन्धमोक्षावित्युक्तं भवति। तदुक्तेरर्थान्तरासम्भवात्।

अज्ञानसम्बन्धतदभावौ बन्धमोक्षाविति मतद्वयमपि तस्य ज्ञानना-श्यत्वप्रतिपादकश्रुतिस्मृतिभाष्यादिस्वारस्यविरुद्धं मत्वा तदविरुद्धं मतमाह—इतरे त्विति। अभ्युपगम्यैवेति। अविद्याभेदानुपगमे तत्सत्त्वतन्ना-

---

(१) जहातीति पाठः।

वृत्तिभ्यां, बद्धमुक्तव्यवस्थां समर्थयन्ते।

(वे०सू०मं०) अविशेषेण सर्वेषामविद्यातः प्रवर्तते॥
प्रपञ्चोऽस्मिन्नैकतन्त्वारब्धः पक्षे पटो यथा॥ ५०॥

अस्मिन् पक्षे कस्याविद्यया प्रपञ्चः कृतोऽस्त्विति चेत्, विनिगमकाभावात् सर्वाविद्याकृतोऽनेकतन्त्वारब्धपटतुल्यः। एकस्य मुक्तौ तदविद्यानाशे एकतन्तुनाशे पटस्येव तत्साधारणप्रपञ्चस्य नाशः। तदैव विद्यमानतन्त्वन्तरैः पटान्तरस्येव इतराविद्यादिभिः सकलेतरसाधारणप्रपञ्चान्तरस्योत्पादनमित्येके॥

(वे०सू०मं०) प्रत्यविद्यं प्रपञ्चस्य भेदं न्यायनये यथा॥
अपेक्षाबुद्धिजद्वित्वं शुक्तिरूप्यं च भिद्यते॥ ५१॥

---

शरूपयोर्बन्धमोक्षयोरुपपादयितुमशक्यत्वात्। न च तस्या एकत्वेऽपि अंशवत्त्वकल्पनया तन्नाशरूपो मोक्षः प्रागुपपादित इति वाच्यम्। विरोधिविद्योदये तदवस्थानायोगस्याप्युक्तत्वात्। न च जीवन्मुक्तौ तल्लेशानुवृत्त्यभ्युपगमविरोध इति वाच्यम्। अविद्यानाशेऽपि तत्संस्कारस्य यावत्प्रारब्धक्षयमनुवर्तमानस्याविद्यालेशत्वेन विवक्षिततायास्सदृष्टान्तं वक्ष्यमाणत्वादिति भावः। एवं नानाजीववादे बन्धमोक्षव्यवस्थां बहुप्रकारामुपपाद्य तदुपपादनोपयोगितया प्रसक्तमविद्यानानात्वमुपजीव्याक्षेपमवतारयति—अस्मिन् पक्षे इति। अविद्यानानात्वपक्षे इत्यर्थः। कस्येति। किमेकस्य जीवस्याविद्यया प्रपञ्चारम्भः, उत सर्वेषामविद्याभिः?। नाद्यः। विनिगमनाविरहात्। न द्वितीयः। एकाविद्यानाशे सर्वप्रपञ्चनाशापत्त्या मुक्तेतरजीवानां प्रपञ्चानुपलब्धिप्रसङ्गादित्याक्षेपाभिप्रायः। द्वितीयपक्षं परिगृह्य तत्रोक्तानुपपत्तिं परिहरति—विनिगमकाभावादित्यादिना। सर्वाविद्याकृत इति। सर्वेषां जीवानां सर्वाविद्यापरिणाम इत्यर्थः। यद्वा सर्वाविद्याविषयीकृतब्रह्मविवर्तः प्रपञ्च इत्यर्थः। प्रथमव्याख्याने दृष्टान्तमाह—अनेकतन्त्वारब्धेति। सकलेतरेति। सकलास्समस्ता मुक्तजीवापेक्षया ये इतरे, तेषां साधारणप्रपञ्चान्तरस्येत्यर्थः॥

प्रपञ्चस्य सर्वाविद्याकार्यत्वेऽपि तद्भेदात् प्रपञ्चस्यापि प्रतिपुरुषं

तत्तदज्ञानकृत(१)प्रातिभासिकरजतवत्, न्यायमते तत्तदपेक्षाबुद्धिजन्यद्वित्ववच्च तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नः । शुक्तिरजते त्वया यद् दृष्टं रजतं, तदेव मयाऽपीतिवदैक्यभ्रममात्रमित्यन्ये ॥

(वे०सु०मं०) प्रातिभासिकरूप्यादेः प्रकृतिर्जीवसंश्रया ॥
अविद्येशाश्रया माया विश्वस्येत्यपरे जगुः ॥ ५२ ॥

जीवाश्रितादविद्यानिवहाद्भिन्ना मायैव ईश्वराश्रिता प्रपञ्च-

---

भेद एवेति मतं सदृष्टान्तमाह—तत्तदिति । ननु यत्र एकदा बहूनां शुक्तौ रजतभ्रमो भवति, तत्र प्रतिपुरुषमज्ञानभेदेन तत्कृतरजतभेदोऽत्र दृष्टान्तत्वेन वक्तव्यः । स च न सम्भवति । तत्रापि तावत्पुरुषाणामज्ञानैरेकस्यैव रजतस्योत्पत्तिसम्भवादिति, चेत्, न । तत्र दैवयोगादेकस्य पुरुषस्य प्रथमं शुक्तित्वविशेषदर्शने सति 'नेदं रजतम्' इति बाधकप्रत्यक्षेण सोपादानस्य रजतस्य नाशेऽपि तद्भिन्नेतरेषां रजतभ्रमानुवृत्त्या रजतभेदस्यावश्यकतया दृष्टान्तसिद्धेरिति भावः । न्यायमत इति । सिद्धान्ते तु एकत्वद्वित्वादिकमपि यावद्द्रव्यभाव्येव, न तु तत्तदपेक्षाबुद्धिजन्यम् । अनन्तद्वित्वादेस्तदुत्पत्त्यादीनां च कल्पने गौरवात् । अपेक्षाबुद्धेस्तद्व्यञ्जकत्वाभ्युपगमात् न सदा तत्प्रत्यक्षापत्तिरिति स्वीकारादिति भावः । ननु तर्हि यथा तत्तद्रजतं तस्य तस्यैव प्रत्यक्षम्, नान्यस्य, तथा तत्तदविद्याकल्पितः प्रपञ्चोऽपि तस्य तस्यैव प्रत्यक्षस्स्यात्, नान्यस्य, तथा च यः प्रपञ्चस्त्वयाऽनुभूयते स एव मयाऽप्यनुभूयते इति प्रत्यभिज्ञानप्रत्यक्षं न स्यादिति शङ्कां दृष्टान्तेन परिहरति—शुक्तिरजते इति । उपलक्षणमेतत् । यौ द्वौ रामकृष्णौ त्वया दृष्टौ, तावेव मयाविति प्रत्यभिज्ञानं न्यायमते द्वित्वभेदेऽपि दृश्यते, तद्वदिति बोध्यम् ॥

वियदादिप्रपञ्चो न जीवाविद्यापरिणामः । किं तु जीवाश्रिताविद्यासङ्घात् भिन्ना माया सर्वजीवान् प्रति साधारणा वियदादिप्रपञ्चपरिणाम्युपादानमुपेयते । अतो वियदादिप्रपञ्चस्यैकत्वात् तदेकत्वप्रतीतिः न भ्रममात्रमिति मतं दर्शयति—जीवाश्रितेति । मायाया अविद्याभ्यो भिन्नत्वे

---

(१) जन्येति पाठः ।

कारणम्(१)। जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकशु-
क्तिरजतादिविक्षेपेऽपि च उपयुज्यन्ते इत्यपरे ॥ ७ ॥

( वे० सू० मं० ) ईशस्य कर्तृता कीदृक् ? तत्र केचिद् प्रचक्षते ॥
कार्यानुकूलविज्ञानचिकीर्षाकृतितेति ताम्॥५३॥

## (८) अवसितमुपादानत्वम्, तत्प्रसक्तानुप्रसक्तं च ।

ईश्वराश्रितत्वे च प्रमाणादिकं प्रागेव दर्शितमिति नात्र तदुच्यते । अविद्यानां प्रपञ्चोपादानत्वाभावे वैयर्थ्यमाशङ्क्याह—जीवानामिति । उक्तशङ्कानिवृत्त्यर्थस्तुशब्दः । यत्किञ्चित्कार्यं प्रत्युपादानत्वाभावो मात्रशब्दार्थः । न च 'नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।' इति भगवद्वचने अहं परमात्मा सर्वस्य प्राणिजातस्य प्रकाशः पूर्णानन्दादिरूपेण स्फुरद्रूपो न भवामि । मम सर्वज्ञत्वसर्वेश्वरत्वसर्वात्मकत्वादिधर्मजातं घटयन्त्या मायया आवृतत्वादित्यर्थके ईश्वराश्रितमायाया एव ब्रह्मावारकत्वप्रतिपादनात्तद्विरोध इति वाच्यम् । 'ब्रह्म तत्त्वतो न जानामि'इत्याकारकस्य जीवाश्रितत्वानुभवस्यानुसारेण जीवाश्रिताविद्याया एव तदावारकत्वे वक्तव्ये सति भगवद्वचनगतमायापदस्य जीवचैतन्ये संसारघटकाविद्यालक्षकत्वोपपत्तेरिति भावः। अविद्याया आवरण इव प्रातिभासिकविक्षेपेऽपि परिणाम्युपादानत्वस्वीकारात् न वैयर्थ्यशङ्कावकाश इत्याशयेनाह—प्रातिभासिकेति ॥

ननु जीवाश्रिताविद्यानां जीवचैतन्याध्यस्तप्रातिभासिकस्वप्नप्रपञ्चोपादानतया तत्रोपयोगसम्भवेऽपि शुक्तिरजताद्युपादानत्वं न सम्भवति शुक्त्याद्यवच्छिन्नचैतन्ये रजताद्यधिष्ठाने तासामभावादिति चेत्, सत्यम् । आदिपदगृहीतस्वप्न एवात्र विवक्षित इत्यदोषः । यद्वा वाचस्पतिमत इव शुक्तिरजतादेरपि जीवाविषयीकृतशुक्त्याद्यवच्छिन्नचैतन्यविवर्तत्वमभिप्रेत्य जीवाविद्यानां प्रातिभासिकरजताद्युपयोगकथनोपपत्तेर्न दोषः ॥ ७ ॥

पूर्वमुक्ते अभिन्ननिमित्तोपादानत्वरूपे ब्रह्मलक्षणे उपादानत्वं विवर्ताधिष्ठानत्वरूपमिति साधितम्, तत्प्रसङ्गाज्जीवेश्वरनिरूपणं प्राप्तम् । तदनु जीवैकत्वनानात्वबन्धमोक्षप्रपञ्चैकत्वनानात्वनिरूपणं प्रसक्तम् । तदेतत् सर्वं निरूपितमिति निरूपयिष्यमाणार्थप्रतिपत्त्युपयोगितया उपसंहरति—अवसितमिति । समाप्तमित्यर्थः । उपादानत्वमिति । तन्निरूपणमित्यर्थः । लक्ष-

( १ ) कारिणीति पाठः ।

अथ कीदृशं कर्तृत्वम् । ?

केचिदाहुः—"तदैक्षत सोऽकामयत तदात्मानं स्वयमकुरुत" इति श्रवणान्न्यायमत इव कार्यानुकूलज्ञानचिकीर्षाकृतिमत्त्वरूपमिति ॥

( वे॰ सू॰ मं॰ ) कार्यानुकूलविज्ञानमात्रं सा नेतरे तयोः ॥
कार्यत्वेनानवस्थानादिति चान्ये प्रचक्षते ॥५४॥

अन्ये तु चिकीर्षाकृतिकर्तृत्वनिर्वाहाय चिकीर्षाकृत्यन्तरा-

---

णान्तर्गतं कर्तृत्वं निरूपयितुमाक्षिपति—अथेति । उदासीनस्य ब्रह्मणः कर्तृत्वधर्मासम्भवादित्यर्थः । स्वतस्तदसम्भवेऽप्यौपाधिकं तत् सम्भवतीति परिहरति—केचिदाहुरित्यादिना । यद्वा जगदुपादानस्य ब्रह्मणो न तत्कर्तृत्वं सम्भवति । घटाद्युपादानस्य मृदादेस्तत्कर्तृत्वादर्शनादित्याक्षिपति—अथेति । घटेश्वरसंयोगादावुपादानस्यैवेश्वरस्य कर्तृत्वदर्शनात् ब्रह्मण एव कर्तृत्वप्रतिपादकश्रुतिबलाच्च तस्य तत् सम्भवतीति परिहरति—केचिदाहुरित्यादिना ।

अथवा ब्रह्मणः कर्तृत्वं कीदृशमिह लक्षणे विवक्षितम्—किं ज्ञानचिकीर्षाकृतिमत्त्वरूपम्, किं वा कार्यानुकूलज्ञानवत्त्वरूपम्, कार्यानुकूलस्रष्टव्यालोचनात्मकज्ञानवत्त्वरूपं वा । नाद्यः । ब्रह्मणस्तादृशकर्तृत्वे मानाभावात् । न द्वितीयतृतीयौ । कार्यानुकूलज्ञानस्य कार्यत्वे तत्कर्तृत्वनिर्वाहाय ज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गात्, तस्याकार्यत्वे च नित्यज्ञानस्वरूपस्य ब्रह्मणस्तादृशज्ञानवत्त्वरूपकर्तृत्वायोगादिति भावः । तत्र प्रथमपक्षं सप्रमाणं दर्शयति—केचिदाहुरिति । श्रुतिषु तच्छब्दाः ब्रह्मपराः । स्वयमित्यस्यान्यानधिष्ठितमित्यर्थः । आत्मानं जगदात्मना अकुरुत कृतवानित्यर्थः । एताभिश्श्रुतिभिस्सृष्ट्यनुकूलाः ज्ञानेच्छाकृतयः प्रतिपाद्यन्ते इति भावः । न च ज्ञानादीनामपि कार्यत्वात्तत्कर्तृत्वाय ज्ञानाद्यन्तरापेक्षायामनवस्था स्यादिति वाच्यम् । ज्ञानादित्रितयातिरिक्तकार्ये उक्तरूपकर्तृत्वस्य विवक्षितत्वान्नानवस्थाप्रसङ्गः । ज्ञानादित्रयं प्रति त्वन्यदेव कर्तृत्वं भविष्यतीत्यभिप्रायः ॥

प्रथमपक्षं दूषयन् द्वितीयपक्षं साधयति—अन्ये त्विति । अन-

पेक्षायामनवस्थाप्रसङ्गात् कार्यानुकूलज्ञानवत्त्वमेव ब्रह्मणः कर्तृत्वम् । न च ज्ञानेऽप्येष प्रसङ्गः । तस्य ब्रह्मस्वरूपत्वेनाकार्यत्वात् । एवं च विवरणे जीवस्य सुखादिकर्तृत्वोक्तिः, वीक्षणमात्रसाध्यत्वात् वियदादि वीक्षितं, हिरण्यगर्भद्वारा वीक्षणाधिकयत्नसाध्यत्वात् भौतिकं स्मितमिति कल्पतरूक्तिश्च सङ्गच्छत इति वदन्ति ॥

---

वस्थाप्रसङ्गादिति । कर्तृत्वलक्षणाननुगमपरिहाराय कार्यमात्रं प्रति ज्ञानादित्रितयवत्त्वरूपे कर्तृत्वे वक्तव्ये सत्यनवस्थाप्रसङ्गो भवत्येवेति भावः । ज्ञानवत्त्वमेवेति । इच्छाकृत्योरेवकारेण व्यवच्छेदः क्रियते । तयोः कर्तृत्वलक्षणप्रवेशे च गौरवादिति भावः । न चैवमुदाहृतश्रुत्योरिच्छाकृतिप्रतिपादनं व्यर्थं स्यादिति वाच्यम् । ताभ्यां श्रुतिभ्यां तयोस्सृष्टिहेतुत्वलाभेऽपि कर्तृत्वनिर्वाहकतया तयोः प्रतिपादनमित्यत्र मानाभावादिति भावः । अकार्यत्वादिति । नित्यज्ञानस्वरूपस्य ब्रह्मणस्तादृशज्ञानवत्त्वमौपाधिकभेदमादाय द्रष्टव्यम् । न चैवमपि सृष्टिकारणज्ञानस्य 'तदैक्षत' इति श्रुत्या कादाचित्कत्वप्रतिपादनविरोध इति वाच्यम् । ब्रह्मस्वरूपतया नित्यस्यापि ज्ञानस्य प्राण्यदृष्टपरिपाकलक्षणो यः कादाचित्कस्सहायः, तद्विशिष्टतया कादाचित्कत्वमभिप्रेत्य तच्छ्रुत्युपपत्तेरिति भावः । कार्यानुकूलज्ञानवत्त्वमात्रं कर्तृत्वमित्यत्र गमकमाह—एवं चेति । इच्छाकृत्योः कर्तृत्वलक्षणाननुप्रवेशे विवक्षिते सतीत्यर्थः । जीवस्येति । तस्य सुखदुःखाद्युत्पत्त्यनुकूलज्ञानं साक्षिरूपं यथा विद्यते, तथा तदनुकूलेच्छादिकं नास्ति । अननुभवादनभ्युपगमाच्च । न चेदमनुपपन्नम् । सुखेच्छया तत्साधनानुष्ठानद्वारा सुखोत्पत्तेरनुभवसिद्धत्वादिति वाच्यम् । सुखाद्युपादानान्तःकरणगोचरचिकीर्षाकृत्योरभावस्यात्र विवक्षितत्वात् । तथा च कार्यानुकूलज्ञानवत्त्वमात्रं कर्तृत्वमित्यङ्गीकारे सत्येव विवरणोक्तिस्सङ्गच्छते, नान्यथेत्यर्थः ।

निश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ॥
स्मितमेतस्य चराचरमस्य च सुप्तिर्महाप्रलयः ॥ १ ॥

इति वाचस्पतिश्लोके महाभूतानां ब्रह्मवीक्षितत्वमुक्तम् । तथा भौतिकस्य चराचरप्रपञ्चस्य ब्रह्मस्मितत्वमुक्तम् । तदुभयतात्पर्यकथनपरे क-

 

(वे०सू०मं०) एवं जीवोऽपि कर्ता स्याज्जगतः स्वप्नजस्य च ॥
ततः सृष्ट्यनुकूलार्था ऽऽलोचनैवेति चापरे ॥ ५५ ॥

ल्पतरुग्रन्थे ब्रह्मवीक्षणमात्रसाध्यत्वं महाभूतेषु तद्वीक्षितत्वनिर्देशस्याल-म्बनं दर्शितम् । तच्च ब्रह्मणो महाभूतसृष्ट्यनुकूलज्ञानवत्तदनुकूलचिकीर्षाकृत्योरप्युपगमे न सङ्गच्छते । वीक्षणातिरिक्तचिकीर्षादिव्यावर्तकमात्रपद-विरोधात् । लोके हि मन्दहासरूपं स्मितं ज्ञानाधिकप्रयत्नसाध्यं प्रसिद्धम् । तथा च परब्रह्मणो भौतिकसृष्टिं प्रति यथा वीक्षणमपेक्षितम्, तथा हिरण्य-गर्भोत्पत्तिलक्षणव्यापारोऽप्यधिकोऽपेक्षितः । चराचरसृष्टौ परब्रह्मण इव हिरण्यगर्भस्यापि कर्तृतायाः श्रुतिस्मृतिसिद्धत्वात् । तथा च परब्रह्मणो भौतिकसृष्ट्यनुकूलं यद्वीक्षणं, तदधिकव्यापारापेक्षितत्वं चराचरस्य ब्रह्म-स्मितत्वनिर्देशालम्बनं दर्शितम् । तदपि महाभूतसृष्टावेव वीक्षणाधिकप्र-यत्नापेक्षायां न सम्भवति । हिरण्यगर्भद्वारेत्यस्य वाक्यस्य हिरण्यगर्भोत्प-त्तिमपेक्ष्येत्यर्थः । न तु हिरण्यगर्भस्साक्षात् कर्ता ब्रह्म च प्रयोजककर्त्रि-ति यथाश्रुतार्थो ग्राह्यः । द्वितीयाध्यायान्तिमाधिकरणे(१) परमेश्वरस्य भौ-तिकसृष्टावपि साक्षात् कर्तृतायास्साधितत्वादिति भावः । वाचस्पतिश्लो-कश्च ब्रह्मस्तुतिपरः । ब्रह्म हि अतिप्रशस्तम् । तथाहि—यस्य ब्रह्मणः पुरुषनिश्वासवत् प्रयत्नं विनैव वेदास्सर्वे कार्यभूताः, यस्य च वीक्षणादेव महाभूतानि भवन्ति, यस्य च हिरण्यगर्भेण सह चराचरात्मकं विश्वं म-न्दहासमात्रम्, यस्य च महाप्रलयोऽपि सुषुप्तिप्रायः, तत्प्राशस्त्ये को वि-स्मय इति भावः ।

---

(१) तत्र हि 'सेयं देवतैक्षत'इत्यादिश्रुत्युक्तनामरूपव्याकरणे 'आकाशो वै नामरूपयोर्निर्वहिता' इत्यादिना आकाशपदबोध्येश्वरस्य नामरूपनिर्वोढृत्व-श्रवणात्, डित्थादिनामकरणे घटादिरूपकरणे च जीवस्य कर्तृत्वदर्शनात् योग्य-त्वाच्च 'किमिदं जीवकर्तृकमुत परमेश्वरकर्तृकम्' इति संशये 'अनेन जीवे-नात्मना'इतिविशेषणात्, 'चारेण परसैन्यमनुप्रविश्य संकलयानि'इत्यत्र चारस्य कर्तृत्वप्रतीतिवत् प्रकृते जीवस्यैव कर्तृत्वमिति प्राप्ते सिद्धान्तः—'संज्ञामूर्तिक्लृ-प्तिस्तु त्रिवृत्कुर्वत उपदेशात्' ( उ० मी० अ० २ पा० ४ अधि० ९ सू० २० ) इति । संज्ञामूर्तिक्लृप्तिः—नामरूपव्याकरणं त्रिवृत्करणकर्तुः परमेश्वरस्यैव कर्म । कुतः ? । उपदेशात्—'सेयं देवतैक्षत' इत्यारभ्य 'व्याकरवाणि' इत्यु-त्तमपुरुषप्रयोगेण परब्रह्मण एव व्याकर्तृत्वोपदेशात् । 'जीवेन'इति विशेषणस्य परमार्थतो जीवस्य ईश्वराभिन्नत्वेनोपपत्तेः । योग्यत्वमपि जीवस्य न सर्वकार्येषु गिरिसमुद्रादिनिर्माणे तदसम्भवादिति ।

अपरे तु कार्यानुकूलस्रष्टव्यालोचनरूपज्ञानवत्त्वं कर्तृत्वं, न कार्यानुकूलज्ञानवत्त्वमात्रम्। शुक्तिरजतस्वाप्नभ्रमादिषु अध्यासानुकूलाधिष्ठानज्ञानवत्त्वेन जीवस्य कर्तृत्वप्रसङ्गात्। न चेष्टापत्तिः। 'अथ रथान् रथयोगान् पथः सृजते स हि कर्ता' इत्यादिश्रुत्यैव जीवस्य स्वप्नप्रपञ्चकर्तृत्वोक्तेरिति वाच्यम्। भाष्यकारैः 'लाङ्गलं गवादीनुद्वहतीतिवत् कर्तृत्वोपचारमात्रं रथादिप्रतिभाननिमित्तत्वेन' इति व्याख्यातत्वादित्याहुः॥ ८॥

(वे०सू०मं०) जगत्कर्तृत्वसंसिद्धं सर्वज्ञत्वं समर्थितम्॥
ईशस्य शास्त्रयोनित्वात्तच्च कीदृग्विधं भवेत्॥५६॥

अनेनैव निखिलप्रपञ्चरचनाकर्तृभावेनार्थसिद्धं सर्वज्ञत्वं

---

द्वितीयपक्षेऽपि दोषं वदन् तृतीयपक्षं समर्थयते—अपरे त्विति। स्रष्टव्यालोचनेति। 'मयेदं स्रष्टव्यम्' इत्याकारकमित्यर्थः। अध्यासेति। अध्यासस्याध्यस्यमानरजतादेरनुकूलं यदधिष्ठानज्ञानं तद्वत्त्वेनेत्यर्थः। न चेष्टापत्तिरिति। न चेत्यस्य वाच्यमित्यनेन सम्बन्धः। अथेत्यस्य स्वप्नकाले इत्यर्थः। जीवस्य रथादिस्रष्टृत्वे हेतुमाह—स हि कर्तेति। हि यस्मात् कारणात् स्वाप्नरथादिहेतुकर्मकर्ता जीवः, तस्मादित्यर्थः। भाष्यकारैरिति। 'लाङ्गलं गवादीनुद्वहतीति प्रयोगे लाङ्गलस्य गवादिस्थितिकर्तृत्वरूपं गवाद्युद्वोढृत्वं मुख्यं नास्ति, किं तु लाङ्गले सति कृषिद्वारा गवादिस्थितिहेतुपलालादितृणलाभोऽस्तीति कृत्वोपचारादुच्यते—गवादीनुद्वहतीति, तद्वत् स्वाप्नरथादिपदार्थोपलब्धिहेतुधर्मादिकर्तृत्वेन रथादिप्रतिभाननिमित्तत्वरूपेण हेतुना तस्य कर्तृत्वमुपचर्यते स हि कर्तेति श्रुतौ' इति भाष्यकारैः कर्तृत्वस्य औपचारिककर्तृत्वरूपतया उक्तत्वादित्यर्थः। एतेन विवरणे सुखादिकर्तृत्वोक्तिरप्युपचारमात्रपरा व्याख्याता। 'मयेदं सुखदुःखादि स्रष्टव्यम्' इत्यालोचनरूपज्ञानाभावेऽपि सुखादिदर्शनेन मुख्यकर्तृत्वासम्भवात्। 'वीक्षणमात्रसाध्यत्वात्' इति कल्पतरौ स्रष्टव्यालोचनरूपं वीक्षणं विवक्षितमिति न तद्विरोध इति द्रष्टव्यम्।

जन्मादिसूत्रेण निखिलजगत्कर्तृत्वे सति तदुपादानत्वे ब्रह्मणो लक्षणत्वेन प्रतिपादिते सति तस्य सर्वज्ञत्वमर्थात् सिध्यति। निखिलजगत्स्रष्टि-

ब्रह्मणः 'शास्त्रयोनित्वात्' ( उ. मी. अ. १ पा. १ सू. ३ ) इत्यधिकरणे वेदकर्तृत्वेनापि समर्थितम् ॥

(९) अथ कथं ब्रह्मणः सर्वज्ञत्वं सङ्गच्छते। जीववदन्तःकरणाभावेन ज्ञातृत्वस्यैवायोगात् ॥

(वे०सू०मं०) तत्र सर्वार्थविषयसर्वधीवासनोपधः ॥
साक्षित्वाद्भारतीतीर्थमते सार्वज्ञ्यमीरितम् ॥ ५७ ॥

अत्र सर्ववस्तुविषयसकलप्राणिधीवासनोपरक्ताज्ञानोपाधिक

---

स्थितिसंहारकर्तृत्वस्य सर्वज्ञत्वं विनाऽसम्भवादित्याह—अनेनैवेति। सर्वज्ञत्वसिद्धौ हेत्वन्तरमाह—शास्त्रयोनित्वादिति। अस्य सूत्रस्यार्थमाह—वेदकर्तृत्वेनापीति। ननु यथा वेदकर्तृत्वं भाष्यादिषूक्तप्रकारेण सर्वज्ञत्वं साधयति, तथा जन्मादिसूत्रोपात्तं सर्वकर्तृत्वमपि तत् साधयति। तथा च पूर्वसूत्रे अर्थसिद्धम्, इह तु साध्यते इत्युक्तौ को हेतुरिति, उच्यते—पूर्वसूत्रं लक्षणपरं, न तु सर्वज्ञत्वसाधनपरम्। इदं तु तत्साधनपरमिति तात्पर्यसत्त्वासत्त्वाभ्यां तथा व्यवहारः। ततश्च ब्रह्म सर्वज्ञं शास्त्रकर्तृत्वादिति सूत्रयोजना ॥ ८ ॥

ननु ब्रह्मणस्सर्वज्ञत्वं 'यः सर्वज्ञस्सर्ववित् गुणी सर्वविद्यः' इत्यादिश्रुत्या कण्ठत एव प्रतिपाद्यते, काऽत्र साधनापेक्षेति चेत्, सत्यम्। श्रुत्युक्ते सर्वज्ञत्वे प्रतिपत्तिदार्ढ्यायोपपत्तिसमर्पणात्। एवं श्रुत्युपपत्तिसिद्धं सर्वज्ञत्वं निरूपयितुमाक्षेपमवतारयति—अथेति। जीवस्य हि स्वोपाध्यन्तःकरणवृत्तिज्ञानाश्रयत्वरूपं ज्ञातृत्वं प्रमाणसिद्धम्। ब्रह्मणश्चान्तःकरणाभावात् ज्ञातृत्वं न सम्भवति। न च ब्रह्मणोऽप्यन्तःकरणमस्त्विति वाच्यम्। 'कार्योपाधिरयं जीवः' इति श्रुत्या तस्य जीवोपाधित्वेन नियमितत्वात्। ज्ञातृत्वं च सर्वज्ञत्वव्यापकम्। ज्ञातृत्वविशेषरूपत्वात् सर्वज्ञत्वस्य। तथा च ब्रह्मणः ज्ञातृत्वस्य व्यापकस्य निवृत्त्या व्याप्यसर्वज्ञत्वनिवृत्तिरित्यर्थः। ज्ञातृत्वाभावे सर्वज्ञत्वं दूरापास्तमित्येवकारार्थः। अन्तःकरणानां जीवोपाधित्वेऽपि तद्वासनानामीश्वरोपाधित्वात् सम्भवति कथञ्चित्तस्य सर्वज्ञत्वमिति परिहरति—अत्र सर्ववस्त्विति।

ईश्वरः। अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति भारतीतीर्थादिपक्षः प्रागेव दर्शितः॥

(वे०सू०मं०) चिच्छायाग्राहिभिर्मायावृत्तिभेदैस्तदीशितुः॥
त्रैकालिकेष्वापरोक्ष्यं प्रकटार्थकृतो विदुः॥ ५८॥

प्रकटार्थकारास्त्वाहुः—यथा जीवस्य स्वोपाध्यन्तःकरणपरिणामाश्चैतन्यप्रतिबिम्बग्राहिण इति तद्योगात् ज्ञातृत्वम्, एवं ब्रह्मणः स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणस्सन्तीति तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्तिनोऽपि प्रपञ्चस्यापरोक्षेणावकलनात् सर्वज्ञत्वमिति॥

(वे०सू०मं०) तत्त्वशुद्धिकृतो भूते स्मृतिं भाविनि तूहनम्॥

तत्त्वशुद्धिकारास्तूक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्च-

---

अत्रेत्यस्मिन्नाक्षेपे इत्यर्थः। सर्वविषयवासनासाक्षितयेति। स्वोपाधिभूतवासनाविषयसर्ववस्त्ववभासकतयेत्यर्थः।

अस्मिन् समाधाने प्रागुक्तमस्वरसं मनसि निधाय समाधानान्तरमाह—प्रकटार्थकारास्त्विति। यथाऽन्तःकरणं ज्ञातृत्वोपाधिः, तथा मायाऽपि ज्ञातृत्वोपाधिर्भवत्येव। तथा च ब्रह्मणि मायोपाधिके सर्वज्ञत्वव्यापकस्य ज्ञातृत्वस्य निवृत्त्यभावात् न सर्वज्ञत्वनिवृत्तिशङ्केत्यर्थः। स्वोपाधिमायेति। 'मायिनम्' इतिश्रुतेः, 'मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः' इति वाक्यवृत्तिवचनाच्च मायाया ईश्वरोपाधित्वं सिद्धमिति भावः। सर्वज्ञत्वसर्वनियन्तृत्वसर्वात्मकत्वानि लक्षणान्यसाधारणधर्माः यस्य, सः सर्वज्ञत्वादिलक्षण इत्यर्थः। अवकलनादिति। विषयीकरणादित्यर्थः।

तत्त्वशुद्धिकारास्त्विति। प्रकटार्थकाराणां मते अतीतानागतप्रपञ्चरूपविषयेऽपि ईश्वरीयं मायावृत्तिप्रतिबिम्बरूपं ज्ञानमपरोक्षम्। तत्त्वशुद्धिकाराणां मते अतीतादिविषये जीवानामिवेश्वरज्ञानमपि परोक्षमेवेति विशेषार्थकस्तुशब्दः। विद्यमानेति। लोके प्रत्यक्षज्ञानस्य वर्तमानवस्तुमात्रविषयकत्वस्वाभाव्यदर्शनेन तस्य क्लृप्तस्वभावातिलङ्घने कारणाभावात् सर्वज्ञत्वप्रतिपादकशास्त्रस्य ईश्वरीयज्ञानगतपरोक्षत्वापरोक्षत्वयो-

साक्षात्कारसम्भवात् तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः । सृष्टेः प्राङ्मायायास्सृज्यमाननिखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वसिद्धेः अनागतवस्तुविषयविज्ञानोपपत्तिरिति सर्वज्ञत्वं समर्थयन्ते ॥

(वे०सू०मं०) सदा सर्वस्य सत्त्वात्तु साक्षिणा कौमुदीकृतः ॥५९॥
सार्वज्ञ्ये ज्ञानरूपत्वमिष्टं न ज्ञानकर्तृता ॥
भाष्येऽस्य जीवलिङ्गत्वकीर्तनादिति ते विदुः ॥६०॥

कौमुदीकृतस्तु वदन्ति—स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात् सर्वज्ञत्वम् । अतीतानागतयोरप्यविद्यायां चित्तभित्तौ विमृष्टानुन्मीलितचित्रवत् संस्कारात्मना सत्त्वेन

---

रुदासीनत्वादिति भावः । तज्जनितेति । विद्यमानवस्तुसाक्षात्कारजनितेत्यर्थः । अनागतवस्तुज्ञानमुपपादयति—सृष्टेः प्रागिति । स्फुरणपदं वृत्तिपरम् । विवर्तमानत्वं परिणममानत्वम् । तदुपाधिकस्येति । मायोपाधिकस्येत्यर्थः । कथं तदुपाधिकत्वमत आह—तत्साक्षितयेति । तस्यां मायायां प्रतिबिम्बिततयेत्यर्थः । सृष्टेः पूर्वकाले मायायास्तथा परिणामे कारणमाह—जीवादृष्टेति । तत्साधकत्वसिद्धेरिति । मायावृत्तिकर्तृत्वसिद्धेरित्यर्थः । अनागतेति । अनागतवस्तुविषयकस्य ज्ञानस्य वृत्तिप्रतिबिम्बरूपस्य ब्रह्मण्युपपत्तिरित्यर्थः ।

जीववत्व ब्रह्मणोऽपि चैतन्यप्रतिबिम्बोपेतैर्वृत्तिज्ञानैस्सर्वज्ञत्वं निरूपितं मतद्वयेन । इदानीं स्वरूपज्ञानेनैव तन्निरूपयति—कौमुदीकृतस्त्विति । नन्वतीतानागतप्रपञ्चयोः प्रलयकाले सृष्टिपूर्वकाले च सत्त्वे मानाभावात् तदा ब्रह्मणस्सर्वज्ञत्वं न सिध्यति । असतोस्तयोश्चैतन्यसंसृष्टत्वासम्भवादिति, नेत्याह—अतीतानागतयोरपीति । अतीतप्रपञ्चस्य प्रलयकाले संस्कारात्मना सत्त्वस्य देवताधिकरणे ( उ. मी. अ. १ पा. ३ अधि. ९ सू. २६ ) सूत्रभाष्यकारादिभिस्साधितत्वात् । तथाऽनागतस्यापि सृष्टिपूर्वकाले संस्कारात्मनैव सत्त्वस्यारम्भणाधिकरणा ( उ. मी. अ. २ पा. १ अधि. ६

तत्संसर्गस्याप्युपपत्तेः। न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्। "तमेव भान्तमनु भाति सर्वम्" इति सावधारणश्रुतिविरोधात्सृष्टेः प्रागेकमेवाद्वितीयमित्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूपे ईक्षणे तत्पूर्वके म-

---

सु. १४) दिषु साधितत्वादतीतादिवस्तुसंसृष्टब्रह्मचैतन्यस्य तदापि सर्वज्ञत्वसिद्धिरिति भावः। चित्रस्यानुन्मीलितत्वम् अनभिव्यक्तत्वम्। तत्र हेतुर्विमृष्टत्वम्। अविद्यैव चित्रभित्तिरिति रूपकमत्र द्रष्टव्यम्।

अत्रेदं चिन्त्यम्—स्थूलप्रपञ्चस्थितिकाले संस्कारात्मकसूक्ष्मप्रपञ्चो नास्ति। प्रलयकालादौ च स्थूलः प्रपञ्चो नास्ति। तथा च ब्रह्मचैतन्यस्य सदा सर्वप्रपञ्चसंसृष्टत्वाभावात् सदा तस्यासंकुचितसर्वज्ञत्वं न सम्भवतीति। स्वरूपज्ञानेनैवेत्यत्रत्यस्य अवधारणस्य व्यवच्छेद्यमाह—न तु वृत्तिज्ञानैरिति। श्रुतिगतस्यावधारणस्य स्वप्रकाशात्मातिरिक्तानवभास्यमादित्यादि जगदित्यर्थः।

अत्रेदं चिन्त्यम्—ब्रह्मचैतन्यस्य जगदवभासनार्थं मायावृत्त्यपेक्षायां यदि श्रौतमवधारणं विरुध्यते, तदा जीवचैतन्यस्य घटाद्यवभासनार्थं अन्तःकरणवृत्त्यपेक्षायामपि तद्विरुध्यत एव। यदि चान्तःकरणवृत्तीनां जडत्वात् तदपेक्षायामपि सर्वं जडवस्तु चैतन्यमात्रावभास्यमिति सावधारणश्रुत्यर्थस्य न बाधः, तदा मायावृत्त्यपेक्षायामपि तुल्यं समाधानमिति। प्रलयकाले सर्वज्ञत्वाभावे को दोषस्तत्राह—प्राथमिकेति। तदा सर्वज्ञत्वाभावे सति सर्गादौ "तदैक्षत" इति श्रुत्युक्तं भूतसृष्ट्यनुकूलमीक्षणं प्रति कर्तृत्वासम्भवेन ईक्षणपूर्वकभूतादिसर्गं प्रत्यपि ब्रह्मणः कर्तृत्वाभावप्रसङ्गादित्यर्थः।

अत्रापि इदं चिन्त्यम्—एवमपि सृष्टिपूर्वकाले ब्रह्मचैतन्यव्यतिरिक्तस्य मायातत्सम्बन्धादेस्सत्त्वात् अद्वितीयत्वावधारणं मुख्यं न सम्भवति। यदि च मायादेरनादित्वप्रतिपादकश्रुत्यादिबलाद्व्याकृतकार्यात्मकद्वितीयाभावावधारणपरं तद्वचनमित्युच्येत, तदा सर्वदा सर्वविषयकज्ञानकर्तृत्वरूपसर्वज्ञत्वप्रतिपादकश्रुत्यादिबलात् सर्वज्ञत्वघटकमायावृत्तिसन्ततिव्यतिरिक्तकार्याभावावधारणपरमद्वितीयत्ववचनमि-

हाभूतादौ च सृष्टृत्वाभावप्रसङ्गाच्च । एवं सति ब्रह्मणस्सर्वविषयज्ञानात्मकत्वमेव स्यात्, न तु सर्वज्ञातृत्वरूपं सर्वज्ञत्वमिति चेत्, सत्यम् । सर्वविषयज्ञानात्मकमेव ब्रह्म, न तु सर्वज्ञानकर्तृत्वरूपं ज्ञातृत्वमस्ति । अत एव 'वाक्यान्वयात्' ( उ.मी. अ. १ पा. ४ सू: १९) इत्यधिकरणे विज्ञातृत्वं जीवलिङ्गमित्युक्तं

---

ऽपि कल्पनं तुल्यम् । मायावृत्तिभिस्सर्वज्ञत्वसमर्थनमेव भाष्यसम्मतम् । तथा च ईक्षत्यधिकरण—( उ० मी० अ० १ पा० १ अधि० १ सू० ५ ) भाष्यम्—'अपि चाविद्यादिमतस्संसारिणश्शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य' इति । सृष्टेः पूर्वकाले ब्रह्मणस्स्रष्टव्यालोचनरूपमीक्षणं न सम्भवति । वृत्तिज्ञानरूपेक्षणस्य शरीरादिकारकसाध्यतया लोकसिद्धत्वेन ब्रह्मणः तदा शरीराभावादिति साङ्ख्यशङ्कानिरासार्थमिदं भाष्यम् । जीवस्यैव वृत्तिज्ञानोत्पत्तिश्शरीरादिसाध्या । ईश्वरस्य तु मायावृत्तिरूपा ज्ञानोत्पत्तिश्शरीराद्यनपेक्षा । तथा च सृष्टिपूर्वं प्रलयकालेऽपि तस्य मायावृत्तिरूपमीक्षणं सदा सर्वज्ञत्वं च सम्भवतीति समाधानभाष्याभिप्रायः । इदं भाष्यमित्थमेव व्याख्यातृभिर्नीतम् । भाष्ये ज्ञानप्रतिबन्धकारणमविद्यादीति मन्तव्यम् । ततश्च मायावृत्तिभिस्सर्वज्ञत्वसमर्थनपक्षदूषणमसङ्गतमिति मन्तव्यम् । शङ्कते—एवंसतीति । स्वरूपज्ञानेनैव सर्वज्ञत्वसमर्थने सतीत्यर्थः । न त्विति । स्वरूपज्ञानस्य नित्यत्वादिति भावः । न तु सर्वज्ञानकर्तृत्वरूपमिति । ब्रह्मण इति शेषः । अत्र यद्यपि ज्ञातृत्वं सामान्यरूपं, सर्वज्ञानकर्तृत्वं तु विशेषरूपमिति न तयोरभेदस्सम्भवति, तथापि ब्रह्मणो ज्ञातृत्वं नास्तीत्यत्रैव तात्पर्यं, न तु तयोरभेदोक्तावपीत्यविरोधः । अत एवेति । ब्रह्मणो ज्ञातृत्वाभावादेवेत्यर्थः । इत्युक्तमिति । बृहदारण्यके मैत्रेयीब्राह्मणे पठ्यते—"आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यात्मा वा अरे द्रष्टव्यः" इत्यादि । अत्र किं जीवो द्रष्टव्यत्वेन उपदिश्यते, उत प्रत्यगभिन्नपरमात्मा निष्प्रपञ्चस्वभाव इति संशयः । तत्र पूर्वपक्षः—पूर्ववाक्ये भोक्तुर्जीवस्य प्रकृतत्वात् उपसंहारेऽपि "विज्ञातारमरे केन विजानीयात्" इति विज्ञातृत्वस्य कीर्तनाच्च जीव एवात्र द्रष्टव्य उपदिश्यते इति । सिद्धान्तस्तु—प्रत्यगभिन्नपरमात्मैव द्रष्टव्यतयोपदिश्यते । कुतः ? वाक्यान्वयात् । तथाहि—अत्र आत्मवेदनेन सर्वं

भाष्यकारैः । "यस्सर्वज्ञः" इत्यादिश्रुतिरपि तस्य ज्ञानरूपत्वा-भिप्रायेणैव(१) योजनीयेति ।

(वे०सू०मं०) दृश्यावच्छिन्नरूपेण चितः कार्यत्वसम्भवात् ॥
सार्वज्ञ्यं ज्ञानकर्तृत्वं वाचस्पतिमते स्थितम् ॥ ६१ ॥

यद्यपि ब्रह्म स्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकं, तथा-पि तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण तु ब्रह्मकार्य-

विदितं भवतीति प्रतिपाद्यते । तच्च सर्वाधिष्ठानब्रह्मपरिग्रहे घटते, न जीव-परिग्रहे । तथा "इदं सर्वमात्मा" इत्यादिवाक्यान्यपि सर्वात्मके ब्रह्मण्येव तात्पर्येण प्रतिपादकतयाऽन्वितानि लक्ष्यन्ते । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति पूर्ववाक्ये जीवपरामर्शस्तु लोकसिद्धं भोक्तारमनूद्य तस्य शुद्धब्रह्मरूपेण द्रष्टव्यत्वोपदेशार्थः । "विज्ञातारम्" इति वाक्यं तु जीवस्य विज्ञातृत्वरूपधर्मपरं न भवति, तस्य वाक्यस्य मुक्तजीवपरत्वात्, मुक्तजीवे च निरुपाधिके तस्यासम्भवात्, किं तु भूतपूर्वगत्या विज्ञातृत्वा-नुवादमात्रम् । स्वातन्त्र्येण न कस्य चिदर्थस्य साधकम् । तस्मान्मैत्रेयीब्राह्मणं प्रत्यगभिन्ने निर्विशेषे द्रष्टव्ये समन्वितमिति सिद्धमिति । अत्र ज्ञातृत्वं ब्रह्मसाधारणं चेज्जीवलिङ्गतया भाष्यकारैर्नोपन्यस्येत, उपन्यस्तं च, तस्मात् ज्ञातृत्वं ब्रह्मणो नास्तीति गम्यत इति भावः । ईश्वरस्य सर्व-विषयकज्ञानकर्तृत्वानभ्युपगमे श्रुतिविरोधमाशङ्क्याह—यस्सर्वज्ञ इति ।

ननु नित्यचैतन्यमात्रस्य सर्वत्र लक्ष्यतया ज्ञाधातुवाच्य-त्वायोगात् विशिष्टचैतन्यस्य प्रकृत्यर्थत्वं वाच्यम् । तथा च विशि-ष्टस्य कार्यत्वसम्भवात् प्रत्ययश्रुत्यर्थकर्तृत्वस्य न विरोधः । ब्रह्मणः सर्वज्ञानकर्तृत्वप्रतिपादकश्रुतिविरोधेन ज्ञातृत्वस्य जीवलिङ्गत्वोक्तेरभ्युच्चय-मात्रत्वोपपत्तेः तदधिकरणसिद्धान्ताभिमतनिर्विशेषब्रह्मव्यावृत्तत्वमात्रेण वि-ज्ञातृत्वस्य पूर्वपक्षलिङ्गत्वोपन्यासोपपत्तेश्च, भाष्यकारैरेव मुख्यस्य सर्व-विषयकज्ञानकर्तृत्वस्य ईक्षत्यधिकरणे प्रतिपादितत्वाच्च, प्रत्ययश्रुतेः स्वार्थ-परत्वसम्भवे तत्त्यागायोगाच्चेत्यस्वरसादाह—यद्यपीत्यादिना । चैतन्ये-नैवेति । न मायावृत्तिभिरित्येवकारार्थः । तर्हि प्रत्ययार्थबाधः, नेत्याह—तथाऽपीति । तस्य स्वरूपचैतन्यस्येत्यर्थः । दृश्यावच्छिन्नेति । न

(१) दृश्यत्वाद्यवच्छिन्नरूपेणैव योजनीयेतीति पाठः ।

त्वात् । "यस्सर्वज्ञः" इति ज्ञानजननकर्तृत्वश्रुतेरपि न कश्चिद्विरोध इति आचार्यवाचस्पतिमिश्राः ॥ ९ ॥

(१०)नन्वीश्वरवज्जीवोऽपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव किमिति विषयान्नावभासयति ?—

(वे०सू०मं०) बुद्धौ संसृज्यते जीवः सर्वगो व्यक्तिजातिवत् ॥
अन्यैस्तद्वृत्त्युपारूढो ज्ञाता(१) विवरणे स्थितः ॥६२॥

अत्रोक्तं विवरणे—ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं सत् स्वसंसृष्टं सर्वमवभासयति, न जीवचैतन्यम् । तस्याविद्योपाधिकतया सर्वगतत्वेऽप्यनुपादानत्वेनासङ्गित्वात् । यथा सर्वगतं गोत्वसामान्यं स्वभावादश्वादिव्यक्तिसङ्गित्वाभावेऽपि सास्नावद्व्यक्तौ संसृज्यते, एवं विषयासङ्ग्यपि जीवः

---

चानादिमायारूपदृश्यावच्छिन्नचैतन्यस्य कथमुक्तप्रकारेणापि कार्यत्वं सिध्येदिति वाच्यम् । मायादेरपि तत्तत्कार्यतादात्म्यापत्त्या मायाद्यवच्छिन्नस्यापि कार्यत्वस्य सुसम्पादत्वादिति भावः ॥ ९ ॥

आक्षिपति—नन्विति । नावभासयतीति । न चात्रेष्टापत्तिर्वक्तुं शक्यते । तथासत्यविद्याप्रतिबिम्बचैतन्यरूपजीवस्य व्यापकतया स्वसंसृष्टसकलजगदवभासकत्वापत्त्या सर्वज्ञत्वप्रसङ्गात् । स्वरूपचैतन्यस्य कारकानपेक्षतया चक्षुरादिवैयर्थ्यप्रसङ्गाच्चेति भावः ।

अत्रोक्तमिति । अस्मिन्नाक्षेपे समाधानमुक्तमित्यर्थः । न जीवचैतन्यमिति । यथा जगत् ब्रह्मसंसृष्टं, तथा जीवसंसृष्टं न भवति, अतो न तस्य सर्वज्ञत्वप्रसक्तिरित्यर्थः । ननु यथा जीवस्य घटादिविषयैस्सम्बन्धाभावः, तथाऽन्तःकरणादिनाऽपि सम्बन्धाभावस्तुल्यः । उपादानत्वाभावादेव । तथा चान्तःकरणादेर्वृत्तिं विनैव जीवचैतन्यरूपसाक्षिभास्यत्वं न स्यादित्याशङ्क्य उपादानत्वाभावेऽपि जीवचैतन्यस्यान्तःकरणादिना तादात्म्यसम्बन्धे दृष्टान्तमाह—यथा सर्वगतमिति । संसृज्यत इति । अतो

---

(१) तद्वृत्त्युपारूढः सन् अन्यैः—विषयान्तरैः संसृज्यते, तेन च ज्ञाता तदवभासको भवतीति सम्बन्धः ।

स्वभावादन्तःकरणे संसृज्यते । तथाच यदाऽन्तःकरणस्य परिणामो वृत्तिरूपो नयनादिद्वारेण निर्गत्य विषयपर्यन्तं चक्षूरश्मिवत् झटिति दीर्घप्रभाकारेण परिणम्य विषयं व्याप्नोति, तदा तमुपारुह्य तं विषयं गोचरयति । केवलाग्न्यदाह्यस्यापि तृणादेरयःपिण्डसमारूढाग्निदाह्यत्ववत् केवलजीवचैतन्याप्रकाश्यस्यापि घटादेरन्तःकरणवृत्त्युपारूढस्य तत्प्रकाश्यत्वं युक्तम् ।

(वे०सू०मं०) यद्वाऽन्तःकरणोपाधिर्जीवो वृत्त्या बहिर्गतः ॥
विषयब्रह्मचैतन्याभेदव्यक्त्याऽर्थभासकः ॥ ६३ ॥

यद्वाऽन्तःकरणोपाधिकत्वेन जीवः परिच्छिन्नः । अतः संसर्गाभावान्न घटादिकमवभासयति । वृत्तिद्वारा तत्संसृष्टविषयाव-

---

नान्तःकरणादेस्साक्षिभास्यत्वविरोध इति भावः । चक्षुरादिवैयर्थ्यप्रसङ्गं परिहरति—तथा चेत्यादिना । तथाचेत्यस्य जीवस्य स्वतो विषयसम्बन्धाभावे सतीत्यर्थः । अन्तःकरणपरिणामस्य सहसा विषयव्याप्तौ दृष्टान्तः—चक्षूरश्मिवदिति । तमिति । परिणाममित्यर्थः । गोचरयति जीवचैतन्यमिति शेषः । विषयदेशे सतोऽपि जीवचैतन्यस्य स्वतो विषयावभासकत्वं नास्ति । तस्यैव तु वृत्त्यारूढस्य तदस्तीत्यत्र दृष्टान्तमाह—केवलाग्नीति । तत्प्रकाश्यत्वमित्यत्र तत्पदं जीवचैतन्यपरम् । ननु जीवचैतन्यस्य विषयदेशे सतोऽपि विषयैः संसर्गाभावात् न तत्प्रकाशकत्वम्, वृत्त्या तयोस्संसर्गलाभे च तत्प्रकाशकत्वमिति किमिति परिह्रियते, जीववचैतन्यस्य सर्वगतत्वेन सत्यपि विषयसंसर्गे बिम्बभूतब्रह्मचैतन्यवत्तस्यावृतत्वादेव न विषयप्रकाशकत्वमिति प्रतिपादनेनापि जीवस्य सर्वज्ञत्वप्रसङ्गादेः परिहारसम्भवादिति चेत्, न । 'ब्रह्म न जानामि' इत्यनुभवबलात्तस्यावृतत्वेऽपि 'मां न जानामि' इत्यनुभवाभावेन जीवचैतन्यस्यावृतत्वासम्भवादिति भावः।

जीवचैतन्यस्यान्तःकरणोपाधिकतया परिच्छिन्नत्वपक्षे सर्वज्ञत्वापत्तिशङ्कैव नास्ति । तस्य विषयैस्सह स्वतस्सम्बन्धाभावेन वृत्तिं विना तत्प्रकाशकत्वासम्भवादिति परिहारान्तरमाह—यद्वेति । अत इति । परिच्छिन्नत्वादित्यर्थः । तत्संसृष्टेति । वृत्तिद्वारा वृत्तिमदन्तःकरणसंसृष्टं यद् विषयावच्छिन्नब्रह्मचैतन्यं, तस्यान्तःकरणोपाधिकजीवचैतन्येन सहाभेदाभिव्य-

च्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ तु तं विषयं प्रकाशयति ।

(वे०सू०मं०) अथवा सर्वगोऽविद्यावृतोऽसौ न प्रकाशते ॥
वृत्त्युपरागतोऽनावृतो वृत्तिभग्नावरणभासकः ॥ ६४ ॥

अथवा जीवः सर्वगतोऽप्यविद्यावृतत्वात् स्वयमप्यप्रकाशमानतया विषयान्नवभासयन्विषयविशेषे वृत्त्युपरागादावावरणतिरोधानेन तत्रैवाभिव्यक्तस्तमेव विषयं प्रकाशयति । एवं च चिदुपरागार्थत्वेन, विषयचैतन्याभेदाभिव्यक्त्यर्थत्वेन, आवरणाभिभवार्थत्वेन वा वृत्तिनिर्गममपेक्ष्य तत्संसृष्टविषयमात्रावभासकत्वात्

---

क्तौ सत्यां स जीवस्तं विषयं प्रकाशयतीत्यर्थः ।

'अविद्याप्रतिविम्बो जीवः' इति प्रथमपक्षमेवाश्रित्य जीवस्योपादानत्वाभावेऽपि घटादिविषयैस्सह संसर्गमभ्युपेत्य परिहारमाह—अथ वेति । सर्वगतोऽपीति । उपलक्षणं चैतत् । विषयसंसृष्टोऽपीत्यपि द्रष्टव्यम् । इतरथा विषयसंसर्गाभावादेव जीवस्य विषयप्रकाशकत्वाभावोपपत्तौ तस्यावृतत्वकल्पनावैयर्थ्यप्रसङ्गादिति बोध्यम् । न च 'मां न जानामि' इत्यनुभवाभावात् कथं तस्यावृतत्वं सिध्येदिति वाच्यम् । अन्तःकरणोपहितजीवचैतन्यस्यैव 'माम्' इत्यनुभवविषयतया व्यापकजीवचैतन्ये अन्तःकरणावच्छेदेन तदभावेऽपि विषयदेशे तस्यावृतत्वकल्पने बाधकाभावात् सर्वगतत्वेन रूपेण 'मां न जानामि' इत्यनुभवसत्त्वाच्चेति भावः । स्वयमपीति । विषयास्तावज्जडत्वात् स्वतो न प्रकाशन्ते । जीवस्तु स्वप्रकाशतया प्रकाशमानोऽपि आवृतत्वादप्रकाशमान इति वक्तुमपिशब्दः । यद्वा अपिशब्दः अवधारणार्थः । तथा चावृतत्वात् स्वयमेवाप्रकाशमानतयेत्यर्थः । वृत्त्युपरागादाविति । विषयविशेषे वृत्त्युपरागे सति विषयदेशस्थजीवचैतन्यस्यापि वृत्त्युपरागो भवति । तेन च जीवचैतन्यगतस्यावरणस्य तिरोधानं भवति । तथा च जीवचैतन्ये यो वृत्त्युपरागः स आदिपदार्थः । तत्रैवेति । विषयविशेषे एवेत्यर्थः । तमेवेति । नान्यं विषयम् । अतो न सर्वज्ञत्वप्रसङ्ग इति भावः । इममेव भावं प्रकटयति—एवं चेति । जीवचैतन्यस्य वृत्तिं विना विषयानवभासकत्वे सिद्धे सं-

जीवस्य किञ्चिज्ज्ञत्वमप्युपपद्यते इति ॥ १० ॥

(वे०सू०मं०) वृत्तोश्चिदुपरागो वा अभेदव्यक्तिरेव वा ॥
फलमावृतिभङ्गो वा तत्राद्यं कीदृशं भवेत् ॥ ६५ ॥

(११)अत्र प्रथमपक्षे सर्वगतस्य जीवस्य वृत्त्यधीनः को विषयोपरागः ? वृत्त्याऽपि हि पूर्वसिद्धयोर्निष्क्रययोर्विषयजीवचैतन्ययोस्तादात्म्यस्य संयोगस्य वा न सम्भवत्याधानम् ।

(वे०सू०मं०) नैयायिकादिवत् केचिद्विषयत्वं स्वभावतः ॥

---

तीत्यर्थः । तत्संसृष्टेति । वृत्तिसंसृष्टेत्यर्थः । किञ्चिज्ज्ञत्वमपीति । अनुभवसिद्धं किञ्चिज्ज्ञत्वम् अनुभवसिद्धासर्वज्ञत्वादिति भावः । तदसिद्धं चक्षुराद्यनुविधानं चेत्यपिशब्दार्थः ॥ १० ॥

आक्षिपति—अत्रेति । उक्तपक्षेषु मध्ये इत्यर्थः । क इति । स्वरूपलक्षणो वा, तादात्म्यलक्षणो वा, संयोगलक्षणो वेति किंशब्दार्थः । तत्र न तावदाद्यः वृत्त्यधीनः । जीवचैतन्यस्य सर्वगतत्वेन विषयदेशसन्निहितजीवचैतन्यविषययोस्स्वरूपात्मकसम्बन्धस्य वृत्तिं विनाऽपि सिद्धत्वादित्याशयेन सर्वगतस्येत्युक्तम् । द्वितीयतृतीयौ क्रमेण दूषयति—वृत्त्याऽपीति । लोके ययोः पदार्थयोस्तादात्म्यमनुभूयते, तत् तयोरादित आरभ्यैवानुभूयते, न तु मध्ये आगन्तुकमित्याशयेनाह—पूर्वसिद्धयोरिति । संयोगस्यान्यतरकर्मजत्वम्, उभयकर्मजत्वं वा वक्तव्यम् तदुभयं प्रकृते न सम्भवतीत्याह—निष्क्रिययोरिति । न च सुवर्णादौ द्विविधकर्माभावेऽपि तेजःपार्थिवभागयोस्संयोगो दृष्ट इति वाच्यम् । तथा विषयजीवचैतन्ययोरादित आरभ्य संयोगाभ्युपगमे तस्य वृत्त्यधीनत्वप्रतिपादनविरोधादिति भावः । वृत्त्याऽप्याधानं न सम्भवतीति सम्बन्धः । जीवचैतन्यस्यानुपादानतया निरवयवतया च विषयजीवचैतन्ययोस्तादात्म्यसंयोगौ स्वतो न स्त एव । वृत्त्याऽपि तयोराधानं न सम्भवतीत्यपिशब्दार्थः । आधानमुत्पादनमिति बोध्यम् ॥

विषयदेशे सन्निहितस्य जीवचैतन्यस्य वृत्त्युत्पत्तेः पूर्वं विषयविषयिभावलक्षणस्सम्बन्धो मा भूत, तदुत्पत्त्यनन्तरं स जायते । तस्यातिरि-

अत्र केचिदाहुः—विषयविषयिभावसम्बन्ध एवेति ।

(वे०सू०मं०) वृत्तिनिर्गमवैयर्थ्यादन्ये तद्द्वारसङ्गमम् ॥ ६६ ॥

अन्ये तु—विषयविषयिभावमात्रनियामिका वृत्तिश्चेदनिर्गताया अप्यैन्द्रियकवृत्तेस्तन्नियामकत्वं नातिप्रसङ्गावहमिति तन्निर्गमाभ्युपगमवैयर्थ्यापत्तेः स नाभिसंहितः । किं तु विषयसन्निहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे तस्यापि तद्द्वारकः

---

कस्यानिर्वचनीयस्य सम्भवादित्याशयेनाह—अत्र केचिदाहुरिति । न तु स्वरूपसम्बन्धस्य वा तादात्म्यस्य वा संयोगस्य वा वृत्त्यधीनत्वमुपेयते । येनोक्तदोषस्स्यादित्येवकारार्थः ।

परोक्षस्थले अनुमित्यादिवृत्त्युपहितजीवचैतन्यस्य अनुमेयादिविषयैस्सह विषयविषयिभावलक्षणसम्बन्धस्य वृत्तिनिर्गमनं विनाऽपि सिद्धान्ते स्वीकारात् वृत्तिनिर्गमनमुपगच्छतां विवरणकाराणामयं सम्बन्धो नाभिमेत इत्याह—विषयविषयिभावमात्रेति । परोक्षस्थलसाधारणविषयविषयिभाव एवेत्यर्थः । तन्नियामकत्वमिति । विषयविषयिभावसम्बन्धस्तच्छब्दार्थः । वृत्तिनिर्गमनाभावेऽपि यद्विषया वृत्तिर्जीवस्य, स एव तस्य प्रकाश्यः, नान्य इति नियमसिद्धेर्विषयान्तरप्रकाशकत्वापत्तिरूपातिप्रसङ्गो नास्तीत्यर्थः । संयोगादेरपि निरस्तत्वात् कस्सम्बन्धस्तदभिमत इति पृच्छति— किं त्विति । अभिमतसम्बन्धमाह—विषयसन्निहितेति । विषयव्यापितया उत्पन्नां वृत्तिं प्रति विषयसन्निहितजीवचैतन्यस्याधिष्ठानतया वृत्तेस्तत्तादात्म्यं बोध्यम् । तस्यापीति । विषयसन्निहितजीवचैतन्यस्यापि विषयावभासकत्वेनाभिमतस्य विषयेण सह वृत्तिविषयसंयोगद्वारकः परम्परासम्बन्धः विषयसंयुक्तवृत्तितादात्म्यलक्षणो लभ्यत इत्यर्थः । उक्तसम्बन्धस्य वृत्तिनिर्गमनं विनाऽसम्भवात्तन्निर्गमनं विवरणाचार्यैरुक्तमिति भावः ॥

सुखादेरान्तरपदार्थस्यापरोक्षत्वे तत्प्रकाशकजीवचैतन्येन सह तस्य साक्षात्सम्बन्धः प्रयोजकत्वेन क्लृप्तः । एवं बाह्यघटादीनामापरोक्ष्येऽपि साक्षात्सम्बन्ध एषितव्यः । अन्यथा विषयापरोक्ष्ये क्वचित् साक्षात्सम्बन्धः क्वचित्परम्परासम्बन्धः प्रयोजक इति वैरूप्यापत्तेः । सम्भवति साक्षात्सम्बन्धे

परम्परासम्बन्धो लभ्यते इति स एव चिदुपरागोऽभिसंहित इत्याहुः ॥
(वे०सू०मं०) तरङ्गतरुसंस्पर्शान्नदीस्पर्शो तराविव ॥
विषये वृत्तिसंसर्गाज्जीवसङ्गं परे विदुः ॥

अपरे तु—साक्षादपरोक्षचैतन्यसंसर्गिण एव सुखादेरापरोक्ष्यदर्शनात् अपरोक्षविषये साक्षात्संसर्ग एष्टव्यः । तस्माद् वृत्तेर्विषयसंयोगे वृत्तिरूपावच्छेदकलाभात् तदवच्छेदेन तदुपादानस्य जीवस्यापि संयोगजसंयोगः सम्भवति । कारणाकारणसंयोगात् कार्याकार्यसंयोगवत् कार्याकार्यसंयोगात् कारणाकारणसंयोगस्यापि युक्तितौल्येनाभ्युपगन्तुं युक्तत्वादित्याहुः ॥

---

परम्परासम्बन्धकल्पनायोगाच्च । तस्मान्नायमप्याचार्याभिमतस्सम्बन्ध इत्याह—अपरे त्विति । तस्मादिति । परम्परासम्बन्धस्यानभिमतत्वादित्यर्थः । वृत्तेरिति । वृत्तेर्विषयेण संयोगे सति वृत्त्युपादानजीवचैतन्यस्यापि विषयेण सह संयोगजसंयोगस्सम्भवति ।

एतदुक्तं भवति—जीवचैतन्यस्य वृत्तिः कार्यम्, अकार्यं विषयः । वृत्तेर्जीवचैतन्यमुपादानकारणम् । तस्या वृत्तेर्विषयो नोपादानकारणम् । तथा च वृत्तिविषययोर्जीवचैतन्यं प्रति कार्याकार्ययोस्संयोगाज्जीवचैतन्यविषययोर्वृत्तिं प्रति कारणाकारणयोः संयोगोऽत्र संयोगजसंयोगो विवक्षित इति ।

ननु कार्यं प्रति कारणभूतहस्तस्य तं प्रत्येवाकारणभूततरुणा संयोगात् हस्तकार्यकायस्य हस्ताकार्यतरुणा संयोगः उपेयते । हस्ततरुसंयोगदशायां तरौ 'हस्तावच्छेदेन तरुः कायसंयुक्तः' इत्यनुभवादित्याशङ्क्य प्रकृते घटादौ विषये वृत्तिसंयोगदशायांघटे 'वृत्त्यवच्छेदेन घटः स्फुरति' इति जीवचैतन्यसंसृष्टत्वानुभवादित्याशयेनाह—कारणाकारणेति । युक्तितौल्येनेति । उभयत्र कल्पकानुभवरूपाया युक्तेस्तुल्यत्वेनेत्यर्थः ।

ननु विषयदेशे सन्निहितस्यापि जीवचैतन्यस्य वृत्त्युपादानत्वं विवरणाचार्याणामभिमतं न भवति, जीवस्यान्तःकरणाद्युपादानत्वाभावेऽपि सास्नादिमद्व्यक्तौ गोत्वसामान्यस्येव स्वभावादेव जीवस्यान्तःकरणादौ सम्बन्ध इत्यस्यार्थस्य 'एवं विषयासङ्ग्यपि जीवः स्वभावादन्तःकरणे सं-

( वे०सू०मं० ) द्वितीयपक्षे जीवस्यासर्वगत्वादसङ्करात् ॥
विषयब्रह्मचैतन्याभेदव्यक्त्यैव तं परे ॥ ६८ ॥

एकदेशिनस्तु—अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसम्पादनमेव चिदुपरागोऽभिसंहितः । सर्वगततया सर्वविषयसन्निहितस्यापि जीवस्य तेन रूपेण विषयावभासकत्वे तस्य साधारणतया पुरुषविशेषापरोक्ष्यव्यवस्थित्ययोगेन तस्यान्तःकरणोपहितत्वरूपेणैव विषयावभासकत्वात् । एवं च विषयापरो-

---

सृज्यते' इत्यत्र प्राग्विवरणमतत्वेन प्रतिपादितत्वात् । ततश्च जीवचैतन्यस्य वृत्तिं प्रत्युपादानकारणत्वाभावे सति उक्तसम्बन्धो न सिध्यतीति संयोगजसंयोगोऽपि नाचार्यसम्मत इत्यस्वरसादाह—एकदेशिनस्त्विति । घटादिविषयावभासकजीवचैतन्यस्य घटादिना विषयेण सह तादात्म्यसम्बन्धसम्पादनमेव चिदुपरागत्वेनाभिमतमित्यर्थः । ननु वृत्त्याऽपि पूर्वसिद्धयोर्विषयचैतन्ययोस्तादात्म्यस्य न सम्भवत्याधानमिति प्रागुक्तत्वात् कथं तत्सम्पादनम् ? अत आह—विषयतादात्म्यापन्नेति । बिम्बभूतब्रह्मचैतन्यस्य घटादिविषयोपादानतया ब्रह्मविषययोस्तादात्म्यं प्रागेव सिद्धम् । तथा च विषयतादात्म्यापन्नब्रह्मचैतन्येन सह विषयावभासकजीवचैतन्यस्य वृत्तिकृताभेदाभिव्यक्तौ सत्यां जीवचैतन्यस्य विषयतादात्म्यं वृत्त्यधीनतया लभ्यते । अभेदाभिव्यक्तिप्रकारश्च वक्ष्यते । अतो न तादात्म्यसम्पादनानुपपत्तिरिति भावः । विषयावभासकजीवचैतन्यस्यान्तःकरणोपहितस्येति यद् विशेषणं तस्य प्रयोजनमाह—सर्वगततयेति । तेनेति । सर्वगतत्वेनेत्यर्थः । तस्येति । जीवस्येत्यर्थः । साधारणतयेति । सर्वपुरुषसाधारणतयेत्यर्थः । पुरुषपदं प्रमातृपरम् । अविद्याप्रतिबिम्बो जीव इति पक्षे जीवभेदाभावात् । अयोगेन तस्येति । जीवस्येत्यर्थः । तथा च सर्वगतमपि जीवचैतन्यं यस्य पुरुषस्यान्तःकरणोपहितं सत् यमर्थमवभासयति, सोऽर्थस्तस्यैवापरोक्षः, नान्यस्येति व्यवस्थितिसिद्धये अन्तःकरणोपहितत्वविशेषणं वाच्यमित्यर्थः । एकदेशिमते लाभमाह—एवं चेति । विषयावभासकजीवचैतन्यस्य वृत्त्या विषयतादात्म्यसम्पादनोपगमे सती-

क्ष्ये आध्यासिकसम्बन्धो नियामक इति सिद्धान्तोऽपि सङ्गच्छते । न चैवं द्वितीयपक्षसाङ्कर्यम् । जीवस्य सर्वगतत्वे प्रथमः

---

सर्थः । आध्यासिकेति । अध्याससिद्धतादात्म्यसम्बन्ध इत्यर्थः । न चैवमिति । सम्बन्धार्था वृत्तिरिति प्रथमपक्षेऽपि वृत्त्याऽभेदाभिव्यक्त्युपगम इत्यर्थः । साङ्कर्यं परिहरति—जीवस्येति । जीवस्य सर्वगतत्वमते सम्बन्धार्था वृत्तिरिति प्रथमः पक्षः, जीवस्यान्तःकरणोपाधिकतया परिच्छिन्नत्वमते अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्ष इत्यर्थः ।

अयं भावः—प्रथमद्वितीयपक्षयोरुभयोर्वृत्तिकृताभेदाभिव्यक्तिसाम्येऽपि प्रथमपक्षे वृत्तिरभेदाभिव्यक्तिद्वारा विषयावभासकजीवचैतन्यस्य विषयेण सह तादात्म्यसम्बन्धसम्पादनार्था। द्वितीयपक्षे तु वृत्तिर्विषयावभासकजीवचैतन्यस्य विषयावच्छिन्नचैतन्येनाभेदाभिव्यक्त्यर्थैवेति न तयोः पक्षयोस्साङ्कर्यमिति।

यद्वा प्रथमपक्षे जीवस्य व्यापकतया विषयदेशे सदा सन्निहितस्यैव विषयावभासकजीवचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्त्यर्था वृत्तिः । द्वितीयपक्षे तु जीवस्य परिच्छिन्नतया वृत्तिस्तस्य विषयसन्निधिं सम्पाद्य विषयाधिष्ठानब्रह्मचैतन्यस्याभेदाभिव्यक्तिमपि सम्पादयतीति तयोः पक्षयोरसाङ्कर्यम् । अयं परिहारो मूले सर्वगतत्वपरिच्छिन्नत्वपदाभ्यां सूचितः । पूर्वपरिहारस्तु प्रथमपक्षद्वितीयपक्षपदाभ्यां सूचितः । सम्बन्धार्था वृत्तिरिति प्रथमपक्षे सम्बन्धस्योद्देश्यत्वावगमात् । अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्षे अभेदाभिव्यक्तेरेवोद्देश्यत्वावगमादिति । अत्र मते विवक्षिताविवेकेन वृत्तेरभेदाभिव्यक्तिरेव प्रयोजनं प्रथमद्वितीयपक्षयोः पर्यवस्यतीति तयोस्साङ्कर्यं दुर्वारमित्यभिप्रेत्यादावेव एकदेशिन इत्युक्तमिति मन्तव्यम् ।

वस्तुतस्तु सम्बन्धार्था वृत्तिरिति वदतामाचार्याणामयमभिप्रायः—विषयावभासकत्वेनाभिमतस्य जीवचैतन्यस्य विषयेण घटादिना सह व्यङ्ग्यव्यञ्जकतालक्षणस्सम्बन्धस्तत्तद्विषयसंसृष्टवृत्त्यधीनोऽत्र विवक्षितः । तथा हि—अन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव चैतन्याभिव्यञ्जनसमर्थम् । घटादिकं तु तथा न भवति, अस्वच्छद्रव्यत्वात् । घटादिविषयव्याप्त्या तु वृत्त्या तत्र विद्यमानमस्वच्छत्वमभिभूय चैतन्याभिव्यञ्जनयोग्यताऽऽधीयते । तदुक्तं विवरणाचार्यैरेव 'अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि

पक्षः, परिच्छिन्नत्वे द्वितीय इत्येव तयोर्भेदादित्याहुः ॥ ११ ॥

(वे०सू०मं०) अथ द्वितीये काऽभेदव्यक्तिस्तत्रापि केचन ॥
कुल्याद्वारेव सा वृत्त्या क्षेत्रकासारवारिणोः ॥६९॥

(१२)अथ द्वितीयपक्षे केयमभेदाभिव्यक्तिः ? ।

केचिदाहुः—कुल्याद्वारा तडागकेदारसलिलयोरिव विषयान्तःकरणावच्छिन्नचैतन्ययोर्वृत्तिद्वारा एकीभावोऽभेदाभिव्य-

---

घटादौ चैतन्याभिव्यक्तियोग्यतामापादयति'इति । दृष्टं चास्वच्छस्यापि स्वच्छद्रव्यसंसर्गाव प्रतिबिम्बग्राहित्वयोग्यत्वम् । यथा कुड्यादेर्जलसंयोगकाले प्रतिबिम्बग्राहित्वम् । घटादेस्तत्सन्निहितजीवचैतन्यव्यञ्जकत्वं च तत्प्रतिबिम्बग्राहित्वम् । चैतन्यस्यापि व्यङ्ग्यत्वं तत्र प्रतिबिम्बितत्वमेव । एवंविधव्यङ्ग्यव्यञ्जकतालक्षणसम्बन्धार्थमेव वृत्तेर्निर्गमनमुक्तं विवरणे । तथा च वृत्त्या बहिर्निर्गतया विषयचैतन्ययोर्यथोक्तसम्बन्धे सम्पादिते सति घटादौ प्रतिबिम्बितं तत्रसजीवचैतन्यं तमवभासयतीति ॥ ११ ॥

द्वितीयपक्षमाक्षिपति—अथेति । केयमिति । अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्षो हि जीवस्य परिच्छिन्नत्वमते इत्युक्तम् । अस्मिन्मते अन्तःकरणोपाधिकस्य जीवस्य विषयावच्छिन्नबिम्बभूतब्रह्मचैतन्यस्य च वृत्त्याऽभेदाभिव्यक्तिर्न सम्भवति । अखण्डाकारवृत्तेरिव घटादिगोचरवृत्तेरुपाधिनिवर्तकत्वाभावेन भेदकोपाध्योरन्तःकरणविषययोस्सतोः जीवब्रह्माभेदाभिव्यक्तेरयोगादित्यर्थः ।

व्यावर्तकोपाध्योः सत्त्वेऽपि तयोरेकदेशस्थत्वसम्पत्तौ तद्बलादभेदाभिव्यक्तिस्सम्भवति लोके तथा दर्शनादिति परिहरति—केचिदाहुरिति । केदारः सस्यनिष्पत्तिस्थानम् । तथा च तडागस्थसलिलस्य कुल्याद्वारा केदारसलिलस्य चाभेदाभिव्यक्तिर्यथा लोके प्रसिद्धा, तथा अन्तःकरणावच्छिन्नचैतन्यरूपजीवस्य विषयावच्छिन्नब्रह्मचैतन्यस्य च वृत्तिद्वारा अभेदाभिव्यक्तिर्भवति । वृत्तेर्विषयदेशस्थत्वे सति वृत्तिवृत्तिमतोरभेदेन जीवोपाध्यन्तःकरणस्यापि विषयदेशस्थत्वसिद्धेरित्यर्थः । एवं चेति । अभेदाभिव्यक्तौ सम्भावितायामित्यर्थः । ननु जीवचैतन्यस्य विषयावभासकत्वं न सम्भवति । तस्य विषयं प्रत्युपादानत्वाभावेन तादात्म्यसम्बन्धाभावात् । न च ब्रह्मचैतन्यमेव विषया-

क्तिः । एवं च यद्यपि विषयावच्छिन्नं ब्रह्मचैतन्यमेव विषयप्रकाशकम्, तथापि तस्य वृत्तिद्वारा एकीभावेन जीवत्वं सम्पन्नमिति जीवस्य विषयप्रकाशोपपत्तिरिति ॥

(वे०सू०मं०) सत्युपाधौ दृढं बिम्बप्रतिबिम्बभिदास्थितेः ॥
वृत्त्यग्रे विषयस्फूर्त्याभासार्पण(१)मितीतरे ॥ ७० ॥

अन्ये त्वाहुः—बिम्बस्थानीयस्य विषयावच्छिन्नस्य ब्रह्मणः प्रतिबिम्बभूतेन जीवेन एकीभावो नाभेदाभिव्यक्तिः । व्यावर्तकोपाधौ दर्पण इव जाग्रति तयोरेकीभावायोगात् ।

---

वभासकमस्तु । तस्य उपादानतया साक्षादेव तादात्म्यसम्बन्धलाभादिति वाच्यम् । तथा सति 'आलोकेन घटः प्रकाशितः' इतिवत् 'मया घटोऽवगतः' इति जीवचैतन्यस्यैव घटप्रकाशकत्वावगमविरोधादिति मत्वा पुनश्शङ्कते अभेदाभिव्यक्तिप्रयोजनं वक्तुम्—यद्यपीति । विषयप्रकाशकमिति । इति वक्तव्यं तादात्म्यसम्बन्धलाभादिति शेषः । न जीवचैतन्यमित्येवकारार्थः । तथा च 'मयाऽयमवगतो घटः' इत्यनुभवविरोध इति भावः । परिहरति—तथाऽपीति । तस्येति । तादात्म्यसम्बन्धेन विषयावभासकब्रह्मचैतन्यस्य वृत्तिद्वाराऽन्तःकरणोपहितत्वप्राप्तौ जीवेनैकीभावात् जीवत्वं सम्पन्नमिति ब्रह्मचैतन्यस्य यद् विषयावभासकत्वं तद् जीवस्यैवेति प्राप्त्या नानुभवविरोध इत्यर्थः ॥

दर्पण इवेति । यथा दर्पणे प्रतिबिम्बदशायां बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिर्नास्ति, तयोस्तदा भेदानुभवात्, तथा प्रकृतेऽपि विषयादिरूपभेदकोपाधौ सति सा न सम्भवतीत्यर्थः ।

ननु तत्त्वसाक्षात्कारेणाशेषोपाधिनिवृत्तौ यादृश्यभेदाभिव्यक्तिः, तादृश्यत्र न विवक्षिता । किं तु क्षीरनीरयोरेकपात्रस्थयोरिव वृत्तिद्वाराऽन्तःकरणविषययोरेकदेशस्थत्वप्राप्तौ तन्मात्रप्रयुक्ता तदवच्छिन्नचैतन्ययोरौपचारिक्यभेदाभिव्यक्तिर्विवक्षिता । अस्यां चाभेदाभिव्यक्तौ न व्यावर्तकोपाधिसत्त्वप्रयुक्तो विरोधोऽस्ति । दर्पणे मुखप्रतिबिम्बदशायामपि 'मम मुखमेव दर्पणे भाति' इति बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिदर्शनात् । अस्मिन्मतेऽपीत्थमेव निर्वाहः कर्तव्यः ।

---

(१) विषयस्फूर्तिरूपस्याभासस्य प्रतिबिम्बस्येत्यर्थः ।

वृत्तिकृताभेदाभिव्यक्त्या विषयावच्छिन्नस्य ब्रह्मणो जीवत्वप्राप्तौ ब्रह्मणस्तदा तद्विषयसंसर्गाभावेन तद्द्रष्टृत्वासम्भवे सति तस्य सर्वज्ञत्वाभावापत्तेश्च। किं तु विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं प्रतिबिम्बं समर्पयतीति तस्य प्रतिबिम्बस्य जीवेनैकीभावः। एवं चान्तःकरणतद्वृत्तिविषयावच्छिन्नचैतन्यानां प्रमातृप्रमाणप्रमेयभावेन असङ्करोऽप्यु-

---

न ह्यन्तःकरणतद्वृत्तिप्रतिबिम्बयोरभेदाभिव्यक्तिर्मुख्या सम्भवति। वृत्तिवृत्तिमतोः कार्यकारणभावापन्नयोरैक्यायोगेन तत्प्रतिबिम्बयोरैक्यायोगात्। ऐक्ये वा 'एवं च' इत्यादिना प्रमात्रादीनामस्मिन्मते साङ्कर्याभावोपपादनविरोधादित्यस्वरसादाह—वृत्तिकृताभेदाभिव्यक्त्येति। तदा तद्विषयेति। विषयावच्छिन्नब्रह्मणो जीवत्वप्राप्तौ तस्येश्वरत्वनिवृत्तिरवश्यं वाच्या। चैतन्ये एकावच्छेदेन जीवत्वेश्वरत्वयोरसम्भवात्। तथा च तदा जीवत्वदशायां ब्रह्मणस्तद्विषयसंसर्गाभावेन तद्द्रष्टृत्वं न सम्भवतीत्यर्थः। तस्येत्यनन्तरं तदेत्यनुषङ्गः। ननु विषयाधिष्ठानचैतन्यस्य वृत्तिसंसर्गदशायामन्तःकरणोपहितत्वप्रयुक्तजीवत्ववदविद्योपहितत्वप्रयुक्तमीश्वरत्वमप्यविरुद्धम्। तथा च बिम्बभूतेश्वरस्य तदाऽपि सर्वज्ञत्वमक्षतम्। अन्यथाऽन्तःकरणाद्यधिष्ठानचैतन्यस्य तदुपाधिकत्वप्रयुक्तजीवत्वे सदा स्थिते सति बिम्बभूतब्रह्मणस्सदाऽन्तःकरणादिसंसर्गाभावेन तदुद्रष्टृत्वासम्भवे सति सदा सर्वज्ञत्वाभावप्रसङ्गदोष इहापि मते तुल्य इत्यस्वरसं मनसि निधाय, कीदृशी तर्हि त्वदभिमताऽभेदाभिव्यक्तिरिति पृच्छति—किं त्विति। तामाह—विषयावच्छिन्नमिति। अग्रभाग इति। वृत्तिर्हि हृदयस्थान्तःकरणमारभ्य विषयपर्यन्तमविच्छिन्ना कौस्तुभमण्यादिप्रभावद्दीर्घीभावमापन्ना तिष्ठति। तस्या वृत्तेर्विषयसंसृष्टो भागोऽग्रभाग इति उच्यते। तत्र यो ब्रह्मणः प्रतिबिम्बः, तस्य विषयप्रकाशकस्य जीवेनैकीभावः इहाभेदाभिव्यक्तिर्विवक्षिता। वृत्तिवृत्तिमतोस्तादात्म्यरूपाभेदसत्त्वेन तत्प्रतिबिम्बयोरभेदाभिव्यक्तिसम्भवादित्यर्थः। एवं चेति। वृत्तिप्रतिबिम्बस्यान्तःकरणप्रतिबिम्बाद्वस्तुतो भिन्नस्यैव सतः तदभेदेनाभिव्यक्तस्य विषयावभासकत्वे स्वीकृते सतीत्यर्थः। असङ्करोऽपीति। वृत्तिवृत्तिमतोस्तादात्म्यात् तत्प्रतिबिम्ब-

पपद्यते। न च वृत्त्युपहितचैतन्यस्य विषयप्रमातृत्वे तस्य विषयाधिष्ठानचैतन्यस्येव विषयेणाध्यासिकसम्बन्धाभावात् विषयापरोक्ष्ये आध्यासिकसम्बन्धस्तन्त्रं न स्यादिति वाच्यम्। विषयाधिष्ठानचैतन्यस्यैव विषयेणावच्छिन्नस्य वृत्तौ प्रतिबिम्बिततया तदभेदेन तत्सम्बन्धसत्त्वादिति॥

(वे.सू.मं.) बिम्बत्वयुक्तं ग्राह्यं स्यात् जैवं तदुपलक्षितम्॥
वृत्तौ विषयचैतन्यं तदभेदं च तां(१) परे॥ ७१॥

अपरे त्वाहुः—बिम्बभूतविषयाधिष्ठानचैतन्यमेव साक्षादाध्या-

---

योरभेदाभिव्यक्तिवदसङ्करोऽप्युपपद्यत इत्यपिशब्दार्थः। मुखं दर्पणोपाधिनेवान्तःकरणेनोपाधिनाऽवच्छिन्नं तत्प्रतिबिम्बचैतन्यं प्रमाता, वृत्तिप्रतिबिम्बचैतन्यं तयैवावच्छिन्नं प्रमाणम्, विषयावच्छिन्नं ब्रह्मचैतन्यं प्रमेयमिति तेषामसाङ्कर्यमुपपद्यते, व्यावर्तकोपाधिसद्भावादित्यर्थः। अस्मिन्मते असाङ्कर्यमुपपद्यत इत्युक्त्या पूर्वमते विषयावच्छिन्नब्रह्मचैतन्यस्य जीवत्वप्राप्तिस्वीकारात् प्रमातृप्रमेयचैतन्ययोरसाङ्कर्यं नोपपद्यते इति सूचितम्।

वस्तुतस्तु पूर्वमतेऽपि न साङ्कर्यम्। जीवब्रह्मभेदकोपाधिसद्भावस्य तत्प्रयुक्ततया सर्वज्ञत्वादिव्यवस्थायाश्च प्राग्दर्शितत्वादिति मन्तव्यम्।

शङ्कते—न चेति। तस्येति। तस्य विषयेणाध्यासिकसम्बन्धाभावादिति सम्बन्धः। प्रमारूपस्य वृत्तिप्रतिबिम्बस्य विषयोपादानत्वाभावेन तयोस्तादात्म्यासम्भवात्। तथा च विषयापरोक्ष्ये आध्यासिकतादात्म्यसम्बन्धो नियामक इति सिद्धान्तविरोध इति शङ्काऽभिप्रायः।

बिम्बप्रतिबिम्बयोरभेदाभ्युपगमात् बिम्बचैतन्यस्य विषयेण सह यस्तादात्म्यसम्बन्धः, स एव प्रमारूपप्रतिबिम्बस्यापीति नापसिद्धान्त इति परिहरति—विषयाधिष्ठानेति। तदभेदेनेति।प्रतिबिम्बचैतन्यस्य बिम्बाभेदेनेत्यर्थः।

बिम्बप्रतिबिम्बयोरभेदे सत्यपि कल्पितभेदसत्त्वात् बिम्बसम्बन्धस्य प्रतिबिम्बसम्बन्धत्वं नास्तीत्यस्वरसं साक्षात्पदेन सूचयन् अभेदाभिव्यक्तिं प्रकारान्तरेणाह—अपरे त्वाहुरिति।

---

(१) ताम्—अभेदाभिव्यक्तिम्।

सिकसम्बन्धलाभात् विषयप्रकाशकमिति तस्यैव बिम्बत्वविशिष्ट-रूपेण भेदसद्भावेऽपि तदुपलक्षितचैतन्यात्मना एकीभावोऽ-भेदाभिव्यक्तिः । न चैवं सति जीवब्रह्मसाङ्कर्यम्, न वा ब्रह्मणः सर्वज्ञत्वविरोधः । बिम्बात्मना तस्य यथापूर्व-मवस्थानादिति ॥ १२ ॥

(वे.सू.मं.) अथावरणभङ्गोऽपि तृतीये कीदृशो मतः ॥
मोहनाशः स चेदिष्टो मोक्षः स्याद् घटवेदनात् ॥७२॥

(१३)अथ तृतीयपक्षे को नामावरणाभिभवः ? अज्ञाननाश-श्चेत्, घटज्ञानेनैवाज्ञानमूलः प्रपञ्चो निवर्तेतेति चेत् ।

(वे.सू.मं.) खद्योतेनेव तमसश्छिद्रं केचित्प्रचक्षते ॥
कटवद्वेष्टनं भीतभटवद्वा पलायनम् ॥ ७३ ॥

अत्र केचिदाहुः—चैतन्यमात्रावारकस्याज्ञानस्य विषयाव-

---

भेदसद्भावेऽपीति । प्रतिबिम्बत्वविशिष्टचैतन्यस्वरूपजीवेन सहेति शेषः । तदिति । बिम्बत्वप्रतिबिम्बत्वाभ्यामुपलक्षितं शुद्धचैतन्यं तदात्मने-त्यर्थः । न चैवंसतीति । उपलक्षितचैतन्यात्मना अभेदाभिव्यक्त्यङ्गी-कारे पूर्वोक्तं दोषद्वयं नास्तीत्यर्थः ।

अत्रेदं चिन्त्यम्—उपलक्षितचैतन्यात्मना एकीभावः न वास्तवा-भेदः । तस्य वृत्त्यनपेक्षत्वात् । नापि व्यावहारिकाभेदः । बिम्बप्रति-बिम्बभेदस्य व्यावहारिकत्वेन तत्समसत्ताकाभेदासम्भवात् । नापि प्रा-तिभासिकाभेदः । उपाध्योरेकदेशस्थत्वमात्रेण बिम्बप्रतिबिम्बचैतन्ययोः प्रातिभासिकाभेदसम्भवेन तदर्थं चैतन्यमात्रोपलक्षणवैयर्थ्यादिति ॥ १२ ॥

तृतीयं पक्षमाक्षिपति—अथेति । निवर्तेतेति । अज्ञानस्यैक-त्वादिति भावः । न तु निवर्तते अतो नाज्ञाननाशः आवरणाभिभवः । न चान्यः प्रकारस्सम्भवति, अनुपलम्भादिति भावः ।

अज्ञानैक्यमेवावलम्ब्य परिहरति—अत्र केचिदाहुरिति । चै-तन्यमात्रेति । मात्रपदं साक्षिव्यतिरिक्तकृत्स्नचैतन्यपरम्, साक्षिण्या-

च्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशेन नाशो वा, कटवत् संवेष्टनं वा, भीतभटवदपसरणं वाऽभिभव इति ॥

(वे.सू.मं.) पुनः कन्दलनादन्ये ऽनावृत्तिं वृत्त्यनेहसम्(१) ॥
अज्ञोऽहमिति विज्ञानात् स्वाश्रितेनाप्यनावृतिम् ॥७४॥

अन्ये तु—अज्ञानस्यैकदेशेन नाशे उपादानाभावात् पुनस्तत्र कन्दलनायोगेन सकृदपगते समयान्तरेऽप्यावरणाभावप्रसङ्गात्, निष्क्रियस्यापसरणसंवेष्टनयोरसम्भवाच्च न यथोक्तरूपोऽभिभवः सम्भवति । अतः चैतन्यमात्रावारकस्याप्यज्ञानस्य तत्तदाकारवृत्तिसंसृष्टावस्थविषयावच्छिन्नचैतन्यानावारकत्वस्वाभाव्यमेवाभिभवः । न च विषयावगुण्ठनपटवद्विषयचैतन्यमाश्रित्य स्थितस्याज्ञानस्य कथं तदनावारकत्वं युज्यते इति शङ्क्यम् । 'अहमज्ञः' इति प्रतीत्याऽहमनुभवे प्रकाशमानचैतन्यमाश्रयत एव तस्य तद-

---

वरणाभावस्य वक्ष्यमाणत्वादिति भावः । एकदेशेन नाशो वेति । तथा च तन्मूलप्रपञ्चस्य न न निवृत्त्यापत्तिरिति भावः । प्रकारान्तरानुपलम्भोऽसिद्धः, इत्याशयेनाह—कटवदित्यादिना ।

निरुक्तमावरणाभिभवं दूषयन् तं प्रकारान्तरेण निर्वक्ति—अन्ये त्वित्यादिना । पुनस्तत्रेति । विषयावच्छिन्नचैतन्ये आवरणोत्पत्त्ययोगेनेत्यर्थः । तत्तदिति । तत्तद्विषयाकारवृत्तिसंसृष्टावस्थं यद्विषयावच्छिन्नचैतन्यं तदनावारकत्वमित्यर्थः । ननु यथा घटं व्याप्य वर्तमानः पटः तमावृणत्येव, एवं विषयावच्छिन्नब्रह्मचैतन्यं व्याप्य वर्तमानमज्ञानमपि चैतन्यमावृणोत्येवेति तदनावारकत्वकल्पनमयुक्तमिति शङ्कते—न चेति । अज्ञाने पटवैलक्षण्यस्यानुभवसिद्धत्वान्नैतच्चोद्यमवतरतीत्याह—अहमिति । तस्येति । अज्ञानस्येत्यर्थः । जीवचैतन्याश्रितमप्यज्ञानं न तद् आवृ-

---

(१) कन्दलनम्—आवरणम् । वृत्त्यनेहसम्—यावद्वृत्तिकालम् । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ।

नावारकत्वप्रतिपत्तेरित्याहुः ॥

(वे.सू.मं.) वृत्तिनाश्यं परे वृत्तिसमसङ्ख्यं प्रचक्षते ॥
अवस्थाज्ञानमज्ञानं नष्टमित्यनुभूतितः ॥ ७९ ॥

अपरे तु—'घटं न जानामि' इति घटज्ञानविरोधित्वेन, घटज्ञाने सति घटाज्ञानं निवृत्तमिति तन्निवर्त्यत्वेन चानुभूयमानं न मूलाज्ञानम् । शुद्धचैतन्यविषयस्य तज्ज्ञान(१)निवर्त्यस्य च तस्य तथात्वायोगात् । किन्तु घटावच्छिन्नचैतन्यविषयं मूलाज्ञानस्यावस्थाभेदरूपमज्ञानान्तरमिति तन्नाश एवाभिभवः । न चैवमेकेन ज्ञानेन तन्नाशे तत्समानविषयाणां ज्ञानान्तराणामावरणाभिभावकत्वानापत्तिः । यावन्ति ज्ञानानि, तावन्ति अज्ञानानी(२)त्यभ्युपगमादित्याहुः ॥

---

णोति । तस्यावृतत्वे सर्वव्यवहारलोपप्रसङ्गादिति दहराधिकरणभाष्ये(उ० मी० अ० १ पा० ३ अधि० ५ सू० १४ ) साधितत्वात्, साक्षिचैतन्यस्यानावृततया वक्ष्यमाणत्वाच्चेति भावः ।

प्रपञ्चोपादानमूलाज्ञानापेक्षयाऽन्यदेव विषयावच्छिन्नचैतन्यावारकमज्ञानमिति घटादिज्ञानेन तन्निवृत्तावपि न प्रपञ्चनिवृत्तिप्रसङ्गः । तेन प्रपञ्चमूलाज्ञानानिवृत्तिरिति मतं दर्शयति—अपरे त्विति । अज्ञानभेदे मानमाह—घटमिति । विरोधित्वेनेति । 'न जानामि' इत्यज्ञानानुभवाभिलापकशब्दे नञो विरोध्यर्थकत्वादभिलप्यानुभवोऽपि ज्ञानविरोधिविषयक एव । न च 'न जानामि' इत्यनुभवो ज्ञानप्रागभावविषयक एव, न तु भावरूपाज्ञानविषयक इति वाच्यम् । प्रागभावस्यैवासम्प्रतिपत्तेरिति भावः । तथात्वायोगादिति । घटावच्छिन्नचैतन्यविषयकत्वतज्ज्ञाननिवर्त्यत्वयोरयोगादित्यर्थः । किं त्वज्ञानान्तरमिति सम्बन्धः । अवस्थाभेदरूपमिति । अस्य विशेषणस्य प्रयोजनं वक्ष्यते । न चैवमेकेनेत्यादिग्रन्थः स्पष्टार्थः ।

नन्वज्ञानानि किमनादीनि, किं वा आदिमन्ति ? । नाद्यः । मानाभावात् । न द्वितीयः । अज्ञानमनादीति सिद्धान्तविरोधादिति चेत् । अत्र केचिदाद्यं

---

(१) तद्ज्ञानेति पाठः । (२) तन्निवर्त्यान्यज्ञानानीति पाठः ।

(वे.सू.मं.) केचिदूचुरनादीदं मूलाज्ञानमिव—

इमानि चावस्थारूपाणि अज्ञानानि मूलाज्ञानवदज्ञानत्वाद-नादीनीति केचित् ॥

(वे०सू०मं०) इतरे ॥

सादि निद्रादिवत्, तत्रानादित्वे कस्य नाशयता॥७६॥

व्यावहारिकौ जगज्जीवावावृत्य स्वाप्नौ जगज्जीवौ विक्षिप-न्ती निद्रा तावदावरणविक्षेपशक्तियोगात् अज्ञानावस्थभेदरूपा । तथा सुषुप्त्यवस्थाऽप्यन्तःकरणादौ विलीने 'सुखमहमस्वाप्सं

---

पक्षं साधयन्तीत्याह–इमानि चेति । अवस्थाऽज्ञानानि अनादीनि, अज्ञान-त्वात्, मूलाज्ञानवत् । न च दृष्टान्तासिद्धिः । देवताधिकरणादौ (उ. मी. अ. १ पा० ३ अधि० ९ सू० २६) मूलाज्ञानानादित्वस्य श्रुतिन्यायाभ्यां साधि-तत्वादिति भावः । न चाज्ञानगतानादित्वे मूलाज्ञानत्वं प्रयोजकम्, न त्वज्ञा-नत्वमात्रमिति वाच्यम् । लाघवेन तन्मात्रस्यैव प्रयोजकत्वादिति भावः ॥

अवस्थाऽज्ञानान्यादिमन्तीति द्वितीयपक्षमन्ये साधयन्तीत्याह–व्या-वहारिकावित्यादिना । न च सिद्धान्तविरोधः । अज्ञानानादित्वाभ्यु-पगमस्य मूलाज्ञानविषयत्वादिति भावः । विमतानि अवस्थाऽज्ञानानि आ-दिमन्ति, अवस्थाऽज्ञानत्वात्, निद्रावत् सुषुप्तिवच्च, इत्यनुमानमभिप्रेत्य दृष्टान्तद्वये साधनसाध्ययोर्वैकल्यं प्रथमं परिहरति—व्यावहारिकाविति । हेताववस्थापदं मूलाज्ञाने व्यभिचारवारणार्थम् । आवृत्येति । जाग्र-त्कालीनौ जगज्जीवौ यादृशौ प्रसिद्धौ न तादृशावेव स्वप्नकाले उपल-भ्येते । अतस्तयोर्यथावदनुपलम्भादावरणं वक्तव्यमिति भावः । विक्षि-पन्तीति । सृजन्तीत्यर्थः । अज्ञानावस्थाभेदरूपेति । अज्ञानस्य हि आवरणविक्षेपशक्तिमत्त्वं लक्षणम् । तस्य स्वप्नकारणीभूतनिद्रायां स-त्त्वादज्ञानत्वं तावत् सिद्धम् । निद्राया वक्ष्यमाणरीत्या सादित्वेन साक्षा-न्मूलाज्ञानत्वायोगात्तदवस्थाविशेषरूपत्वं सिद्धमिति प्रथमदृष्टान्ते न साध-नवैकल्यमिति भावः । तथा सुषुप्तिकाले मूलाज्ञानवदनुभूयमाना सुषुप्त्य-वस्थाऽपि अज्ञानावस्थाभेदरूपैवेति सम्बन्धः । ननु सुषुप्तिकाले मूलाज्ञा-नसुषुप्त्योरनुभवोऽसिद्धः । तदा 'अहमज्ञः, अहं स्वपिमि' इत्यनुभवादर्श-नादिति, नेत्याह—सुखमहमिति । परामर्शः स्मरणम् । तथा च

न किञ्चिदवेदिषम्' इति परामर्शदर्शनात् मूलाज्ञानवत् सुषुप्ति-काले अनुभूयमानाज्ञानावस्थाभेदरूपैव । तयोश्च जाग्रद्भोगप्रद-कर्मोपरमे सत्येवोद्भवात् सादित्वम्, तद्वद् अन्यदप्यज्ञानमवस्थारूपं सादीत्यन्ये ॥

नन्वनादित्वपक्षे घटे प्रथममुत्पन्नेनैव ज्ञानेन सर्वतदज्ञा-ननाशो भवेत् । विनिगमनाविरहात् तदवच्छिन्नचैतन्यावरक-

---

उत्थितस्य दृश्यमानपरामर्शान्यथाऽनुपपत्त्या तदा सुषुप्तिमूलाज्ञानयोरनुभव-स्साक्षिरूपः कल्प्यते । अहमुल्लेखे हि आत्मन्यन्तःकरणसंसर्गः प्रयोजकः, तत्काले तस्य लीनत्वात् नाहमुल्लेख इत्याशयेनाह—अन्तःकरणादौ विलीने इति । चक्षुरादिकमादिपदार्थः । सुषुप्तिस्वरूपसाधनार्थः परामर्शकल्प्यसुषुप्त्यनुभवोपन्यासः । सुषुप्तिकाले मूलाज्ञानाभावे सुषु-प्तेस्तदवस्थारूपत्वं न सिध्येत् । अतस्तदनुभवोपन्यासः तदा मूलाज्ञान-सत्त्वसाधनार्थः । सुषुप्तेस्तदवस्थारूपत्वं परिशेषादवगन्तव्यम् । सुषुप्ति-काले मूलाज्ञानातिरिक्तानामन्तःकरणादीनां विलीनत्वेन तस्यास्तदवस्था-रूपत्वासम्भवादिति सूचनार्थं चान्तःकरणादिविलयोपन्यासः । तथा च सुषुप्तिदृष्टान्तेऽपि न साधनवैकल्यमिति भावः । दृष्टान्तद्वयेऽपि साध्य-वैकल्यं परिहरति—तयोश्चेति । निद्रासुषुप्त्योरित्यर्थः । अन्यदपीति । घटादिविषयावच्छिन्नचैतन्यावरकाज्ञानमपीत्यर्थः ॥

अवस्थाऽज्ञानानां सादित्वपक्षे प्रथममुत्पन्नेन घटज्ञानेन तदुत्पत्तेः पूर्वं घटावरकत्वेन स्थिताज्ञानस्य नाशे सति पश्चादुत्पन्नमवस्थाऽज्ञानं पुन-स्तमावृणोतीति व्यवस्था सिध्यति । तेषामनादित्वपक्षे तु सा न सिध्येदिति शङ्कते—नन्विति । प्राथमिकघटज्ञानेन तदज्ञानानां सर्वेषां नाशोऽस्ति, न वा ? । द्वितीयकल्पं दूषयति—घट इति । प्राथमिकज्ञानेन एकमेवाज्ञानं नश्यति, नेतराणीत्यत्र विनिगमकाभावात् सर्वाज्ञाननाशो वक्तव्यः । तथा च द्वितीयकल्पानुपपत्तिरित्यर्थः । द्वितीयकल्पे एव विनिगमकाभाववद्दोषान्तरमाह—तदवच्छिन्नेति । एकावरणनाशेऽन्या-वरणान्तराणां सत्त्वाद्विषयप्रकाशानुपपत्तिरित्यर्थः । एवं प्रथमकल्पं प्र-

सर्वाज्ञाननाशे विषयप्रकाशायोगाच्च । अतः पाश्चात्त्यज्ञानाना-मावरणानभिभावकत्वं तदवस्थमेवेति चेत्,

(वे०सू०मं०) अत्र केचित् स्वभावेन व्यवस्था प्रागभाववत् ॥
सत्स्वप्यावरकेष्वर्थप्रकाशं च प्रचक्षते ॥ ७७ ॥

अत्र केचिदाहुः—यथा ज्ञानप्रागभावानामनेकेषां सत्त्वेऽप्येकज्ञानोदये एक एव प्रागभावो निवर्तते । संशयादिजननशक्ततया तदावरणरूपेषु प्रागभावान्तरेषु सत्स्वपि विषयावभासः । तथैकज्ञानोदये एकमेवाज्ञानं निवर्तते, अज्ञानान्तरेषु सत्स्वपि विषयावभास इति ॥

(वे०सू०मं०) विशेषदर्शनाभावकूटात् संशयसम्भवात् ॥
आवृतस्याप्रकाशाच्च पर्यायेणावृतिं परे ॥ ७८ ॥

---

विशेषयित्वा तं दूषयति—अत इति । प्रथमज्ञानेन सर्वाज्ञाननाशादित्यर्थः । तदवस्थमेवेति । पाश्चात्त्यज्ञानानामावरणाभिभावकत्वसिद्धये हि यावन्ति ज्ञानानि, तावन्ति तन्निवर्त्याज्ञानानीत्युपगम्यते । तदभ्युपगमेऽपि प्रथमज्ञानेनैव सर्वाज्ञाननाशे स दोषस्तदवस्थ एवेत्यर्थः ।

यथा न्यायमते यावन्ति घटज्ञानानि, तावन्तो घटज्ञानप्रागभावाः सन्ति । तत्र प्रथमेन ज्ञानेन एक एव ज्ञानप्रागभावो निवर्तते । अन्ये यथापूर्वं सन्त्येव । तेषां सत्त्वेऽपि विषयप्रकाशश्चोपेयते तैः, एवमत्रापि योजनीयमिति परिहरति—अत्र केचिदाहुरिति । ननु दृष्टान्तो विषमः । ज्ञानप्रागभावस्यानावरकत्वात्, भावरूपाज्ञानस्य च विषयावरकत्वात्, आवरणसत्त्वे च न विषयप्रकाशोपपत्तिरिति, नेत्याह—संशयादीति । विपर्ययः आदिपदार्थः । सिद्धान्ते भावरूपाज्ञानस्यावरकत्वं हि अज्ञातत्वाभिमते वस्तुनि संशयादिजननसमर्थत्वम् । तच्च परमते ज्ञानप्रागभावरूपाज्ञानस्यापि समानम् । ततो न दृष्टान्तवैषम्यमिति भावः । एकमेवेति । फलबलादिति भावः ॥

'नन्वनादित्वपक्षे' इत्यादिग्रन्थेन कृताक्षेपे प्रकारान्तरेण समाधानमाह—अन्ये त्विति । अस्य वदन्तीत्यनेन सम्बन्धः । पूर्वपरिहारे अन्ये-

अन्ये तु—आवृतस्यापरोक्ष्यं विरुद्धम् । एकज्ञानोदये च प्रागभावान्तरसत्त्वेऽपि यावद्विशेषदर्शनाभावकूटरूपमावरणं विशेषदर्शनान्नास्तीति मन्यमाना वदन्ति—यदा यदज्ञानमावृणोति, तदा तेन ज्ञानेन तस्यैव नाशः । सर्वं च सर्वदा नावृणोति, वैयर्थ्यात् । किं त्वावरकाज्ञाने वृत्त्या नाशिते तद्वृत्त्युपरमे अज्ञानान्तरमावृणोति ।

(वे०सू०मं०) न चानावरकाज्ञानशेषो मुक्तौ प्रसज्यते ॥
मूलाज्ञानच्छिदा छेद्यास्तदवस्था इमा यतः ॥ ७९॥

न चैवं ब्रह्मावगमोत्पत्तिकालेऽनावरकत्वेन स्थितानाम-

---

पामभिप्रेतमस्वरसं स्वयं दर्शयति—आवृतस्येति । आवृतस्यापि पर्वतीयदहनादेस्सिद्धान्ते परोक्षज्ञानाङ्गीकारादपरोक्षज्ञानमित्युक्तम् । यावदिति । स्थाण्वादौ संशयादिविरोधिदर्शनप्रागभावमात्रं न संशयादिजननसमर्थम् । 'स्थाणुरयम्' इति निश्चयदशायामपि तत्समानविषयकनिश्चयान्तरप्रागभावसत्त्वेन तदा पुरुषत्वस्मृतिमतः पुनरपि संशयप्रसङ्गात् । किं तु संशयादिसमानविषयकनिश्चयानां यावन्तः प्रागभावाः तावतां समुदायस्संशयादिजननसमर्थतया परमते विषयावरणत्वेन वाच्यः । एकनिश्चयकाले च यावद्विशेषदर्शनाभावकूटरूपस्य परमते आवरणत्वेन सम्मतस्य विशेषादर्शनस्याभावात् न पुनः संशयादिप्रसङ्गः, न वा प्रथमघटादिज्ञानकाले परमते विषयप्रकाशानुपपत्तिः, आवरणत्वाभिमतप्रागभावकूटाभावात् । तस्मादावृतस्यापि विषयस्य प्रथमज्ञानसमये प्रकाशस्सम्भवतीत्यत्र नायं दृष्टान्तस्सम्भवतीत्यर्थः ।

न चैवमिति । सर्वदा सर्वेषामवस्थाऽज्ञानानामावरकत्वाभावे सतीत्यर्थः । ततोऽपीति । ब्रह्मावगमादपीत्यर्थः । निवृत्त्यभावप्रसङ्गे हेतुरनावरकत्वेन स्थितिः । यदि ब्रह्मावगमोत्पत्तिकाले मूलाज्ञानवदवस्थाऽज्ञानान्यपि ब्रह्मचैतन्यं विषयप्रदेशेष्वावृत्य तिष्ठेयुः, तदा ब्रह्मावगमेन तत्समानविषयकमूलाज्ञानस्येव चैतन्यावरकत्वेन स्थितानामवस्थाऽज्ञानानामपि निवृत्तिस्स्यात् । समानविषयकत्वाविशेषात् । तेषां तदनावरकत्वेन स्थितौ तु निवृत्तिर्न सम्भ-

ज्ञानानां ततोऽप्यनिवृत्तिप्रसङ्गः । तेषां साक्षात्तद्विरोधित्वाभावेऽपि तन्निवर्त्यमूलाज्ञानपरतन्त्रतया अज्ञानसम्बन्धादिवत् तन्निवृत्त्यैव निवृत्त्युपपत्तेः । एतदर्थमेव तेषां तदवस्थाभेदरूपतया तत्पारतन्त्र्यमिष्यत इति ॥

(वे०सू०मं०) अन्ये त्वेकस्य विच्छेदमितरेषां पराभवम् ॥
तं(१) चावरणशक्तीनां प्रतिबन्धं प्रचक्षते ॥ ८० ॥

अपरे तु—अज्ञानस्य सविषयत्वस्वभावत्वात् उत्सर्गतः सर्वं सर्वदाऽऽवृणोत्येव । न च विषयोत्पत्तेः प्रागावरणीयाभावे-

---

वति, तत्समानविषयकत्वाभावादित्यर्थः । ततश्च विदेहकैवल्येऽपि तेषामनुवृत्तिप्रसङ्ग इति भावः । एवंसति—अनिवृत्तिप्रसङ्ग इति । न चेति सम्बन्धः । तत्र हेतुमाह—तेषामिति । अत्र द्वितीयतृतीयतच्छब्दौ ब्रह्मावगमपरौ । चतुर्थतच्छब्दो मूलाज्ञानपरः । यथाऽज्ञाननिवृत्तौ चैतन्याज्ञानयोस्सम्बन्धो निवर्तते, तस्य सम्बन्ध्यज्ञानपरतन्त्रत्वात्, तद्वदित्यर्थः । नन्ववस्थाऽज्ञानानां मूलाज्ञानपरतन्त्रत्वमसिद्धमित्याशङ्क्याह—एतदर्थमेवेति । यथा संसारस्याज्ञाननिवृत्त्या निवृत्तिसिद्ध्ये तन्मूलकतया संसारस्य तत्पारतन्त्र्यं कल्प्यते, तद्वत् प्रकृतेऽपीति भावः । यदुक्तमवस्थाभेदरूपमिति विशेषणस्य प्रयोजनं वक्ष्यते इति, तदत्र दर्शितमिति मन्तव्यम् ॥

'नन्वनादित्वपक्षे' इत्यादिना कृताक्षेपे एव समाधानं प्रकारान्तरेण दर्शयति—अपरे त्विति । अपरे तु कल्पयन्तीति सम्बन्धः । तेषामाशयं दर्शयति—अज्ञानस्येति । ननु सर्वमज्ञानं स्वस्थितिकाले सर्वदा विषयमावृणोतीति नियमो नास्ति । एकज्ञानकाले एकस्याज्ञानस्य नाशः, इतरेषां तदा सत्त्वेऽप्यावरणशक्तिप्रतिबन्धरूपतिरस्कारस्य वक्ष्यमाणत्वेन एकज्ञानकाले तेषामावरकत्वाभावादियत आह— उत्सर्गत इति । ननु सर्वं सर्वदा आवृणोतीत्युक्तेः घटादिविषयोत्पत्तेः पूर्वकालेऽपि घटाद्यवच्छिन्नचैतन्यावरकत्वमवस्थाऽज्ञानानां प्रतीयते, तदनुपपन्नम् । तदानीमवच्छेदकविषयाभावेन तदवच्छिन्नचैतन्यस्यावस्थाऽज्ञानैरावरणीयस्याभावादिति शङ्कामपनु-

---

(१) पराभवपदार्थमाह-तमिति । तं पराभवम् ।

नावरकत्वं न युज्यत इति वाच्यम् । तदाऽपि सूक्ष्मरूपेण तत्सत्त्वादिति मन्यमानाः कल्पयन्ति—यथा बहुजनसमाकुले प्रदेशे कस्यचित् शिरसि पतन्नशनिरितरानप्यपसारयति ।

यथा वा सन्निपातहरमौषधमेकं दोषं निवर्तयद्दोषान्तरमपि दूरीकरोति । एवमेकमज्ञानं नाशयत् ज्ञानमज्ञानान्तराण्यपि तिरस्करोति । तिरस्कारश्च यावद् ज्ञानस्थितिः(१) तावद् आवरणशक्तिप्रतिबन्ध इति ॥

(वे०सू०मं०) तत्र धारावहज्ञानेष्वाद्येनैव पराभवात् ॥
अज्ञानानां द्वितीयादेः साफल्यं कथमुच्यते ॥८१॥

नन्वेवं सति धारावाहिकस्थले द्वितीयादिवृत्तीनामावरणानभिभावकत्वे वैफल्यं स्यात्, प्रथमज्ञानेनैव निवर्तनतिरस्काराभ्यामावरणमात्रस्याभिभवादिति ॥

---

दति—न चेत्यादिना । तदाऽपीति । कार्यमात्रस्य उत्पत्तेः पूर्वकाले नाशोत्तरकाले चानभिव्यक्तरूपेणावस्थानस्य श्रुतिस्मृतिन्यायैस्तत्र तत्र पूर्वाचार्यैस्साधितत्वादिति भावः । एवमिति । ज्ञानं कर्तृ । यावज्ज्ञानस्थितिरिति । सर्वं सर्वदा आवृणोतीत्युत्सर्गस्य ज्ञानस्थितिरपवादहेतुरिति भावः ।

'ज्ञानमात्रमज्ञाननिवर्तकम्'इति नियममाक्षिपति—नन्वेवंसतीति । एकेन ज्ञानेन एकाज्ञानस्य नाशः, इतरेषां तिरस्कार इत्युपगमे सतीत्यर्थः । वैफल्यं स्यादिति । अज्ञाननाशादिप्रयोजनवत्त्वं न स्यादित्यर्थः । तत्प्रयोजनस्य प्रथमज्ञानेनैव सिद्धत्वादित्याह—प्रथमेति ॥

प्रथमज्ञानसिद्धस्यापि आवरणतिरस्कारस्य द्वितीयादिज्ञानसाध्यत्वं साध्यलक्षणविशेषानुरोधेन सम्भवति । अतो न द्वितीयादिज्ञानवैफल्यम् । अज्ञाननाशरूपप्रयोजनाभावेऽपि तत्तिरस्करणलक्षणफलस्य सत्त्वादिति प-

---

(१) यावज्ज्ञानस्थिति तदावरणेति पाठः ।

(वे०सू०मं०) अत्राहुर्दीपधारेव तिरस्कृत्य तमः स्थिता ॥
वृत्तिधारेत्यनावारो(१) वृत्तीनां क्षेमतः फलम् ॥८२॥

अत्राहुः—वृत्तितिरस्कृतमप्यज्ञानं तदुपरमे पुनरावृणोति प्रदीपतिरस्कृतं तम इव प्रदीपोपरमे । वृत्त्युपरमसमये वृत्त्यन्तरोदये तु तिरस्कृतमज्ञानं तथैवावतिष्ठते प्रदीपोपरमसमये प्रदीपान्तरोदये तम इव । तथा च 'यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं, यद्व्यतिरेके चासत्त्वं, तत् तज्जन्यम्' इति प्रागभावपरिपालनसाधारणलक्षणानुरोधेनानावरणस्य द्वितीयादिवृत्तिकार्यत्वस्यापि लाभान्न तद्वैफल्यमिति ॥

---

रिहरति—अत्राहुरिति । प्रथममेव धारारहितबुद्धिस्थले सिद्धमर्थं सदृष्टान्तं दर्शयति—वृत्तितिरस्कृतमिति । 'घटोऽयम्' इति प्रत्यक्षज्ञानं ह्येकमज्ञानं नाशयदितरदज्ञानं सर्वं तिरस्करोति । तच्च तिरस्कृतमज्ञानं घटज्ञानोपरमसमये पुनस्तमावृणोति । यदि बुभुत्सादिवशात् प्रथममुत्पन्नघटज्ञाननाशक्षणे घटप्रत्यक्षान्तरमुदेति, तदा तिरस्कृतमज्ञानं तथैवावतिष्ठते इत्यर्थः । 'यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं, यस्मिन्नसति यस्यासत्त्वं, तत् तज्जन्यम्' इति साध्यलक्षणम् । इदं च साधनादिसाधारणम् । तथा हि—यस्मिन् दण्डादौ सति उत्तरक्षणे घटादिकार्यसत्त्वं, दण्डादावसति च घटादिकार्यासत्त्वं, ततो घटादिकं दण्डादिजन्यम् । तथा प्रायश्चित्ते सति उत्तरक्षणे दुःखप्रागभावस्य सत्त्वं, प्रायश्चित्ते चासति दुःखस्यैवोदयात् दुःखप्रागभावस्यासत्त्वमिति रीत्या अनादेरपि दुःखप्रागभावस्य प्रायश्चित्तपरिपाल्यतया प्रायश्चित्तसाध्यत्वमुपेयते । एवं प्रकृतेऽपि साध्यत्वं दर्शयति—तथा चेति । द्वितीयवृत्त्युदये सति प्रथमज्ञानसिद्धस्यावरणतिरस्कारस्य उत्तरक्षणे सत्त्वं, प्रथमज्ञाननाशक्षणे द्वितीयवृत्त्युदयव्यतिरेके च उक्ततिरस्कारस्यासत्त्वमिति प्रथमज्ञानकाल एव सिद्धस्यापि तस्य द्वितीयवृत्तिजन्यतया तत्फलत्वम् । एवं तृतीयादिवृत्तीनामपि आवरणतिरस्कारफलकत्वं योजनीयमित्यर्थः । अनावरणस्येति । आवरणतिरस्कारस्येत्यर्थः ॥

---

(१) अनावारः—आवरणाभावः ।

(वे०सू०मं०) पर्यायेणावृतिर्न्यायचन्द्रिकाकृद्भिरीरिता ॥
अर्थस्य(१) मोहैर्बोधेन स्वकालावरणक्षतिः ॥८३॥

न्यायचन्द्रिकाकृतस्त्वाहुः—केनचिज्ज्ञानेन कस्यचिदज्ञानस्य नाश एव । न त्वावरकाणामप्यज्ञानान्तराणां तिरस्कारः । तथा च धारावाहिकद्वितीयादिवृत्तीनामप्येकैकाज्ञाननाशकत्वेन साफल्यम् ।

न चैवं ज्ञानोदयेऽप्यावरणसम्भवाद्विषयानवभासप्रसङ्गः । अवस्थारूपाण्यज्ञानानि हि तत्तत्कालोपलक्षित(२)स्वरूपावरकाणि, ज्ञानानि च यावत्स्वकालोपलक्षितविषयावरकाज्ञाननाशकानि । तथा च किञ्चिज्ज्ञानोदये तत्कालीनविषयावरकाज्ञा-

ज्ञानमात्रमज्ञाननिवर्तकं न भवति, धारावाहिद्वितीयादिज्ञाने व्यभिचारादित्यत्र प्रकारान्तरेण परिहारं ब्रूते—न्यायचन्द्रिकाकृतस्त्विति । न त्विति । न चाज्ञानान्तराणां तिरस्काराभावे एकज्ञानकालेऽपि तैरतिरस्कृतैर्विषयस्यावृतत्वाद्विषयानवभासप्रसङ्ग इति वाच्यम् । प्रथमज्ञानोदयसमये एकमेवाज्ञानं विषयावरकम् । इतरेषां तु तदा विषयावरकत्वमेव नोपेयते । अतो न तत्तिरस्करणापेक्षेति भावः । ततः किं ? तत्राह—तथा चेति ।

आशयमविदुषश्शङ्कामनूद्य निराकरोति—न चैवमित्यादिना । एवंशब्दस्य प्रथमज्ञानेन आवरकाज्ञानान्तराणामतिरस्करणे सतीत्यर्थः । तत्तत्कालेति । अवस्थाऽज्ञानानां सर्वेषां मूलाज्ञानस्येव सर्वदा विषयचैतन्यावरकत्वं नास्ति, वैयर्थ्यात्, किं तु किञ्चिदज्ञानं कञ्चित्कालं विषयचैतन्यमावृणोति, किञ्चिच्च कालान्तरे तद् आवृणोतीत्यनेन प्रकारेण कालविशेषैरुपलक्षितविषयचैतन्यावरकत्वम् । ज्ञानानामपि स्वस्वोदयकाले स्वस्वविषयावरकत्वेन प्रसक्ताज्ञाननिवर्तकत्वमित्यर्थः । एवमाशयमुद्घाट्य इदानीं विषयानवभासप्रसङ्गं परिहरति—तथा चेति । एकज्ञानकालेऽज्ञानान्तराणामनावरकत्वे सिद्धे सतीत्यर्थः । तत्कालीनेति ।

(१) अर्थस्य मोहैरज्ञानैरावृतिरिति पूर्वेणान्वयः ।
(२) कालकलोपलक्षितेति पाठः ।

नस्य नाशात् विद्यमानानामज्ञानान्तराणामन्यकालीनविषयावारकत्वाच्च न तत्कालीनविषयावभासे काचिदनुपपत्तिः । कारीरीफले वृष्टावासन्नसमयस्येवाज्ञानविषये घटादौ तत्कालस्योपलक्षणतया विषयकोटावननुप्रवेशेन सूक्ष्मतत्कालभेदाविषयैर्धारावाहिकाद्वितीयादिज्ञानैरज्ञानानां निवृत्तावपि न काचिदनुपपत्तिरिति ॥

(वे०सू०मं०) केचिदाहुर्घटाज्ञानमाद्यज्ञानेन हन्यते ॥
द्वितीयाद्यैस्तु कालादिविशिष्टाज्ञानबाधनम् ॥८४॥
वृत्तिश्चिरस्थितैकैव स्याद्धारावाहिकस्थले ॥
भिन्ना वा वृत्तयः सन्तु स्थूलकालार्थगोचराः ॥८५॥
उपास्तिवदमानानि सन्तु वाऽनाद्यवृत्तयः(१) ॥
गृहीतग्रहणात्सूक्ष्मकालस्यातीन्द्रियत्वतः ॥ ८६ ॥

केचित्तु प्रथमज्ञाननिवर्त्यमेवाज्ञानं स्वरूपावारकम् । द्विती-

---

किञ्चिज्ज्ञानोदयकालीनविषयस्यावारकत्वेन प्रसक्ताज्ञानस्येत्यर्थः । न तदिति । किञ्चिज्ज्ञानकालीनेत्यर्थः । ननु तैस्तैः कालविशेषैर्विशिष्टस्यैव विषयस्य तत्तदज्ञानावरणीयत्वम् इत्येवं कालविशेषाणां विशेषणतया आवरणीयकोटावनुप्रवेशं विहाय तेषां किमित्युपलक्षणत्वं स्वीक्रियते इत्याशङ्क्य तथा सति धारास्थले आवारकत्वेन प्रसक्ताज्ञाननिवर्तकद्वितीयादिवृत्तीनामपि तत्तत्कालविशेषविशिष्टविषयकत्वं वाच्यम् । समानविषयकत्वं विना तन्निवर्तकत्वानुपपत्तेः । तच्च न सम्भवति । क्षणभेदानामप्रत्यक्षत्वात् । अतस्तेषामुपलक्षणत्वमाश्रितमिति समाधानमभिप्रेत्य समयविशेषस्योपलक्षणत्वे दृष्टान्तमाह—कारीरीफले वृष्टाविति । कारीरीनामकेष्टिफलभूता वृष्टिरिष्टिसमाप्त्युत्तरक्षणे एव वक्तव्या, न तु कालान्तरे । तदानीं शुष्यतस्सस्यस्य सञ्जीवने कालान्तरीयवृष्टेरनुपयोगात् । तथा चासन्नसमयस्य वृष्टिविशेषणतया फलकोटिप्रवेशो नोपेयते । इष्ट्या विनाऽपि समयविशेषसम्भवात् । किं तु समयान्तरव्यावर्तकतया उपलक्षणत्वमेवाश्रितमित्यर्थः ॥

धारावहनस्थले द्वितीयादिवृत्तीनामावरणाभिभावकत्वं न स्यादित्याक्षेपे एव परिहारं त्रेधा दर्शयति—केचित्त्विति । प्रथमं वस्तुगतिमा-

---

(१) अनाद्याः आद्यभिन्नाः द्वितीयादिवृत्तयः इत्यर्थः ।

यादिज्ञाननिवर्त्यानि तु देशकालादिविशेषणान्तरविशिष्टविषयाणि । अत एव सत्तानिश्चयरूपे अज्ञाननिवर्तके चैत्रदर्शने सकृज्जाते 'चैत्रं न जानामि' इति स्वरूपावरणं नानुभूयते, किं तु 'इदानीं स कुत्रेति न जानामि' इत्यादिरूपेण विशिष्टावरणमेव । विस्मरणशालिनः क्वचित् सकृत् दृष्टेऽपि 'न जानामि' इति स्वरूपावरणं दृश्यते चेत्, तत्र तथाऽस्तु । अन्यत्र सकृद्दृष्टे विशिष्टविषयाण्येवाज्ञानानि ज्ञानानि च ।

न चैवं सति धारावाहिकद्वितीयादिज्ञानानामज्ञाननिवर्तकत्वं न स्यात्, स्थूलकालविशिष्टाज्ञानस्य प्रथमज्ञानेनैव निवृत्तेः पूर्वापरज्ञानव्यावृत्तसूक्ष्मकालविशिष्टाज्ञानस्य तदविषयैर्द्वितीया-

---

माह—प्रथमज्ञानेति । उक्तव्यवस्थायां प्रमाणत्वेनानुभवं दर्शयति—अत एवेति । उक्तविभागाभ्युपगमादेवेत्यर्थः । ननु उक्तविभागो न सिध्यति । क्वचित् सकृद्दृष्टेऽपि वस्तुनि पूर्ववत् स्वरूपावरणानुभवादित्याशङ्क्याह— विस्मरणशालिन इति । तत्र तथाऽस्त्विति । पुनः स्वरूपावरणानुभवस्थले द्वितीयादिज्ञाननिवर्त्यमप्यज्ञानं स्वरूपावरकमास्त्वित्यर्थः । तथा च उक्तविभाग औत्सर्गिक इति भावः । अन्यत्रेति । विस्मरणाभावस्थले इत्यर्थः । नन्वज्ञानानां विशिष्टविषयकत्वे तेषामनिवृत्तिप्रसङ्गः । सकृद्दृष्टे वस्तुनि द्वितीयादिज्ञानानामपि प्रथमज्ञानवत् स्वरूपमात्रविषयकत्वेन तत्समानविषयकत्वरहितानां तन्निवर्तकत्वानुपपत्तेरिति, नेत्याह—ज्ञानानि चेति । सकृद्दृष्टे विषये ज्ञानान्यपि 'चैत्र इदानीमत्रास्ते' इत्याद्याकाराणि सन्ति विशिष्टविषयाण्येवेति स्वीकारान्नोक्तदोष इति भावः ।

ननु ज्ञानानां विशिष्टविषयकत्वं धारास्थले द्वितीयादिवृत्तिषु व्यभिचारपरिहारार्थं कल्प्यते । तथा च तत्र ज्ञानानां किं घटिकार्द्धघटिकाद्यात्मकस्थूलकालविशिष्टघटादिविषयकत्वं विवक्षितम्, किं वा क्षणात्मकसूक्ष्मकालविशिष्टघटादिविषयकत्वं विवक्षितमिति विकल्पं मनसि निधाय उभयथाऽपि धारास्थले द्वितीयादिवृत्तिषु व्यभिचारतादवस्थ्यमिति शङ्कते—न चैवंसतीति । द्वितीयादिज्ञानानां तन्निवर्त्याज्ञानानां च उत्सर्गतो विशिष्टविषयकत्वे सतीत्यर्थः । प्रथमज्ञानेनैवेति । स्थूलकालविशिष्टाविषयेणेति शेषः । पूर्वापरेति । धारास्थले

दिज्ञानैर्निवृत्त्ययोगादिति वाच्यम्। धारावहनस्थले प्रथमोत्पन्नाया एव वृत्तेस्तावत्कालावस्थायित्वसम्भवेन वृत्तिभेदानभ्युपगमात्। तदभ्युपगमेऽपि बहुकालावस्थायिपञ्चषवृत्तिरूपत्वसम्भवेन परस्परव्यावृत्तस्थूलकालादिविशेषणभेदविषयत्वोपपत्तेः। प्रतिक्षणोद्यदनेकवृत्तिसन्तानरूपत्वाभ्युपगमेऽपि द्वितीयादिवृत्तीनामधिगतार्थमात्रविषयतया प्रामाण्याभावेनावरणानिवर्तकत्वेऽप्यहानेश्च। न

हि ज्ञानानि क्षणस्थितिकानि। ततश्च पूर्वापरज्ञानकालेभ्यो व्यावृत्ता ये सूक्ष्मकालाः क्षणात्मकाः, तैर्विशिष्टस्य विषयस्यावरकं यदज्ञानं, तस्येत्यर्थः। तदविषयैरिति। सूक्ष्मकालविशिष्टाविषयकैरित्यर्थः। यत्र एकस्मिन्नेव श्रीमूर्त्यादौ दीर्घकालनैरन्तर्येण स्फुरणमस्ति तत्र श्रीमूर्त्यादिगोचरवृत्तिरेकैव। तद्भेदे मानाभावात्। सिद्धान्ते वृत्तेः क्षणस्थितिकत्वानभ्युपगमात्। तथा च न तत्र व्यभिचारशङ्केत्याह—धारावहनस्थल इति। ननु तत्र वृत्तेरेकत्वे धारावहनत्वप्रसिद्धिविरोधः। एकस्यां तदसम्भवात्। ध्यानसमाध्योरपि उक्तरीत्या एकवृत्तिरूपत्वापत्तौ तयोः प्रत्ययसन्ततिरूपत्वप्रतिपादकभाष्यादिविरोधप्रसङ्गाच्चेत्याशङ्क्य धारायाः अनेकवृत्तिरूपत्वमङ्गीकृत्य व्यभिचारं परिहरति—तदभ्युपगमेऽपीति। सम्भवेनेति। धाराया इति शेषः। उपपत्तेरिति। द्वितीयादिवृत्तीनामज्ञानानिवर्तकत्वदोषो नास्तीति शेषः। धारावाहिकवृत्तीनां न्यायमत इव क्षणस्थितिकत्वमुपेत्यापि व्यभिचारं परिहरति—प्रतिक्षणोद्यदिति। प्रतिक्षणमुद्यन्त्यः अनेकाश्च या वृत्तयः, तत्सन्तानेत्यर्थः। अभ्युपगमेऽपीति। धाराया इति शेषः। अहानेश्चेति। 'ज्ञानमज्ञाननिवर्तकम्' इति नियमभङ्गरूपायाः हानेरभावादित्यर्थः। हान्यभावे हेतुमाह—प्रामाण्याभावेनेति। तत्र हेतुमाह—अधिगतार्थमात्रेति। अनधिगतार्थविषयकत्वाभावो मात्रपदार्थः। तथा च द्वितीयादिवृत्तीनां प्रमात्वं नास्ति। स्मृतिवद् अधिगतार्थमात्रविषयकत्वादित्यर्थः। नन्वनधिगताबाधितार्थानुभवत्वं प्रमात्वं न भवति। अबाधितानुभवपदव्यावर्त्ययोर्भ्रमस्मृत्योरिवानधिगतपदव्यावर्त्याभावात्। तथाचाबाधितार्थानुभवत्वमात्रं प्रमात्वम्। तच्च द्वितीयादिवृत्तिष्वक्षतमिति तत्र नियमभङ्गरूपा हानिः स्यादेवेति, नेत्याह—न हीति। प्रामाण्यमित्यनन्तरं तथा सतीति शेषः। नैयायिकव्यक्तये—न

हि विषयाबाधमात्रं प्रामाण्यम् । प्रागवगतानवगतयोः पर्वततद्वृत्तिपावकयोरनुमितिविषययोरबाधस्याविशेषेण उभयत्राप्यनुमितेः प्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः । 'वह्नावनुमितिः प्रमाणम्'इतिवत् 'पर्वतेऽप्यनुमितिः प्रमाणम्'इति व्यवहारादर्शनात् ।

विवरणे साक्षिसिद्धस्याज्ञानस्याभावव्यावृत्तिप्रत्यायनार्थानु-

---

चेष्टापत्तिरिति । इष्टापत्तिरिति न चेति सम्बन्धः । व्यवहारादर्शनादिति । तथा च प्रामाण्याप्रामाण्यव्यवस्थायाः व्यवहारानुसारित्वादनुमितेः पर्वतांशे प्रमात्वाभावेनालक्ष्यत्वे सिद्धे पर्वतांशानुमितौ प्रमालक्षणस्यातिव्याप्तिपरिहारायानधिगतत्वविशेषणं तल्लक्षणे देयमेव । ततश्च धाराद्वितीयादिवृत्तीनां न प्रामाण्यमिति भावः ।

अज्ञातत्वस्य प्रमालक्षणे प्रवेशोऽस्तीत्यत्र हेत्वन्तरमाह—विवरण इति । विवरणे अज्ञानस्य प्रमाणावेद्यत्वोक्तेश्चेति सम्बन्धः । अत्रानुमानपदमनुमितिपरम् । प्रमाणपदमपि प्रमितिपरम् । प्रमालक्षणस्य प्रकृतत्वादिति बोध्यम् । नन्वज्ञानस्यानुमितिशाब्दार्थापत्तिरूपवृत्तिविषयत्वे कथं तस्य प्रमाणावेद्यत्वम् ? अत आह—साक्षिसिद्धस्येति । 'अज्ञोऽहम्' इत्यनुभवरूपेण साक्षिणा अज्ञानस्वरूपस्य ज्ञातत्वादज्ञानानुमित्यादेरज्ञानस्वरूपे विषये अज्ञातत्वघटितप्रमात्वं नास्तीति मत्वा प्रमाणावेद्यत्वं तस्योक्तम् । न च साक्षिण एव प्रमाणत्वात् कथं सामान्यतः प्रमाणावेद्यत्वमुक्तमिति वाच्यम् । साक्ष्यतिरिक्तप्रमाणावेद्यत्वस्यैव विवक्षितत्वात् । साक्षिणो नित्यत्वेन प्रमाकरणाजन्यतया पराभिमतेश्वरज्ञानवत् साक्षिणः प्रमाऽप्रमाबहिर्भूतत्वेन प्रमाणत्वाभावाद्वा तदवेद्यत्ववचनमिति भावः । ननु साक्षिप्रत्यक्षसिद्धं चेदज्ञानं किमर्थं तर्हि तत्रानुमानाद्युपन्यस्यते, तत्राह—अभावव्यावृत्तीति । अज्ञानस्य पराभिमताज्ञानादभावरूपात् या व्यावृत्तिः तत्प्रत्यायनमर्थः प्रयोजनं येषामनुमानादीनां, तानि तथेत्यर्थः ।

एतदुक्तं भवति—'अहमज्ञः' इत्यनुभवसिद्धमज्ञानं भावरूपमिति सिद्धान्तिनः । तद् ज्ञानप्रागभावरूपमिति वैशेषिकादयः । ततश्चानुमानादिभिरज्ञानस्याभावप्रतियोगिकभेदस्साध्यते इति न तेषां वैयर्थ्यम् । न च तस्य भावरूपत्वसाधने वा किं लभ्यत इति वाच्यम् ।

मानादिविषयत्वेऽपि प्रमाणावेद्यत्वोक्तेश्च । तस्मात् द्वितीयादि-वृत्तीनां प्रामाण्याभावात् उपासनादिवृत्तीनामिवाज्ञानानिवर्तकत्वेऽपि न हानिः। प्रमाणवृत्तीनामेव तन्निवर्तकत्वाभ्युपगमात् ॥

(वे०सू०मं०) ननु नाज्ञानविच्छित्तिः परोक्षज्ञानतस्ततः ॥
भ्रान्तिजिज्ञासयोर्दृष्टेरत्र केचित्समादधुः ॥ ८७ ॥

ननु नायमपि नियमः, परोक्षवृत्तेरनिर्गमेनाज्ञानानिवर्तकत्वादिति चेत्।

(वे०सू०मं) द्विविधं विषयाज्ञानं साक्षिविक्षेपसङ्गतेः ॥
अर्थगं पौरुषं चेति परोक्षात्पौरुषक्षयः ॥ ८८ ॥

अत्र केचिदाहुः—द्विविधं विषयावरकमज्ञानम् । एकं विषयाश्रितं रज्ज्वादिविक्षेपोपादानभूतं कार्यकल्प्यम् । अ-

---

'मायां तु प्रकृतिं विद्याद्' इत्यादिशास्त्रसिद्धस्य प्रपञ्चपरिणाम्युपादानत्वस्य सिद्धेस्तत्साधनफलत्वात् । तस्मादिति । अनधिगतत्वघटितप्रमालक्षणाभावादित्यर्थः । उपासनादिवृत्तीनामिवेति । उपासनारूपा वृत्तिः न ज्ञानम् क्लृप्ततत्करणाजन्यत्वात्, मनसो ज्ञानकरणत्वस्य निरस्तत्वात् निरसिष्यमाणत्वाच्च, किं तु गमनादिवत् क्रियारूपा, पुरुषकृतिसाध्यत्वात् । अतस्सा नोपास्यस्वरूपाज्ञाननिवर्तिका । एवम् इच्छाद्वेषादिवृत्तयोऽपि न स्वविषयाज्ञाननिवर्तिकाः, ज्ञानरूपत्वाभावात् । द्वितीयादिवृत्तीनां तु स्मृतिवद् ज्ञानरूपत्वेऽपि नाज्ञाननिवर्तकत्वमुपेयते । प्रमात्वाभावादित्यर्थः । ननु कथं न हानिः । तासां प्रमात्वाभावेऽपि ज्ञानत्वाभ्युपगमेन 'ज्ञानमात्रमज्ञाननिवर्तकम्' इति नियमस्य व्यभिचाररूपहानेरावश्यकत्वादित्याशङ्क्याह—प्रमाणवृत्तीनामेवेति । न त्वधिगतार्थमात्रगोचरवृत्तीनामपीत्येवकारार्थः । तथा च 'ज्ञानमात्रमज्ञाननिवर्तकम्' इति नियमो नाङ्गीक्रियते, येनोक्तदोषस्स्यादिति भावः । अभ्युपगमादित्यनन्तरम् इत्याहुरिति शेषः, केचित्त्वित्युपक्रमात् ।

'प्रमामात्रमज्ञाननिवर्तकम्' इति नियमस्यापि व्यभिचारं शङ्कते—नन्विति । परोक्षज्ञानस्यापि तन्निवर्तकत्वसत्त्वान्न व्यभिचार इति वक्तुमज्ञानस्य द्वैविध्यमाह—द्विविधमित्यादिना । रज्ज्वादीति । रज्ज्वा-

न्यत् पुरुषाश्रितम् 'इदमहं न जनामि' इत्यनुभूयमानम्(१) । पुरुषाश्रितस्य विषयसंभिन्नविक्षेपोपादानत्वासम्भवेन, विषयाश्रितस्य 'इदमहं न जानामि' इति साक्षिरूपप्रकाशसंसर्गायोगेन द्विविधस्याप्यावश्यकत्वात् । एवं च परोक्षस्थले वृत्तेर्निर्गमनाभावाद् दूरस्थवृक्षे आप्तवाक्यात् परिमाणविशेषावगमेऽपि तद्विपरीतपरिमाणविक्षेपदर्शनाच्च विषयगताज्ञानानि-

---

देर्यो विक्षेपः सर्पादिरूपो विवर्तः, तदुपादानभूतमित्यर्थः । कार्यैकल्प्यमिति । विक्षेपाख्यकार्यानुपपत्तिकल्प्यम्, न त्वनुभवसिद्धमित्यर्थः । ननु रज्ज्वादिगताज्ञानस्य 'रज्जुं न जानामि'इत्यनुभवसिद्धत्वात् कथं तस्य कार्यैककल्प्यत्वमित्याशङ्क्यानुभवस्य विषयगताज्ञानं न विषय इत्याह—अन्यदिति । 'अत्र विषयावरकमज्ञानं द्विविधम्—एकं विषयाश्रितम्, अन्यत् पुरुषाश्रितमिति सम्बन्धः । तथा च विषयाश्रितं सप्रमाणं प्रदर्श्य पुरुषाश्रितं सप्रमाणं दर्शयति' इति वा 'अन्यद्' इत्यस्यावतरणं बोध्यम् । नन्वेकेनैवाज्ञानेन सर्पादिविक्षेपस्य, 'न जानामि'इत्यनुभवस्य च सिद्धेः किमज्ञानद्वैविध्येन ? अत आह—पुरुषाश्रितस्येति । विषयो रज्ज्वादिरधिष्ठानम्, तत्सम्भिन्नो विषयतादात्म्यापन्नो यो विक्षेपः, तदुपादानत्वासम्भवेनेत्यर्थः । 'न जानामि'इत्याकारको यस्साक्षिरूपः प्रकाशस्तत्संसर्गायोगेनेत्यर्थः । इदानीं व्यभिचारं परिहरति–एवं चेति । अज्ञानद्वैविध्ये सतीत्यर्थः । एवं च परोक्षस्थले विषयगताज्ञानानिवृत्तावपि पुरुषगताज्ञाननिवृत्तिरस्त्येवेति सम्बन्धः । तथा च न व्यभिचार इति भावः । परोक्षज्ञानस्य विषयगताज्ञाननिवर्तकत्वाभावे हेतुद्वयमाह—वृत्तेरित्यादिना । निर्गमनाभावादिति । विषयचैतन्यसंसृष्टाया एव वृत्तेर्विषयचैतन्यगताज्ञाननिवर्तकत्वस्य वक्ष्यमाणतया निर्गमनाभावे वृत्तिविषयचैतन्यसंसर्गो न सिध्यतीति भावः । तद्विपरीतेति । 'दूरे दृश्यमानो वृक्षः सन्निहितवृक्ष इव महान्' इत्याप्तवाक्यजन्यपरोक्षज्ञानविषयभूताद् दूरस्थवृक्षगतात्तस्मात् परिमाणविशेषाद्विपरीतो यः परिमाणरूपविक्षेपविशेषः, तस्य दर्शनादित्यर्थः । यदि परोक्षज्ञानं विषयगताज्ञाननिवर्तकं स्यात्, तदाऽऽप्तवाक्यजन्या-

---

(१) 'विषयमहं न जानामि' इत्यानुभाविकमिति पाठः ।

वृत्तावपि पुरुषगताज्ञाननिवृत्तिरस्त्येव । 'शास्त्रार्थं न जानामि'इत्यनुभूताज्ञानस्य तदुपदेशानन्तरं निवृत्त्यनुभवात् । अत एव 'अनुमेयादौ सुषुप्तिव्यावृत्तिः' इति विवरणस्य तद्विषयाज्ञाननिवृत्तिरर्थ इत्युक्तं तत्त्वदीपने इति ॥

(वे०सू०मं०) अन्ये पौरुषमज्ञानमाहुः शक्तिद्वयाश्रयम् ॥
परोक्षज्ञानतस्तत्रावरणांशपरिक्षयम् ॥ ८९ ॥

अन्ये तु—नयनपटलवत् पुरुषाश्रितमेवाज्ञानं विषयावर-

---

णगमेन परिमाणविशेषाज्ञाननिवृत्त्यापत्त्या विपरीतपरिमाणात्मकविक्षेपोत्पत्तिर्न स्यात, उपादानाभावादिति भावः । परोक्षज्ञानेन पुरुषगताज्ञाननिवृत्तौ हेतुमाह—शास्त्रार्थमिति । 'शास्त्रार्थं न जानामि'इत्यनेन प्रकारेण यच्छास्त्रार्थाज्ञानमनुभूतम्, तस्य शास्त्रार्थोपदेशानन्तरं 'शास्त्रार्थाज्ञानमिदानीं निवृत्तम्'इति निवृत्तिरनुभूयते । तत्र शास्त्रार्थो द्विविधः—धर्मरूपो ब्रह्मरूपश्च । धर्मरूपे शास्त्रार्थे उपदेशजन्यज्ञानं परोक्षमेव, न तु कदाचिदप्यपरोक्षम् । तस्य साक्षात्कारायोग्यत्वात । तथा च तत्र विषयगताज्ञाननिवृत्तिप्रसक्तिरेव नास्तीति पुरुषगताज्ञानमेव निवर्तते इति वक्तव्यम् । इतरथा तन्निवृत्त्यनुभवविरोधात । ब्रह्मरूपे च शास्त्रार्थे उपदेशजन्यज्ञानं परोक्षम् । तावन्मात्रात् न विषयावरकं मूलाज्ञानं विषयगतं निवर्तते । मननादिविधिवैयर्थ्यप्रसङ्गात । अतः पुरुषगताज्ञानमेव निवर्तत इति वक्तव्यम् । अन्यथा तत्रापि तन्निवृत्त्यनुभवविरोधादेवेति भावः । परोक्षज्ञानस्याज्ञाननिवर्तकत्वे विवरणादिसम्मतिमाह—अत एवेति । उक्तानुभवबलादेवेत्यर्थः । तद्विषयेत्यत्र तत्पदमनुमेयादिपरम् । सुषुप्तिपदमज्ञानपरं, व्यावृत्तिपदं निवृत्तिपरमिति व्याख्यातं तत्त्वदीपने । तथा च अनुमेयादौ विषयगताज्ञाननिवृत्त्यभावस्य वक्ष्यमाणत्वा तत्र पुरुषगताज्ञाननिवृत्तिरनुमित्यादिपरोक्षज्ञानेन जायत इत्ययमर्थः तत्र विवृत इति प्रतीयत इत्यर्थः ।

अज्ञानद्वैविध्याभावे ऽपि 'प्रमामात्रमज्ञाननिवर्तकम्' इति नियमस्य न व्यभिचार इति मतं दर्शयति—अन्ये त्विति । पुरुषगताज्ञानपेक्षया अन्यद् विषयगतमज्ञानं किं विषयावरणार्थमुपेयते, किं वा शुक्तिरजतादिविक्षेपोत्पत्त्यर्थम् ? । नाद्य इत्याह—नयनपटलवदिति । नयनगतकाचादिवदि-

णम्। न तदतिरेकेण विषयगताज्ञाने प्रमाणमस्ति। न च पुरुषाश्रितस्य विषयगतविक्षेपपरिणामित्वं न सम्भवति। तत्सं-भवे वा दूरस्थवृक्षपरिमाणे परोक्षज्ञानादज्ञाननिवृत्तौ विपरीतप-रिमाणविक्षेपो न सम्भवतीति वाच्यम्। वाचस्पतिमते सर्वस्य प्रपञ्चस्य जीवाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वेन तद्वच्छुक्तिरज-तादेः पुरुषाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वोपपत्तेः। परोक्षवृत्त्या

---

स्यर्थः। न द्वितीय इत्याह—न तदतिरेकेणेति। विषयगताज्ञानाभावेऽपि वक्ष्यमाणविधया विक्षेपोत्पत्तिसम्भवादिति भावः। प्रमाणाभावोऽसिद्ध इति शङ्कते—न चेति। न सम्भवतीति। पुरुषगताज्ञानस्य शुक्त्याद्यव-च्छिन्नचैतन्ये सत्त्वाभावादिति भावः। पुरुषगतस्यैवाज्ञानस्य विषयगत-विक्षेपोपादानत्वे दोषमाह—तत्सम्भवे वेति। पुरुषगताज्ञानस्य विषयग-तविक्षेपपरिणामित्वं तच्छब्दार्थः। न सम्भवतीति। विषयगताज्ञानस्या-नभ्युपगमात् पुरुषगताज्ञानस्य च आप्तोपदेशजन्यपरोक्षज्ञानेन निवृत्तत्वा-च्चेति भावः। आद्यदोषं परिहरति—वाचस्पतिमत इति। शुक्तिरजता-दिविक्षेपस्याज्ञानपरिणामत्वपक्षे अज्ञानस्य विषयचैतन्यगतत्वं वक्तव्यम्। तस्याज्ञानपरिणामत्वानङ्गीकारपक्षे तु तस्य विषयचैतन्यगतत्वं नापेक्षित-मिति भावः। दार्ष्टान्तिके ब्रह्मपदं शुक्त्याद्यवच्छिन्नचैतन्यरूपब्रह्मपरम्, न तु पूर्णब्रह्मपरम्। अवच्छिन्नचैतन्यस्यैव शुक्तिरजताद्यधिष्ठानत्वोपगमा-दिति भावः। 'विपरीतपरिमाणरूपो विक्षेपो न सम्भवति' इति द्वितीय-दोषं परिहरति—परोक्षवृत्त्येति। परोक्षज्ञानात् अज्ञाननिवृत्तिर्यथा अनु-भूयते, तथा उदाहृतस्थले सत्यपि परोक्षज्ञाने विपरीतपरिमाणोत्पत्तिर्नानु-भूयते। तथा चानुभवद्वयानुरोधेन पुरुषाश्रितस्यैवाज्ञानस्य विषयावरक-स्य एकदेशः परोक्षज्ञानेन निवर्तते, एकदेशान्तरमनुवर्तते इति कल्प्यते। न त्वज्ञानद्वैविध्यमभ्युपगम्यते, गौरवादिति भावः। अवस्थान्तरेणेत्यनन्तरं पुरुषाश्रिताज्ञानस्यैवेति शेषः। वस्तुतस्तु—परोक्षज्ञानस्याज्ञाननिवर्तकत्वम-तेऽपि प्रतिबन्धरहितमेव परोक्षज्ञानमज्ञाननिवर्तकम्। प्रकृते च भ्रमानु-रोधेन दूरत्वादिदोषप्रतिबद्धत्वादाप्तवाक्यजन्यमपि ज्ञानं पुरुषगताज्ञान-निवर्तकं न भवति। अतो न विपरीतपरिमाणोत्पत्त्यनुपपत्तिशङ्कावका-

एकावस्थानिवृत्तावपि अवस्थान्तरेण विपरीतपरिमाणविक्षेपोपपत्ते-श्चेत्याहुः।

(वे०सू०मं०) विषयस्थं परे मोहं मूलाज्ञानांशरूपकम्॥
अंशांशिनोरभेदाच्च साक्षिणा तस्य सङ्गतिम्॥९०॥

अपरे तु—शुक्तिरजतादिपरिणामोपपत्त्याऽस्याद्विषयावगुण्ठनपटवद्विषयगतमेवाज्ञानं तदावरणम्। न च तथा सति अज्ञानस्य साक्ष्यसंसर्गेण(१) ततः प्रकाशानुपपत्तिः, परोक्षवृत्तिनि-

शः। न च तथासत्याप्तोपदेशानन्तरं 'दूरस्थवृक्षगतपरिमाणविशेषं न जानामि'इत्यनुभवापत्तिरिति वाच्यम्। सत्तानिश्चयरूपपरोक्षज्ञानस्य सत्यप्यज्ञाने तदनुभवप्रतिबन्धकत्वोपपत्तेः। न च 'प्रमामात्रमज्ञाननिवर्तकम्' इति नियमस्य प्रतिबद्धपरोक्षप्रमायां व्यभिचार इति वाच्यम्। अप्रतिबद्धत्वस्य प्रमाविशेषणत्वोपपत्तेरिति बोध्यम्।

एवम् 'अप्रतिबद्धप्रमामात्रमज्ञाननिवर्तकम्' इति नियममनुसृत्य तद्व्यभिचाराय परोक्षज्ञानस्याज्ञाननिवर्तकत्वमुपपादितम्। इदानीं तथा नियमो नास्ति, किं त्वप्रतिबद्धापरोक्षज्ञानमेवाज्ञाननिवर्तकम्, अतो न परोक्षज्ञाने व्यभिचारशङ्केति मतमवतारयति—अपरे त्विति। लोके घटादेर्मृदादिपरिणामत्वस्य प्रसिद्धत्वात् तद्वत् शुक्तिरजतादेरपि परिणामत्वं सिध्यति। तत्परिणामि चान्वयव्यतिरेकाभ्यां परिशेषसहकृताभ्यामज्ञानमेव सिध्यति। शुक्त्यादेः प्रातिभासिकरजताद्दिपरिणामित्वासम्भवाद्, अज्ञानस्य च विषयचैतन्यगतस्य यथा रजतादिविक्षेपपरिणामित्वमाञ्जस्येनोपपद्यते, न तथा पुरुषाश्रितस्योपपद्यते। अतस्तदुपपत्त्याञ्जस्यानुरोधेन विषयगतमेवावस्थारूपमज्ञानमास्थेयम्, न तु पुरुषगतमप्यवस्थारूपमज्ञानान्तरम्, वैयर्थ्यात् मानाभावाच्चेति भावः। यद्यपि पुरुषाश्रितस्याप्यज्ञानस्य पुरुषमपरित्यज्यैव दीर्घप्रभान्यायेन वृत्तिद्वारा बहिर्निर्गत्य विषयचैतन्यमाश्रितस्य रजताद्दिपरिणामित्वमुपपद्यते, तथाऽपि सा उपपत्तिर्नाञ्जसी, मूलाज्ञानवदवस्थाऽज्ञानस्यापि निष्क्रियत्वेन प्रभान्यायानवतारादिकमभिप्रेत्य परिणामोपपत्त्याञ्जस्यादित्युक्तम्। तथा सतीति। विषयावर-

(१) अन्तःकरणोपहितसाक्ष्येति पाठः।

२३

वर्त्यत्वासम्भवश्च दोष इति वाच्यम् । अवस्थारूपाज्ञानस्य साक्ष्यसंसर्गेऽपि तत्संसृष्टमूलाज्ञानस्यैव 'शुक्तिमहं न जानामि' इति प्रकाशोपपत्तेः । शुक्त्यादेरपि मूलाज्ञानविषयचैतन्याभिन्नतया तद्विषयत्वानुभवाविरोधात् ।

विवरणादिषु मूलाज्ञानसाधनप्रसङ्गे एव 'इदमहं न

---

काज्ञानस्य विषयगतत्वे सतीत्यर्थः । तत्त इति पञ्चमी । साक्षिण इत्यर्थः । असम्भवश्चेति । परोक्षवृत्तेर्विषयदेशे निर्गमनाभावादिति भावः । आद्यं दोषं परिहरति—अवस्थारूपाज्ञानस्येति । 'शुक्तिं न जानामि' इत्याद्यनुभवस्य नावस्थाऽज्ञानं विषयगतं विषयः, किं तु मूलाज्ञानम् । तस्यैव साक्षिसंसृष्टत्वादित्यर्थः । ननु मूलाज्ञानस्य ब्रह्मविषयकत्वात् कथं तस्य शुक्तिविषयकत्वानुभवस्सम्भवति, अवस्थाऽज्ञानस्य वा कथं शुक्तिविषयकत्वानुभवस्सम्भवति, तस्यापि शुक्त्यवच्छिन्नचैतन्यमात्रविषयकत्वात् । शुक्तेरवस्थाऽज्ञानविषयचैतन्यतादात्म्याच्छुक्तिविषयकत्वानुभवो न विरुध्यत इति चेत्, तुल्यमुत्तरमित्यभिप्रेत्याह—शुक्त्यादेरपीति । अभिन्नतयेति । जडमात्रस्य मूलाज्ञानविषयचैतन्येऽध्यस्ततया शुक्त्यादेरपि तत्तादात्म्यरूपं तदभिन्नत्वमस्तीति भावः ।

'शुक्तिं न जानामि' इत्यनुभवस्य मूलाज्ञानविषयकत्वे विवरणादिसम्मतिमाह—विवरणादिष्विति । ननु मूलाज्ञानसाधनप्रकरणे 'अहमज्ञः' इत्याकारो योऽनुभवः प्रदर्शितः, स एव मूलाज्ञानसाधकः । 'इदमहं न जानामि' इत्यनुभवस्तु अवस्थाऽज्ञानविषयक एव । न च प्रकरणविरोधश्शङ्कनीयः । शुक्तिरजतादिलक्षणपरिणामोपपत्तये अवस्थाऽज्ञानस्यापि साधनीयत्वेन मूलाज्ञानसाधनप्रकरणेऽपि प्रसङ्गात् तत्साधनोपपत्तेः । यथा 'इदं न जानामि' इत्यनुभवः तत्तद्विषयावच्छिन्नचैतन्याज्ञानगोचरः, एवम् 'अहमज्ञस्तत्त्वं न जानामि' इत्यनुभवो मूलाज्ञानगोचर इति दृष्टान्तविधया मूलाज्ञानसाधनप्रस्तावेऽपि विषयविशेषालिङ्गिताज्ञानानुभवप्रदर्शनोपपत्तेश्च । तस्माद् 'इदं न जानामि' 'शुक्तिं न जानामि' इत्याद्यनुभवानां मूलाज्ञानविषयकत्वे प्रमाणाभावादवस्थाऽज्ञानविषयकत्वस्यैव तत्साधनार्थतया वक्तव्यत्वाच्च तस्य विषयगतत्वे सिद्धे साक्षिसंसर्गा-

जानामि' इति प्रत्यक्षप्रमाणोपदर्शनाच्च 'अहमज्ञः' इति सामान्यतोऽज्ञानानुभव एव मूलाज्ञानविषयः । 'शुक्तिमहं न जानामि' इत्यादिविषयविशेषालिङ्गिताज्ञानानुभवस्त्ववस्थाऽज्ञानविषय इति विशेषाभ्युपगमेऽप्यवस्थाऽवस्थावतोरभेदेन मूलाज्ञानस्य साक्षिसंसर्गाद्वा साक्षिविषयचैतन्ययोः वास्तवैक्याद्वा विषयगतस्याप्यवस्थाऽज्ञानस्य साक्षिविषयत्वोपपत्तेः । परोक्षज्ञानस्याज्ञानानिवर्तकत्वेऽपि ततस्तन्निवृत्त्यनुभवस्य सत्तानिश्चयरूपपरोक्षवृत्तिप्रतिबन्धकप्रयुक्ताननुभवनिबन्धनभ्रान्तित्वोपपत्तेः अपरोक्षज्ञानस्यैवाज्ञाननिवर्तकत्वनियमाभ्यु-

---

भावाव न तदनुभवसम्भवतीत्याशयवती शङ्कामनुवदति—अहमज्ञ इतीति । विषयगताज्ञानस्य साक्षिणा सह साक्षात्सम्बन्धाभावेऽपि परम्परासम्बन्धसम्भवाव न तदनुभवानुपपत्तिरिति परिहरति—अवस्थाऽवस्थावतोरिति । अभेदेनेति । तादात्म्यमभेदः । तथा च साक्षिसंसृष्टमूलाज्ञानावस्थात्वाद्विषयगताज्ञानस्य मूलाज्ञानद्वारा साक्षिसंसर्ग इत्यर्थः । साक्षीति । साक्षिचैतन्यस्यावस्थाऽज्ञानाश्रयविषयचैतन्यस्य च वस्तुन एकत्वाद्वस्तुतस्साक्ष्यभिन्नचैतन्याश्रितत्वं साक्षिणा सह विषयगताज्ञानस्य संसर्ग इत्यर्थः । यदुक्तं 'परोक्षवृत्तिनिवर्त्यत्वं विषयगताज्ञानस्य न सम्भवति, परोक्षवृत्तेर्निर्गमनाभावाव । तथा च 'प्रमामात्रमज्ञाननिवर्तकम्' इति नियमो न सम्भवति, परोक्षवृत्तौ व्यभिचाराद्' इति । तन्न । परोक्षज्ञानस्याज्ञाननिवर्तकत्वानुपगमेन तथानियमानभ्युपगमाव । तथानियमे ह्यभ्युपगते परोक्षवृत्तौ व्यभिचारदोषो भवेव । ननु तर्हि 'शास्त्रार्थं न जानामि' इत्यनुभूताज्ञानस्य तदुपदेशानन्तरं तन्निवृत्त्यनुभवविरोध इति, नेत्याह—परोक्षज्ञानस्येति । तत इति । परोक्षज्ञानादित्यर्थः । भ्रान्तित्वोपपत्तेरिति । न चात्र बाधकाभावाव कथं भ्रान्तित्वकल्पनमिति वाच्यम् । विषयगताज्ञानापेक्षया पुरुषगतानन्तावस्थाऽज्ञानान्तरकल्पनागौरवस्य बाधकस्य सत्त्वादिति भावः ।

पगमादित्याहुः ॥

(वे०सू०मं०) सुखादिगोचरा वृत्तिर्ननु नाज्ञानघातिनी ॥
मैवं, मोहसुखादीनां साक्षिवेद्यत्वनिर्णयात् ॥९१॥

ननु नायमपि नियमः । अविद्याऽहङ्कारसुखदुःखादितद्धर्मप्रत्यक्षस्याज्ञाननिवर्तकत्वानभ्युपगमादिति चेत्, न । अविद्यादिप्रत्यक्षस्य साक्षिरूपत्वेन वृत्तिरूपापरोक्षज्ञानस्यावरणनिवर्तकत्वनियमानपायात् ॥ १३ ॥

(वे०सू०मं०) कः साक्षी ? तत्र कूटस्थदीपे कूटस्थचित्स्वयम् ॥
स्वाध्यस्तदेहयुग्मादेः साक्षीति प्रतिपादितः ॥९२॥

(१४) अथ कोऽयं साक्षी जीवातिरेकेण व्यवह्रियते ।

अत्रोक्तं कूटस्थदीपे—देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षादीक्षणान्निर्विकारत्वाच्च साक्षी-

---

कथं तर्हि प्रमाणवृत्तीनां तन्निवर्तकत्वाभ्युपगमस्तत्राह—अपरोक्षज्ञानस्यैवेति । न तु परोक्षज्ञानसाधारणप्रमाणज्ञानमात्रस्य, अतो न परोक्षज्ञाने व्यभिचार इत्येवकाराभिप्रायः । तद्धर्मेति । तच्छब्दोऽहङ्कारपरः । अनभ्युपगमादिति । अविद्याऽहङ्कारादीनां स्वसत्ताकाले भाननियमेन तेषामावरणानङ्गीकारादित्यर्थः । नियमस्य सङ्कोचं वदन् परिहरति—नेति ॥ १३ ॥

सुखादिधर्मिणोऽहङ्कारस्य साक्षिप्रत्यक्षविषयत्वोक्त्याऽहमर्थजीवापेक्षया भिन्नस्तत्साक्षी निर्दिष्टः । सुखादिधर्मिणोऽहङ्कारस्यैव लोके जीवत्वप्रसिद्धेः । तथा च योऽयं जीवभिन्नस्साक्षी व्यवह्रियते, स नास्ति, मानाभावादित्याक्षिपति—अथेति । यस्साक्षी जीवातिरेकेण व्यवह्रियते, अयं क इति सम्बन्धः । किंशब्द आक्षेपार्थः ।

मानाभावोऽसिद्ध इत्याशयेनाह—अत्रोक्तमिति । साक्षादीक्षणादिति । अपरोक्षतया द्रष्टृत्वादित्यर्थः । निर्विकारत्वाच्चेति । ननु द्रष्टृत्वं दृष्टिक्रियाकर्तृत्वम् । निर्विकारत्वं च कर्तृत्वादिविकारराहित्यम् । तथा च तयोः परस्परविरोध इति चेत्, न । दृष्टिस्वरूपे एव कूटस्थे तत्कर्तृत्वस्य "साक्षाद् द्रष्टरि संज्ञायाम्" इति सूत्रानुसारेण साक्षिशब्दात् प्रतीतस्य सवितरि प्रकाशात्मके 'प्रकाशते' इति

त्युच्यते । लोकेऽपि ह्यौदासीन्यबोधाभ्यामेव साक्षित्वं प्रसिद्धम् । यद्यपि जीवस्य वृत्तयः सन्ति देहद्वयभासिकाः, तथाऽपि सर्वतः प्रसृतेन स्वावच्छिन्नेन कूटस्थचैतन्येन ईषत् सदा

---

प्रकाशकर्तृत्ववदुपचारमात्रत्वात् । साक्षात्पदात् द्रष्टर्यर्थे इनिप्रत्ययो भवति साक्षिपदस्य संज्ञात्वे इति सूत्रार्थः । ननु साक्षिपदात् साक्षिलक्षणं बोद्धृत्वमात्रं प्रतीयते, न तु निर्विकारत्वरूपमौदासीन्यमपि । तत् कथं साक्षिलक्षणे निर्विकारत्वमपि प्रक्षिप्यते, तत्राह—लोकेऽपि हीति । अपिशब्दव्याख्यानमवधारणम् । तच्च औदासीन्यबोद्धृत्वयोः प्रत्येकं लक्षणत्वशङ्काव्यवच्छेदार्थम् । हिशब्दव्याख्यानं प्रसिद्धपदम् । लोके हि द्वयोर्विवदमानयोस्ततोस्ताभ्यामन्यस्तयोर्विवादस्यापरोक्षतया बोद्धा उदासीनश्च यो भवति, स साक्षीत्युच्यते । अतः उदासीनत्वविशेषणमावश्यकम् । औदासीन्यमात्रमुक्तविवादस्थले स्तम्भादेरप्यस्तीति तद्वारणाय बोद्धृत्वविशेषणमिति मन्तव्यम् । स्थूलसूक्ष्मात्मकदेहद्वयावच्छिन्नं स्वावच्छेदकदेहद्वयावभासकं चैतन्यं साक्षीति यदुक्तं, न तत् सम्भवति । तथाभूतचैतन्ये मानाभावात् । न च तदभावे देहद्वयावभासासिद्धिरिति वाच्यम् । प्रकाशात्मकान्तःकरणवृत्तिभिरेव तत् सिद्धेरिति मत्वा शङ्कते—यद्यपीति । जीवपदमहङ्कारात्मकान्तःकरणपरम् । नित्यचैतन्यस्यानङ्गीकारपक्षे जडाहङ्कारातिरिक्तजीवाभावात् वृत्तीनामन्तःकरणपरिणामतायाः "कामस्सङ्कल्पः" इत्यादिश्रुतिसिद्धत्वाच्चेति बोध्यम् । वृत्तीनां दीपादिवत् प्रकाशात्मकत्वेऽपि तासां जडत्वाद्देहद्वयावभासकत्वं न भवति । स्वप्रकाशनित्यचैतन्याभ्युपगमे तु तत्प्रतिबिम्बयुक्तानां तासां देहद्वयानुभवरूपत्वं सम्भवति । अतस्तादृशचैतन्यमुपेयमित्यभिप्रायेणाह—तथाऽपीति । किं च वृत्तीनामन्तरालदशासु देहद्वयस्यास्पष्टं भानम्, देहद्वयगोचरवृत्तीनां सद्भावकाले तु 'अहं कर्ता स्थूलोऽहम्' इत्यादिरूपेण स्पष्टं भानमित्यनुभवसिद्धम् । तत्रास्पष्टभानोपपत्तये वृत्तिज्ञानातिरिक्तं नित्यसाक्षिचैतन्यमुपेयमित्याशयेनाह—सर्वतः प्रसृतेनेति । व्याप्तेनेत्यर्थः । देहद्वयं कूटस्थचैतन्येन ईषत् सदा भास्यमानमेव वृत्तिज्ञानैस्स्फुटमवभास्यत इति सम्बन्धः । जीवचैतन्यरूपो यः प्रतिबिम्बः, तद्गर्भात्तद्युक्तादित्यर्थः । अनेन 'अन्तःकरणप्रतिबिम्बो जीवः, बिम्बचैतन्यरूपः कूटस्थस्साक्षी' इति जीवसाक्षिणोर्भेदो दर्शितः ।

भास्यमेव देहद्वयं जीवचैतन्यस्वरूपप्रतिबिम्बगर्भादन्तःकरणाद्विच्छिद्य विच्छिद्योद्गच्छद्भिर्वृत्तिज्ञानैर्भास्यते । अन्तरालकाले तु सह वृत्त्यभावैः कूटस्थचैतन्येनैव भास्यते । अत एवाहंकारादीनां सर्वदा प्रकाशसंसर्गात्संशयाद्यगोचरत्वम् । अन्य-

---

यथा अग्नितप्तायःपिण्डादुद्गच्छन्तो विस्फुलिङ्गास्साग्नय एवोद्गच्छन्ति, एवं चैतन्यप्रतिबिम्बोपेतादन्तःकरणादुत्पद्यमाना वृत्तयोऽपि तत्प्रतिबिम्बगर्भा एवोत्पद्यन्ते । अतस्तासां देहाद्यनुभवरूपत्वं सम्भवतीति सूचयितुमन्तःकरणस्य प्रतिबिम्बगर्भत्वमुक्तम् । जाग्रदवस्थायां देहद्वयस्य साक्षिचैतन्यमात्रादस्पष्टतया भानावसरं दर्शयितुं विच्छिद्यविच्छिद्येत्युक्तम् । तमेवावसरं स्पष्टमाह—अन्तरालकाले त्विति । तुशब्दस्य व्याख्यानमेवकारः । देहद्वयं वृत्त्यभावैस्सह अवभास्यते इति सम्बन्धः । वृत्त्यभावैरित्यस्य वृत्तीनां ध्वंसैरित्यर्थः । उपलक्षणं चैतत् । वृत्तीनामुत्पत्तिभिर्वृत्तिभेदैश्च सहेत्यर्थः ।

अयं भावः—नित्यचैतन्यानभ्युपगमे वृत्त्युत्पत्तिविनाशतद्भेदादेरपरोक्षतया भानं न स्यात् । स्वोत्पत्तिविनाशयोस्स्वाग्राह्यत्वासम्भवात् । वृत्तिगोचरापरोक्षवृत्तीनां निरसिष्यमाणतया तयोर्वृत्त्यन्तरग्राह्यत्वासम्भवाच्च । तस्मात् वृत्तिनाशादिसाक्षितयाऽपि नित्यचैतन्यमुपेयमिति । अत्रैव उपपत्त्यन्तरं दर्शयति—अत एवेति । नित्यचैतन्यरूपसाक्षिसद्भावादेवेत्यर्थः । अहङ्कारप्राणशरीरादीनां योग्यतद्धर्मसुखदुःखादीनां च सदाऽहङ्कारादिसत्ताकाले संशयादिनिवृत्तिलक्षणफलभाक्त्वं तावदनुभवसिद्धम् । न हि कदाचिदपि 'अहमासं न वा, अहं वर्ते न वा, अहं प्राणिमि न वा, अहं ब्राह्मणो न वा'इत्यादिप्रकारेणाहङ्कारादिसत्तासंशयः कस्यचिदप्यस्ति । तच्च तेषां सदा प्रकाशसंसर्गं विना न सम्भवति । घटादीनां प्रकाशसंसर्गदशायामेव संशयाद्यगोचरत्वदर्शनात् सदाप्रकाशसंसर्गित्वमहङ्कादीनां जन्यज्ञानपक्षे न सम्भवति, तेषामुत्पत्तिविनाशवत्त्वात् क्रमिकत्वात् प्रायेण बाह्यविषयगोचरत्वाच्च । तस्मादहङ्कारादीनां सदा संशयाद्यगोचरत्वनिर्वाहाय तेषां सदा साक्षिचैतन्यरूपप्रकाशसंसर्गो वाच्य इति भावः । साक्षिसद्भावे उपपत्त्यन्तरमाह—अन्यज्ञानेति । अहङ्कारग्रहणं धारान्तर्गतवृत्तीनामप्युपलक्षणम् । नित्यानुभवरूपसाक्ष्यनङ्गीकारे

ज्ञानधाराकालीनाहंकारस्य 'एतावन्तं कालमिदमहं पश्यन्नेवासम्' इत्यनुसन्धानं च । न च कूटस्थप्रकाशिते कथं जीवस्य व्यवहारस्मृत्यादिकमिति शङ्क्यम् । अन्योऽन्याध्यासेन जीवैकत्वापत्त्या कूटस्थस्य जीवान्तरङ्गत्वात् । न च जीवचैतन्यमेव साक्षी भवतु, किं कूटस्थेनेति वाच्यम् । लौकिकवैदिकव्यवहारक-

दिव्यमङ्गलश्रीकृष्णमूर्तिगोचरवृत्तिसन्ततिकालीनाहमर्थस्य तत्कालीनवृत्तीनां च तत्काले जन्यानुभवासम्भवेन संस्कारासम्भवादुत्तरत्रानुसन्धानं न स्यात् । न हि धाराकाले अहङ्कारगोचरो वा, प्रत्येकं वृत्तिगोचरो वा जन्यानुभवः सम्भवति, धाराविच्छेदप्रसङ्गात्, वृत्तिसन्ततेरिच्छाघटितसामग्रीकत्वेन तद्विच्छेदासम्भवाच्च । तस्मादन्यज्ञानधाराकालीनाहमर्थादिसाक्षितया नित्यानुभवो वाच्य इति भावः । अनुसन्धानं चेति । सङ्गच्छते इति शेषः । ननु साक्षिचैतन्येनानुभूताहमर्थतद्वृत्तीनां कथम् 'अहं पश्यन्नेवासम्'इति स्मरणं जीवस्य सम्भवति । अहमर्थभूतप्रतिबिम्बजीवापेक्षया बिम्बभूतस्य कूटस्थस्य चैतन्यात्मकसाक्षिणो भिन्नत्वात् । अन्यानुभूतेऽर्थे अन्यस्मरणायोगादिति शङ्कते—न च कूटस्थेति । स्वेन स्वतादात्म्यापन्नेन वाऽनुभूतेऽर्थे स्वस्य स्मरणं भवतीत्यङ्गीकारान्नातिप्रसङ्गः । न हि देवदत्तयज्ञदत्तजीवयोः परस्परं तादात्म्यमस्ति, येन देवदत्तानुभूतेऽर्थे यज्ञदत्तस्य स्मरणप्रसङ्ग इति दोषो भवेदित्याशयेन परिहरति—अन्योऽन्याध्यासेनेति । तादात्म्याध्यासेनेत्यर्थः । जीवस्य कूटस्थे कल्पितत्वस्य प्रागेव निरूपितत्वादिति भावः । न चैवमपि सर्वदेहेषु साक्षिण एकत्वाद्देवदत्तसाक्षिणाऽनुभूतदेवदत्ताहङ्कारादिषु यज्ञदत्तादेरप्यनुसन्धानप्रसङ्गः । यज्ञदत्तादेरपि देवदत्तसाक्षिण्येवाध्यस्ततया तदेकत्वापत्तेः सत्त्वादिति वाच्यम् । देहद्वयरूपावच्छेदकभेदेन तत्तज्जीवतादात्म्यापन्नसाक्षिणो भेदाभ्युपगमात् । एवमेवावच्छेदकभेदेन साक्षिभेदं ज्ञापयितुमेव स्वावच्छेदकस्येति विशेषणं पूर्वमेव दत्तमिति बोध्यम् । नन्वस्तु जीवकूटस्थनामकं चैतन्यद्वयम् । तथाऽपि जीव एव साक्षी किं न स्यादिति शङ्कते—न चेति । किं कूटस्थेनेति । किं कूटस्थस्य साक्षित्वेनेत्यर्थः । न तु कूटस्थस्यैवाक्षेपः । तस्य साधितत्वात् । उदासीनस्यैव लोके साक्षित्वस्य प्रसिद्धत्वात्, तदनुरोधेन श्रुत्यनुरोधेन च कूटस्थस्यैव साक्षित्वम्, न जीवस्येति परिहरति—लौकि-

र्तुस्तस्योदासीनद्रष्टृत्वासम्भवेन "साक्षी चेता केवलो निर्गुणश्च" इति श्रुत्युक्तसाक्षित्वायोगात् । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति कर्मफलभोक्तुर्जीवादुदासीनप्रकाशरूपस्य साक्षिणः पृथगाम्नानाच्चेति ॥

(वे०सू०मं०) उक्तो नाटकदीपेऽसौ नृत्यशालास्थदीपवत् ॥
नेशो जीवोऽप्यसौ तत्त्वदीपे ब्रह्मेति वर्णनात् ॥९३॥

नाटकदीपेऽपि नृत्यशालास्थदीपदृष्टान्तेन साक्षी जीवाद्विविच्य दर्शितः । तथाहि—

नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ॥
दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥

---

केति । साक्षिणो लक्षणमाह श्रुतिः—चेता केवल इति । चेता बोद्धा । केवलः अकर्ता उदासीन इति यावत् । 'ज्ञानादिगुणक आत्मा' इति वैशेषिकादिमतं श्रुतिः स्वयमेव निराकरोति—निर्गुणश्चेति । 'मध्यमपरिमाणसक्रिय आत्मा'इति दिगम्बरमतनिरासार्थश्चकारः । निष्क्रियश्चेत्यर्थः । साक्षिणो जीवाद् भिन्नत्वे श्रुतिमप्याह—तयोरन्य इति । जीवकूटस्थयोर्मध्ये कूटस्थादन्यो जीवः पिप्पलं कर्मफलं स्वादु यथा भवति तथा अत्ति भुङ्क्ते । शरीरस्याश्वत्थवृक्षत्वेन निरूपितत्वात् कर्मफलस्य पिप्पलत्वेन निरूपणमिति द्रष्टव्यम् । स्वाद्वत्तीति विशेषणं पुण्यफलाभिप्रायम् । जीवादन्यः कूटस्थः अनश्नन् अशनं कर्मफलभोगमकुर्वन्नभिचाकशीति अभि आभिमुख्येनापरोक्षतया चाकशीति बुद्ध्यादिसाक्षितया प्रकाशते इति यावत् । अत्रानश्नन्नित्यनेन भोक्तृत्वे निषिद्धे सति कर्तृत्वमपि निषिद्धं भवति । तथा चानश्नन्नभिचाकशीतिपदाभ्याम् उदासीनत्वे सति बोद्धृत्वरूपं साक्षित्वं प्रदर्शितमित्यर्थः ।

कूटस्थदीपे निरूपितस्साक्षी, अन्यत्रापि दृष्टान्तविशेषपूर्वकं सुषुप्तिसाधारणो निरूपित इत्याह—नाटकदीपेऽपीति । दृष्टान्तप्रतिपादकं तत्रत्यश्लोकं पठति—नृत्यशालास्थित इति । प्रभुं नृत्याभिमानिनम्, सभ्यान् तत्परिसरवर्तिनः । अविशेषेणेति । दीपो हि वृद्धिं प्राप्य प्रभुं प्रकाशयति, मध्यमावस्थां प्राप्य सभ्यान्, ततो निकृष्टावस्थां प्राप्य

तथा चिदाभासविशिष्टाहंकाररूपं जीवं विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वात् नृत्याभिमानिप्रभुतुल्यम्, तत्परिसरवर्तित्वेऽपि तद्राहित्यात् सभ्यपुरुषतुल्यान् विषयान्, नानाविधविकारवर्त्तित्वान्नर्तकीतुल्यां धियं च दीपयन् सुषुप्त्यादावहंकाराद्यभावेऽपि दीप्यमानः चिदाभासविशिष्टाहंकाररूपजी-

---

नर्तकीमिति प्रकाश्यतारतम्यानुसारेण वृद्ध्यादिविकारं प्राप्य न दीपयेत्, किं तु एकरूपेणैव स्थितस्सन् प्रकाशयेदित्यर्थः । इदं च विशेषणं दार्ष्टान्तिके निर्विकारस्य कूटस्थस्य साक्षित्वज्ञापनार्थमिति मन्तव्यम् । तदभावेऽपीति । प्रभुसभ्याद्यभावेऽपीत्यर्थः । अहङ्कारः प्रभुः, सभ्या विषयाः, नर्तकी मतिः, तालादिधारीण्यक्षाणि, दीपस्साक्ष्यवभासक इति दार्ष्टान्तिकसङ्ग्राहकं श्लोकं मनसि निधायाह—तथेति । जीवस्य नृत्याभिमानिप्रभुतुल्यत्वकल्पनाप्रयोजकं साम्यमाह—विषयेति । नृत्यसाकल्यवैकल्यप्रयुक्तहर्षादिमत्त्वं प्रभोरभिमानिपदेन सूचितम् । यथा सभ्याः प्रभुपरिसरवर्तिनः, तथा रूपादयो विषयाः जीवपरिसरवर्तिनः । तथा च विषयाणां सभ्यसाम्यात् सभ्यत्वकल्पनं युक्तमित्याशयेनाह—तत्परिसरवर्तित्वेऽपीति । तत्पदं जीवपरम् । ननु जीवपरिसरवर्तिनामपि विषयाणां जीववत् प्रभुतुल्यत्वमेव कुतो न कल्प्यत इत्याशङ्क्य तत्प्रयोजकाभावादित्याशयेनाह—तद्राहित्यादिति । प्रभुतुल्यत्वकल्पकहर्षविषादादेरभावादित्यर्थः । यद्वा विषयाणां सभ्यपुरुषसाम्यमाह—तद्राहित्यादिति । बुद्धेर्नर्तकीसाम्यमाह—नानाविधेति । यथा तालादिधारिणः पुरुषाः नर्तकीमनुवर्तन्ते, एवमिन्द्रियाण्यपि धियमनुवर्तन्ते इत्यनेन साम्येन इन्द्रियाणां तालादिधारिपुरुषसाम्यं श्लोकोपात्तं 'धियं च' इत्यत्र चशब्दार्थः । जीवादीनामवभासकस्साक्षी दीपतुल्य इति चरमपादार्थः । तं संगृह्णाति—दीपयन्नित्यादिना । प्रकाशयन्नित्यर्थः । दीपयन्नित्यतः प्राक् जाग्रदादाविति शेषः । नाटकदीपे निरूपितस्साक्षी कूटस्थदीपोक्तकूटस्थ एव, नान्य इत्याशयेनाह—चिदाभासविशिष्टेति । कूटस्थदीपे हि जीवभ्रमाधिष्ठानभूतकूटस्थचैतन्यं जीवादेरवभासकमित्युक्तम् । नाटकदीपे च चिदाभासविशिष्टाहङ्कारं जीवं कल्पयित्वा तदव-

वभ्रमाधिष्ठानकूटस्थचैतन्यात्मा साक्षीति । एवं जीवाद्विवेचितोऽयं साक्षी न ब्रह्मकोटिरपि, किं तु, अस्पृष्टजीवेश्वरविभागं चैतन्यमित्युक्तं कूटस्थदीपे ॥

तत्त्वप्रदीपिकायामपि मायाशबलिते सगुणे परमेश्वरे "केवलो निर्गुणः" इति विशेषणानुपपत्तेः सर्वप्रत्यग्भूतं विशुद्धं ब्रह्म जीवाभेदेन साक्षीति प्रतिपद्यते इत्युदितम्(१) ॥

---

भासकं चैतन्यं साक्षीत्युक्तम् । ततश्च तत्रोक्तकूटस्थ एवात्र साक्षीत्यवगम्यते, अन्तःकरणप्रतिबिम्बरूपजीवाधिष्ठानत्वतदवभासकत्वादिनिर्देशसाम्यात् । तथा च नाटकदीपेऽपि नृत्यशालास्थदीपदृष्टान्तेन साक्षी जीवाद्विविच्य दर्शित इति पूर्वग्रन्थे ।

कूटस्थदीपे यस्साक्षी जीवाद् भेदेन दर्शितः ।
(२)सैव नाटकदीपेऽपि ततो भेदेन दर्शितः ॥

इति विवक्षितार्थस्सिद्ध इति भावः । साक्षी यथा जीवकोटिर्न भवति, जीवस्य उदासीनत्वाभावात्, तथा ईश्वरकोटिरपि न भवति । जगत्सृष्टिनियमनादिव्यापारकर्तुस्तस्य उदासीनत्वाभावात् । ईश्वरस्य परोक्षतया जीवं प्रति बुद्ध्यादिसाक्षितया नित्यापरोक्षसाक्षिरूपत्वासम्भवाच्चेत्याशयेनाह— एवं जीवादिति । ब्रह्मपदमीश्वरपरम्, न तूदासीनचैतन्यपरम् । कस्तर्हि साक्षीति पृच्छति—किं त्विति । उत्तरम्— अस्पृष्टेति । उक्तमिति ।

इति शैवपुराणेषु कूटस्थः प्रविवेचितः ।
जीवेशत्वादिरहितः केवलस्स्वप्रभश्शिवः ॥ ५९ ॥

इति श्लोकेनेति शेषः । जगद्रूपत्वमादिपदार्थः । केवल उदासीनः, शिवश्शुद्धः । परमात्मेत्यर्थः ।

ईश्वरत्वादिधर्मरहितश्चिदात्मैवान्यत्रापि साक्षित्वेनोक्त इति संवादार्थमाह—तत्त्वप्रदीपिकायामपीति । सर्वेषां जीवानामन्तःकरणगत-

---

(१) विदितमिति पाठः ।

(२) सैवेत्यत्र सः एवेतिच्छेदः । "सोऽचि लोपे चेत्पादपूरणम्" इति सुलोपे वृद्धौ तद्रूपसिद्धेः ।

(वे०सू०मं०) ईशस्य रूपभेदोऽसौ कारणत्वादिवर्जितः ॥
जीवान्तरङ्गः कौमुद्यां प्राज्ञाख्यः परिकीर्तितः॥९४॥

कौमुद्यां तु—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥

---

चित्प्रतिविम्बात्मकानां प्रत्यग्भूतमधिष्ठानतया आन्तरं स्वरूपभूतं विशुद्धं जीवत्वेश्वरत्वजगद्रूपत्वरहितं ब्रह्म जीवाभेदेन तत्तज्जीवाधिष्ठानत्वादेव तत्तज्जीवतादात्म्यापत्त्या प्रतिशरीरं प्राप्तभेदं सत् साक्षीति प्रतिपद्यते । इतिशब्दः प्रकारवाची सन् साक्षित्वमाह । तथा च साक्षित्वं प्रतिपद्यते । परमेश्वरस्यैव कश्चिद्रूपभेदः साक्षी नाम । कुतः ? देवत्वादिश्रुतेः । न त्वीश्वरविलक्षणस्साक्षी । देवत्वादिश्रुतिविरोधादित्येवकारार्थः । देवत्वादीत्यादिपदेन सर्वभूतान्तरात्मत्वादिधर्मा गृह्यन्ते ।

एतदुक्तं भवति—देवत्वादयो धर्माः श्रुतिस्मृत्यादिषु परमेश्वरधर्मत्वेन प्रसिद्धा इति नान्यस्य साक्षित्वम् । देवत्वादिश्रवणविरोधात् । यद्यपि देवत्वं हिरण्यगर्भेन्द्रादिजीवसाधारणम्, तथापीतरधर्माणामीश्वरासाधारणत्वाद्देवत्वमपीश्वरगतमेव ग्राह्यमिति भावः । परमेश्वरस्य शिवविष्ण्वात्मना प्राप्तं भेदं निराचष्टे—एक इति । विम्बभूतस्य परमेश्वरस्य मूर्तिभेदेन शिवविष्णुसंज्ञा, न त्वीश्वरभेदोऽस्तीत्यर्थः । तथा च श्रुत्यन्तरम्—'शाश्वतं शिवमच्युतम्' इति । अच्युतपदस्य विष्णौ रूढत्वात् ।

आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ।

इत्यादिस्मृतयोऽप्यत्र शतशो द्रष्टव्याः । श्रुतौ सर्वभूतेष्वित्यनन्तरं वर्तते इति शेषः । तथा च स्मृतिः—

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ इति ।

तर्हि किमिति सर्वेषां नोपलभ्यते, तत्राह—गूढ इति । तथा च स्मृतिः—

नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ॥ इति ।

श्रीकृष्णोऽत्राहंशब्दार्थः । प्रकाशः प्रकाशमान इत्यर्थः । परमात्मनो भूतेषु अवस्थानाभ्युपगमेऽधिकरणभेदात्तस्यापि भिन्नत्वशङ्का स्यात् । तां वारयति—व्यापीति । व्यापित्वेऽपि नभोवत् वस्तुतो जीवभिन्नत्वं वारयति—सर्वभूतान्तरात्मेति । सर्वभू-

कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥
इति देवत्वादिश्रुतेः परमेश्वरस्यैव रूपभेदः कश्चिज्जीवप्रवृत्तिनिवृत्त्योरनुमन्ता स्वयमुदासीनः साक्षी नाम । स च कारणत्वादिधर्मानास्पदत्वाद् अपरोक्षो जीवगतमज्ञानाद्यवभास-

---

तानां ब्रह्मादिस्तम्बपर्यन्तसङ्घातानामन्तरवस्थित आत्मा सर्वजीवस्वरूप इति यावत् । परमेश्वरस्य कर्मकर्तृजीवाभिन्नत्वे तस्यापि तत्कर्तृत्वं स्यादिति, नेत्याह—कर्माध्यक्ष इति । जीवकर्तृककर्मणां साक्षी, न स्वयं तत्कर्तेत्यर्थः । जीवपरमात्मनोरौपाधिकभेदेन धर्मव्यवस्था सम्भवतीति भावः । सर्वभूतेष्वित्यादिना परमात्मापेक्षया भेदेन भूतानां निर्देशात्तस्य सद्वितीयत्वमाशङ्क्याह—सर्वभूताधिवास इति । अधि उपरि वसन्त्यस्मिन् भूतानीत्यधिवासः अधिष्ठानम् । सर्वेषां भूतानामधिवासस्सर्वभूताधिवासः । न चाधिष्ठानातिरेकेणारोपितानां पृथक्सत्त्वमस्तीति नाद्वितीयत्वविरोध इति भावः । न केवलं जीवगतकर्मणामेव साक्षी, किं तु जीवानामपीत्याशयेनाह—साक्षीति । अवशिष्टा श्रुतिः प्रागेव व्याख्याता । अनुमन्ता नैरन्तर्येण बोद्धा । स्वयमिति । जीवे व्यापारवत्यपि स्वयं तद्रहितः । रूपविशेषे साक्षिलक्षणमुक्त्वा साक्षिपदं तत्र वर्तयति—साक्षी नामेति । नामपदं श्रुतिप्रसिद्धिद्योतकम् । ननु साक्षी जीवस्यापरोक्षः, तस्याज्ञानान्तःकरणाद्यनुभवरूपत्वाङ्गीकारात् । ईश्वरस्तु नित्यं परोक्षः । कारणत्वसर्वज्ञत्वसर्वनियन्तृत्वादेर्जीवं प्रत्ययोग्यत्वेन तद्विशिष्टबिम्बचैतन्यरूपेश्वरस्यायोग्यत्वादिति चेत्, न । तस्य रूपविशेषत्वाङ्गीकारेणापरोक्षत्वोपपत्तेरित्याशयेनाह—स चेति । न चेश्वरस्यैतादृशरूपभेदे मानाभावश्शङ्कनीयः । "एको देवः" इति मन्त्रस्य "अनश्नन्नन्योऽभिचाकशीति" इति मन्त्रगम्यस्य च उदासीने परमेश्वररूपभेदे मानत्वात् । कारणत्वादिधर्मास्पदे चेश्वरे सृष्टिवाक्यानां सर्वेषामेव मानत्वादिति भावः । स च जीवस्यापरोक्षोऽन्तरङ्गश्चेति सम्बन्धः । उभयत्र हेतुमाह—जीवगतमज्ञानाद्यवभासयन्निति । अन्तःकरणतद्धर्मसुखदुःखादिसङ्ग्रहार्थमादिपदम् । साक्षिचैतन्यमज्ञानाद्यवभासनद्वारा 'अहमज्ञः, अहं सुखी, दुःखी' इत्यादिव्यवहारनिर्वाहकं भवति । अतस्साक्षी जीवस्यान्तरङ्गः । लोके राजादिव्यवहारनिर्वाहकपुरुषे राजान्तरङ्गत्वस्य प्रसि-

येश्च जीवस्यान्तरङ्गः। सुषुप्त्यादौ च कार्यकारणोपरमे जीवगताज्ञानमात्रस्य व्यञ्जकः प्राज्ञशब्दितः ।

"तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति"इति

---

द्धत्वादिति भावः । ननु सुषुप्त्यादौ साक्ष्यस्यान्तःकरणतद्वृत्त्यादेरुपरतत्वात्तदा चिदात्मनस्साक्षित्वं न स्यात्। तथा च—

तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदा शिवः ।

इत्यादौ सुषुप्त्यादावपि तस्य साक्षित्वव्यवहारविरोध इत्यत आह—सुषुप्त्यादौ चेति। तेभ्य इति। भोक्त्रादिभ्य इत्यर्थः। तदाऽपि मूलाज्ञानस्य साक्ष्यस्य सत्त्वान्न विरोध इति भावः। परमेश्वरस्यैव रूपविशेषात्मके साक्षिणि सुषुप्त्युत्क्रान्तिविषयकवाक्यद्वयमपि प्रमाणमित्याशयेनाह—प्राज्ञशब्दित इति। सुषुप्तिविषयकवाक्ये उत्क्रान्तिविषयकवाक्ये च प्राज्ञशब्देन यथोक्तसाक्षिण एव प्रतिपादितत्वादिति भावः। ननु'सुषुप्त्युत्क्रान्त्योर्भेदेन'(उ०मी० अ० १ पा० ३ अधि० १४ सू० ४२)इत्यधिकरणे सुषुप्त्यादिविषयकश्रुतिगतप्राज्ञशब्दस्य सर्वेश्वरत्वभूताधिपतित्वादिविशिष्टपरमात्मप्रतिपादकताया उक्तत्वात् कथं प्राज्ञशब्दस्य उदासीनेश्वरपरत्वम्। अत आह—तद्यथेति। दृष्टान्तवाक्ये बाह्यं रथ्यादिवृत्तान्तम्, आन्तरं गृहकृत्यम्, पुरुषो जीवः, प्राज्ञः परमात्मा, तेन सम्परिष्वक्तः सुषुप्तावुपाधिलयादेकीभावं प्राप्तः, बाह्यं जाग्रत्प्रपञ्चम्, आन्तरं स्वप्नप्रपञ्चम्, किञ्चन किञ्चिदपि। उत्क्रान्तिवाक्यमुदाहरति—प्राज्ञेनात्मनाऽन्वारूढ इति । अन्वारूढः अधिष्ठितः उत्सर्जन् वेदनावशाच्छब्दं कुर्वन् याति शरीरात् बहिर्निर्गच्छति उत्क्रामतीत्यर्थः। अवस्थयोरिति सप्तमी। प्रतिपादित इत्यनन्तरं प्राज्ञ इति शेषः। तथा च वाक्याभ्यां जीवभेदेन प्रतिपादितः प्राज्ञः परमेश्वर इति निर्णयोऽपि साक्षिपर इत्युपवर्णितं कौमुद्यामिति सम्बन्धः।

बृहदारण्यकषष्ठाध्यायो जीवानुवादमात्ररूपः, न तदतिरिक्तेश्वरपर इति पूर्वपक्षे प्राप्ते सिद्धान्तः—'तद्यथा प्रियया' इत्यादिवाक्ययोस्सुषुप्त्यवस्थायामुत्क्रान्त्यवस्थायां च पुरुषशब्दितजीवापेक्षया

श्रुतिवाक्याभ्यां सुषुप्त्युत्क्रान्त्यवस्थयोर्जीवभेदेन प्रतिपादितः परमेश्वर इति सुषुप्त्युत्क्रान्त्यधिकरण–(उ० मी० अ० १ पा० ३ अधि० १४ सू० ४२ )निर्णयोऽपि साक्षिपर इत्युपवर्णितम् ॥

(वे०सू०मं०) शुक्तीदमंशवदसौ तत्त्वशुद्धौ च वर्णितः ॥

तत्त्वशुद्धावपि यथा 'इदं रजतम्' इति भ्रमस्थले वस्तुतः शुक्तिकोट्यन्तर्गतोऽपीदमंशः प्रतिभासतो रजतकोटिः, तथा ब्रह्मकोटिरेव साक्षी प्रतिभासतो जीवकोटिरिति जीवस्य सुखादिव्यवहारे तस्योपयोग इत्युक्त्वाऽयमेव पक्षः समर्थितः ॥

---

भेदेन परमेश्वरस्य तृतीयान्तप्राज्ञशब्देन व्यपदेशात् न षष्ठाध्यायो जीवानुवादमात्ररूपः, किं तु तदतिरिक्तेश्वरप्रतिपादनपरः । तत्प्रतिपादनं च लोकसिद्धजीवानुवादेन तस्येश्वराभेदप्रतिपादनार्थम् । तथा च वाक्यशेषो दृश्यते—"स वा एष महानज आत्मा योऽयं विज्ञानमयः" इति । यो विज्ञानमयो जीवः, स एषः महानात्मा पूर्णः परमात्मेत्यर्थ इति तदधिकरणनिर्णयः । नन्वस्य निर्णयस्य उदासीनेश्वररूपसाक्षिपरत्वमनुपपन्नम् । "स वा एष महानज आत्मा"इत्येतदनन्तरम् "एष सर्वेश्वर एष भूताधिपतिः"इत्यादिना तस्य सर्वेश्वरत्वादिगुणजातप्रतिपादनादिति चेत्, न । ज्ञेयब्रह्मप्रकरणगतसर्वेश्वरत्वादिवचनस्य स्तुतिमात्रपरत्वादिति भावः ॥

कौमुदीकारमतस्य संवादार्थं मतान्तरमुपन्यस्यति–तत्त्वशुद्धावपीति । 'इदं रजतम्'इतिभ्रमस्थले रजताभेदेन प्रतिभासमानोऽपीदमंशः रजतान्तर्भूतो न भवति । रजतवत् तस्य बाधाभावात् । नापि शुक्तावेवान्तर्भवति । तस्य शुक्त्यंशवदज्ञातत्वप्रसङ्गात् । अतो यथा इदमंशस्य वस्तुतश्शुक्तिरूपत्वम्, प्रतिभासतो रजताभिन्नत्वम्, एवं साक्षिणोऽपि वस्तुगत्या ईश्वररूपाभेदत्वं कल्पिततत्तज्जीवाधिष्ठानरूपस्य साक्षिणस्सुखाद्यनुभवितुः 'अहं सुखमनुभवामि' इत्यादिप्रतिभासतस्तत्तज्जीवाभिन्नत्वम् । अतो जीवस्य सुखादिव्यवहारे तस्य सुखाद्यनुभवितुः जीवैकत्वमापन्नस्योपयोग इत्यर्थः । अयमेवेति । साक्षिणो वस्तुतोऽपि जीवान्तर्भावे तस्य ब्रह्मकोटित्वोक्तिविरोधात्

(वे० सू० मं०) अज्ञानोपहितः कैश्चित्—

केचित्तु—अविद्योपाधिको जीव एव साक्षाद् द्रष्टृत्वात्साक्षी। लोकेऽपि ह्यकर्तृत्वे सति द्रष्टृत्वं साक्षित्वं प्रसिद्धम्। तच्चासङ्गोदासीनप्रकाशरूपे जीवे एव साक्षात् सम्भवति जीवस्यान्तःकरणतादात्म्यापत्त्या कर्तृत्वाद्यारोपभाक्त्वेऽपि स्वयमुदासीनत्वात्। "एको देवः" इति मन्त्रस्तु ब्रह्मणो जीवभावाभिप्रायेण साक्षित्व-

---

तस्येश्वररूपाभेदस्त्वं तत्त्वशुद्धिकाराभिमतमिति गम्यते इति भावः॥

जीवसाक्षिणोर्भेदपक्षानुपन्यस्य तयोरभेदपक्षावुपन्यस्यति—केचिदित्यादिना। जीव एव साक्षीति सम्बन्धः। नत्वीश्वरस्य रूपभेदस्साक्षी, तत्र मानाभावादित्येवकाराभिप्रायः। जीवस्य साक्षित्वाभ्युपगमे हेतुमाह—साक्षाद् द्रष्टृत्वादिति। तस्यौदासीन्यं सूचयति—अविद्योपाधिक इति। एतदेव प्रपञ्चयितुम् 'इदमेव साक्षिलक्षणम्, नान्यद्'इति पूर्वोक्तं स्मारयति–लोके ऽपि हीति। पूर्वं सङ्क्षेपेणोक्तं जीवस्यैव साक्षित्वं प्रपञ्चयति–तच्चेति। साक्षादिति। अविद्याप्रतिबिम्बरूपजीवस्य स्वतः सम्भवतीत्यर्थः। अनेन क्लृप्तस्य जीवस्यैव साक्षित्वसम्भवे तदतिरिक्तस्साक्षी न कल्पनीयः, गौरवादिति सूचितम्। ननु लौकिकवैदिकव्यवहारकर्तुरौदासीन्यमसिद्धमित्युक्तमित्याशङ्क्य बुद्धितादात्म्यप्रयुक्तमेव कर्तृत्वादिकम्, स्वतस्तु उदासीनत्वमित्युपगमात्तस्य साक्षित्वं सम्भवतीत्याह—जीवस्यान्तःकरणेति। नन्वीश्वरस्य साक्षित्वानुपगमे मन्त्रविरोध इत्यत आह–एको देव इति मन्त्रस्त्विति। साक्षी तावज्जीवस्यापरोक्ष इत्युक्तम्। ईश्वरस्य तूदासीनस्याप्यपरोक्षत्वं न सम्भवति। बिम्बरूपस्येश्वरस्य जीवादौपाधिकभेदसत्त्वेन जीवं प्रति जीवान्तरचैतन्यस्येवापरोक्षत्वायोगात्। अतो जीवभावापन्नब्रह्माभिप्रायो मन्त्रगतसाक्षिप्रतिपादकभाग इति भावः। ईश्वररूपभेदस्यापरोक्षत्वानुपपत्तिरूपहेतुर्मन्त्रस्त्विति तुशब्देनोक्त इति ध्येयम्। ननु गुहाधिकरणे यथा "गुहां प्रविष्टौ" इति मन्त्रो जीवेश्वरोभयपरः, तथा "द्वा सुपर्णा" इति मन्त्रोऽपि जीवेश्वरोभयपर इत्युक्तं भाष्ये। तथा च "द्वा सुपर्णा"इति मन्त्रे "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति वाक्यं जीवविषयम्। "अनश्नन्नन्योऽभिचाकशीति" इति वाक्यं

प्रतिपादकः । "द्वा सुपर्णा" इति मन्त्रः गुहाधिकरणन्यायेन (उ० मी० अ० १ पा० २ अधि० ३ सू० ११) जीवेश्वरोभयपरः, गुहाधिकरणभाष्योदाहृतपैङ्गिरहस्यब्राह्मणव्याख्यातेन प्रकारेण जीवान्तःकरणोभयपरो वेति न कश्चिद्विरोध इत्याहुः ॥

---

परमेश्वरविषयमिति पर्यवस्यति । ततश्च जीवस्य साक्षित्वमिति पक्षे ईश्वरस्य साक्षित्वप्रतिपादकेन "अनश्नन्नन्यः" इति मन्त्रभागेन विरोध इत्याशङ्क्याह—द्वा सुपर्णेति मन्त्र इति । यदा मन्त्रः जीवेश्वरोभयपरः, तदाऽपि न विरोधः कश्चित् । "एको देवः" इति मन्त्रवत् "द्वा सुपर्णा" इति मन्त्रस्यापि जीवभावापन्नपरमात्मपरत्वाभ्युपगमादित्यर्थः । ननु गुहाधिकरणभाष्ये पैङ्गिरहस्यब्राह्मणमुदाहृतम् । तच्चेदं ब्राह्मणम्—"तयोरन्यः पिप्पलं स्वाद्वत्ति इति सत्त्वम्, अनश्नन्नन्योऽभिचाकशीति इत्यनश्नन्नन्योऽभिपश्यति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ" इति । अनेन ब्राह्मणेनादनवाक्यमन्तःकरणविषयम्, अनशनवाक्यं क्षेत्रज्ञविषयमिति व्याख्यातम् । न च ब्राह्मणेनैव सत्त्वक्षेत्रज्ञपरत्वेन मन्त्रे व्याख्यायमाने कथं भाष्यकारैरस्य मन्त्रस्य जीवेश्वरपरत्वमुक्तमिति वाच्यम् । तदुक्तेः क्त्वाचिन्तामात्रत्वेन(१) विरोधाभावात् । तथा चान्तःकरणप्रतिविम्बरूपो जीवो यदि पैङ्गिब्राह्मणाभिमतः क्षेत्रज्ञः स्यात्, तदा तस्यैव "अनश्नन्" इति वाक्योक्तं साक्षित्वं स्यात्, नाविद्याप्रतिविम्बस्य । तथा चाविद्याप्रतिविम्बरूपस्य ब्रह्मस्वभावस्य जीवस्य साक्षित्वपक्षः पैङ्गिब्राह्मणनिर्णीतार्थकद्वासुपर्णेतिमन्त्रभागविरुद्धः प्रसज्येतेत्याशङ्क्याह–गुहाधिकरणभाष्योदाहृतेति । न कश्चिद्विरोध इति । पैङ्गिब्राह्मणाभिमेतः क्षेत्रज्ञो नान्तःकरणगतचैतन्यप्रतिविम्बरूपो जीवः । तस्य कर्तृभोक्तृस्वभावत्वेन "अनश्नन्" इति वाक्योक्तसाक्षित्वासम्भवात् । किं त्वसङ्गोदासीनप्रकाशरूपः अविद्याप्रतिविम्बरूपजीव एव ब्राह्मणाभिप्रेतः क्षेत्रज्ञः । तस्यानशनवाक्योक्तसाक्षित्वसम्भवस्योपपादितत्वात् । अतोऽविद्याप्रतिविम्बरूपजीवस्य साक्षित्वपक्षे न पैङ्गिरहस्यब्राह्मणानुरोधिमन्त्रविरोध इत्यर्थः ॥

---

(१) अभ्युपगमवादत्वेनेत्यर्थः ।

(वे०सू०मं०) लिङ्गैरुपहितः परैः ॥ ९५ ॥

अन्ये तु—सत्यं जीव एव साक्षी, न तु सर्वगतेनाविद्योपहितेन रूपेण । पुरुषान्तरान्तःकरणादीनामपि पुरुषान्तरं प्रति स्वान्तःकरणभासकसाक्षिसंसर्गाविशेषेण प्रत्यक्षत्वापत्तेः । न चान्तःकरणभेदेन प्रमातृभेदात्तदनापत्तिः । साक्षिभास्येऽन्तःकरणादौ सर्वत्र साक्ष्यभेदे सति प्रमातृभेदस्याप्रयोजकत्वात् । तस्मादन्तःकरणोपधानेन जीवः साक्षी । तथा च प्रतिपुरुषं साक्षिभे-

---

अविद्यायां चैतन्यप्रतिबिम्बरूपजीवस्यैव साक्षित्वमुपेत्य तत्र किञ्चिद्विशेषं वक्तुं मतान्तरमवतारयति—अन्ये त्विति । न त्वविद्यायां चिद्बिम्बभूतेश्वरस्साक्षी । तस्यापरोक्षत्वानुपपत्तेरित्येवकाराभिप्रायः । रूपेणेति । साक्षीत्यनुषङ्गः । सर्वशरीरसाधारणाविद्योपाधिकस्य साधारणरूपेण साक्षित्वाभावे हेतुमाह—पुरुषान्तरेति । यज्ञदत्तान्तःकरणतद्वृत्तीनामित्यर्थः । पुरुषान्तरं प्रतीति । देवदत्तं प्रतीत्यर्थः । स्वेति । स्वस्य देवदत्तस्यान्तःकरणभासको यस्साक्षी, तेन साक्षिणा सह देवदत्तान्तःकरणस्येव यज्ञदत्तान्तःकरणादीनामपि संसर्गाविशेषाद्देवदत्तस्य यथा स्वान्तःकरणम् प्रत्यक्षं, तथा यज्ञदत्तान्तःकरणतद्वृत्तयोऽपि देवदत्तस्य प्रत्यक्षाः स्युरित्यर्थः । अत्र पुरुषान्तरं प्रति पुरुषान्तरान्तःकरणादीनामपि प्रत्यक्षत्वापत्तेरिति सम्बन्धः । तत्र हेतुः स्वान्तःकरणेत्यादिरिति विभागः । सर्वशरीरेषु साक्षिण एकत्वेऽपि प्रतिशरीरं प्रमातृभेदान्नोक्तदोष इत्याशङ्क्ते—नचेति । देवदत्तं प्रति तदन्तःकरणादेः प्रत्यक्षत्वे हि देवदत्तसाक्षिसंसर्गः प्रयोजकः । तथा च यज्ञदत्तान्तःकरणादीनामपि देवदत्तं प्रत्यपरोक्षत्वप्रयोजकस्य देवदत्तसाक्षिसंसर्गस्याविशेषेण तं प्रत्यपरोक्षत्वापादनात्मको दोषः प्रत्यक्षत्वप्रयोजकसाक्षिसंसर्गभेदेनैव परिहर्तव्यः, नाप्रयोजकप्रमातृभेदेनेति दूषयति—साक्षिभास्य इति । साक्ष्यभेदे इति । साक्षिण एकत्वे सतीत्यर्थः । अप्रयोजकत्वादिति । देवदत्तं प्रति तदीयान्तःकरणादिकमेव प्रत्यक्षम्, नान्यदीयान्तःकरणादिकमिति व्यवस्थायामिति शेषः । तस्मादिति । अविद्योपाधिकजीवस्य साधारणरूपेण साक्षित्वासम्भवादित्यर्थः । तथा चेति । साक्षिभेदप्रयोजकोपाधिभे-

दात् पुरुषान्तरान्तःकरणादेः पुरुषान्तरसाक्ष्यसंसर्गाद्वा तदयोग्यत्वाद्वा अप्रकाश उपपद्यते । सुषुप्तावपि सूक्ष्मरूपेणान्तःकरणसद्भावात् तदुपहितः साक्षी तदाऽप्यस्त्येव । न चान्तःकरणोपहितस्य प्रमातृत्वेन न तस्य साक्षित्वं, सुषुप्तौ प्रमात्रभावेऽपि साक्षिसत्त्वेन तयोर्भेदश्चावश्यं वक्तव्य इति वाच्यम् ।

---

दविवक्षायां सत्यामित्यर्थः । तदयोग्यत्वाद्वेति । पुरुषान्तरं प्रत्ययोग्यत्वकल्पनाद्वा प्रत्यक्षत्वाभाव उपपद्यत इत्यर्थः । नन्वविद्याप्रतिबिम्बरूपजीवस्य अविद्योपाधिकत्वेनैव रूपेण साक्षित्वे सति तस्य सुषुप्तिसाधारण्यं सम्भवति, प्रतिशरीरं साक्षिभेदसिद्ध्यर्थं तस्यान्तःकरणोपहितत्वेन रूपेण साक्षित्वे तु सुषुप्तिसाधारण्यं तस्य न सम्भवति, सुषुप्तावन्तःकरणलयश्रवणादित्याशङ्क्याह—सुषुप्तावपीति । शङ्कते—न चान्तःकरणोपहितस्येति । अविद्याप्रतिविम्बरूपजीवस्येति शेषः । न तस्येति । अन्तःकरणोपहितजीवस्य साक्षित्वं न सम्भवति । तस्य प्रमातृत्वात् । अन्यथा प्रमातुरेव साक्षित्वापत्त्या साक्षिप्रमात्रोर्भेदो न स्यादिति भावः । इष्टापत्तिमाशङ्क्याह–सुषुप्ताविति । प्रमात्रभावेऽपीति । "अथास्मिन् प्राण एवैकधा भवति"इति श्रुतौ सुषुप्तिकाले प्राणशब्दिते परमात्मनि एकीभावलक्षणस्य प्रमातृलयस्य श्रवणादिति भावः । साक्षिसत्त्वेनेति । सुषुप्तिकाले साक्षिणस्सत्त्वमवश्यं वाच्यम् । तत्काले तत्सत्त्वस्य "त्रिषु धामसु" इत्यादिबहुश्रुतिसिद्धत्वात् । धामसु अवस्थास्वित्यर्थः । तत्काले साक्षिणाऽनुभूतानामज्ञानसुखंसुषुप्तीनामुत्थितस्य 'न किं चिदवेदिषं सुखमस्वाप्सम्' इति स्मरणदर्शनाच्च । न च 'अहमस्वाप्सम्' इति स्वापादिवदहमर्थस्य प्रमातुरपि सुषुप्तिकालीनत्वेन स्मरणदर्शनात् तस्यापि तदा सत्त्वं वाच्यमेवेति वाच्यम् । सुषुप्तौ प्रमातृलयप्रतिपादकबहुश्रुतिविरोधेन 'अहमस्वाप्सम्'इत्यादिस्मरणस्याहमर्थांशे अनुभवरूपत्वकल्पनात् न प्रमातुस्तदा सत्त्वमावश्यकम् । तथा च सुषुप्तिकाले सदसतोस्साक्षिप्रमात्रोरभेदायोगात् प्रमातुस्सकाशात् साक्षी भिन्न एव वाच्य इत्यर्थः । प्रमातृसाक्षिणोरभेदपक्षे प्रमातुरुदासीनत्वाभावेन साक्षित्वासम्भवरूपदोषसङ्ग्रहार्थश्चकार इति बोध्यम् ।

विशेषणोपाध्योर्भेदस्य सिद्धान्तसम्मतत्वेनान्तःकरणविशिष्टः प्रमाता, तदुपहितः साक्षीति भेदोपपत्तेरित्याहुः ॥ १४ ॥

---

न च वाच्यमित्यत्र हेतुमाह—अन्तःकरणविशिष्ट इति । अन्तःकरणस्याविद्योपाधिके जीवे विशेषणत्वेन प्रमातृत्वप्रयोजकत्वम्, उपाधित्वेन साक्षित्वप्रयोजकत्वम् । तथा च विशिष्टोपहितयोः प्रमातृसाक्षिणोर्भेदः, विशिष्टस्य प्रमातुः कर्तृभोक्तृस्वभावत्वेऽपि उपहितस्योदासीनत्वात् साक्षित्वं च सम्भवतीत्यर्थः । ननु विशेषणत्वस्य उपाधित्वस्य च भेदे सति एकस्याप्यन्तःकरणस्य विशेषणत्वादिरूपेण भेदं कल्पयित्वा तद्विशिष्टस्य प्रमातृत्वं तदुपहितस्य साक्षित्वमिति व्यवस्था सिध्यति । तयोर्भेद एव कथमित्यत आह—विशेषणोपाध्योरिति । कार्यान्वयित्वे सति व्यावर्तकत्वं विशेषणत्वम् । यथा 'नीलोत्पलमानय'इत्यादौ नैल्यस्य । तस्य रक्तोत्पलादिव्यावर्तकत्वादुत्पलद्वारा आनयनरूपकार्यान्वयित्वाच्च । लक्षणे कार्यपदं विधेयपरम् । तथा च 'यत् काकवत्, तद् देवदत्तगृहम्' इत्यादौ विधेयस्य देवदत्तगृहत्वस्य कार्यस्य उपलक्षणे काके नास्त्यन्वयः, गृहान्तरव्यावर्तकत्वं त्वस्तीति तत्रातिव्याप्तिवारणाय सत्यन्तम् । कार्यान्वयिनि विशेष्ये उत्पलादावतिव्याप्तिवारणाय विशेष्यदलम् । कार्यानन्वयित्वे सति व्यावर्तकत्वे सति कार्यान्वयकाले विद्यमानत्वमुपाधित्वम् । यथा 'लोहितं स्फटिकमानय' इत्यादौ स्फटिकसन्निहितस्य जपाकुसुमस्य उपाधित्वम् । तस्यानयनलक्षणकार्यान्वयाभावात् स्फटिकान्तरव्यावर्तकत्वादानयनान्वयकाले विद्यमानत्वाच्च । तत्र प्रथमसत्यन्तं विशेषणे नैल्यादावतिव्याप्तिवारणाय । न च विशेषणत्वेनाभिमतनैल्यादिकमप्यत्र लक्ष्यमेवेति वाच्यम् । जपाकुसुमादावुपाधित्वव्यवहारवत् नैल्यादौ तथाव्यवहाराभावात्, जपाकुसुमादौ स्फटिकादिविशेषणत्वव्यवहाराभावाच्च । तथा च विशेषणोपाध्योर्भेदावश्यंभावे सति विशेषणत्वाभिमतनैल्यादेरलक्ष्यत्वात्तत्रातिव्याप्तिवारणं युक्तमेव । 'काकवद्गृहं प्रविश'इत्यत्र प्रवेशरूपकार्यान्वयकाले यदि दैवयोगादुपलक्षणभूतकाकस्यान्यत्र गमनम्, काकान्तरस्य तद्गृहे आगमनम्, तदा तत्रागतकाकस्य पूर्वस्थितकाकवद्व्यावर्तकत्वं नास्ति । तथा च तत्रागतकाके प्रवेशानन्वयिनि उपाधित्वरहिते अतिव्याप्तिवारणाय द्वितीयसत्यन्तम् । उक्तस्थल एव उपलक्षणीभूतकाके अतिव्याप्तिवारणाय विशेष्यदलम् । न च यत्र उपलक्षणीभूतकाकस्यैव कार्यकालेऽपि दैवाद्विद्यमानत्वम्, तत्रोपलक्षणकाके कु

(वे०सू०मं०) अविद्ययाऽऽवृतः साक्षी तेनान्यस्य प्रथा कथम् ?॥

(१५)ननूक्तरूपस्य साक्षिणः चैतन्यमात्रावरकेणाज्ञानेनावरणमवर्जनीयमिति कथमावृतेनाविद्याहङ्कारादिभानमिति चेत्।

---

स्त्वं लक्षणमस्तीत्यतिव्याप्तिरिति वाच्यम्। कार्यकाले नियमेन विद्यमानत्वस्य विवक्षितत्वात्। नन्वेवमपि 'लोहितस्फटिकमानय' इत्यत्र कचिद्वाक्यश्रवणकाले सत एव जपाकुसुमस्य स्फटिकानयनकाले दैवादविद्यमानत्वसम्भवात् जपाकुसुमस्यापि कार्यकाले विद्यमानत्वनियमो नास्तीति चेत्, तर्हीदं लक्षणं श्रोत्रत्वोपाधिकर्णशष्कुल्यामन्तःकरणादौ च विवक्षितमस्तु। जपाकुसुमस्यान्यस्य वा तत्तुल्यस्य स्वनिष्ठधर्मासञ्जकत्वरूपं प्रसिद्धमेवोपाधित्वमस्तु। न चाननुगमः। स्वनिष्ठसादिलक्षणोपाधित्वस्य प्रसिद्धोपाधौ कर्णवलये बिम्बप्रतिबिम्बभेदपक्षे दर्पणादौ स्वोपहितबिम्बमुखे स्वधर्मानासञ्जके च बाधितत्वेन तत्सङ्ग्राहकलक्षणान्तरकरणस्यावश्यकतया तस्यादोषत्वात्। अनुगतलक्षणसम्भवे हि तस्य दोषत्वं प्रसिद्धम्। तथा च प्रकृतेऽन्तःकरणस्य उभयविधोपाधित्वसम्भवात् 'कार्यानन्वयित्वे सति'इत्यादिलक्षणानुरोधेनान्तःकरणोपहितो जीवस्साक्षीत्युपगमे साक्षित्वं जीवचैतन्यमात्रनिष्ठं पर्यवस्यति। जीवचैतन्यमात्रं तूदासीनमेवेति नोपहितस्य साक्षित्वानुपपत्तिः, न वा प्रमातृसाक्षिणोस्साङ्कर्यमिति संक्षेपः॥ १४॥

अविद्याहङ्कारादीनां पूर्वोक्तं साक्षिभास्यत्वमाक्षिपति—नन्विति। चैतन्यमात्रेति। कृत्स्नचैतन्यावरकेणेत्यर्थः। कथमिति। न च साक्षिगोचरापरोक्षवृत्त्या तदावरणनिवृत्तौ निवृत्तावरणेन साक्षिणा अविद्यादिभानं सम्भवतीति वाच्यम्। तेषां केवलसाक्षिभास्यत्वसिद्धान्तविरोधप्रसङ्गात्। मनसः करणत्वस्य निरसिष्यमाणतया साक्षिचैतन्यगोचरापरोक्षवृत्त्यसम्भवाच्च। अहङ्कारादीनां स्वसत्ताकाले तत्सत्ताप्रकारकसंशयाद्यभावेन सदा तेषां संशयादिनिवृत्तिप्रयोजकतया सदा प्रकाशसंसर्गे वक्तव्ये सति कादाचित्कवृत्त्या तेषां सदा भानासम्भवाच्च। सदा साक्षिगोचरवृत्तिसन्तत्युपगमे युगपद्वृत्तिद्वयानभ्युपगमेन बाह्यघटादिप्रतीत्युच्छेदप्रसङ्गाच्च। तस्मात् साक्षिमात्रभास्यत्वमविद्याहङ्कारादीनां वक्तव्यम्। तच्च न सम्भवति। तस्यावृतत्वात्। न च साक्षिचैतन्यं विहायान्यदेव चैतन्यमावृतमिति वाच्यम्। अज्ञानस्य चैतन्यमात्रावरकत्वात्। अन्यथा साक्षिचैतन्यादन्यचैतन्येऽप्यावरणाभाव-

(वे०सू०मं०) अत्राह्नू राहुवत्केचित् तस्य स्वावृतभास्यताम् ॥९६॥
राहुवदविद्या स्वावृतप्रकाशप्रकाश्येति केचित् ॥
(वे०सू०मं०) अविद्याबुद्धितद्धर्मभासकांशेतरावृतिः ॥
कल्प्यते वस्तुतस्तेषु संशयादेरदर्शनात् ॥ ९७ ॥

वस्तुतोऽविद्याऽन्तःकरणतद्धर्मात्रभासकं साक्षिचैतन्यं विहायैवाज्ञानं चैतन्यमावृणोतीत्यनुभवानुसारेण कल्पनान्न कश्चिद्दोषः। अत एव सर्वदा तेषामनावृतप्रकाशसंसर्गात् अज्ञानविपरीतज्ञानसंशयागोचरत्वम्।

(वे०सू०मं०) स्याच्चेदनावृतः साक्षी भासेतास्य सुखात्मता ॥
प्रेमास्पदत्वाद्भात्येव परिच्छेदादतृप्तता ॥ ९८ ॥

साक्षिचैतन्यस्यानावृतत्वे तत्स्वरूपभूतस्यानन्दस्यापि प्र-

---

प्रसङ्गादिसाक्षेपाभिप्रायः ॥

आवृतस्यापि साक्षिणोऽविद्याप्रकाशकत्वं दृष्टान्तेन दर्शयन् परिहरति–राहुवदिति ॥

राहुणा सर्वात्मनाऽऽवृतस्य चन्द्रमण्डलादेः स्वावरकराहुमात्रप्रकाशकत्वेऽपि तदतिरिक्तप्रकाशकत्वादर्शनात् अत्राप्यावृतस्य साक्षिणः कथञ्चिदविद्यामात्रावभासकत्वं स्यात्, नाहङ्कारादिभासकत्वमित्यस्वरसादाह—वस्तुत इति। अनुभवानुसारेणेति। अहङ्कारादिषूक्तरीत्या कादाचित्कज्ञानासम्भवेऽपि सदा प्रकाशसंसर्गफलस्य संशयनिवृत्त्यादेस्सत्त्वानुसारेणेत्यर्थः। अनुभवफलमेवोपदर्शयति–अत एवेति। अज्ञानस्य साक्षिचैतन्यं विहायैवावारकत्वस्वभावकल्पनादेवेत्यर्थः।

अगोचरत्वमिति। नन्वविद्यायाः भावरूपत्वादौ, अहङ्कारस्यानात्मत्वादौ, सुखदुःखादिवृत्तीनामनात्मधर्मत्वादावज्ञानविपरीतज्ञानसंशयानां सत्त्वेन तेषां सदा संशयाद्यगोचरत्वमसिद्धमिति चेत्, न। अविद्यादिसत्त्वकाले कदाचिदपि अविद्याऽऽदिसत्त्वप्रकारकाज्ञानाद्यभावस्य विवक्षितत्वात्। तथा च तद्गतविशेषगोचराज्ञानविपरीतज्ञानादेरनभ्युपगमेऽपि न दोष इति भावः।

शङ्कते—साक्षिचैतन्यस्येति। नन्विष्टापत्तेरिति वक्तुं न शक्यते, संसारदशायां स्वरूपानन्दप्रकाशप्रयुक्तकार्यादर्शनादित्यत आह—

काशापत्तिरिति चेत्, न । इष्टापत्तेः । आनन्दरूपप्रकाश-प्रयुक्तस्यात्मनि निरुपाधिकप्रेम्णो दर्शनात् । 'भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्' इति विवरणाच्च ॥ १५ ॥

(१६) स्यादेतत्—इदानीमप्यानन्दप्रकाशे मुक्तिसंसारयो-रविशेषप्रसङ्गः ।

ननु कल्पितभेदस्य साक्ष्यानन्दस्य प्रकाशेऽपि अनव-

आनन्दरूपेति । लोके हि तस्य तस्यानुभूयमाने आनन्दे प्रीति-रनुभवसिद्धा, तथा च प्रीतेः प्रकाशमानानन्दविषयकत्वे सिद्धे प्राणिमात्रस्य स्वस्वात्मनि दुःखदशायामपि प्रीतिदर्शनादात्मगोचरप्रीतेरपि प्रकाशमानात्मा-नन्दविषयकत्वं सिध्यति । पुत्रादिगोचरप्रीतिस्तावदौपाधिकी । उपाधिश्च आत्मसुखाभिव्यक्तिसाधनत्वम् । उपाधिव्यतिरेकदशायां तेषु प्रीतेरदर्शनात् । आत्मनि प्रीतिर्निरुपाधिकी । पुत्रादिष्विवात्मनि प्रीतेरन्यार्थत्वाभावाच्च । तथा च श्रुतिः—"आत्मनस्तु कामाय सर्वं प्रियं भवति" । तथा "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरम्" इति । अन्तरतरमित्यनेन सर्वान्तरमुच्यते । तथा च यत् सर्वान्तरमात्मचैतन्यम्, तत् अपरोक्षं प्रीतिवि-षयत्वेन सम्भावितात् पुत्रादेस्सर्वस्मादतिशयेन प्रियमिति द्वितीयश्रु-त्यर्थः । तथा च आत्मानन्दो यदि न प्रकाशेत, तदा आत्मनि श्रुत्यनुभवसि-द्धा निरुपाधिकी प्रीतिर्न स्यात् । प्रीतेः प्रकाशमानानन्दविषयकत्वनियमा-त् । अतस्साक्ष्यानन्दप्रकाशापादने इष्टापत्त्यभिधानं युक्तमेव । उक्तार्थे वृ-द्धसम्मतिमप्याह—भासत एवेति । परमप्रेमविषयत्वं परमप्रेमास्पदत्वम्, तत् लक्षणं यस्य सुखस्य, तत्तथा सुखं भासत एव । परमप्रेमास्पदत्वा-त्, अन्यथा तन्न स्यादित्येवकाराभिप्रायः । तच्च सुखं साक्षिचैतन्याभिन्न-मिति स्वरूपानन्दप्रकाशे सम्मतिर्भवत्येव ॥ १५ ॥

संसारदशायां स्वरूपानन्दस्फुरणाभ्युपगमे बाधकमाशङ्कते—स्यादे-तदित्यादिना तस्मात्साक्ष्यानन्दस्यानावृतत्वकल्पनमयुक्तमित्य-न्तेन । सिद्धान्ती विशेषं शङ्कते—नन्विति । अविद्यायामानन्दप्रतिबि-म्बस्साक्ष्यानन्दः । तस्य बिम्बभूतानन्दात् भेदः कल्पितः । तथा च सं-सारदशायामनावृतसाक्ष्यभिन्नप्रतिबिम्बानन्दप्रकाशेऽपि बिम्बभूतब्रह्मान-न्दो न प्रकाशते । तथा प्रकाशमानोऽपि साक्ष्यानन्दः प्रतिशरीरं भिन्न एव

च्छिन्नस्य ब्रह्मानन्दस्यावृतस्य संसारदशायामप्रकाशेन विशेषोऽस्तीति चेत्, न । आनन्देऽनवच्छेदांशस्यापुरुषार्थत्वादानन्दापरोक्षमात्रस्य चेदानीमपि सत्त्वात् । नन्ववच्छिन्नस्साक्ष्यानन्दस्सातिशयः। सुषुप्तिसाधारणादनतिस्पष्टात् ततो वैषयिकानन्देष्वतिशयानुभवात्। अनवच्छिन्नो ब्रह्मानन्दस्तु निरतिशयः ।

---

प्रकाशते, न त्वनवच्छिन्न इति विशेषोऽस्तीत्यर्थः । बिम्बभूतब्रह्मानन्दाप्रकाशे हेतुमाह—आवृतस्येति । अत्र यद्यपि मूलाज्ञानं शुद्धचिन्मात्राश्रयं तद्विषयकं च, न तु बिम्बभूतेश्वरविषयकं तस्यानावृतत्वेऽपि जीवापेक्षया कल्पितभेदवत्त्वात्तस्य जीवं प्रति अप्रकाशमानत्वं सम्भवति । तथा मुक्तौ बिम्बभूतब्रह्मानन्दस्फुरणमप्यसिद्धम् । मूलाज्ञाननिवृत्तौ तत्प्रयुक्तप्रतिबिम्बभावस्येव बिम्बभावस्यापि निवृत्त्यवश्यम्भावात् । तथापि पूर्वपक्षिमुखापिधानमात्रे सिद्धान्तिनस्तात्पर्यमिति बोध्यम् । किमनवच्छिन्नानन्दस्फुरणं मोक्षे विशेषः, आनन्दस्फुरणमात्रं वा । उभयथाऽपि विशेषो वक्तुं न शक्यते इत्याह पूर्ववादी—नेति । अवच्छेदो हि भेदः स च आत्मनि कल्पितः । तथा च अवच्छेदाभावो यद्यानन्दादतिरिक्तः, तदा दोषमाह—अनवच्छेदांशस्येति । यद्यानन्द एव कल्पिताभावस्याधिष्ठानात्मकत्वात्, तदाऽस्य द्वितीयप्रकारे एवान्तर्भाव इति मत्वा तं प्रकारं दूषयति—आनन्दापरोक्षमात्रस्य चेति । तथा च न मुक्तिसंसारयोर्विशेष इति भावः । सिद्धान्ती प्रकारान्तरेण विशेषमाशङ्कते-नन्ववच्छिन्न इति । प्रतिशरीरमवच्छिन्नत्वेन न प्रकाशमानस्साक्ष्यानन्दस्सातिशयः उत्कर्षापकर्षरूपातिशयवानित्यर्थः । साक्ष्यानन्दस्यातिशयवत्त्वे हेतुमाह—सुषुप्तिसाधारणादिति । स्पष्टता उत्कर्षः । अतिस्पष्टता अत्युत्कर्षः । सुषुप्तिकाले प्रकाशमानोऽपि साक्ष्यानन्दः स्पष्ट एव । इतरथा तस्य 'सुखमस्वाप्सम्' इति परामर्शनीयत्वाभावप्रसङ्गात् । लोके हि य आनन्दः स्पष्टमनुभूतः, स एव पुनः परामर्शयोग्यो नानुभूतानन्दमात्रमिति प्रसिद्धम् । तथा च ततस्साक्ष्यानन्दात् सुषुप्तावतिस्पष्टतारहितात् स्रक्चन्दनादिविषयप्रयुक्तानन्देषूत्कर्षविशेषानुभवादित्यर्थः । अनवच्छिन्न इति । कल्पितावच्छेदाभावात्मा ब्रह्मानन्दो मुक्तिकाले प्रकाशमानोऽतिशयसामान्यरहित एवेत्यक्षरार्थः । मुक्तौ ब्रह्मानन्द एकरूपेण पूर्णतया च प्रका-

आनन्दवल्ल्यां मानुषानन्दाद्युत्तरोत्तरशतगुणोत्कर्षोपवर्णनस्य ब्रह्मानन्दे समापनादिति चेत्, न। सिद्धान्ते साक्ष्यानन्दविषयानन्दब्रह्मानन्दानां वस्तुत एकत्वेनोत्कर्षापकर्षासम्भवात्। मानुषानन्दादीनामुत्तरोत्तरमुत्कर्षं श्रुतिर्वदतीति चेत्?। को वा ब्रूते श्रुतिर्न वदतीति! किं तु अद्वैतवादे तदुपपादनमशक्यमित्युच्यते।

---

शते। इदानीं तादृशब्रह्मानन्दप्रकाशो नास्ति। किं तूत्कर्षापकर्षोपेतानन्दप्रकाश एवास्ति। अतस्स्वरूपानन्दस्फुरणेऽपि तत्तदुत्कृष्टानन्दाभिलाषारूपपिशाचीग्रस्ततया कस्यापि निर्वृतिर्नास्तीति संसारमोक्षयोर्विशेष इति भावः। अविद्याप्रतिबिम्बरूपसाक्ष्यानन्दस्य लोके विषयानन्दत्वेन गृहीतस्य सातिशयत्वे ब्रह्मानन्दस्यैकरूपत्वे च श्रुतिं प्रमाणयति—आनन्दवल्ल्यामिति। मानुषस्सर्वस्सार्वभौमानन्दः। स च शतगुणितस्सन् मनुष्यगन्धर्वानन्दो भवति। सोऽपि शतगुणितस्सन् देवगन्धर्वानन्दो भवति। एवमेव पित्रानन्दादिषु "स एको ब्रह्मण आनन्दः" इत्युक्तहिरण्यगर्भानन्दान्तेषूत्कर्षापकर्षयोरुपवर्णनं योजनीयम्। समापनादिति। "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति वाक्येनेति शेषः। पुरुषो मनुष्यः। आद्यचकारस्तिर्यगादिसङ्ग्रहार्थः। आदित्यपदं मण्डलाभिमानिदेवतापरम्। द्वितीयचकारस्तदितरसकलदेवतासङ्ग्रहार्थः। तथा च देवमनुष्यतिर्यक्षु सर्वत्र विद्यमानो ब्रह्मानन्दः एकः एकरूप एव, न तु साक्ष्यानन्दवत् सातिशय इति श्रुत्यर्थः। साक्ष्यानन्दविषयानन्दब्रह्मानन्दानां सति भेदे उक्तरीत्या मुक्तिसंसारयोर्विशेषो वक्तुं शक्यते। स एव तवासिद्ध इति पूर्ववादी दूषयति—नेति। असम्भवादिति। उत्कर्षापकर्षयोर्जातिविशेषरूपयोरेकस्यां व्यक्तावसम्भवादित्यर्थः। नन्वानन्दव्यक्तेर्वस्तुगत्या एकत्वेऽपि कल्पितभेदवत्यां तस्याम् उत्कर्षादिस्सम्भवतीत्यभिसन्धिमान् सिद्धान्ती शङ्कते—मानुषानन्दादीनामिति। अनुभवानुसारिश्रुतिसिद्धानन्दोत्कर्षादेरपलापकरणमयुक्तं पूर्ववादिन इत्यर्थः। अभिसन्धिमविद्वानिव पूर्ववादी दूषयति—को वेति। का तर्ह्यनुपपत्तिरिति सिद्धान्ती शङ्कते—किं त्विति। तामाह—अद्वैतवाद इति। आनन्द-

नन्वेकस्यैव सौरालोकस्य करतलस्फटिकदर्पणाद्यभिव्यञ्जकविशेषोपधानेनाभिव्यक्तितारतम्यदर्शनादेकत्वेऽप्यानन्दस्याभिव्यञ्जकसुखवृत्तिभेदोपधानेनाभिव्यक्तितारतम्यरूपमुत्कर्षापकर्षवत्त्वं युक्तमिति चेत्, न । दृष्टान्तासम्प्रतिपत्तेः । सर्वतः प्रसृमरस्य सौरालोकस्य गगने विना करतलादिसम्बन्धमस्पष्टं प्रकाशमानस्य निम्नतले प्रसृमरस्य जलस्येव करतलसम्बन्धेन गतिप्रतिहतौ बहुलीभावादधिकप्रकाशः, भास्वरदर्पणादिसम्बन्धेन गतिप्रतिहतौ बहुलीभावात्तदीयदीप्तिसंवलनाच्च ततोऽप्यधिक-

---

कत्वमत इत्यर्थः । अशक्यमिति । औपाधिकभेदेनापि तदुपपादनमशक्यम्, अनुरूपदृष्टान्ताभावादिति पूर्ववादिनोऽप्यभिसन्धिः । एकस्याप्यानन्दव्यक्तौ औपाधिकभेदेन श्रुत्यनुभवसिद्धानन्दोत्कर्षादेरुपपादनं कर्तुं शक्यमिति स्वाभिसन्धिमुद्घाटयन् सिद्धान्ती शङ्कते—नन्वेकस्यैवेति । आलोकस्य करतलादिसम्बन्धरहितस्य या अभिव्यक्तिः तदपेक्षया करतले ईषदधिकाभिव्यक्तिः, तदपेक्षया स्फटिकेऽधिका अभिव्यक्तिः, तदपेक्षयाऽप्यधिका दर्पणादावभिव्यक्तिरनुभवसिद्धा, तद्बलात् प्रकृतेऽपि स्वरूपानन्दव्यञ्जकवृत्तितारतम्येन तत्तद्वृत्त्युपहितसाक्ष्यानन्दे उत्कर्षादिकमुपपद्यते इत्यर्थः । यद्यालोक एकव्यक्तिक एकरूपश्च स्वतो भवेत्, तदा तथाविधस्वरूपानन्दस्य दृष्टान्तो भवेत्, न त्वालोकस्यैकव्यक्तिकत्वमस्ति । तस्य नानाकिरणसमूहरूपत्वात् । नाप्येकरूपत्वं तस्यास्ति । तत्र तत्र सौरकिरणानामल्पत्वबाहुल्यरूपनानारूपत्वावगमादिति पूर्ववादी स्वाभिसन्धिमुद्घाटयन् दूषयति—नेति । असम्प्रतिपत्तेरिति । ममासम्मतत्वादित्यर्थः । प्रसृमरस्येति । गमनशीलस्येत्यर्थः । गतिप्रतिहताविति । सूर्यकिरणानां गतिप्रतिबन्धे सतीत्यर्थः । अत एव यत्र भूभागे करतलादिकृतप्रतिबन्धवशात् सूर्यकिरणा न प्रसरन्ति, तत्र तमोरूपा छाया दृश्यते । आलोकस्य गतिप्रतिहत्या बहुलीभावे दृष्टान्तमाह—निम्नतल इति । यथा निम्नतले प्रसृमरस्य जलस्य करतलसम्बन्धेन गतिप्रतिहतौ जलस्य बहुलीभावः, तथेत्यर्थः । अधिकेति । करतलादिसम्बन्धराहितगगने य आलोकस्य स्फुटः प्रकाशः, तदपेक्षयाऽधिकेत्यर्थः । तदीयदी-

प्रकाश इति तत्राभिव्यञ्जकोपाधिकाभिव्यक्तितारतम्यानभ्युपगमात् । दृष्टान्तसम्प्रतिपत्तौ च गगनप्रसृतसौरालोकवत् अनवच्छिन्नानन्दस्यास्पष्टता, करतलाद्यवच्छिन्नसौरालोकवत् सुखवृत्त्यवच्छिन्नानन्दस्याधिकाभिव्यक्तिरिति मुक्तितः संसारस्यैवाभ्यर्हितत्वापत्तेश्च । एतेन 'संसारदशायां प्रकाशमानोऽप्यानन्दो मिथ्याज्ञानतत्संस्कारविक्षिप्ततया तीव्रवायुविक्षिप्तप्रदीपप्रभावदस्पष्टं प्रकाशते, मुक्तौ तदभावात् यथावदवभासते' इत्यपि निरस्तम् । निर्विशेषस्वरूपानन्दे प्रकाशमाने तत्र विक्षेपदोषादप्रकाशमानस्य मुक्त्यन्वयिनोऽति-

---

प्तिसंवलनादिति । दर्पणादेर्या दीप्तिः प्रभा, तया मिश्रणादित्यर्थः । ततोऽपीति । करतलगतप्रकाशादपीत्यर्थः । तत्रेति । एकरूपस्यालोकस्य उपाधिगततारतम्यकृताभिव्यक्तितारतम्यस्यासम्प्रतिपत्तेर्न तस्य दृष्टान्तत्वं सम्भवतीत्यर्थः । उक्तदृष्टान्ताङ्गीकारे सिद्धान्तिनो बाधकमप्याह—दृष्टान्तसम्प्रतिपत्तौ चेति । मुक्तित इति । तथा च सिद्धान्ते मुक्तिमुद्दिश्य तत्साधनेषु कस्यापि प्रवृत्तिर्न स्यादिति भावः । मुक्तिसंसारयोरविशेषप्रसङ्गचोद्ये समाधानप्रकारविशेषोऽपि वक्ष्यमाणहेतुना निरस्त इत्याह पूर्ववादी—एतेनेति । अनात्मनि देहादावात्मत्वज्ञानम्, वस्तुत आत्मसम्बन्धशून्ये देहादावात्मीयत्वज्ञानं च मिथ्याज्ञानम् । तच्च जाग्रदादिकाले स्वरूपानन्दस्य प्रकाशमानस्यापि विक्षेपकमस्पष्टतापादकम् । मिथ्याज्ञानजन्यसंस्कारश्च सुषुप्तौ प्रकाशमानस्याप्यानन्दस्य विक्षेपकः पुरुषार्थत्वविघटकः । पुनः भोगप्रदकर्मविशेषेण उद्बोधितमिथ्याज्ञानसंस्कारवशादेव हि सर्वो जन्तुस्सौषुप्तमानन्दानुभवं परित्यजति । ततश्च सौषुप्तानन्दप्रकाशस्याध्रुवस्य मुमुक्ष्वभिलषितत्वाभावादपुरुषार्थत्वमिति भावः । दृष्टान्ते प्रभायाः सावयवत्वात्तीव्रवायुना केषाञ्चिदवयवानां नाशरूपाद्वा प्रभारूपगतभास्वरत्वस्य तेन प्रतिबन्धरूपाद्वा विक्षेपाद् प्रकाशमानायामपि दीपप्रभायामस्पष्टप्रकाशता उपपद्यते । अवयवगुणादिविशेषरहितस्य ब्रह्मानन्दस्य तु न तथा विक्षेप उपपद्यते, इत्याह—निर्विशेषेति । प्रकाशमान इति सतिसप्तमी । तत्रेत्यधिकरणसप्तमी । मुक्त्यन्वयिन इति । मुक्तिदशायां प्रकाशमानस्येत्यर्थः । अतिशयस्येति । दृष्टान्त इवाव-

शयस्यासम्भवात् । तस्मात् साक्ष्यानन्दस्यानावृतत्वकल्पनमयुक्तम् ।

(वे०सू०मं०) साक्षिण्युपाधिमालिन्यादध्यस्तादपकर्षतः ॥
सुखापकर्षमद्वैतविद्याचार्याः प्रचक्षते ॥ ९९ ॥

अत्राहुरद्वैतविद्याचार्याः — यथाऽत्युत्कृष्टस्यैकस्यैव धवलरूपस्य मालिन्यतारतम्ययुक्तेष्वनेकेषु दर्पणेषु प्रतिबिम्बे सत्युपाधिमालिन्यतारतम्यात्तत्र तत्र प्रतिबिम्बे धावल्यापकर्षस्तारतम्येनाध्यस्यते, एवं वस्तुतो निरतिशयस्यैकस्यैव स्वरूपानन्दस्यान्तःकरणप्रतिबिम्बिततया साक्ष्यानन्दभावे प्राक्तनसुकृतसंपत्त्यधीनविषय-

---

यवरूपस्य जातिविशेषरूपस्य वेत्यर्थः । तस्मादिति । मुक्तिसंसारयोरविशेषप्रसङ्गादित्यर्थः ॥

'स्यादेतत्' इत्यादिना प्राप्तं पूर्वपक्षं निराकरोति—अत्राहुरित्यादिना । एकस्य एकरूपस्य स्वरूपानन्दस्याभिव्यक्तितारतम्येऽनुरूपं दृष्टान्तं वदन् स्वरूपानन्दे श्रुत्यनुभवसिद्धं तारतम्यशब्दोक्तमुत्कर्षापकर्षवत्त्वमुपपादयति—यथेति । अत्युत्कृष्टस्येति । धवलरूपाणां मध्ये सर्वोत्तमस्येत्यर्थः । एकस्येति । अनेन वक्ष्यमाणौ उत्कर्षापकर्षौ तत्र स्वतो न स्त इति सूचितम् । 'तत्र तत्र प्रतिबिम्बे' इत्येतानि पदानि समानाधिकरणानि । धावल्यापकर्ष इति । ईषन्मलिनदर्पणप्रतिबिम्बे अपकर्षोऽध्यस्यते । ततः मध्यमविधमलिनदर्पणप्रतिबिम्बे च तदपेक्षया अधिकोऽपकर्षोऽध्यस्यते । अत्यन्तमलिनदर्पणप्रतिबिम्बे चात्यन्तापकर्षोऽध्यस्यते । ततश्च तादृशदर्पणेषु प्रतिबिम्बितं धवलरूपं तारतम्येनाभिव्यज्यते । वस्तुत एकरूपमपि, स्वरूपेण प्रकाशमानमपीत्यर्थः । अन्तःकरणेति । सुषुप्तावप्यन्तःकरणं सूक्ष्मरूपेण तिष्ठतीति साक्ष्यानन्दस्य सुषुप्तिसाधारण्यं बोध्यम् । मतान्तरेषु तु अविद्यायां प्रतिबिम्बिततया साक्ष्यानन्दभावो द्रष्टव्यः । आनन्दभावे इति । प्राप्ते सतीति शेषः । सम्पत्तिः परिपाकः फलजननौन्मुख्यमिति यावत् । प्राक्तनसुकृतसम्पत्त्यधीनो यो बिम्बविशेषसम्पर्कः, तत्प्रयुक्तौ यौ सत्त्वस्योत्कर्षापकर्षौ, तद्रूपं यच्छुद्धितारतम्यं, तद्युक्तासु सुखरूपास्वन्तःकरणवृत्तिषु प्रतिबिम्बिततया विषयानन्दभावे च प्राप्ते सतीत्यर्थः । वृत्तीनां स्वरूपसुखव्यञ्जकतया सुखरूपत्वमुक्तम् ।

विशेषसंपर्कप्रयुक्तसत्त्वोत्कर्षापकर्षरूपशुद्धितारतम्ययुक्तसुखरूपा-न्तःकरणवृत्तिप्रतिबिम्बिततया विषयानन्दभावे च तमोगुणरूपो-पाधिमालिन्यतारतम्यदोषादपकर्षस्तारतम्येनाध्यस्यते इति सं-सारदशायां प्रकाशमानेऽप्यानन्दे अध्यस्तापकर्षतारतम्येन साति-शयत्वादतृप्तिः। विद्योदये निखिलापकर्षाध्यासनिवृत्तेरारोपितसा-

एतदुक्तं भवति—पूर्वजन्मसु सम्पादितपुण्यकर्मपरिपाकवशादन्तःक-रणस्य स्रक्चन्दनादिरूपविषयविशेषगोचरवृत्तिद्वारा विषयविशेषैस्सह स-म्बन्धे सति तद्गतसत्त्वगुणस्य उत्कृष्टविषयसम्बन्धादुत्कर्षो भवति। नि-कृष्टविषयसम्बन्धान्निकर्षो भवति। ततश्चान्तःकरणगतसत्त्वांशपरिणामरूपाः वृत्तयः स्वरूपानन्दगोचरा जायन्ते। जायमानाश्च ता अप्युत्कर्षापकर्षो-पेता एव जायन्ते। तास्वानन्दप्रतिबिम्बो विषयानन्द इत्युच्यत इति।

ननु स्वरूपानन्दगोचरसत्त्ववृत्तिगतापकर्षवशात् प्रतिबिम्बरूपे वि-षयानन्दे अपकर्षाध्यासो वक्तव्यः। मलिनद्रव्यकृतदर्पणोपाधिनिष्ठापकर्षव-शात् तत्प्रतिबिम्बे अपकर्षाध्यासदर्शनात्। तथा च स्वरूपानन्दगोचरा-सु वृत्तिषु सत्त्वगुणपरिणामभूतासु अपकर्षप्रयोजकं मलिनद्रव्यं किञ्चिद-वश्यं वक्तव्यम्। साक्षाद्दर्पणसंयुक्तस्यैव मलिनद्रव्यस्य दर्पणेऽपकर्षाधा-यकत्वदर्शनादित्यत आह—तमोगुणरूपेति। अन्तःकरणस्य सत्त्वरज-स्तमोगुणात्मकत्वात्तद्वृत्तिष्वपि तमोगुणरूपोपाधिरनुवर्तते। तत्कृतो यो मालिन्यतारतम्यदोषः अपकर्षतारतम्यात्मको वृत्तिगतदोष इति यावत्, तस्माद्दोषादपकर्षस्सत्त्ववृत्तिप्रतिबिम्बरूपे विषयानन्देऽध्यस्यते इत्यर्थः। पू-र्वं विषयसम्पर्कः सुखरूपवृत्तिकारणत्वेन निर्दिष्टः। तत्र 'विषयविशेषे'इति विशेषपदं विषयगतोत्कर्षतारतम्यपरम्। तत्तारतम्यं च सुखरूपवृत्तिगतोत्कर्ष-तारतम्यप्रयोजकत्वेन निर्दिष्टम्। इह तु सुखरूपवृत्तिष्वेवापकर्षप्रयोजकतया अपकर्षतारतम्यप्रयोजकतया च तारतम्योपेतं तमोगुणात्मकं मलिनद्रव्यं निर्दिष्टमिति विभागो बोध्यः। ततः किं? तत्राह—इति संसारदशाया-मिति। प्रकाशमानेऽप्यानन्दे यदध्यस्तमपकर्षतारतम्यम्, तेन सातिश-यत्वाद्विषयानन्दस्येत्यर्थः। तथा च निकृष्टमानन्दमनुभवतः उत्कृष्टानन्द-तृष्णाभिभूतस्य तत्सम्पादनाय प्रयतमानस्य तत्साधनत्वभ्रान्त्या कदा-चिद् दुःखसाधनेष्वपि प्रवर्तमानस्य देवमनुष्यतिर्यगादियोन्यापत्तिलक्षणो भवसनर्थ इति नास्ति निर्वृतिरित्यर्थः। निवृत्तेरिति। मूलाज्ञाननिवृत्तौ

तिशयत्वाभावात् कृतकृत्यतेति विशेषोपपत्तेः निरुपाधिकप्रेम-गोचरतया प्रकाशमानस्साक्ष्यानन्दोऽनावृत एवेति ॥

(वे०सू०मं०) सुखांशोऽस्यावृत्तो नास्ति न भातीत्यनुभूतितः ॥
चिदंशोऽनावृतो वृत्त्या सौख्यव्यंक्तिरितीतरे ॥१००॥

अन्ये तु—प्रकाशमानोऽप्यानन्दो 'मयि नास्ति, न प्रकाशते'

---

तत्कार्योपाधिनिवृत्त्या तत्कृतापकर्षाद्यध्यासनिवृत्तेरित्यर्थः। कृतकृत्य-तेति। कृत्स्नं कर्तव्यजातं कृतं येन, सः कृतकृत्यः तस्य भावस्तत्ता। पुरुषस्य हि विद्योदयात्पूर्वं दुःखनिवृत्तये सुखावाप्तये च बहु कर्तव्यजातमा-सीत्। विद्योदये तु दुःखमात्रस्य निवृत्तत्वादत्युत्कृष्टधवलरूपस्य निर्म-लदर्पण इव निरतिशयस्वरूपानन्दाविर्भावाच्च तन्निवृत्तये तत्प्राप्तये वा न किञ्चित् कर्तव्यमस्तीति कृतकृत्यतेति भावः। तदाह भगवान् श्रीकृष्णः—

एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ इति।

एतत्—निरतिशयानन्दरूपं ब्रह्म अपरोक्षतया बुद्ध्वा बुद्धिमान् भवति पण्डितो भवति, कृतकृत्यश्च भवति, हे भारत अर्जुन! यतस्तत्त्वज्ञानं विना पाण्डित्यादिकं न लभ्यते, तस्मात्तदेव सम्पादय, अन्यत् सर्वं परित्यजेति भावः।

विशेषोपपत्तेरिति। मुक्तिसंसारयोरिति शेषः। ननु ब्रह्मा-नन्दवत् साक्ष्यानन्दोऽपि आवृतोऽस्तु। तथा च मुक्तिसंसारयोर्विशेषस्सुव-च इति नेत्याह—निरुपाधिकेति। एवंभूतः प्रेमा स्वरूपानन्दावरणसत्त्वे न सम्भवति। लोके प्रकाशमानसुखे एव प्रीतेरनुभवसिद्धत्वादिति भावः।

साक्षिचैतन्यस्यानावृतत्वे तदभिन्नस्यानन्दस्याप्यनावृतत्वापत्त्या मुक्तिसंसारयोरविशेषप्रसङ्ग इति पूर्वपक्षे प्राप्ते स्वरूपानन्दस्यानावृतत्वेऽपि तयोर्विशेषस्सम्भवतीति सिद्धान्तो दर्शितः। इदानीं तस्यावृ-तत्वमुपेत्यैव विशेषं मुक्तिसंसारयोर्वदन् सिद्धान्तं दर्शयति—अन्ये त्विति। 'वेदान्तप्रतिपाद्यस्वरूपानन्दो मे नास्ति न प्रकाशते' इति व्यवहार-दर्शनात्तद्धेतुभूतमावरणं तावदस्त्येव संसारदशायाम्। मुक्तौ तु तदाव-रणनाशात् स्वरूपानन्दस्फुरणमस्तीति न तयोरविशेषप्रसङ्ग इत्यर्थः। अत्र प्रकाशमानोऽप्यानन्द आवृत एवेति सम्बन्धः, न त्वनावृतः। तस्यानावृ-

इत्यावरणानुभवात् आवृत एव । एकस्मिन्नपि साक्षिण्यविद्याकल्पितरूपभेदसम्भवेन चैतन्यरूपेणानावरणस्यानन्दरूपेणावरणस्य चाविरोधात् । स्वरूपप्रकाशस्यावरणनिवर्तकतया प्रकाशमाने आवर-

---

तत्वे उक्तव्यवहारविरोधप्रसङ्गादित्येवकाराभिप्रायः । नन्वेवमात्मनि सदा निरुपाधिकप्रेमा न स्यात् । अनावृतस्वरूपानन्दस्फुरणस्याभावात् वृत्तिकृतानन्दस्फुरणस्य च कादाचित्कत्वादिति चेत्, न । फलबलेनावृतस्यापि स्वरूपानन्दप्रकाशस्य निरुपाधिकप्रेमहेतुत्वकल्पनात् 'भासते एव परमप्रेमास्पदत्वलक्षणं सुखम्' इति विवरणस्याप्यत्रैव तात्पर्योपपत्तेश्च । अनेनैवाभिप्रायेण 'प्रकाशमानोऽपि' इत्युक्तम् । अन्यथा प्रकाशमानत्वविशेषणस्यावृतत्वकल्पने उपयोगाभावेन वैयर्थ्यप्रसङ्गादिति बोध्यम् । साक्षिचैतन्याभिन्नस्य साक्ष्यानन्दस्यावृतत्वे साक्षिचैतन्यमप्यावृतं स्यात् । एकत्र आवृतत्वानावृतत्वयोर्युगपद्विरोधादित्यत आह—एकस्मिन्नपीति । यथा वस्तुत एकस्मिन्नेव चैतन्ये जीवत्वेश्वरत्वाख्यौ रूपभेदौ कल्प्येते—'नाहमीश्वरः, किं तु संसारी' इति व्यवहारबलात्, तथा 'अहं सुखी' इत्यादिज्ञानमानन्दो न भवतीत्यादिरूपेणाहङ्काराद्यवभासकज्ञानस्यानन्दाद्भेदव्यवहारदर्शनात्तदनुरोधेन चित्त्वानन्दत्वाख्यौ रूपभेदावनादिसिद्धौ कल्प्येते । यथा च एकस्मिन्नेव चैतन्ये जीवत्वावच्छेदेनाज्ञत्वादिकमीश्वरत्वावच्छेदेन तदभावश्च कल्प्यते, तथैवानन्दत्वावच्छेदेन आवृतत्वम्, चित्त्वावच्छेदेनाहङ्काराद्यवभासकचैतन्ये तदभावश्च कल्प्यते फलबलादिति न विरोधः । जीवत्वादेरिव चित्त्वादिरूपभेदस्याप्यविद्याकल्पितत्वाभ्युपगमाद् नाद्वैतविरोधश्चेत्यर्थः । नन्वेकस्मिन् साक्षिणि रूपभेदेनावृतत्वतदभावयोर्विरोधाभावेऽप्यानन्दः प्रकाशमानोऽप्यावृत इति विरुद्धम् । प्रकाशस्यावरणविरोधित्वादिति, नेत्याह—स्वरूपप्रकाशस्येति । आगन्तुकवृत्तिरूपप्रकाशस्यावरणविरोधित्वकल्पनात् न स्वरूपप्रकाशस्तद्विरोधी, तस्यावरणासाधकत्वादित्यर्थः । नन्वेवं "प्रकाशमानोऽप्यानन्द आवृतः" इति ग्रन्थे प्रकाशमानत्वविशेषणं स्वरूपप्रकाशस्यावरणाविरोधित्वज्ञापनार्थमिति तत्प्रयोजनसम्भवात् तद्विशेषणमात्मनि निरुपाधिकप्रेमसम्भवज्ञापनप्रयोजनकमिति यदुक्तं, तत् न सम्भवतीति चेत्, तर्हि विनिगमकाभावेन तद्विशेषणस्योभयप्रयोजनकत्वमस्तु । स्वरूपप्रकाशे आवरणाविरोधित्वस्यैव आनन्दावरणपक्षे आनन्दरूपे आत्मनि

णस्याविरोधाच्च। 'त्वदुक्तमर्थं न जानामि' इति प्रकाशमाने एवावरणदर्शनाच्च। न च तत्रानावृतसामान्याकारावच्छेदेन विशेषावरणमेवानुभूयते इति वाच्यम्। अन्यावरणस्यान्यावच्छेदेन भानेऽतिप्रसङ्गात्। न च सामान्यविशेषभावो नियामक इति नातिप्रसङ्ग इति वाच्यम्। व्याप्यव्यापकभावातिरिक्तसामान्यविशेषभावाभावेन 'वह्निं न जानामि'इति धूमावरकाज्ञानानुभवप्रस-

---

निरुपाधिकप्रेमसम्भवस्याप्यवश्यं ज्ञापनीयत्वात्। स्वरूपप्रकाशस्यावरणाविरोधित्वे हेत्वन्तरमाह—त्वदुक्तमिति। एवकारानन्तरमाप्तोक्तार्थ इति शेषः। 'श्रीकृष्ण एव वेदान्तवेद्यः परमात्मा दुर्विज्ञेयोऽयमकृतात्मभिः' इत्याप्तोपदेशानन्तरं मन्दस्य वाक्यार्थबोधो न भवति। स च मन्दः 'त्वदुक्तमर्थं न जानामि' इत्यज्ञानमनुभवतीति प्रसिद्धं लोके। तत्र 'त्वद्वाक्यस्यास्ति कश्चिदर्थ इति जानामि, आप्तवाक्यत्वात्, विशेषं तु न जानामि'इति व्यवहारदर्शनात् अत्रगतो यस्त्वद्वाक्यार्थत्वलक्षणस्सामान्याकारः, स एव विशेषावरकाज्ञानस्य विषयतया प्रकाशते। तथा च 'त्वदुक्तमर्थं न जानामि'इत्यनुभवे अज्ञानविशेषणतया प्रकाशमानस्य सामान्याकारस्यावरणविषयत्वाभावात्। आवरणविषयस्य विशेषस्य प्रकाशमानत्वाभावात् प्रकाशमानस्यावृतत्वेनायमनुभवः प्रमाणमिति शङ्कते—न च तत्रेति। अन्यावरकाज्ञानस्यान्यावच्छेदेन प्रकाशाभ्युपगमे 'चैत्रं न जानामि' इत्यनुभूयमानाज्ञानस्य विष्णुमित्रविषयकत्वप्रसङ्ग इति दूषयति—अन्यावरणस्येति। ननु त्वद्वाक्यार्थत्वलक्षण आकारस्तावत् सामान्यरूपः। स चाप्तोपदिष्टे श्रीकृष्ण इव त्वदुपदिष्टेषु श्रीकृष्णप्रतिपत्त्युपायेष्वपि त्वद्वाक्यार्थत्वस्य सत्त्वात्। वेदान्तवेद्यत्वादिलक्षणाकारस्तु विशेषरूपः, तस्य श्रीकृष्णस्वरूपमात्रवृत्तित्वात्। तथा च विशेषावरकाज्ञानं सामान्याकारावच्छेदेन प्रकाशते इत्युपगमे नातिप्रसङ्गः। चैत्रत्वविष्णुमित्रत्वयोस्सामान्यविशेषभावाभावादिति शङ्कते—न च सामान्येति। किं सामान्यविशेषभावः श्रीकृष्णमूर्तित्वविष्णुमूर्तित्वयोरिव व्याप्यव्यापकभावः, तदतिरिक्तो वा। न द्वितीयः। तस्यानिरूपणादित्याशयेनाह—व्याप्येति। आद्ये दोषमाह—वह्निमिति। तस्मादज्ञानानुभवे अज्ञानविशेषणतया यद्वस्तु प्रकाशते, तदे-

ङ्गात्। तस्माद्यदवच्छिन्नमज्ञानं प्रकाशते, तदेवावृतमिति प्रकाशमानेऽप्यज्ञानं युज्यते। अज्ञानं च यथा साक्ष्यंशं विहाय चैतन्यमावृणोति, एवमानन्दमपि तत्तत्सुखरूपवृत्तिकवलीकृतं विहायैवावृणोति। स एव वैषयिकानन्दस्यावरणाभिभवः। स चावरणाभिभवः प्रत्यूषसमये बाह्यावरणाभिभववत् कारणविशेषप्रयुक्तवृत्तिविशेषवशात्तरतमभावेन भवति। अतः स्वरूपानन्दविषयानन्दयोः विषयानन्दानां च परस्परभेदसिद्धिरिति वदन्ति।

---

वावरणविषय इति वक्तव्यम्। न च 'त्वदुक्तं न जानामि' इति ज्ञानस्य त्वदुक्तार्थप्रकारकत्वे सत्यज्ञानविशेष्यकत्वेन त्वदुक्तार्थो विशेषणरूप एवेत्युपगमे तज्ज्ञानस्य विशेषणज्ञानरूपकारणस्याभावात्तद्विशिष्टाज्ञानानुभवो न स्यादिति वाच्यम्। अज्ञानानुभवस्य नित्यसातिशयरूपत्वोपगमेन तत्र विशेषणज्ञानानपेक्षणात्। न च प्रकाशमानत्वमावृतत्वं च विरुद्धम्, प्रकाशस्यावरणविरोधित्वादिति वाच्यम्। अस्य विरोधस्य प्रागेव परिहृतत्वादित्याशयेनोपसंहरति—तस्मादिति। अन्यावरकाज्ञानस्यान्यावच्छिन्नतया भानासम्भवादित्यर्थः। यदवच्छिन्नमिति। येन वस्तुना विशेषितमित्यर्थः। नन्वानन्दस्यावृतत्वे विषयसंपर्कदशायां विशिष्यानन्दप्रकाशो न स्यादित्यत आह—अज्ञानं चेति। ननु वृत्तेरावरणाभिभावकत्वोपगमादज्ञानस्य सुखवृत्तिविषयीकृतानन्दानावरकत्वमिति कथमुच्यते? तत्राह—स एष इति। सुखवृत्तिविषयत्वप्रयुक्तानावरकत्वस्वभाव एव वृत्तिकृतावरणाभिभव इत्यर्थः। ननु सुखरूपवृत्तेरेकरूपत्वात् तत्कृतावरणाभिभवोऽप्येकरूप एव स्यात्। तथा च विषयसम्बन्धदशायामानन्दोऽप्येकरूपतयैव प्रकाशेत, न तूत्कृष्टापकृष्टरूपेणेति, नेत्याह—स चेति। यथा प्रत्यूषसमये आलोकतारतम्येन बाह्यतमसस्तारतम्यप्रयुक्ताभिवो भवति। ततश्च तत्तमसाऽऽवृतानां पदार्थानां तारतम्यभावप्रयुक्तं प्रकाशनं भवति। एवं विषयविशेषरूपकारणविशेषप्रयुक्तो यो वृत्तिषु विशेषः उत्कर्षतारतम्यरूपः, तद्वशात्तरतमभावयुक्त एव आवरणाभिभवो भवति। ततश्चानन्दोऽपि तरतमभावयुक्त एव प्रकाशत इत्यर्थः। एवमप्यानन्दस्यैकत्वाभ्युपगमात्तद्भेदप्रथा कथं सिध्यति? तत्राह—अत इति। वस्तुत एकस्मिन्नपि आनन्दे उपाधिप्रयुक्तभेदाभ्युपग-

सर्वथाऽपि साक्षिचैतन्यस्यानावृतत्वेनावरणाभिभवार्थं वृत्तिमनपेक्ष्यैव तेनाहंकारादिप्रकाशनमिति तुल्यमेव ॥ १६ ॥

(वे०सू०मं०)अहङ्कारादिनः(१)साक्षिभास्यस्य स्मरणं कथम् ॥
सूक्ष्मावस्था हि संस्कारो वृत्तीनां स्यान्न साक्षिणः॥१०१॥

(१७)नन्वेवं कथमहङ्कारादीनामनुसन्धानम् । ज्ञानसूक्ष्मावस्थारूपस्य संस्कारस्य ज्ञाने सत्ययोगेन नित्येन साक्षिणा तदाधानासम्भवात् ॥

(वे०सू०मं०)शृणु यद्वृत्त्यवच्छिन्नसाक्षिणा यत् प्रकाश्यते ॥
तत्संस्कारं हि सा धत्ते न त्वाकारव्यवस्थया॥१०२॥
अन्ये तु विषयाकारवृत्तिस्थानित्यसाक्षिणा ॥
त्रिपुटीभासिनाऽऽधानात्संस्कारस्य स्मृतिं जगुः॥१०३॥

---

मादित्यर्थः । तथा च विद्यया आवरणनिवृत्तौ सत्यां प्रकाशमानानन्दः स्वरूपानन्दः, तदनिवृत्तिदशायां वृत्तिसम्बन्धाव प्रकाशमानानन्दो विषयानन्द इति स्वरूपानन्दविषयानन्दयोर्भेदो ज्ञातव्यः । तथा वृत्तिभेदेनानन्दभेदाभ्युपगमाद् विषयानन्दानां परस्परं भेदप्रसिद्धिश्चावकल्पते इत्यर्थः । अहङ्कारादीनां केवलसाक्षिभास्यत्वं परमप्रकृतं सिद्धमित्याशयेनाह—सर्वथाऽपीति । स्वरूपानन्दस्यानावृतत्वपक्षे तस्यावृतत्वपक्षे चेत्यर्थः । तेनेति । साक्षिचैतन्येनेत्यर्थः ॥ १६ ॥

ननु सिद्धान्ते संस्कारस्यानुभवनाशरूपत्वोपगमेन संस्कारार्थं साक्षिचैतन्यस्याहङ्कारादिगोचरवृत्त्यपेक्षाऽस्त्वेवेति शङ्कते—नन्वेवमिति । अहङ्कारादिसाक्षिणो वृत्त्यनपेक्षत्वे सतीत्यर्थः । अनुसन्धानं स्मृतिः । तदाधानेति । संस्कारोत्पादनेत्यर्थः । तदाधानासम्भवे हेतुमाह—ज्ञानसूक्ष्मावस्थारूपस्येत्यादिना । ननु यदि साक्षिचैतन्यस्थितिदशायां तत्सूक्ष्मावस्थारूपसंस्कारोत्पत्त्ययोगः, तर्हि तन्नाशदशायां तदुत्पत्तिरस्तु, नेत्याह—नित्येनेति । तथा च अहङ्कारावच्छिन्नसाक्षिचैतन्यस्यानावृतत्वेन तदभिभवार्थं वृत्त्यनपेक्षणेऽपि संस्कारार्थं तदपे-

---

(१) सामान्ये नपुंसकम् । "तृतीयादिषु भाषितपुंस्कम्" इति वैकल्पिकपुंवद्भावाभावपक्षे "इकोऽचि विभक्तौ" इति नुम् ।

अत्र केचिदाहुः—स्वसंसृष्टेन साक्षिणा सदा भास्यमानोऽहंकारस्तत्तद्घटादिविषयवृत्त्याकारपरिणतस्वावच्छिन्नेनापि साक्षिणा भास्यते इति तस्यानित्यत्वात् सम्भवति संस्काराधानं घटादौ विषये इव । न हि स्वाकारवृत्त्यवच्छिन्नसाक्षिणैव स्वगोचरसंस्काराधानमिति नियमोऽस्ति । तथा सति वृत्तिगोचरसंस्कारासम्भवेन वृत्तेरस्मरणप्रसङ्गात् । अनवस्थाऽऽपत्त्या वृत्तिगो-

---

क्षासत्त्वात् केवलसाक्षिभास्यत्वमहङ्कारादीनामिति सिद्धान्तव्याकोप इति भावः ॥

अहङ्कारादिगोचरवृत्तिं विनैव संस्कारोपपत्तेर्न सिद्धान्तविरोध इति समाधत्ते—अत्र केचिदाहुरिति । स्वपदद्वयमहङ्कारपरम् । 'स्वसंसृष्टेन'इत्यादिना 'भास्यते' इत्यन्तेन ग्रन्थेन अहङ्कारस्य यथाऽहङ्कारावच्छिन्नसाक्षिभास्यत्वम्, तथा घटपटादिविषयगोचरवृत्त्यवच्छिन्नसाक्षिभास्यत्वमप्यस्तीति दर्शितं भवति । ततः किं ? तत्राह—तस्येति । घटादिगोचरवृत्त्यवच्छिन्नसाक्षिचैतन्यस्यानित्यत्वात् तेन यथा घटादौ विषये संस्काराधानं सम्भवति, तथा तेनैव वृत्त्यवच्छिन्नसाक्षिचैतन्येनाहङ्कारादावपि संस्काराधानं सम्भवतीति नाहङ्कारादिगोचरवृत्त्यपेक्षेति भावः । नन्वहङ्कारव्यतिरिक्तेषु घटादिषु सर्वत्र स्वाकारवृत्त्यवच्छिन्नचैतन्येनैव घटादिगोचरसंस्काराधानदर्शनात् स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति नियमोऽवसीयते । तथा चाहङ्कारमात्र एव कथमन्यगोचरवृत्त्या तदाधानमित्याशङ्क्याह—न हीति । तथा नियमे मानाभावाद्, अप्रयोजकत्वाच्चेति भावः । नियमाभ्युगमे बाधकमाह—तथासतीति । ननु ज्ञानरूपवृत्तेस्संस्कारादिलाभाय वृत्तिगोचरवृत्त्यन्तरमप्यस्तु, नेत्याह—अनवस्थापत्त्येति । घटादिगोचरवृत्तिस्मरणसिद्ध्यर्थं तद्गोचरवृत्त्यन्तरोपगमे द्वितीयवृत्तिस्मरणाय तृतीयाऽपि तद्गोचरवृत्तिर्वक्तव्या स्यात् । एवं तत्तद्वृत्तिगोचरवृत्त्यभ्युपगमापत्त्या वृत्त्यनवस्था प्रसज्ज्येत । न च द्वितीयतृतीयादिवृत्तीनां मध्ये कासां चिदज्ञातानामेव नाशाभ्युपगमसम्भवात् नानवस्थाप्रसक्तिरिति वाच्यम् । उत्पन्नायाः वृत्तेरवश्यज्ञातव्यत्वात् । अन्यथा सत्यामेव घटाद्याकारवृत्तौ 'कदाचिन्मयेदं ज्ञायते न वा', घटादिवृत्तिनाशानन्तरं 'मयेदं ज्ञातं न वा'इति वा संशयप्रसङ्गात् । त-

चरवृत्त्यन्तरस्यानुव्यवसायनिरसनेन निरस्तत्वात् । किं तु यद्वृत्त्यवच्छिन्नचैतन्येन यत् प्रकाशते, तद्वृत्त्या तद्गोचरसंस्काराधानमित्येव नियमः । एवं च ज्ञानसुखादयोऽप्यन्तःकरणवृत्तयः तप्तायःपिण्डाद् व्युच्चरन्तो विस्फुलिङ्गा इव स्वावच्छिन्नेन वह्निनेव स्वस्वावच्छिन्नेनानित्येन साक्षिणा भास्यन्ते

---

स्माद्वृत्तेरवश्यज्ञातव्यत्वं वृत्तेर्वृत्त्यैव वेद्यत्वपक्षे प्रापयेदेवानवस्थाम् । अनेनैव न्यायेन निबन्धनेष्वनुव्यवसायो निरस्तः । ततश्च स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधाननियमो नास्ति, वृत्तिष्वसम्भवादित्यर्थः । नन्वन्यगोचरवृत्त्या अन्यगोचरसंस्काराधानोपगमे घटगोचरवृत्त्या पटादावपि तदाधानप्रसङ्ग इति शङ्कते—किं त्विति । अतिप्रसङ्गपरिहाराय प्रयोजकमाह—यद्वृत्तीति । यद्वस्तुगोचरवृत्त्यवच्छिन्नचैतन्ये यावन्तः पदार्थाः प्रकाशन्ते, तद्वस्तुगोचरवृत्त्या तावत्सु पदार्थेषु संस्काराधानमिति नियमः । घटगोचरवृत्त्यवच्छिन्नचैतन्ये च पटादेरप्रकाशनान्नातिप्रसङ्गः । 'न तु स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति नियमः' इति एवकारार्थः । ननु घटादिवृत्त्यवच्छिन्नचैतन्ये घटादिप्रकाशनं निर्विवादम् । तत्र चैतन्येऽहङ्कारस्यापि प्रकाशनं 'घटादिविषयवृत्त्याकारपरिणतस्वावच्छिन्नेनापि साक्षिणा भास्यते' इति पूर्वग्रन्थे दर्शितम् । तथा च घटादिवृत्त्या अहङ्कारेऽपि संस्काराधानमस्तु । तथाऽपि घटादिरूपाया वृत्तेस्स्वावच्छिन्नचैतन्ये प्रकाशनस्यासिद्धत्वात्तस्यास्स्वगोचरसंस्काराजनकत्वं न स्यात् । तथा सुखदुःखेच्छाद्वेषादीनामहङ्कारधर्माणां घटादिवृत्त्यवच्छिन्नचैतन्ये प्रकाशनप्रसक्त्यभावात्तया तेषु संस्काराधानं न स्यात् । न च सुखादिरूपवृत्तिषु घटादिवृत्त्या संस्कारानाधानेऽपि सुखःदुःखादिगोचरान्तःकरणवृत्तिभिरेव तासु तदाधानमस्तु, ज्ञानरूपासु घटादिवृत्तिषु तदाधानार्थं वृत्त्यन्तरोपगम इवानवस्थाप्रसक्त्यभावादिति वाच्यम् । सुखदुःखादिगोचरा वृत्तिरभ्युपगम्यमाना किं ज्ञानरूपा, किं वा इच्छादिवृत्तिवत् क्रियादिरूपा ? । नाद्यः । तदुत्पादककारणाभावात् । मनःकरणताया निरसिष्यमाणत्वात् । न द्वितीयः । तस्या अपि वृत्तेस्संस्काराधानाय तद्गोचरवृत्त्यन्तरोपगमे सैवानवस्था प्राप्नोति । तस्माद् ज्ञानरूपासु घटादिवृत्तिषु ज्ञानभिन्नासु सुखदुःखादिरूपवृत्तिषु च कथं संस्काराधानमित्याशङ्क्याह—एवं चेति । उक्तनियमे सतीत्यर्थः । अन्तःकरणे या या वृत्तयः

इति युक्तं तेष्वपि संस्काराधानम् । यस्तु—

घटैकाकारधीस्था चिद् घटमेवावभासयेत् ॥
घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥ ४ ॥

इति कूटस्थदीपोक्तो विषयविशेषणस्य ज्ञानस्य विषयावच्छिन्नब्रह्मचैतन्यावभास्यत्वपक्षः, यश्च तत्त्वप्रदीपिकोक्तो ज्ञानेच्छादीनामनवच्छिन्नशुद्धचैतन्यरूपनित्यसाक्षिभास्यत्वपक्षः, तयोरपि

---

उत्पद्यन्ते ज्ञानरूपाः, तद्भिन्ना वा, तास्सर्वा अपि स्वस्वावच्छिन्ननित्यचैतन्यभास्या एव । तथा च चैतन्यस्य नित्यत्वेऽपि तद्भास्यतया तदवच्छेदकतया चोत्पद्यमानानामहङ्कारधर्माणामनित्यतया तद्धर्मविशिष्टस्य तत्तदवभासकस्य चैतन्यस्य नाशरूपस्तद्धर्मगोचरसंस्कारस्सम्भवतीति न ज्ञानसुखादिषु संस्कारानुपपत्तिरिति भावः । दृष्टान्ते स्वपदं विस्फुलिङ्गपरम् । घटस्य एकस्याकार इवाकारो यस्याः, सा घटैकाकारा, सा चासौ धीश्च, तस्यां स्थिता चिद् चिदाभासः, घटाकारवृत्तिगतिबिम्बरूपं घटज्ञानमिति यावत् । घटमेव न, घटस्य ज्ञाततामपीत्येवकारार्थः । ज्ञातता नाम ज्ञानविषयत्वं विषयतासम्बन्धेनं विषयनिष्ठज्ञानमित्यर्थः । तच्च ज्ञानं विषयस्य विशेषणम् । 'ज्ञातो घटः' इत्यनुभवादिति भावः ।

ननु अनयोः पक्षयोर्ज्ञानेच्छादिभासकचैतन्यस्य नित्यत्वात् कथं ज्ञानेच्छादिषु संस्कारः । न च पूर्वोक्तरीत्या ज्ञानेच्छादिवृत्तीनां स्वस्वावच्छिन्नसाक्षिचैतन्यप्रकाश्यत्वमादाय अनयोरपि पक्षयोस्संस्काराधानमिति वाच्यम् । घटादिगोचरवृत्तिप्रतिबिम्बरूपज्ञानस्य ज्ञातताशब्दितस्य तद्वृत्त्यनवच्छिन्नविषयाधिष्ठानब्रह्मचैतन्यभास्यत्वोक्तिविरोधात् । तथा द्वितीयपक्षे ज्ञानेच्छादिवृत्तीनामनवच्छिन्नसाक्षिभास्यत्वोक्तिविरोधप्रसङ्गात् । अतः कथं तयोः पक्षयोस्तदाधानम् ? अत आह–तयोरपीति । विषयावच्छिन्नब्रह्मचैतन्यस्य ज्ञाततावभासकत्वमते तद् ब्रह्मचैतन्यं ज्ञाततायाः अपरोक्षज्ञानरूपमेवोपेयते । 'ज्ञातोऽयं घटः' इति ज्ञातताया अपरोक्षत्वानुभवात् । अनवच्छिन्नशुद्धचैतन्यमपीच्छाज्ञानादीनामपरोक्षज्ञानरूपमेवोपेयते । इच्छादिवृत्तीनामप्यपरोक्षत्वानुभवात् । तथा चापरोक्षज्ञानरूपद्विविधचैतन्यस्य स्वविषयभूतैर्ज्ञानेच्छादिभिस्संसर्गोऽवश्यंभावी । अपरोक्षज्ञा-

चैतन्यस्य स्वसंसृष्टापरोक्षरूपत्वाद् वृत्तिसंसर्गोऽवश्यं वाच्य इति तत्संसृष्टानित्यरूपसद्भावान्न तेषु संस्काराधाने काचिदनुपपत्तिरिति ॥

(वे०सू०मं०) अन्ये त्वविद्यावृत्त्यैव सौषुप्तस्मृतिक्लृप्तया ॥
अहङ्कारादिभानेन संस्कारं सम्प्रचक्षते ॥ १०४ ॥

अन्ये तु सुषुप्तावप्यविद्याद्यनुसन्धानसिद्धये कल्पितामविद्यावृत्तिमहमाकारामङ्गीकृत्याहमर्थे संस्कारमुपपादयन्ति ।

---

नस्य स्वतादात्म्यापन्नविषयानुभवरूपत्वनियमात् । ततश्च स्वविषयभूतज्ञानेच्छादिनाशसमये ज्ञानादिविशिष्टरूपेण द्विविधचैतन्यस्यापि नाशलक्षणसंस्कारोपपत्तिरित्यर्थः । तयोरपीति सप्तमी । चैतन्यस्येति । द्विविधस्येति शेषः । तत्पदं ज्ञानेच्छादिरूपवृत्तिपरम् ॥

यदि च स्वगोचरवृत्त्यैव स्वसंस्काराधानमवश्यं वाच्यम्, तदाऽपि नानुपपत्तिः । अविद्यावृत्तिभिरहङ्कारतद्धर्मगोचराभिरहङ्कारादिषु संस्काराधानसम्भवात् । न च वृत्तिगोचरवृत्त्युपगमे प्रागुक्तानवस्थाप्रसक्तिरिति वाच्यम् । अविद्यावृत्तीनामनुभवायोग्यत्वेन तासु ज्ञानाय संस्काराय वा ज्ञानेच्छाद्यनुभवकाले अविद्यावृत्त्यन्तरानुपगमात् । न चाविद्यावृत्तीनामक्लृप्तसंस्कारजनकत्वकल्पने गौरवमिति वाच्यम् । सुषुप्तौ तासां तज्जनकत्वस्य क्लृप्तत्वादित्याशयेन मतान्तरमाह—अन्ये त्विति । उत्थितस्याविद्याद्यनुसन्धानसिद्धये सुषुप्तौ कल्पितामविद्यादिगोचरामविद्यादिवृत्तिमित्राहमाकारामविद्यावृत्तिमङ्गीकृत्येति वाक्यं योजनीयम् । यथाश्रुते सुषुप्तौ यद् अविद्याद्यनुसन्धानम्, तत्सिद्धय इति भ्रान्तिस्स्यात् सन्निधानात् । तथा सुषुप्तौ कल्पितायाः एव वृत्तेरहमाकारत्वमङ्गीकृतमिति भ्रान्तिस्स्यादिति बोध्यम् । अविद्यादीत्यादिपदं सुखसुषुप्त्योः संग्रहार्थम् । 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति सुषुप्तिकालीनानां सुखसुषुप्त्यविद्यानामुत्थानानन्तरमनुसन्धानदर्शनात् तत्कालीनाविद्याद्यनुभवस्य नित्यसाक्षिरूपतया तस्याविद्यावृत्तिरूपावच्छेदकाकल्पने संस्कारासम्भवेन उक्तानुसन्धानाभावप्रसङ्गात् । नन्वज्ञानाहङ्कारादिगोचराविद्यावृत्त्युपगमे तेषां केवलसाक्षिवेद्यत्वसिद्धान्तव्याकोप इति चेत्, न । अविद्यावृत्तीनां क्लृप्तज्ञानकरणजन्यत्वाभावेन ज्ञाना-

न चास्मिन् पक्षे 'एतावन्तं कालमिदमहं पश्यन्नेवासम्' इति अन्यज्ञानधाराकालीनाहमर्थानुसन्धानानुपपत्तिः। अवच्छेदकभेदेन सुखदुःखयौगपद्यवद् वृत्तिद्वययौगपद्यस्याप्यविरोधेनान्यज्ञानधाराकालेऽपि अहमाकाराविद्यावृत्तिसन्तानसम्भवादिति ॥

(वे०सू०मं०) उपास्तिवन्मनोवृत्तिरियं न ज्ञानमिष्यते ॥
प्रत्यभिज्ञास्मृतिज्ञानं तत्तांश इति चापरे॥ १०५॥

अपरे तु—अहमाकारा वृत्तिरन्तःकरणवृत्तिरेव ।

---

त्मकवृत्तित्वाभावाव, ज्ञानात्मकवृत्त्यनुपहितसाक्षिण एव केवलसाक्षिशब्दार्थत्वाङ्गीकारादिति भावः । अहमर्थग्रहणं तद्धर्माणामप्युपलक्षणम् । तुल्यन्यायतया बाधकाभावेन च तद्धर्मेष्वपि अविद्यावृत्तिभिस्संस्कारस्योपपादितत्वादिति ध्येयम् । नन्वस्मिन्पक्षेऽन्यज्ञानधाराकालीनाहमर्थादिषु अहमर्थादिगोचराविद्यावृत्त्यसम्भवेन संस्काराधानं न स्याव । धाराकाले अविद्यावृत्त्यङ्गीकारे युगपद् वृत्तिद्वयप्रसङ्गादिति शङ्कामनूद्य दृष्टान्तेन परिहरति—न चास्मिन्पक्ष इति । अविद्यावृत्तिभिः संस्काराधानपक्ष इत्यर्थः । अवच्छेदकभेदेनेति । 'शिरसि मे वेदना, पादे मे सुखम्' इत्यनुभवदर्शनादिति भावः । वृत्तिद्वयेति । अन्यज्ञानधाराकालेऽपि अन्यवस्तुगोचरान्तःकरणवृत्तेरहमर्थगोचराविद्यावृत्तेश्च युगपत् प्रमात्रर्थावच्छेदकभेदेन सम्भवो न विरुध्यते इत्यर्थः ।

सन्तानेति ॥ नन्वन्यज्ञानधाराकाले एकैवाविद्यावृत्तिरिति वक्तुं शक्यते, तदा तन्नानात्वे मानाभावाल्लाघवाच्चेति चेव, सत्यम् । तथाऽप्यन्तःकरणवृत्तिसन्ततिरूपत्वाद्धारायास्तत्कालीनाविद्यावृत्तेरपि सन्ततिरूपत्वं सम्भवतीति सम्भावनामात्रेण तथोक्तम् । अत एवाह—सन्तानसम्भवादिति ।

अहमर्थांशे अन्तःकरणवृत्त्यैव संस्काराधानं सम्भवतीति न तदंशेऽप्यविद्यावृत्तिः कल्पनीया । अन्तःकरणवृत्तिसम्भवे तत्कल्पनायोगाव। न चान्यज्ञानधाराकाले अहमर्थगोचरान्तःकरणवृत्तिर्न सम्भवति, सुखदुःखयौगपद्यवव ज्ञानद्वययौगपद्यायोगादिति वाच्यम् । संस्कारार्थाहंवृत्तेर्ज्ञानरूपत्वानुपगमादिति मतमाह—अपरे त्विति । तर्हि सा वृत्तिः घटादिवृत्तिवत् ज्ञानरूपाऽपि

किन्तु उपासनादिवृत्तिवन्न ज्ञानम्, क्लृप्ततत्करणाजन्यत्वात्। न हि तत्र चक्षुरादिप्रत्यक्षलक्षणं सम्भवति, न वा लिङ्गादिकम्। लिङ्गादिप्रतिसन्धानशून्यस्याप्यहंकारानुसन्धानदर्शनात्। नापि मनः करणम्। तस्योपादानभूतस्य क्वचिदपि करणत्वाक्लृप्तेः। तर्हि अहमर्थप्रत्यभिज्ञाऽपि ज्ञानं न स्यादिति चेत्, न। तस्या अहमंशे ज्ञानत्वाभावेऽपि तत्तांशे स्मृतिकरणत्वेन क्लृप्तसंस्कारजन्यतया ज्ञानत्वात्। अंशभेदेन ज्ञाने परोक्षत्वापरोक्षत्ववत् प्रमात्वाप्रमात्ववच्च ज्ञानत्वाज्ञानत्वयोरपि अविरोधादित्याहुः॥

---

स्यात्। तथा च ज्ञानात्मकवृत्त्युपहितसाक्षिवेद्यत्वापत्त्या अहमर्थस्य केवलसाक्षिभास्यत्वसिद्धान्तहानिरित्याशयेन शङ्कते—किं त्विति। परिहरति—उपासनादीति। इच्छादिसङ्ग्रहार्थमादिपदम्। अनुसन्धानम् अनुभवः। क्वचिदपीति। वृत्तिज्ञानं प्रति उपादानभूतस्यान्तःकरणस्याहमाकारवृत्तेस्सकाशादन्यत्र क्वचिदपि वृत्तौ तस्य करणत्वाक्लृप्तेरित्यर्थः। तर्हीति। 'योऽहं स्वप्ने साक्षाद् भगवन्तं श्रीकृष्णमन्वभूवम्, सोऽहमिदानीं तं स्मरामि' इति प्रत्यभिज्ञा अहमर्थांशे ज्ञानं न स्यात्, ज्ञानकरणाजन्यत्वादित्यर्थः। इष्टापत्त्या परिहरति—नेति। तर्हि प्रत्यभिज्ञानं तत्तांशेऽपि ज्ञानं न स्यात्। एकस्यां प्रत्यभिज्ञायां ज्ञानत्वतदभावयोर्विरोधेनायोगादित्यत आह—तस्या इति। प्रत्यभिज्ञाया इत्यर्थः। अंशभेदेनेति। विषयैकदेशोऽत्रांशः। स च प्रागेव दर्शितः—'अहमंश इति, तत्तांश इति च'। परोक्षत्वेति। 'पर्वतो वह्निमान्' इत्यनुमितेस्सिद्धान्ते वह्न्यंशे परोक्षत्वम्, सन्निकृष्टपर्वतांशे त्वपरोक्षत्वमुपेयते। मतद्वयसम्मतं दृष्टान्तमाह—प्रमात्वेति।

पूर्वोपदर्शितप्रत्यभिज्ञाया अहमर्थांशेऽपि ज्ञानत्वमुपेयम्। अन्यथा हि प्रत्यभिज्ञाप्रामाण्येनान्तःकरणोपहितचैतन्यरूपस्य जीवस्याहमर्थस्य स्थायित्वसाधनं सूत्रभाष्ययोर्दृश्यमानं विरुध्येत। तथा च सूत्रम्—'अनुस्मृतेश्च' (उ० मी० अ० २ पा० २ सू० २५) इति। अनुस्मृतिः प्रत्यभिज्ञा। तथा च तत्सूत्रस्थं भाष्यम्—'य एवाहं पूर्वेद्युरद्राक्षम्, स एवाहमद्य स्मरामि' इति। तथा च प्रत्यभिज्ञाया अहमंशे ज्ञानत्वाभावाभिधानमयुक्तमिति मन्यमानानां

(वे०सू०मं०) इतरे ज्ञानमेवेयं मनसोऽपीन्द्रियत्वतः ॥
बाह्यार्थेष्वेव वृत्तीनामावृत्यभिभवः फलम् ॥१०६॥

इतरे तु—अहमाकाराऽपि वृत्तिर्ज्ञानमेव । 'मामहं जानामि' इत्यनुभवात् । न च करणासम्भवः । अनुभवानुसारेण मनस एवान्तरिन्द्रियस्य करणत्वस्यापि कल्पनादित्याहुः ॥ १७ ॥

(१८)एवं सति बाह्यविषया(१)परोक्षवृत्तीनामेवावरणाभिभावकत्वनियमः पर्यवसन्नः ।

(वे०सू०मं०) शुक्त्यादौ नन्विदंवृत्त्याऽऽवरणाभिभवो नहि ॥
रूप्याध्यासाद्यसंसिद्धेरत्र केचित् प्रचक्षते ॥१०७॥

ननु नायमपि नियमः,शुक्तिरजतस्थले इदमाकारवृत्तेरज्ञाना-

---

मतमाह—इतरे त्विति । अनुभवादिति । अहमर्थगोचरवृत्तौ ज्ञानत्वानुभवादित्यर्थः । मनस इति । अत एव वियत्पादे (उ० मी० अ० २ पा० ३ सू० ४० ) भाष्यम् 'बुद्धेः करणत्वाभ्युपगमात्' इति । अत एव च अहङ्कारधर्माणां ज्ञानसुखादीनां केवलसाक्षिभास्यत्वेऽप्यहमर्थरूपस्य मनः प्रति असाधारणविषयस्य सत्त्वात्तस्येन्द्रियत्वं प्राणपादे ( उ० मी० अ० २ पा० २ ) चक्षुरादेरिव भाष्यकारैरेव व्यवस्थापितमिति मन्तव्यम् । केवलसाक्षिभास्यत्वसिद्धान्तोऽपि अत एवाहमर्थव्यतिरिक्ताज्ञानसुखादिमात्रविषय इत्यपि मन्तव्यम् । ननु मनस इन्द्रियत्वपक्षे रूपाध्यक्षे चक्षुरादेरिव तस्याहमर्थे प्रमाणत्वं वाच्यम् । तच्च न सम्भवति । अहमर्थस्यानावृतसाक्षिचैतन्येऽध्यस्तस्याज्ञानत्वाभावेन मनसः अज्ञातज्ञापकत्वाभावादिति चेद्, न । तद्वति तत्प्रकारकानुभवत्वमबाधितानुभवत्वं वा प्रमात्वमिति मतानुरोधेनाहमाकारज्ञानस्य प्रमात्वोपपत्तौ तत्करणस्य मनसोऽपि चक्षुरादेरिव प्रमाणत्वसम्भवादिति भावः ॥ १७ ॥

ननु तर्ह्यपरोक्षवृत्तीनामावरणाभिभावकत्वनियमस्याहमाकारापरोक्षवृत्तौ व्यभिचार इत्याशङ्क्य नियमस्य सङ्कोचं दर्शयति—एवं सतीति । अहमाकारापरोक्षवृत्त्युपगमे सतीत्यर्थः ।

उक्तनियममप्याक्षिपति—नन्विति । 'इदं रजतम्'इति भ्रमस्थले

---

(१) बाह्यगोचरेति पाठः ।

नभिभावकत्वात् । अन्यथोपादानाभावेन रजतोत्पत्त्ययोगादिति चेत्,

(वे०सू०मं०) इदमाकारवृत्त्येदमंशे मोहक्षिता(१) वपि ॥
शुक्त्याद्यंशेऽक्षितत्वेन रजताद्युद्भवस्ततः ॥ १०८ ॥
अत एव स्फुरन् भ्रान्तावाधार इदमंशकः ॥
शुक्त्याद्यंशस्त्वधिष्ठानं सकार्याज्ञानगोचरः ॥ १०९ ॥

अत्राहुः—इदमाकारवृत्त्या इदमंशाज्ञाननिवृत्तावपि शुक्तित्वादिविशेषांशाज्ञानानिवृत्तेः तदेव रजतोपादानम्, शुक्तित्वाद्यज्ञाने रजताध्यासस्य तज्ज्ञाने(२) तदभावस्यानुभूयमानत्वात् । अध्यासभाष्यटीकाविवरणे अनुभूयमानान्वयव्यतिरेकस्यैवाज्ञानस्य रजताद्यध्यासोपादानत्वोक्तेः ।

---

प्रथममिदमाकाराऽपरोक्षवृत्तिरुदेति, पश्चात् 'इदं रजतम्' इति भ्रमो भवति । तत्रेदमाकारायाः प्रथमोत्पन्नवृत्तेरज्ञाननिवर्तकत्वं किं नास्ति, उतास्ति ? । आद्ये नियमस्य व्यभिचारमाह—नाप्यमपीति । यथा 'अपरोक्षवृत्तिमात्रमज्ञाननिवर्तकम्' इति नियमो नास्ति, अहमाकारवृत्तौ व्यभिचारात्, तथा 'बाह्यगोचरापरोक्षवृत्तिमात्रमज्ञाननिवर्तकम्' इति नियमोऽपि नास्ति, इदमाकारवृत्तौ व्यभिचारादित्यर्थः । द्वितीये बाधकमाह—अन्यथेति । इदमाकारवृत्तेरज्ञानाभिभावकत्वे इत्यर्थः ।

इदमाकारवृत्तिनिरस्ताज्ञानमन्यद्, रजतोपादानभूताज्ञानमन्यत् । तथा च न व्यभिचारः । न वा रजतोत्पत्त्ययोग इति परिहरन्ति—अत्राहुरिति । शुक्तित्वादिविशेषांशावरकाज्ञानमेव रजतोपादानमित्यत्र मानमाह—शुक्तित्वाद्यज्ञाने इति । नीलपृष्ठत्वादिकमादिपदार्थः । रजतमेवाध्यस्यत इति । अध्यास इत्यर्थः । प्रथमतत्पदं विशेषांशपरम् । द्वितीयतत्पदमध्यासपरम् । तत्र सम्मतिमाह—अध्यासेति । टीका पञ्चपादिका । अनुभूयमानौ अन्वयव्यतिरेकौ यस्येति विग्रहः । ननु पुरोवृत्तिद्रव्यस्य शुक्तित्वादिविशेषरूपविशिष्टस्यैव रजतकारणाज्ञानावृतत्वाभ्युपगमे तस्यैवाधिष्ठानत्वं स्यात्, न त्विदन्त्वरूपविशिष्टस्य इदमंशस्य, सविला(३)साज्ञानविषयस्यैव अधिष्ठानत्वा-

---

(१) क्षितिर्नाशः । (२) तज्ज्ञान इति पाठः ।
(३) ज्ञानाविषयस्यानधिष्ठानत्वाद् इति पाठः ।

अत एव शुक्त्यंशोऽधिष्ठानम्, इदमंश आधारः । सविलासाज्ञानविषयोऽधिष्ठानम्, अतद्रूपोऽपि तद्रूपेणारोप्यबुद्धौ स्फुरन्नाधार इति संक्षेपशारीरकेऽपि विवेचनादिति ॥

(वे०सू०मं०) अन्ये वृत्त्येदमज्ञानावरणांशपरिक्षयात् ॥
विक्षेपांशेन रजतं जीवन्मुक्तौ जगद्यथा ॥ ११० ॥

अपरे तु—'इदं रजतम्' इति इदमंशसम्भिन्नत्वेन प्रतीयमानस्य रजतस्य इदमंशाज्ञानमेवोपादानम् । तस्य चेदमाकारवृत्त्या आवरणशक्तिमात्रनिवृत्तावपि विक्षेपशक्त्या सह त-

---

त् । तथाचाधिष्ठानारोप्ययोरेकज्ञानविषयत्वनियमात् 'शुक्तिः रजतम्' इति भ्रमाकारः स्यात्, न स्याच्च 'इदं रजतम्' इति प्रतीत्याकारः । इदमंशस्याधिष्ठानत्वाभावादित्यत आह—अत एवेति । अध्यासोपादानाज्ञानविषयत्वादेवेत्यर्थः । शुक्त्यंश इति । शुक्तित्वविशेषरूपेण पुरोवर्त्यवच्छिन्नचैतन्यमित्यर्थः । इदमंशस्याधिष्ठानत्वाभाव इष्ट इत्याशयेनाह—इदमंश इति । ननु तस्याधारत्वे आगतमेवाधिष्ठानत्वम्, तयोर्भेदाभावादिति, नेत्याह—सविलासेति । विलासो रजतादिविक्षेपः । विषयत्वमावृतत्वम् । अतद्रूपोऽपीति । तत्पदमध्यस्तरजतादिपरम् । तथा चाध्यस्तरजताद्यभेदरहितोऽपि तदभिन्नत्वेन स्फुरन्नित्यर्थः । अधिष्ठानस्यैव आरोपितरजततादात्म्याद्वस्तुगत्या इदमंशस्यातद्रूपत्वमिति बोध्यम् । अस्मिन्मते अधिष्ठानारोप्ययोरेकज्ञानविषयत्वं नास्ति । किं तु आधारारोप्ययोरेव तदिति न भ्रमस्य शुक्त्यंशोल्लेखापत्तिरिति भावः ॥

नन्वधिष्ठानारोप्ययोरारोपे प्रकाशमानत्वस्य सम्भावनाभाष्यटीकाविवरणादिषु समर्थितत्वात्तद्विरोध इत्याशङ्क्य मतान्तरं तदविरुद्धमाह—अपरे त्विति । सम्भिन्नत्वं तादात्म्यमिति यावत् । अज्ञानमेवेति । न तु विशेषांशाज्ञानमित्येवकारार्थः । विशेषांशस्यारोपे स्फुरणाभावेन तस्याधिष्ठानत्वासम्भवादिति भावः । शुक्तित्वादिरूपविशेषदर्शनस्य अध्यासप्रतिबन्धकत्वात् तदभावविषयौ पूर्वोक्तान्वयव्यतिरेकाविति भावः । नन्विदमाकारवृत्त्या इदमंशाज्ञानस्य निवृत्तत्वात् कथमिदमंशस्याधिष्ठानत्वम् ? अत आह—तस्य चेति । इदमंशाज्ञानस्येत्यर्थः । नन्वज्ञानस्यावरणांश-

दनुवृत्तेः नोपादानत्वासम्भवः । जलप्रतिबिम्बितवृक्षाधोऽग्रत्वाध्यासे जीवन्मुक्त्यनुवृत्ते(१) प्रपञ्चाध्यासे च सर्वात्मना अधिष्ठानसाक्षात्कारानन्तरभाविन्यामावरणनिवृत्तावपि विक्षेपशक्तिसहिताज्ञानमात्रस्योपादानत्वसम्प्रतिपत्तेरित्याहुः ॥

(वे०सू०मं०) नृसिंहभट्टोपाध्यायः पूर्वं रजतविभ्रमात् ॥
न मानमिदमाकारवृत्ताविति समभ्यधात् ॥ १११ ॥

कवितार्किकचक्रवर्तिनृसिंहभट्टोपाध्यायास्तु—'इदं रजतम्' इति भ्रमरूपवृत्तिव्यतिरेकेण रजतोत्पत्तेः प्रागिदमाकारा वृत्तिरेव

---

मात्रनिवृत्तिर्विक्षेपशक्त्या सह अनुवृत्तिश्च क्वापि न दृष्टा, अत आह—जलप्रतिबिम्बेति । प्रपञ्चेति । जीवन्मुक्तस्याप्यन्तःकरणादिप्रपञ्चप्रतीतेः सत्त्वादिति भावः । सर्वात्मनेति । रजतादिभ्रमस्थले हि सर्वात्मनाऽधिष्ठानसाक्षात्कारो नास्ति । शुक्तित्वादिविशेषरूपेण शुक्तिसाक्षात्काराभावात् । अतस्तत्र इदमंशाज्ञाननिवृत्तावपि विशेषांशाज्ञाननिवृत्त्यभावाच्चस्याध्यासोपादानत्वप्रसक्तिरस्ति । प्रतिबिम्बभ्रमस्थले तु 'जले वृक्षो नास्त्येव, ऊर्ध्वाग्र एवायं वृक्षः' इति सर्वात्मना विशेषदर्शनस्य सत्त्वात् सामान्यांशाज्ञानं निवृत्तम्, विशेषांशाज्ञानमनिवृत्तमिति विभागासम्भवेन विशेषांशाज्ञानमुपादानमिति वक्तुमशक्यम् । तस्माद्वृक्षाधोऽग्रत्वाद्यध्यासानुरोधेनैकस्यैवाज्ञानस्यावरणांशनिवृत्तावपि विक्षेपशक्तिमदज्ञानांशानुवृत्तिरुपेया । तथा जीवन्मुक्त्यवस्थायामपि ब्रह्मतत्त्वसाक्षात्कारादावरणमात्रनिवृत्तिः विक्षेपशक्तिमदज्ञानांशानुवृत्तिश्च वाच्या । तदा रजताध्यासस्थलेऽपि इदमंशस्याज्ञानस्य उपादानत्वं सम्भवतीति भावः ॥

एवं बाह्यगोचरापरोक्षवृत्तीनां सर्वासामेवावरणाभिभावकत्वनियमस्य भ्रमस्थलीयेदमाकारवृत्तौ या व्यभिचारशङ्का, सा तत्रापि इदमंशाज्ञाननिवर्तकत्वस्य इदमंशावरणमात्रनिवर्तकत्वस्य वा सत्त्वादित्युपपादनेन निरस्ता । इदानीं प्रथममिदमाकारवृत्तिरेव भ्रमस्थले नास्ति । तत्र व्यभिचारशङ्कातत्समाधाने तु दूरत एव निरस्ते इत्याह—कवितार्किकेति । भ्रमरूपवृत्तीति । पूर्वमतद्वये इदमाकारवृत्तिसत्त्वात्तदभिव्यक्तचैतन्यरूप-

---

(१) जीवन्मुक्त्याऽनुवृत्तप्रपञ्चेति पाठः ।

नास्तीति तस्या अज्ञाननिवर्तकत्वसदसद्भावविचारं निरालम्बनं मन्यन्ते।

तथाहि— न तावत् भ्रमरूपवृत्तिव्यतिरेकेण इदमाकारा वृत्तिरनुभवसिद्धा। ज्ञानद्वित्वाननुभवात्। नाप्यधिष्ठानसामान्यज्ञानमध्यासकारणमिति कार्यकल्प्या। तस्यास्तत्कारणत्वे मानाभावात्। न चाधिष्ठानसम्प्रयोगाभावे रजताद्यनुत्पत्तिस्तत्र मानम्। ततो दुष्टेन्द्रियसम्प्रयोगस्यैवाध्यासकारणत्वप्र-

---

मेव शुक्तिरजतादिज्ञानम्, न तु वृत्तिरूपम्। अस्मिन्मते तदभावाद् वृत्तिरूपमेव तज्ज्ञानमिति मन्तव्यम्। एतच्चाग्रे स्फुटं भविष्यति। धर्मिज्ञानरूपामिदमाकारवृत्तिं निराकरोति—तथा हीत्यादिना। सा किमनुभवसिद्धा, उत कार्यकल्प्या, अथवा सामग्रीकल्प्या ?। नाद्य इत्याह—न तावदिति। ज्ञानद्वित्वेति। "'इदम्' इत्येकं ज्ञानम्; 'इदं रजतम्' इति ज्ञानमपरम्' इत्यनुभवाभावादित्यर्थः। द्वितीयं निराकरोति—नाप्यधिष्ठानेति। अध्यासरूपं कार्यं स्वकारणमधिष्ठानगोचरसामान्यज्ञानमन्तरेणानुपपद्यमानं सत् तत् कल्पयति। ततश्चाधिष्ठानसामान्यज्ञानरूपा इदमाकारवृत्तिस्सिध्यतीत्यपि न मन्तव्यम्। अधिष्ठानसामान्यज्ञानस्याध्यासकारणत्वे मानाभावादित्यर्थः। मानाभावोऽसिद्ध इति शङ्कते—न चेति। इदमर्थस्य चक्षुरादिभिः सम्प्रयोगे सति रजतादिरूपस्याध्यासस्योत्पत्तिः, नान्यथेति अनुभवसिद्धम्। तथा च उक्तान्वयव्यतिरेकाभ्यामधिष्ठानसामान्यज्ञानस्य रजताद्यध्यासं प्रति कारणत्वं सिध्यति। न च उक्तान्वयादिना सम्प्रयोगस्यैवाध्यासकारणत्वं सिध्यति, न धर्मिज्ञानस्येति वाच्यम्। तथा सति अहङ्काराद्यध्यासे सम्प्रयोगासम्भवेन व्यभिचारापत्तेः। अतस्सम्प्रयोगस्याध्यासं प्रति कारणत्वग्राहकाभ्यामेवान्वयव्यतिरेकाभ्यां शुक्तिरजताद्यध्यासस्थले धर्मिज्ञानस्यैव सम्प्रयोगसाध्यस्य कारणत्वं कल्प्यते। तथा चाधिष्ठानसामान्यज्ञानस्याध्यासकारणत्वे उक्तान्वयव्यतिरेकौ प्रमाणं भवत एवेति गूढाभिसन्धिः। अभिसन्धिमज्ञात्वा दूषयति—तत इति। उक्तान्वयादीत इत्यर्थः। सम्प्रयोगमात्रस्य प्रमास्थलसाधारणत्वाद् दुष्टेत्युक्तम्।

सेः । न च सम्प्रयोगो न सर्वत्र भ्रमव्यापी, अधिष्ठानस्फुरणं तु स्वतःप्रकाशमाने प्रत्यगात्मनि अहङ्काराध्यासमपि व्याप्नोतीति वाच्यम् । तस्यापि घटाद्यध्यासाव्यापित्वात् । घटादिप्रत्यक्षात् प्राक् तदधिष्ठानभूतनीरूपब्रह्ममात्रगोचरचाक्षुषवृत्तेरसम्भवात् । स्वरूपप्रकाशस्यावृतत्वात् । आवृतानावृतसाधारण्येनाधिष्ठानप्रकाशमात्रस्याध्यासकारणत्वे शुक्तीदमंशसम्प्रयोगात् प्रागपि तदवच्छिन्नचैतन्यरूपप्रकाशस्यावृतस्य सद्भावेन तदाऽप्यध्यासापत्तेः । न चाध्याससामान्ये अधिष्ठानप्रकाशसामान्यं हेतुः, प्रातिभासिकाध्यासेऽभिव्यक्ताधिष्ठानप्रकाश इति नातिप्रसङ्गः,

---

धर्मिज्ञानकारणवादी स्वाभिसन्धिमाविष्करोति—न च सम्प्रयोग इति । अधिष्ठानसामान्यज्ञानस्य सम्प्रयोगस्येव न व्यभिचार इत्याह—अधिष्ठानस्फुरणं त्विति । सम्प्रयोगवैलक्षण्यार्थस्तुशब्दः । अधिष्ठानस्फुरणं कर्तृ शुक्तिरजताद्यध्यासमिव अहङ्काराद्यध्यासमपि व्याप्नोतीत्यर्थः । स्वत इति । बाह्यचैतन्यस्यावृतत्वाद् वृत्तिकृतं तत्राधिष्ठानस्फुरणं साक्षिचैतन्यस्यानावृतत्वादहङ्काराद्यध्यासे स्वप्नप्रपञ्चाध्यासे च तत् स्वतस्सिद्धमित्यर्थः । अधिष्ठानसामान्यज्ञानस्यापि व्यभिचारमाह—तस्यापीति । उक्तज्ञानं तच्छब्दार्थः । घटाद्यध्यासव्यापित्वाभावादित्यर्थः । तथा च धर्मिज्ञानं नाध्यासकारणमिति भावः । अव्यापित्वशब्दितं व्यभिचारमुपपादयति—घटादीत्यादिना । घटाद्यध्यासस्थले शुक्तिरजताध्यासस्थल इव किं वृत्तिकृतमधिष्ठानस्फुरणम्, अहङ्काराद्यध्यासस्थल इव स्वतस्सिद्धं वा ? नाद्य इत्याह—घटादिप्रत्यक्षादिति । तत्पदं घटादिपरम् । न द्वितीय इत्याह—स्वरूपेति । नन्वधिष्ठानप्रकाशमात्रमध्यासे कारणम्, लाघवात्, न त्वभिव्यक्ताधिष्ठानप्रकाशः । तथा च 'सन् घटः' 'सन् पटः' इत्यादिरूपेष्वध्यासेषु घटाद्यधिष्ठानस्य सद्रूपस्य ब्रह्मणस्स्वप्रकाशत्वादधिष्ठानप्रकाशमात्रं तत्राप्यस्तीति न व्यभिचार इत्याशङ्क्याह—आवृतानावृतेनेति । तदाऽपीति । सम्प्रयोगात्प्राक्कालेऽपीत्यर्थः । धर्मिज्ञानकारणवादी शङ्कते—न चाध्याससामान्य इति । प्रातिभासिकेति । अभिव्यक्ताधिष्ठानस्फुरणं प्रातिभासिकाध्यासेष्वेव कारणमाचार्याणामभिप्रेतम् । तेष्वेव दोषसम्प्रयोगसं-

सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वौचित्यादिति वाच्यम् । एवमपि प्रातिभासिकशङ्खपीतिमकूपजलनैल्याद्यध्यासाव्यापनात् । रूपानुपहितचाक्षुषप्रत्ययायोगेन तदानीं शङ्खादिगतशौक्ल्योपलम्भाभावेन चाध्यासात्प्राक् शङ्खादिनीरूपाधिष्ठानगोचरवृत्त्यसम्भवात् ।

---

स्कारस्वरूपकारणत्रयजन्यताया अध्यासटीकाविवरणादिषु व्यवस्थापितत्वेन सम्प्रयोगकारणताग्राहकप्रमाणलभ्याधिष्ठानापरोक्ष्यस्य तेष्वेव कारणत्वसिद्धेरित्यर्थः । प्रकाशपदानन्तरं हेतुपदमनुषञ्जनीयम् । नातिप्रसङ्ग इति । न सम्प्रयोगात्प्राक् रजताद्यध्यासप्रसङ्ग इत्यर्थः । रजताद्यध्यासस्य प्रातिभासिकत्वेन तदधिष्ठानापरोक्ष्याय सम्प्रयोगाधीनवृत्तेरपेक्षितत्वादिति भावः । औचित्यादिति । तथा च धर्मिज्ञानस्याध्यासकारणत्वे सम्प्रयोगकारणताग्राहकान्वयादेः प्रमाणस्य सत्त्वात् बाधकाभावाच्च तस्याध्यासकारणत्वसिद्धाविदमाकारा वृत्तिस्सिद्धेति भावः । अभिव्यक्ताधिष्ठानप्रकाशस्य प्रातिभासिकाध्यासेष्वपि सर्वत्र व्याप्तिर्नास्तीति कश्चितार्किकमतानुवर्ती दूषयति–एवमपीति । अधिष्ठानापरोक्ष्यस्य प्रातिभासिकाध्यासमात्रहेतुत्वे स्वीकृतेऽपीत्यर्थः । धर्मिज्ञानकारणवादे हि प्रथमम् 'इदम्' इत्येवमाकारा वृत्तिरुदेति । तथा च वृत्त्या अभिव्यक्ते शङ्खजलाद्यवच्छिन्नचैतन्ये पीतनीलरूपादेरध्यास इति प्रक्रिया । तथा च तत्रेदमाकारा वृत्तिः किं शङ्खादिद्रव्यमात्रं विषयीकरोति, किं वा रूपविशिष्टं द्रव्यम् ? । नाद्य इत्याह—रूपानुपहितेति । रूपाविषयकद्रव्यचाक्षुषवृत्तिर्न सम्भवति । इतरथा वाय्वादेरपि चाक्षुषत्वापत्तेरिति भावः । द्वितीयेऽपि किं शुक्लरूपविशिष्टं द्रव्यं विषयीकरोति, किं वा आरोप्यरूपविशिष्टम् ? । न द्वितीयः । आरोप्यरूपविशिष्टशङ्खादिवृत्तेरेव भ्रान्तित्वेन तस्याः धर्मिज्ञानत्वाभावात् । नाद्य इत्याह–तदानीमिति । अध्यासात्पूर्वकाले इत्यर्थः । तदानीं शौक्ल्योपलम्भे अध्यासाभावप्रसङ्गादिति भावः । असम्भवादिति । तथा चाभिव्यक्ताधिष्ठानस्फुरणस्य तत्रासम्भवाद्व्यभिचारेण धर्मिज्ञानं नाध्यासकारणमिति भावः । नन्वध्यासात्पूर्वं द्रव्यमात्ररूपेण शङ्खादिगोचरचाक्षुषवृत्तिरुदेत्येव । द्रव्यगोचरचाक्षुषवृत्तौ रूपाविषयकत्वनियमस्याप्रयोजकत्वात् । न चैवं वाय्वादेरपि चाक्षुषत्वप्रसङ्गः । द्रव्यचाक्षुषे द्र-

न च प्रातिभासिकेष्वपि रजताद्यध्यासमात्रे निरुक्तो विशेषहेतुरास्तामिति वाच्यम् । तथा सति सम्प्रयोगात् प्राक् पीतशङ्खाद्यध्यासाप्रसङ्गाय तदध्यासे दुष्टेन्द्रियसम्प्रयोगः कारणमित्यवश्यं वक्तव्यतया तस्यैव सामान्यतः प्रातिभासिकाध्यासमात्रे लाघवात् कारणत्वसिद्धौ, तत एव

---

व्यगतोद्भूतरूपस्य नियामकत्वाद् अध्यासात् पूर्वकाले द्रव्यग्रहणेऽपि शुक्तित्वादेरिव दोषबलात् सन्निकृष्टस्यापि शुक्लरूपमात्रस्याग्रहणोपपत्तेश्च । तदुक्तं भामत्याम्—

'शङ्खं च दोषाच्छादितशुक्लिमानं द्रव्यमात्रस्वरूपं गृहीत्वा' इति ।

शुक्लिमानं शुक्लरूपमित्यर्थः । अस्तु वा तत्र शुक्लरूपविशिष्टशङ्खादिग्रहणम् । तथापि नाध्यासानुपपत्तिः । दोषबलेन रूपगतशुक्लत्वजातिग्रहणप्रतिबन्धमात्रेणापि तदुपपत्तेः । तथा च प्रातिभासिकाध्यासेषु अभिव्यक्ताधिष्ठानस्फुरणस्य व्यभिचाराभावाद्धर्मिज्ञानरूपा इदमाकारवृत्तिस्सिद्धा भवति । तत्सिद्धौ च तस्यामावरणानिवर्तकत्वमदसद्भावचिन्ता सालम्बनैवाचार्याणां न निरालम्बनेति चेत्, सत्यम् । अस्मिन्मते अयमेवास्वरसः 'उपाध्याया मन्यन्ते' इत्यनेन सूचितः ।

पीतशङ्खादिभ्रमस्थले वस्तुनो व्यभिचाराभावेऽपि तमभ्युपगम्य धर्मिज्ञानकारणवादी शङ्कते—न च प्रातिभासिकेष्वपीति । निरुक्त इति । अभिव्यक्ताधिष्ठानप्रकाश इत्यर्थः । तथासतीति। पीतशङ्खाद्यध्यासेषु अभिव्यक्ताधिष्ठानप्रकाशस्य हेतुत्वानुपगमे इत्यर्थः । अधिष्ठानापरोक्ष्यवत् सम्प्रयोगस्यापि पीतशङ्खाद्यध्यासेषु कारणत्वानुपगमे सम्प्रयोगात् प्रागपि 'पीतः शङ्खः'इत्याद्यध्यासप्रसङ्गः। अतस्तत्परिहाराय तत्र सम्प्रयोगस्य कारणत्वमवश्यं वाच्यमित्यर्थः । ततः किं? तत्राह—तस्यैवेति । दुष्टेन्द्रियसम्प्रयोगस्यैवेत्यर्थः । सामान्यत इत्युक्तं सामान्यमेव दर्शयति—प्रातिभासिकाध्यासमात्रे इति । प्रातिभासिकाध्यासत्वमेव दुष्टेन्द्रियसम्प्रयोगकार्यतावच्छेदकम्, लाघवात्, न तु पीतशङ्खाद्यध्यासत्वम्, गौरवादित्यर्थः । ततोऽपि किं? तत्राह—तत एवेति । सम्प्रयोगात् प्राक् पीतशङ्खाद्यध्यासप्रसङ्गपरिहाराय तत्र सामान्यतः क्लृप्ताद् दुष्टेन्द्रि-

रजताध्यासकादाचित्कत्वस्यापि निर्वाहादधिष्ठानप्रकाशस्य सामान्यतो विशेषतो वाऽध्यासकारणत्वस्यासिद्धेः ।

ननु सादृश्यनिरपेक्षे अध्यासान्तरे अकारणत्वेऽपि तत्सापेक्षे रजताद्यध्यासे रजतादिसादृश्यभूतरूपविशेषादिविशिष्टधर्मिज्ञानरूपमधिष्ठानसामान्यज्ञानं कारणमवश्यं वाच्यम् । दुष्टेन्द्रिय-

---

यसम्प्रयोगादेवेत्यर्थः । कादाचित्कत्वस्यापीति । सदा रजताद्यध्यासप्रसङ्गपरिहाराय अभिव्यक्ताधिष्ठानप्रकाशस्य रजताद्यध्यासकारणत्वं वाच्यम् । तथासति शुक्त्यवच्छिन्नचैतन्यरूपस्याधिष्ठानप्रकाशस्यावृततया सदा तदभिव्यक्तेरभावेन सदा रजताद्यध्यासप्रसङ्गपरिहारोपपत्तेरिति हि धर्मिज्ञानकारणतावादिनस्तत्राभिप्रायः । स चातिप्रसङ्गपरिहारः पीतशङ्खाद्यध्यासस्थले क्लृप्तात् सम्प्रयोगादेव लभ्यते इत्यर्थः । सामान्यत इति । 'अधिष्ठानप्रकाशमात्रमध्यासमात्रे कारणम्' 'अभिव्यक्ताधिष्ठानप्रकाशः प्रातिभासिकाध्यासे कारणम्' इति पूर्वोक्तकार्यकारणभावद्वयमपि न सिध्यतीत्यर्थः । ननु 'तस्यैव सामान्यतः प्रातिभासिकाध्यासमात्रे लाघवात् कारणत्वसिद्धौ" इत्ययुक्तम् । अहङ्काराद्यध्यासे, साक्षिचैतन्ये स्वप्नाध्यासे च सम्प्रयोगासम्भवेन व्यभिचारात् । न च अहङ्काराद्यध्यासस्य व्यावहारिकत्वमते तत्र व्यभिचारो न दोष इति वाच्यम् । तथाऽपि तत्प्रातिभासिकत्वमते दोषपरिहारासम्भवात् । साक्षिणि स्वप्नाध्यासे प्रातिभासिकत्वस्य सम्प्रतिपन्नतया तत्रोक्तव्यभिचारस्य दृढत्वाच्च । न च स्वप्नाद्यध्यासेऽभिव्यक्ताधिष्ठानस्फुरणं कारणम् । अन्यथा स्वप्नप्रपञ्चस्यापरोक्ष्यभावप्रसङ्गात् । बाह्यप्रातिभासिकाध्यासेषु तु 'दुष्टेन्द्रियसम्प्रयोगः कारणम्' इति न तस्य व्यभिचार इति वाच्यम् । प्रातिभासिकाध्यासमात्रे त्वदुक्तलाघवेनाभिव्यक्ताधिष्ठानप्रकाशस्य कारणत्वौचित्यात् । बाह्याध्यासेषु सम्प्रयोगस्याधिष्ठानचैतन्याभिव्यञ्जकवृत्त्युत्पादकतया चारितार्थ्यसम्भवाच्च । पीतशङ्खाद्यध्यासस्थलेऽपि अधिष्ठानचैतन्याभिव्यञ्जकवृत्तिसम्भवस्य दर्शितत्वाच्चेति चेत्, सत्यम् । सूक्ष्मदृष्ट्या विचार्यमाणे एवमेव । स्थूलदृष्ट्या तु सम्प्रयोगस्य लाघवात् प्रातिभासिकाध्यासमात्रे कारणत्वमुक्तमिति मन्तव्यम् । शुक्तिरजताद्यध्यासात् प्रागिदमाकारवृत्तिसिद्धये प्रकारान्तरेण धर्मिज्ञानस्य कारणत्वं शङ्कते—ननु सादृश्येति । अध्यासान्तरे इति ।

सम्प्रयोगमात्रस्य कारणत्वे शुक्तित्वदिङ्गालेऽपि तद्रजताध्यास-प्रसङ्गात् ।

न च सादृश्यमपि विषयदोषत्वेन कारणमिति वाच्यम् । विसदृशेऽपि सादृश्यभ्रमे सत्यध्याससद्भावात् जलधिसलिलपूरे दूरे नीलशिलातलत्वारोप(१)दर्शनात्। न च 'तद्धेतोरेव' इति न्यायात् सादृश्यज्ञानसामग्र्यैवाध्यासकारणमस्त्विति युक्तम् । ज्ञानसा-

---

पीतशङ्खाद्यध्यासे इत्यर्थः । शङ्खादेः पीतरूपादेश्च सादृश्याभावादिति भावः । तत्पदं सादृश्यपरम् । रजतादिना सह शुक्त्यादेस्सादृश्यभूतो यो रूपविशेषादिः, तद्विशिष्टधर्मीत्यर्थः । स्थाण्वादौ पुरुषाद्यध्यासापेक्षितमूर्ध्वत्वादिकमादिशब्दार्थः । सम्प्रयोगमात्रस्येति । सादृश्यानपेक्षायामिति मात्रशब्दार्थः । अग्निदग्धं नीलरूपवत्काष्ठमिङ्गालशब्दार्थः ।

नन्वपेक्षितमपि सादृश्यं स्वरूपसदेवाध्यासकारणं, तावता उक्तातिप्रसङ्गनिरासात्, न ज्ञातं सत् तत् कारणम् । तथा च न धर्मिज्ञानस्य कारणत्वसिद्धिरिति मत्वा शङ्कते—न च सादृश्यमपीति । स्वरूपसत्कारणत्वे सादृश्यभ्रमादध्यासो न स्यात् । सादृश्यभ्रमस्थले स्वरूपसतस्सादृश्यस्याभावात् । अतस्सादृश्यज्ञानं भ्रमप्रमासाधारणमध्यासकारणं वाच्यमिति तद्विशिष्टधर्मिज्ञानसिद्धिरिति धर्मिज्ञानकारणवादी परिहरति—विसदृशेऽपीति । तत्रोदाहरणमाह—जलधिसलिलपूर इति । प्रवाहः पूरशब्दार्थः । जलस्य वस्तुतश्शुक्लरूपवत्त्वान्नीलशिलातलसादृश्यं नास्ति । अतस्सादृश्यभ्रमात् नीलशिलातलत्वारोप इति भावः । ननु धर्मिज्ञानकारणतापक्षेऽपि तत्सामग्रीत्वेन दुष्टेन्द्रियसम्प्रयोगोऽवश्यं वाच्यः । तथा च आवश्यकत्वादध्यासविशेषकारणतावच्छेदकं सादृश्यज्ञानसामग्रीत्वमेव, न तु सादृश्यज्ञानत्वम् । ततश्च न धर्मिज्ञानसिद्धिरित्याशयेन इङ्गाले रजताध्यासप्रसङ्गं विस्मृत्य शङ्कते—न च तद्धेतोरेवेति । 'तद्धेतोरेवास्तु तद्धेतुत्वं, मध्ये किं तेन' इति न्यायादित्यर्थः । धर्मिज्ञानवादी निराकरोति—ज्ञानसामग्र्या इति । धर्मिज्ञानकारणतामते हि धर्मिज्ञानं रजतादिरूपार्थोत्पत्तौ कारणमिष्यते । तथा च 'तद्धेतोरेव' इति न्यायेन धर्मिज्ञानसामग्रीभूतसम्प्रयोगस्य कारणत्व-

---

(१) नीलशिलारोपेति पाठः ।

 

मग्र्या अर्थकारणत्वस्य क्वचिदप्यदृष्टेः । ततस्सादृश्यज्ञानत्वस्यैव लघुत्वाच्च ।

न च स्वतश्शुभ्रेऽपि शुभ्रकलधौतभृङ्गारगतेऽपि स्वच्छे जले एव नैल्याध्यासः, न मुक्ताफले इति व्यवस्थावत् वस्तुस्वभावादेव शुक्तौ रजताध्यासः नेङ्गालादाविति व्यवस्था, न तु सादृश्यज्ञानापेक्षणादिति वाच्यम् । स्वतः पटखण्डे पुण्डरीकमुकुलत्वानध्यासेऽपि तत्रैव कर्तनादि-

---

मुच्यमानं रजताद्यर्थोत्पत्तावेव भवेत् । तच्च न सम्भवति । सन्निकर्षस्य ज्ञाने इव विषयोत्पत्तौ कारणतायाः क्वचिदप्यक्लृप्तत्वादित्यर्थः । तत इति । सादृश्यज्ञानसामग्रीत्वापेक्षया सादृश्यज्ञानत्वस्यैव कारणतावच्छेदकत्वे लाघवादित्यर्थः । तथा च धर्मिज्ञानसिद्धिरिति भावः ।

सादृश्यज्ञानस्याध्यासविशेषे कारणत्वाभावेऽपि व्यवस्थासम्भवात् न धर्मिज्ञानसिद्धिरिति मत्वा पुनः शङ्कते—न च स्वत इति । जलस्य मुक्ताफलस्य च नैल्येन सादृश्याभावे समानेऽपि जले एव नैल्याध्यासो दृश्यते, न मुक्ताफले इति व्यवस्थायां जलादिवस्तुस्वभाव एव हेतुः, नान्य इत्यर्थः । ननु पात्रगतनैल्यसन्निधानं जले तदध्यासे नियामकम्, न स्वभाव इत्यत आह—शुभ्रकलधौतेति । निर्मलसौवर्णपात्रविशेषगतेऽपीत्यर्थः । नन्वेवमपि जलगतनीलरूपवद्द्रव्यसंसर्गात्तत्रैव तदध्यास इति, नेत्याह—स्वतः शुभ्रेऽपीति । जलविशेषणम् । स्वतःशुभ्रपदव्याख्यानं स्वच्छे इति पदम् । एवं क्वचित् स्वभावस्यैवाध्यासप्रयोजकत्वे क्लृप्ते फलितमाह—वस्तुस्वभावादेवेति । उक्ते पीतशङ्खाध्यासे इव भृङ्गादिगतजले नैल्याध्यासे सादृश्यज्ञानानपेक्षत्वेऽपि पुण्डरीकमुकुलत्वाध्यासे तदपेक्षाया अन्वयव्यतिरेकसिद्धत्वेन, तद्वच्छुक्तिरजताद्यध्यासेऽपि सादृश्यज्ञानभावाभावाभ्यामेव व्यवस्था, न तु वस्तुस्वभावात् । अगतिकगतित्वाद्वस्तुस्वभावाश्रयणस्य । तथा च धर्मिज्ञानकारणतासिद्धिरप्रत्यूहेति मत्वा दूषयति—स्वतः पटखण्डे इति । पुण्डरीकस्य कमलस्य या मुकुलत्वावस्था, तस्याः अनध्यासेऽपीत्यर्थः । तत्रैव पटखण्ड एव । कर्तनादिना घटितस्सम्पादितः तदाकारः पुण्डरीकमुकुल-

घटिततदाकारे तदध्यासदर्शनेन तदध्यासस्य वस्तुस्वभावमननुरुध्य सादृश्यज्ञानमात्राभात्रानुरोधित्वनिश्चयात् । अन्यथाऽन्यदाऽपि तत्र तदध्यासप्रसङ्गात् ।

उच्यते—सादृश्यज्ञानस्याध्यासकारणत्ववादेऽपि विशेषदर्शनप्रतिबध्येषु रजताद्यध्यासेष्वेव तस्य कारणत्वं वाच्यम् । न तु तदप्रतिबध्येषु पीतशङ्खाद्यध्यासेषु, असम्भवात् । विशेषदर्शनप्रतिबध्येषु च प्रतिबन्धकज्ञानसामग्र्याः प्रतिबन्धकत्वनियमेन

---

स्वाकारो यस्य पटखण्डस्य, स तथा तस्मिन्नित्यर्थः । तदध्यासेति । पुण्डरीकमुकुलत्वाध्यासेत्यर्थः । तदध्यासस्यानुरोधित्वनिश्चयादिति सम्बन्धः । अन्यथेति । वस्तुस्वभावस्यैव तदध्यासकारणत्वे इत्यर्थः । अन्यदाऽपीति । कर्तनादिना तदाकारसम्पादनात् प्रागपीत्यर्थः ।

'ननु सादृश्यनिरपेक्षेऽध्यासान्तरे अकारणत्वेऽपि' इत्यादिना प्राप्तं सादृश्यज्ञानस्याध्यासविशेषे कारणताप्रसाधनद्वारा धर्मिज्ञानस्य कारणत्वमावश्यकमिति पूर्वपक्षं कवितार्किकमतानुवर्ती निराकरोति—उच्यत इत्यादिना । न त्विति । 'पीतत्वाभावव्याप्यशङ्खत्ववानयम्' 'नैल्याभावव्याप्यजलत्ववदिदम्' इत्यादिरूपविशेषदर्शनाप्रतिबध्येष्वित्यर्थः । उक्तविशेषदर्शने सत्यपि 'पीतः शङ्खः, नीलं जलम्' इत्यध्यासदर्शनादिति भावः । असम्भवादिति । वस्तुतस्सादृश्यस्य तत्रासम्भवात् पुण्डरीकमुकुलत्वभ्रमवत् सादृश्यज्ञानाननुरोधित्वाच्चेत्यर्थः । ततः किं ? तत्राह—विशेषदर्शनप्रतिबध्येषु चेति । प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वे दाहप्रतिबन्धकमण्यादिसामग्र्याः दाहप्रतिबन्धकत्वप्रसङ्गः, तद्वारणाय ज्ञानपदम् । मण्यादेः प्रतिबन्धकज्ञानत्वाभावान्नातिप्रसङ्गः । ज्ञानसामग्र्याः प्रतिबन्धकत्वोक्तौ धर्मिज्ञानसामग्रीभूतसम्प्रयोगस्याध्यासप्रतिबन्धकत्वप्रसङ्गः; तद्वारणाय प्रतिबन्धकेति ज्ञानविशेषणम् । धर्मिज्ञानस्य चाध्यासानुगुणत्वेन प्रतिबन्धकज्ञानत्वाभावात् नोक्तातिप्रसङ्गः । तथा च पक्षे साध्याभाववत्ताज्ञानं ग्राह्याभावावगाहित्वादनुमितिं प्रति साक्षात् प्रतिबन्धकम् । तत्र साध्याभावव्याप्यवत्ताज्ञानं प्रतिबन्धकज्ञानसामग्रीत्वेनानुमितिप्रतिबन्धकमिति व्य-

विशेषदर्शनसामग्र्यप्यवश्यं प्रतिबन्धिका वाच्येति तत एव सर्वव्यवस्थोपपत्तेः किं सादृश्यज्ञानस्य कारणत्वकल्पनया ।

तथाहि—इङ्गालादौ चक्षुःसम्प्रयुक्ते तदीयनैल्यादि-रूपविशेषदर्शनसामग्रीसत्त्वान्न रजताध्यासः । शुक्त्यादावपि नीलभागादिव्यापिचक्षुःसम्प्रयोगे तत्सत्त्वान्न तदध्यासः । सदृशभागमात्रसम्प्रयोगे तदभावादध्यासः । तदाऽपि शुक्तित्वरूपविशेषदर्शनसामग्रीसत्त्वादनध्यासप्रसङ्ग इति चेत्, न । अध्याससमये शुक्तित्वदर्शनाभावेन तत्पूर्वं तत्सामग्र्यभावस्य त्वयाऽपि वाच्यत्वात् ।

---

वस्या प्रसिद्धेरर्थः । तत एवेति । प्रतिबन्धकज्ञानसामग्र्याः प्रतिबन्धकत्वस्वीकारादेवेत्यर्थः । किमिति । तथा च धर्मिज्ञानरूपा इदमाकारा वृत्तिर्न सिध्यतीति भावः ।

सादृश्यज्ञानस्याकारणत्वे पूर्वोक्तातिप्रसङ्गं परिहरति—इङ्गालादाविति । इङ्गालगतनैल्यादिर्विशेषः तद्दर्शनसामग्री च चक्षुस्संयुक्तेङ्गालतादात्म्यरूपाऽत्रास्तीति बोध्यम् । नीलभागादीति । त्रिकोणभागसङ्ग्रहार्थमादिपदम् । तत्सत्त्वादिति । विशेषदर्शनसामग्रीसत्त्वादित्यर्थः । न तदिति । तत्पदं रजतादिपरम् । ननु यदि शुक्तिसंप्रयोगकाले रजताध्यासाभावः, तर्हि सम्प्रयोगोऽप्यध्यासकारणं न स्यादिति, नेत्याह—सदृशभागमात्रेति । तदभावादिति । नैल्यादिदर्शनसामग्र्यभावादित्यर्थः । शङ्कते—तदाऽपीति । सदृशभागमात्रसम्प्रयोगकालेऽपीत्यर्थः । अनध्यासप्रसङ्ग इति । तथा चाध्यासाभावप्रसङ्गपरिहाराय सादृश्यज्ञानं दोषत्वेनाध्यासकारणं वाच्यम् । तत्र उक्तदोषरूपप्रतिबन्धकसत्त्वादप्रतिबद्धा शुक्तित्वदर्शनसामग्री नास्ति, अतो रजताद्यध्यास उपपद्यते इति धर्मिज्ञानकारणवादिनोऽभिसन्धिः । अनध्यासप्रसङ्गं परिहर्तुमुभयसम्मतमर्थं धर्मिज्ञानापलापी दर्शयति—नेत्यादिना । त्वयाऽपीति । सादृश्यज्ञानकारणतावादिनाऽपीत्यर्थः । वाच्यत्वादिति । सदृशभागमात्रसम्प्रयोगकाले शुक्तित्वदर्शनसामग्र्यां चक्षुस्संयुक्ततादात्म्यलक्षणायां सत्यामप्यध्यासदर्शनेन तदनुरोधाच्छुक्तित्वरूप-

मम सादृश्यज्ञानरूपाध्यासकारणदोषेण प्रतिबन्धात् तदा शुक्तित्वदर्शनसामग्र्यभावाभ्युपगमः । तव तथाऽभ्युपगमे तु घट्टकुटीप्रभातवृत्तान्त(१) इति चेद्, न । समीपोपसर्पणानन्तरं रजतसादृश्यरूपे चाकचिक्ये दृश्यमाने एव शुक्तित्वोपलम्भेन तस्य तत्सामग्रीप्रतिबन्धकत्वासिद्धौ दूरत्वादिदोषेण प्रति-

---

विशेषदर्शनसामग्र्याः प्रतिबन्धको दोषोऽवश्यं वाच्य इति तावत् सत्यम् । स च दोषो न सादृश्यज्ञानम्, किं तु दूरत्वादिरेव । अतो दोषत्वेनापि न सादृश्यज्ञानमध्यासकारणमिति न धर्मिज्ञानसिद्धिरिति तदपलापिनोऽभिसन्धिः । धर्मिज्ञानवादी स्वाभिसन्धिमुद्घाटयन् आशङ्कते—ममेति । तवेति । धर्मिज्ञानापलापे प्रवृत्तस्य कविनार्किकमतानुवर्तिन इत्यर्थः । सादृश्यज्ञानस्याध्यासकारणत्वं त्वदनिष्टं दूरंगतस्यापि तव प्रसज्येतेति भावः । धर्मिज्ञानापलापवाद्यपि स्वाभिसन्धिमुद्घाटयन् अनध्यासप्रसङ्गं परिहरति—नेत्यादिना । तस्येति । सादृश्यदर्शनस्येत्यर्थः । तत्सामग्रीति । शुक्तित्वदर्शनसामग्रीत्यर्थः । रजतरागादिदोषसङ्ग्रहार्थमादिपदम् ।

ननु दूरस्थस्यापि पुंसः कदाचिच्छुक्तौ शुक्तिप्रमायाः दर्शनेन दूरत्वस्यापि सादृश्यज्ञानस्येव व्यभिचारस्तुल्यः । तथा रजते रागवतोऽपि समीपोपसर्पणानन्तरं शुक्तिप्रमादर्शनेन तस्यापि व्यभिचारस्तुल्यः । तथा च दूरत्वादेरपि दोषत्वं न स्यात् । यदि च क्वचिदध्यासे कदाचित् कश्चिद् दोष इति रीत्या दूरत्वादेर्दोषत्वेनाध्यासकारणत्वं समर्थ्यते, तदा ज्वालादौ सादृश्यज्ञानरूपेणैव दोषेण 'सेयं दीपज्वाला' इत्यादिभ्रमस्य सर्वानुभवसिद्धतया तस्यापि कदाचिद्रजताध्यासादौ दोषत्वेन कारणत्वं दुर्वारम् । सादृश्यज्ञानस्य दोषत्वं भाष्यसम्मतं च । तथा च देवताधिकरणे ( उ० मी० अ० १ पा० ३ अधि० ९ सू० २८ ) भाष्यम्—'सादृश्यात् प्रत्यभिज्ञानं केशादिष्विव' इति । तथा बौद्धाधिकरणेऽपि ( उ० मी० अ० २ पा० २ ) 'सादृश्यनिमित्तं प्रतिसन्धानम्' इति । प्रतिसन्धानं प्रत्यभिज्ञानम् ।

---

(१) यथा घट्टकुटीस्थेभ्यः करग्राहिभ्यो भीत्या रात्रौ पलायितानां वणिजां दूरे गत्वाऽपि यथा भ्रान्तिवशात् घट्टकुट्यामेव प्रभातोदय इति लोके प्रसिद्धम्, तथा प्रकृतेऽपि सादृश्यज्ञानस्य कारणत्वमनिच्छतोऽपि तवापतितम् ।

बन्धाद्वा व्यञ्जकनीलपृष्ठत्वादिग्राहकासमवधानाद्वा तत्सामग्र्य-भावस्य वक्तव्यत्वात् ।

एवं जलधिजले नियतनीलरूपाध्यासप्रयोजकदोषेण दूरे नीरत्वव्यञ्जकतरङ्गादिग्राहकासमवधानेन च शौक्ल्यजलराशित्वा-

---

तथा च सादृश्यज्ञानस्य दोषत्वेन अध्यासकारणत्वमतनिराकरणमयुक्तमिति चेत् । सत्यम् । तथापि स्थूलबुद्धिमाश्रित्येदमिति ध्येयम् । सहकार्यभावात् सामग्र्यभावमाह—व्यञ्जकेति । शुक्तित्वव्यञ्जकेत्यर्थः । ग्राहकपदं नीलभागव्यापिचक्षुस्सम्प्रयोगपरम् । तत्सामग्रीति । शुक्तित्वविशेषदर्शनसामग्र्यभावस्योभाभ्यां वक्तव्यत्वादित्यर्थः । शुक्तिरजतभ्रमस्थलोक्तन्यायमन्यत्रापि योजयति—एवमिति । सादृश्यज्ञानरूपदोषं विना रजताध्यासवन्नीलशिलातलत्वाद्यध्याससम्भवतीत्यर्थः । जले नीलशिलातलत्वाध्यासे हि शुक्लरूपात्मकविशेषदर्शनं जलराशित्वादिरूपविशेषदर्शनं च प्रतिबन्धकम् । ततश्शुक्लरूपादिदर्शनसामग्र्यपि तत्र प्रतिबन्धिका । तथा च प्रतिबन्धकज्ञानसामग्र्यभावादेव तत्र नीलशिलातलत्वारोपः, न तु प्रथमं जले नैल्याध्यासेन सादृश्यज्ञानसम्पत्तौ सत्यां तद्दोषान्नीलशिलातलत्वाध्यास इत्यर्थः । ननु जलधिसलिलपूरे शुक्लरूपात्मकविशेषदर्शनसामग्र्यभावोऽसिद्धः । नीलशिलातलत्वारोपात् पूर्वकाले चक्षुस्संयुक्ते जले शुक्लरूपस्य तादात्म्याभ्युपगमेन चक्षुस्संयुक्ततादात्म्यरूपसन्निकर्षस्य आलोकादेश्च सत्त्वात् । तथा जलराशित्वादिरूपविशेषदर्शनसामग्र्यभावोऽप्यसिद्धः । जलराशित्वव्यञ्जकतरङ्गादिप्रत्यक्षस्यापि तत्र सत्त्वादित्यत आह—नियतेति । जलधिसलिले दूरे नैल्याध्यासवत् समीपोपसर्पणानन्तरमपि तदध्यासो दृश्यते, अतस्तस्य नियतत्वम् ।

एतदुक्तं भवति—शुक्लरूपात्मकविशेषदर्शनसामग्री नियतनीलरूपाध्यासप्रयोजकदोषेण प्रतिबद्धा । अतस्सा अप्रतिबद्धा नास्ति । दूरत्वदोषाज्जलराशित्वव्यञ्जकतरङ्गादेर्ग्राहकसमवधानं नास्ति । तेन जलराशित्वरूपविशेषदर्शनसामग्री च नास्ति । तथा च द्विविधप्रतिबन्धकज्ञानसामग्र्यभावाज्जलधिसलिले नीलशिलातलत्वाद्यध्यास उपपद्यते इति ।

अत्रेदं बोध्यम्—जलधिसलिलपूरे नीलशिलातलत्वारोपे उक्तविधया विशेषदर्शनसामग्र्यभावस्यापेक्षितत्वेऽपि न तावन्मात्रात् तदध्या-

दिविशेषदर्शनसामग्र्यभावाच्छिला(१)तलत्वाद्यध्यासः। विस्तृते पटे परिणाहरूपविशेषदर्शनसामग्रीसत्त्वाद् न पुण्डरीकमुकुलत्वाध्यासः। कर्तनादिघटिततदाकारे तदभावात्तदध्यास इति।

नन्वेवं करस्पृष्टे लोहशकले तदीयनीलरूपविशेषदर्शनसामग्र्यभावात् रजताध्यासः किं न भवेत् सादृश्यज्ञानानपेक्षणादिति चेद्। भवत्येव। किं तु ता-

सः। किं तु जले नीलरूपाद्यध्यासेन नीलशिलातलसादृश्यसम्पत्त्यनन्तरमेव तदध्यासः। तथा च दूरे नीलशिलातलत्वाध्यासवतां जलधिसलिलपूरसमीपोपसर्पणानन्तरं व्यवहारः—'अस्मिन् जलधिसलिलपूरे मम दूरे नैल्यनैश्चल्यादिसाम्येन नीलशिलातलत्वभ्रम आसीत्, इदानीं स भ्रमो निवृत्तः' इति। एवं 'तत्र तत्र सादृश्यदोषाद् मम पूर्वमन्यथा भ्रम आसीत्, इदानीं स निवृत्तः' इति लोकव्यवहार एव सादृश्यज्ञानस्य दोषत्वेनाध्यासविशेषे कारणत्वसाधको द्रष्टव्य इति सादृश्यज्ञानस्याध्यासकारणताग्राहकान्वयव्यतिरेकोदाहरणान्तरमप्यन्यथयति—विस्तृत इति। परिणाहो विस्तारः, तद्दर्शेन पुण्डरीकमुकुलत्वाध्यासप्रतिबन्धकम्। तत्सामग्रीसत्त्वादित्यर्थः। सादृश्यज्ञानकारणमते हि चक्षुस्सम्प्रयोगस्थले चाक्षुषं सादृश्यज्ञानं धर्मिज्ञानत्वेन दोषत्वेन च रजताद्यध्यासोत्पत्तौ कारणम्। त्वगिन्द्रियसम्प्रयोगस्थले च स्पर्शनं सादृश्यज्ञानमुक्तविधया रजताद्यध्यासोत्पत्तावेव कारणम्।

कवितार्किकमते तु धर्मिज्ञानप्रसङ्गभीत्या सादृश्यज्ञानं कुत्राप्यध्यासे कारणं नाभ्युपेयत इति व्यवस्था। तथा च त्वगिन्द्रियेदमर्थसम्प्रयोगस्थले त्वदभिमताध्यासकारणसत्त्वात् स किं न स्यादिति शङ्कते—नन्वेवमिति। सादृश्यज्ञानं विनाऽपि अध्यासप्रतिबन्धकविशेषदर्शनसामग्र्यभावमात्रेणाध्यासोपगम इत्यर्थः। किं तत्र रजताध्यास आपाद्यते, किं वा रजताध्यास एवापाद्यते?। आद्ये इष्टापत्तिरित्याह—भवत्येवेति। द्वितीयं शङ्कते—किं त्विति। तत्र विशेषदर्शनसामग्र्यभावस्य ताम्राद्यध्याससाधारणत्वाद्रजताध्यास एव स्यादित्यत्रापादकं नास्तीति मत्वा प-

(१) नीलशिलेति पाठः।

म्रादिव्यावर्तकविशेषदर्शनसामग्र्यभावात् तदध्यासेनापि भाव्यमिति क्वचिदनेकाध्यासे संशयगोचरो भवति । क्वचित्तु रजतप्राये कोशगृहादौ रजताध्यास एव भवति । क्वचित् सत्यपि सादृश्यज्ञाने शुक्तिकादौ कदाचित् करणदोषाद्यभावेनाध्यासानुदयवदध्यासानुदयेऽपि न हानिः ।

तस्मान्न कार्यकल्प्या इदमाकारवृत्तिः । नाप्यप्रतिबद्धेदमर्थसम्प्रयोगकारणकल्प्या । ततो भवन्त्या एवेदंवृत्तेर्दुष्टेन्द्रि-

---

रिहरति—ताम्रादीति । रङ्गसुवर्णशकलादिसंग्रहार्थमादिपदम् । क्वचिदिति । करतलस्पृष्टलोहशकलस्थलेऽपि क्वचिदित्यर्थः । गोचर इति । लोहशकलरूपेदमर्थः किमिदं रजतं, किं वा ताम्रं, किं वा सुवर्णादीति संशयविषयो भवतीत्यर्थः । ताम्रादिव्यावर्तकविशेषदर्शनस्थले तु रजताध्यास एव भवतीत्याह—क्वचित्त्विति । यस्मिन् कोशगृहादौ प्रायेण रजतशकलानामेवावस्थानं, तत्र प्रविष्टस्य दैवाद् अयश्शकले करतलस्पृष्टे सति तत्र रजताध्यास एव भवति । रजतकोशगृहमिति बुद्धेस्तस्य सत्त्वादित्यर्थः । ननु क्वचित् करतलस्पृष्टलोहशकले रजताध्यासाभावोऽपि दृश्यते । स च तव मते न सम्भवति । विशेषदर्शनसामग्र्यभावस्य तत्रापि सत्त्वेन रजताध्यासापत्तेरावश्यकत्वात् । मम तु सादृश्यज्ञानरूपकारणाभावात् स न भवतीति वक्तुं शक्यत इत्यत आह—क्वचित् सत्यपीति । समीपोपसर्पणानन्तरं सत्यपि सादृश्यज्ञाने यथा रजताध्यासाभावस्तव मते उपेयते, तथा मन्मतेऽपि क्वचिदध्यासाभावो न दोषावह इत्यर्थः ।

तस्मादिति । कथमपि धर्मिज्ञानस्याध्यासकारणत्वासिद्धेरित्यर्थः । इदमाकारवृत्तिरनुभवसिद्धा वा, कार्यकल्प्या वा, कारणकल्प्या वेति, विकल्पत्रये प्रथमद्वितीयौ निरस्य तृतीयं निराकरोति—नाप्यप्रतिबद्धेति । इदमर्थगोचरज्ञानानुदयादप्रतिबद्धेति विशेषणम् । यथोक्तसम्प्रयोगवशाज्जायमाना वृत्तिर्भ्रान्तिरूपैव जायते, न तु भ्रान्तेः प्राचीना इदमर्थमात्रगोचरा प्रमारूपा, तत्र मानाभावादित्याशयेनाह—तत इति । इदमर्थावच्छिन्नचैतन्ये विद्यमाना रजतपरिणामिन्यविद्या दुष्टेन्द्रियसम्प्रयोगरूपादध्यासनिमित्तकारणभूतात् क्षोभं कार्याभिमुख्यं प्राप्नोति । उत्तरक्षणे च रजतरूपे-

यसम्प्रयोगक्षुभिताविद्यापरिणामभूतस्वसमानकालरजतविषयत्व- स्यास्माभिरुच्यमानत्वात् । तत्र च ज्ञानसमानकालोत्पत्तिके प्रतिभासमात्रविपरिवर्तिनि रजते तत्प्राचीनसम्प्रयोगाभावेऽपि तत्तादात्म्याश्रयेदमर्थसम्प्रयोगादेव तस्यापि चक्षुर्ग्राह्यत्वोपपत्तेः । 'चक्षुषा रजतं पश्यामि' इति प्रातिभासिकरजतस्य स्वसम्प्रयोगाभावेऽपि चाक्षुषत्वानुभवात् ।

न च स्वसम्प्रयोगाभावादेव बाधकाच्च तच्चाक्षुषम्,

---

ण परिणमते । दुष्टेन्द्रियसंप्रयोगाद्वृत्तिरपि तथैव जायते । तथा चाप्रतिबद्धाद् दुष्टेन्द्रियसम्प्रयोगाद्भवन्तीदमर्थगोचरवृत्तिः स्वकालोत्पन्नरजतविशिष्टेदमर्थं विषयीकरोतीत्यर्थः । स्वपदं वृत्तिपरम् । धर्मिज्ञानपक्षे इदमाकारवृत्तिरविद्याक्षोभिका, तदभावपक्षे धर्मिज्ञानहेतुसम्प्रयोगोऽविद्याक्षोभक इति विभाग इति स्थिते, तत्रान्त्यपक्षो न युक्तः । इदमर्थसम्प्रयोगस्य इदमाकारवृत्ताविव रजतगोचरवृत्तावहेतुत्वात् । ज्ञानसमकालोत्पन्नरजतस्य ज्ञानात् पूर्वं चक्षुस्सन्निकर्षाभावाच्च । तथा च रजतगोचरवृत्तौ सामग्र्यभाव एव इदंवृत्तेर्धर्मिमात्रगोचरतां व्यवस्थापयतीत्याशङ्क्याह—तत्र चेति । भ्रमस्थले इत्यर्थः । प्रतिभासकालमात्रे विपरिवर्तनं सत्ता यस्य तत् प्रतिभासमात्रविपरिवर्ति तस्मिन् प्रतीतिव्याप्यसत्ताके इति यावत् । इदमर्थसम्प्रयोगस्य रजतगोचरवृत्त्युत्पत्तावपि हेतुत्वं सम्भवति । न चान्यसम्प्रयोगादन्यगोचरवृत्त्युपगमे घटेन्द्रियसम्प्रयोगात् पटगोचरवृत्त्यापत्तिरिति वाच्यम् । स्वगोचरवृत्तौ स्वस्य स्वतादात्म्याश्रयस्य वा इन्द्रियेण सह सम्प्रयोगः कारणमिति कल्पनात् । तावता उक्तातिप्रसङ्गपरिहारोपपत्तेरित्याशयेनाह—तत्प्राचीनेति । रजतप्रतिभासात् प्राचीनेत्यर्थः । तत्तादात्म्येति । रजतस्येदमर्थे कल्पितत्वाद्रजततादात्म्याश्रयत्वमिदमर्थस्य । पटतादात्म्याश्रयत्वं तु न घटेऽस्ति, पटस्य तत्रानध्यस्तत्वादिति भावः । चक्षुस्सम्प्रयोगानाश्रयस्यापि रजतस्य चाक्षुषवृत्तिविषयत्वकल्पने हेतुमाह—चक्षुषेति ।

धर्मिज्ञानवादी चाक्षुषत्वानुभवस्यान्यथासिद्धिं वदन् धर्मीन्द्रियसम्प्रयोगजन्या वृत्तिर्धर्मिमात्रगोचरेत्याशयेन शङ्कते—न चेति । तद् रजतमिदंवृत्तिसमकालं सद् दुष्टेन्द्रियसम्प्रयोगजन्यमपि न भवतीत्यत्र

 

नापि दुष्टेन्द्रियसम्प्रयोगजन्यम् इदंवृत्तिसमकालम्, ज्ञानकारणस्येन्द्रियसम्प्रयोगस्यार्थकारणत्वाक्लृप्तेः । किंत्विदंवृत्त्यनन्तरभावि तज्जन्यं तदभिव्यक्ते साक्षिण्यध्यासात् तद्भास्यम् । चाक्षुषत्वानुभवस्तु स्वभासकचैतन्याभिव्यञ्जकेदं-

---

हेतुमाह—ज्ञानकारणस्येति । तथा च प्रातिभासिकस्य रजतस्य ऐन्द्रियकत्वपक्षे अन्यसम्प्रयोगस्यान्यगोचरवृत्तिजनकत्वमेकं कल्पनीयम्, तथा ज्ञानकारणस्य सन्निकर्षस्य रजताद्यर्थोत्पत्तौ कारणत्वमपरं कल्पनीयमिति गौरवमिति भावः । यदि सम्प्रयोगो न रजताद्यर्थे कारणम्, तर्हि किं तत्र कारणम् । अविद्यामात्रस्य सदा सत्त्वेन रजताद्यध्यासस्य कादाचित्कत्वप्रतीतस्य प्रयोजकत्वानुपपत्तेरिति शङ्कते—किं त्विति । उत्तरमाह—इदंवृत्त्यनन्तरभावीति । इन्द्रियसम्प्रयोगादिदमर्थमात्रगोचरा वृत्तिरुदेति । तया चाध्यासं प्रति निमित्तकारणभूतया क्षुब्धा सती अविद्या रजताकारेण परिणमते । रजतस्य च इदमाकारवृत्त्यभिव्यक्तमिदमर्थावच्छिन्नचैतन्यमधिष्ठानम् । तथा च रजतं स्वगोचरवृत्तिं विनैव चैतन्यभास्यमहङ्कारादिवदित्यर्थः । 'तज्जन्यम्'इत्यत्र 'तदभिव्यक्ते'इत्यत्र च तत्पदमिदंवृत्तिपरम् । तद्वृत्तेश्च कादाचित्कत्वात् रजताद्यध्यासस्य कादाचित्कत्वमिति भावः । तद्भास्यमिति । साक्षिभास्यमित्यर्थः । न च बाह्यचैतन्यावभास्यस्य शुक्तिरूप्यादेरहङ्कारादिवत् कथं साक्षिभास्यत्वमिति वाच्यम् । स्वगोचरज्ञानरूपवृत्त्यनुपहितचैतन्यभास्यस्यैव साक्षिभास्यशब्दार्थत्वात् । तथा च यथा अविद्याहङ्कारतद्धर्माणामवभासकचैतन्यमविद्यादिगोचरमज्ञानात्मकवृत्त्या उपहितं न भवति । एवं शुक्तिरजतादिभासकचैतन्यमपि शुक्तिरजतादिगोचरज्ञानात्मकवृत्त्युपहितं न भवतीति तस्य साक्षिभास्यत्वमुक्तमिति मन्तव्यम् । ननु शुक्तिरजतस्य साक्षिभास्यत्वे चाक्षुषत्वानुभवविरोध इति नेत्याह—चाक्षुषत्वानुभवस्त्विति । स्वं शुक्तिरजतम्, तद्भासकस्य इदमंशावच्छिन्नचैतन्यस्याभिव्यञ्जिकामिदंवृत्तिं प्रति चक्षुषो जनकत्वेन शुक्तिरजतस्य चक्षुरपेक्षा वर्तते । सा चापेक्षा परम्परयैव, स्वाधिष्ठानगोचरवृत्त्यर्थमपेक्षितत्वात्, न तु साक्षात् । स्वगोचरवृत्त्यर्थमनपेक्षितत्वात् । यथाकथञ्चिच्चक्षुरपेक्षामात्रेण तत्र चाक्षुषत्वानुभव उपपद्यत एवेत्यक्षरार्थः ।

वृत्तिजनकत्वेन परम्परया चक्षुरपेक्षामात्रेणेति वाच्यम् । तथा-सति पीतशङ्खभ्रमे चक्षुरनपेक्षाप्रसङ्गात् । न हि तत्र शङ्खग्र-हणे चक्षुरपेक्षा । रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वायोगात् । नापि पीतिमग्रहणे, आरोप्ये (१)ऐन्द्रियकत्वानभ्युपगमात् ।

नच पीतिमा स्वरूपतो नाध्यस्यते, किं तु नयनगतपित्तपीतिम्नो-

---

ननु 'चक्षुषा रजतं पश्यामि' इत्यनुभवो हि रजते चाक्षुषवृत्तिविषयत्वमवगाहते, न तु शुक्तिरजतगतं चाक्षुषवृत्त्यभिव्यक्तचैतन्यविषयत्वमिति वस्तुगतिः । तथा च परम्परया चक्षुरपेक्षामात्रेणेतिग्रन्थेन चाक्षुषत्वानुभवस्य चाक्षुषवृत्त्यभिव्यक्तचैतन्यविषयत्वं रजतगतं विषय इति तदनुभवस्य गतिः कल्पितेति प्रतिभाति, तदयुक्तम् । शब्दवदनुभवस्य व्याख्यानानर्हत्वादिति चेत्, न । वस्तुत इदमर्थगतस्येदंत्वस्य तत्रानुभूयमानस्य यथा शुक्तिरजते संसर्गारोपः, तथा इदमर्थगतस्य तत्रानुभूयमानस्य चाक्षुषत्वस्य शुक्तिरजते संसर्गारोप इत्यस्यार्थस्य प्रकृते विवक्षितत्वात् । तथा च स्वस्मिन्नारोपणीयं यच्चाक्षुषवृत्तिविषयत्वमिदमर्थगतम्, तल्लाभाय शुक्तिरजतस्य चक्षुरपेक्षा वर्तते इत्ययमर्थः 'परम्परया चक्षुरपेक्षामात्रेण'इतिग्रन्थस्य द्रष्टव्य इति न कश्चिद्दोषः ।

प्रातिभासिकरजतादेस्साक्षिभास्यत्वमेव, न त्वैन्द्रियकत्वमिति मतं दूषयति—तथासतीति । अधिष्ठानस्यैन्द्रियकत्वलाभायैवेन्द्रियापेक्षा, न त्वारोप्यस्य तदर्थमिन्द्रियापेक्षेत्युपगमे सतीत्यर्थः । न हीति । इदं चापाततः । पीतशङ्खभ्रमादिस्थलेऽपि अध्यासप्राचीनधर्मिगोचरचाक्षुषवृत्तेः प्रागुपपादितत्वादिति मन्तव्यम् । नापि पीतिमग्रहण इति । चक्षुरपेक्षेत्यनुषङ्गः ।

रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वयोगमुपेत्यारोपितस्य साक्षिभास्यत्ववादी शङ्कते—न च पीतिमेति । पीतरूपमित्यर्थः । यथा शुक्तौ रजतं स्वरूपेणाध्यस्यते, तथा शङ्खे पीतरूपं नाध्यस्यते इत्यर्थः । नयनगतं यत् पित्तं पीतरूपयुक्तद्रव्यविशेषः, तस्य यः पीतिमा तस्य पित्तद्रव्य एवानुभूयमानस्य शङ्खे संसर्ग एवाध्यस्यते । यथा कुसुमादावनुभूयमानस्य लौहित्यस्य स्फटिकमण्यादौ संसर्गाध्यासः, तद्वत् । न चान्यगतस्यान्यत्रारोपाभ्युपगमे अन्यथाख्यातिप्रसङ्ग इति

---

(१) आरोप्यस्येति पाठः ।

ऽनुभूयमानस्य शङ्खसंसर्गमात्रमध्यस्यत इति पीतिमाऽनुभवार्थमेव चक्षुरपेक्षेति वाच्यम्। तथा सति शङ्खतत्संसर्गयोरप्रत्यक्षत्वप्रसङ्गात्। नयनप्रदेशगतपित्तपीतिमाऽऽकारवृत्त्यभिव्यक्तसाक्ष्यसंसर्गेण तयोस्तद्भास्यत्वाभावात्। पीतिमसंसृष्टशङ्खगोचरैकवृत्त्यनभ्युपगमाच्च।

नच नयनप्रदेशस्थितस्य पित्तपीतिम्नो दोषाच्छङ्खे संसर्गाध्यासो नोपेयते, किं तु नयनरश्मिभिः सह निर्गतस्य विषयव्यापिनस्तस्य तत्र संसर्गाध्यासः। कुसुम्भारुणित(१) इव कौसुम्भ इति सम्भव-

वाच्यम् ।अध्यस्यमानसंसर्गस्यानिर्वचनीयस्योत्पत्त्यभ्युपगमेनान्यथाख्यातिवैलक्षण्यसत्त्वादिति भावः। पीतिमाऽनुभवार्थमिति। शङ्खे पीतरूपसंसर्गाध्यासात् प्राचीनो यः पित्तद्रव्ये पीतरूपानुभवः, तदर्थमित्यर्थः। तत्र किं नयनप्रदेशगते एव पित्तद्रव्ये पीतिमाऽनुभवः, किं वा शङ्खदेशं प्राप्य तत्रस्थे पित्तद्रव्ये पीतमाऽनुभवः?। आद्यं दूषयति—तथासतीति। नयनगते एव पित्तद्रव्ये पीतरूपानुभवाङ्गीकारे इत्यर्थः। शङ्खतत्संसर्गयोरिति। शङ्खस्य शङ्खपीतयोस्संसर्गस्य चेत्यर्थः। शङ्खतत्संसर्गयोर्भानं किं पित्तपीतिमगोचरवृत्त्यभिव्यक्तेन साक्षिणा, किं वा पीतिमसंसृष्टशङ्खगोचरवृत्त्यभिव्यक्तेन साक्षिणा?। नाद्य इत्याह—नयनप्रदेशेति। नयनप्रदेशगतपित्तपीतिमाऽऽकारवृत्त्या तत्प्रदेशस्थं पीतिमाऽवच्छिन्नचैतन्यमभिव्यज्यते। तेन चाभिव्यक्तचैतन्यलक्षणसाक्षिणा सह शङ्खस्य शङ्खे समारोपितपीतरूपसंसर्गस्य चासम्बन्धाच्छङ्खतत्संसर्गयोरापरोक्ष्यं न स्यादित्यर्थः। न द्वितीय इत्याह—पीतिमसंसृष्टेति। अनभ्युपगमाच्चेति। साक्षिभास्यत्वाभावादिनेति शेषः।

शङ्खदेशं प्राप्ते पित्तद्रव्ये पीतिमाऽनुभव इति द्वितीयं शङ्कते—न चेति। विषयव्यापिनस्तस्येति। शङ्खरूपमधिष्ठानं व्याप्तस्य पित्तद्रव्यस्येत्यर्थः। तथा च पित्तपीतिमाऽऽकारवृत्त्या शङ्खदेशस्थस्यैव चैतन्यस्याभिव्यक्त्या शङ्खतत्संसर्गयोरापरोक्ष्यं सम्भवतीति भावः। कुसुम्भं रक्तद्रव्यविशेषः। तद्व्याप्ते पटे यथा कुसुम्भे अनुभूयमानस्य रक्तरूपस्य संसर्गारोपः, तथेत्यर्थः। नयनगतपित्तद्रव्यस्य नयने सर्वैरनुभूयमानस्य नयनरश्मिद्वारा निर्गत्य शङ्खव्यापित्वोपगमे बाधकमाह—

(१) कुसुम्भारुणिम्न इति पाठः।

ति तदाकारवृत्त्यभिव्यक्तसाक्षिसंसर्ग इति वाच्यम्। तथासति सुवर्णलिप्त इव पित्तोपहतनयनेन वीक्ष्यमाणे शङ्खे तदितरेषामपि पीतिमधीप्रसङ्गात्।

न च स पीतिमा समीपे गृहीत एव दूरे ग्रहीतुं शक्यः। विहायसि उपर्युत्पतन्विहङ्गम इव इतरेषां च समीपे न ग्रहणमिति वाच्यम्। इतरेषामपि तच्चक्षुर्निकटन्यस्तचक्षुषां पीतिमसामीप्यसत्त्वेन तद्ग्रहणस्य दुर्वारत्वात्। एवमप्यतिधवलसिकतामयतलप्रवहदच्छनदीजले नैल्याध्यासे गगननैल्याध्यासे च रक्तवस्त्रेषु निशि चन्द्रिकायां नैल्याध्यासे चानुभूयमानारोपस्य वक्तुमशक्यत्वेन तत्र नैल्यसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनभ्युप-

---

तथासतीति। पित्तोपहतनयनः पुरुषः यदा शङ्खं पश्यति, तदा तदितरेषामपि 'पीतश्शङ्खः' इत्यनुभवप्रसङ्गादित्यर्थः। ननु पित्तद्रव्यस्य नयनप्रदेशाद्विषयदेशं प्रति गमनावसरे यथा पित्तोपहतनयनेन नयनदेशमारभ्य विषयव्याप्तिपर्यन्तं पीतिमा गृह्यते, तथाऽन्यैरपि नयनसमीपे मध्ये च पीतिमा गृहीतश्चेच्छङ्खदेशेऽपि ग्रहीतुं शक्यते, नान्यथेत्यत्र दृष्टान्तमाह—विहायसीति। यथा विहङ्गमः पक्षी गगने उत्पतनावसरे भूप्रदेशमारभ्य येन पुंसा गृह्यते, तेनैव गगनोपरिभागे दूरं गतोऽपि गृह्यते नान्यैः, तथा प्रकृतेऽपीत्यर्थः। दृष्टान्तवैषम्यमाह—इतरेषामपीति। दृष्टान्ते हि गगनोपरिभागे दूरे विहङ्गमं पश्यन् कश्चिदन्यं प्रत्युपदिशति—'मम चक्षुर्निकटे त्वच्चक्षुर्न्यस्तं चेत्, त्वयाऽपि स विहङ्गमो द्रष्टुं शक्यते' इति। स चान्यस्तथा कृत्वा तं पश्यति, न तथा प्रकृते सम्भवतीत्यर्थः। अस्तु वा अनुभूयमानारोपस्थले कथंचिच्चक्षुरपेक्षा, स्मर्यमाणनैल्याद्यध्यासस्थलेषु तु तदपेक्षा सर्वात्मना वक्तुमशक्येत्याह—एवमपीति। जलाधारभूभागे वा जलमिश्रितद्रव्यविशेषे वा यदि नीलरूपमस्ति, तदा तत्रैवानुभूयमाननैल्यस्य जले अध्यास इति शङ्का भवेत्, तन्निवृत्तये सिकतामयतलस्यातिधवलत्वं नदीजलस्य चाच्छत्वं विशेषणमुपात्तम्। अच्छत्वं निर्मलत्वं, निशि रात्रौ। चन्द्रिकायामित्यस्यापि पूर्वो-

गमे चक्षुरनुपयोगस्य दुष्परिहरत्वाच्च।

'अनास्वादिततिक्तरसस्य बालस्य मधुरे तिक्तताऽवभासो जन्मान्तरानुभवजन्यसंस्कारहेतुकः' इति प्रतिपादयता पञ्चपादिकाग्रन्थेन स्वरूपतोऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियकत्वस्फुटीकरणाच्च। अन्यथा तत्र रसनाव्यापारापेक्षाऽनुपपत्तेः।

---

क्तमेव प्रयोजनं द्रष्टव्यम्। दुष्परिहरत्वाच्चेति। अत्र पीतशङ्खजलनैल्याद्यध्यासेषु आरोप्यपीतिमनैल्यादिसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनुपगमेऽपि चक्षुरनुपयोगो न दुष्परिहरः। शङ्खादिधर्मिमात्रगोचरचाक्षुषवृत्तिसम्भवस्य प्राग्दर्शितत्वादिति मन्तव्यम्।

आरोप्यस्यैन्द्रियजन्यवृत्तिविषयत्वे सम्मतिमाह—अनास्वादितेति। अस्मिन् जन्मनि अनास्वादितः रसनेन्द्रियेणाननुभूतस्तिक्तरसो येन बालेन, स तथा, तस्येत्यर्थः। मधुरे स्तन्यादौ तिक्तताऽवभासः तिक्ततासाक्षात्कारः। स च जन्मान्तरीयतिक्तरसानुभवजन्यसंस्कारजन्यः। आरोपे आरोप्यसजातीयपूर्वानुभवजन्यसंस्कारस्य कारणत्वादित्यक्षरार्थः।

अत्र ग्रन्थे तिक्तताऽवभासस्य संस्कारसहकृतरसनेन्द्रियजन्यत्वं भाति। तस्य संस्कारमात्रजन्यत्वे स्मृतित्वप्रसङ्गात्। तथा च तिक्तताऽध्यासाधिष्ठानस्य मधुरद्रव्यस्य रसनेन्द्रियायोग्यतया परिशेषात् स्वरूपतोऽध्यस्यमानस्य तिक्तरसस्यैव रसनेन्द्रियजन्यवृत्तिविषयत्वं स्पष्टीकृतमिति भवति समारोप्यस्यैन्द्रियकत्वे सम्मतिरयं ग्रन्थ इति भावः।

अन्यथेति। आरोप्यतिक्तरसस्य ऐन्द्रियकत्वानुपगमे तत्र बालस्य तिक्तताऽवभासस्थले रसनेन्द्रियव्यापारो न स्यात्, मधुरद्रव्यस्य तदयोग्यत्वादित्यर्थः।

वस्तुतस्तु—तिक्तताऽवभास इत्यत्र तिक्ततापदावभासपदयोः कर्मधारयः। अवभासपदं चावभास्यत इति व्युत्पत्त्या अध्यस्यमानतिक्तरसपरम्। पञ्चपादिकायामेवावभासपदस्यावभास्यमानतापदेन तथा व्याख्यातत्वात्। जन्मान्तरीयसंस्कारोऽपि अध्यस्यमानतिक्तरसोत्पत्तौ हेतुः। प्रातिभासिकाध्यासस्थलेषु दोषसंस्काराधिष्ठानसामान्यज्ञानरूपकारणत्रयस्याध्यस्यमानपदार्थोत्पत्तावेव

तस्मादुदाहृतनैल्याध्यासस्थलेष्वधिष्ठानसम्प्रयोगादेव तद्गोचरचाक्षुषवृत्तिसमकालोदयोऽध्यासः तस्या वृत्तेर्विषय इति तस्य चाक्षुषत्वमभ्युपगन्तव्यम् । रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे च विषयचैतन्याभिव्यक्त्यभावेन जलतदध्यस्त-

---

कारणतायाः टीकाविवरणादिष्वेव स्पष्टत्वात् । तथा च कथमनेन ग्रन्थेन स्वरूपतोऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियकत्वस्पष्टीकरणम् ? । न च तिक्तरसस्यैन्द्रियकत्वाभावे रसनव्यापारापेक्षाऽनुपपत्तिरिति वाच्यम् । बालस्यान्येषां वा तिक्तरसाध्यासकाले रसनेन्द्रियव्यापारसत्त्वे मानाभावात् । न च तथासति तिक्तताऽनवभासप्रसङ्ग इति वाच्यम् । त्वगिन्द्रियजन्यमधुरद्रव्यगोचरवृत्त्याऽभिव्यक्ते मधुरद्रव्यावच्छिन्नचैतन्ये तिक्तताऽध्यासाङ्गीकारेण तिक्ततायास्स्वगोचरवृत्तिं विनैव स्वाधिष्ठानचैतन्यभास्यत्वसम्भवात् ।

अस्तु वा तिक्तताऽध्यासस्थले रसनेन्द्रियापेक्षा । तथाऽपि नाध्यस्यमानतिक्तरसस्यैन्द्रियकत्वसिद्धिः । अध्यस्यमानतिक्ततां प्रति मधुरद्रव्यनिष्ठमधुररसस्याधिष्ठानत्वसम्भवेन तदधिष्ठानभूतमधुररसग्रहणे तदपेक्षोपपत्तेः । पञ्चपादिकागतमधुरपदस्य मधुररससाधारणत्वेन तद्विरोधाभावाच्च । न च मधुररसग्रहणे तिक्तताऽध्यासानुपपत्तिरिति वाच्यम् । रसग्रहणेऽपि दोषविशेषेण मधुररसत्वजातिसाक्षात्कारप्रतिबन्धे सति तत्तदध्यासोपपत्तेः । तस्मादारोप्यस्य साक्षिमात्रभास्यत्वं पूर्वाचार्याणां सार्वत्रिकव्यवहारसिद्धं निरपवादमिति मन्तव्यम् ।

इतः परं कवितार्किकमतानुसारेण यत् पञ्चपादिकाग्रन्थव्याख्यानं कृतं, तदेवानुवर्त्यते । तस्मादिति । अध्यस्यमानपदार्थस्य साक्षिभास्यत्वमते पीतशङ्खाद्यध्यासेषु चक्षुरनुपयोगस्य दुष्परिहरत्वादित्यर्थः । तद्गोचरेति । अधिष्ठानगोचरेत्यर्थः । वृत्तिसमकालमुदयो यस्याध्यासस्य पीतरूपादेः, स तथेत्यर्थः । अधिष्ठानसम्प्रयोगजन्याया वृत्तेरारोपितरूपादिविशिष्टशङ्खादिविषयकत्वानङ्गीकारे आरोपितरूपादेरनवभासप्रसङ्ग इत्यर्थः । रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे चेति । आरोप्यपीतिमनैल्यादिसंसृष्टशङ्खादिगोचरवृत्त्यनभ्युपगमे चेति चकारार्थः । तत्पदं चैतन्यपरम् । पञ्चपादिकाग्रन्थोक्तं तिक्तरसस्य अध्यस्यमानस्यैन्द्रियकत्वं चाक्षुषाध्यासस्थल इव अधिष्ठानारोप्ययोरेकवृत्तिविषयत्वेन न भवति, किं तु

नैल्यादीना तद्भास्यत्वायोगात् । तिक्तरसाध्यासस्थले त्वधिष्ठानाध्यासयोरेकेन्द्रियग्राह्यत्वाभावात् त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्या तदवच्छिन्नचैतन्याभिव्यक्तौ पित्तोपहतरसनसम्प्रयोगादेव तत्र तिक्तरसाध्यासः तन्मात्रविषयरासनवृत्तिश्च समकालमुदेतीति तिक्तरसस्य रासनत्वमप्यभ्युपगन्तव्यम् । त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्यभिव्यक्तचैतन्यभास्ये तिक्तरसे परम्परयाऽपि रसनोपयोगाभावेन तत्र कथमपि प्रकारान्तरेण रासनत्वानुभवसमर्थनासम्भवात् । तथैव रजतस्यापि चाक्षुषत्वोपपत्तेः 'पश्यामि' इत्यनुभवो न बाधनीयः । न चासम्प्रयुक्तस्य रजतस्य

---

तिक्तरसमात्रगोचररासनवृत्त्येत्युपपादयति—तिक्तरसाध्यासस्थले त्विति । तदवच्छिन्नेति । मधुरादिद्रव्यरूपाधिष्ठानावच्छिन्नेत्यर्थः । पित्ताख्यदोषेण उपहतं यद्रसनम्, तेन सह मधुरद्रव्यरूपाधिष्ठानस्य सम्प्रयोगात् तत्राधिष्ठानावच्छिन्नचैतन्ये तिक्तरसाध्यास उदेति, तदैवाध्यस्यमानतिक्तरसमात्रगोचररासनवृत्तिश्च उदेतीत्यर्थः । ननु तिक्तरसाध्यासस्य मास्तु रासनत्वं, तिक्तरसभानं तु केवलसाक्षिरूपमिति मतमेव कुतो नाद्रियते ? तत्राह—त्वगिन्द्रियेति । चैतन्यभास्ये तिक्तरस इति । अभ्युपगम्यमाने इति शेषः । परम्परयाऽपीति । रजताद्यध्यासस्थल इव धर्मिमात्रगोचरवृत्त्युत्पादनद्वाराऽपीत्यर्थः । धर्मिणो मधुरद्रव्यादेः रसनेन्द्रियायोग्यत्वादिति भावः । तत्र तिक्ततारूपे अध्यासे । कथमपीत्यस्य व्याख्या—प्रकारान्तरेणेति । यद्यपि स्वप्नकाले केवलसाक्षिभास्येषु रसरूपादिषु रासनत्वचाक्षुषत्वाद्यनुभवस्यारोपरूपताया वक्ष्यमाणत्वेन प्रकृतेऽपि तथा समर्थनं सम्भवति । स्वप्नपदार्थानामिव प्रातिभासिकतिक्तरसादेरपीन्द्रियासन्निकृष्टत्वेन सामग्र्यभावस्य तुल्यत्वात् । तथाऽपि तं प्रकारमजानता तत्र कथमपीत्याद्युक्तमिति ध्येयम् । तथैवेति । यथा रासनवृत्तिविषयत्वमादाय रासनत्वानुभवस्समर्थितः, तथा चाक्षुषवृत्तिविषयत्वमादायैव चाक्षुषत्वानुभवसमर्थनसम्भवे तदनुभवस्यारोपरूपत्वकल्पनमयुक्तमित्यर्थः । न बाधनीय इत्ययुक्तम्, बाधके सति तद्बाधस्यावश्यकत्वादिति मत्वा शङ्कते—न चेति ।

चाक्षुषत्वे 'प्रत्यक्षमात्रे विषयेन्द्रियसन्निकर्षः कारणम्,' 'द्रव्यप्रत्यक्षे तत्संयोगः कारणम्,' 'रजतप्रत्यक्षे रजतसंयोगः कारणम्' इति गृहीतानेककार्यकारणभावनियमभङ्गः स्यादिति वाच्यम् । सन्निकर्षत्वस्य संयोगाद्यनुगतस्यैकस्याभावेन आद्यनियमासिद्धेः । द्वितीयनियमस्य नैयायिकरीत्या तमसीव संयोगायोग्ये क्वचिद्द्रव्येऽपि द्रव्यत्वाध्याससम्भवाद् व्यवहारदृष्ट्या यद् द्रव्यत्वाधिकरणं

---

शङ्कितं बाधकं परिहरति—सन्निकर्षत्वस्येत्यादिना । आद्यनियमासिद्धेरिति । 'जन्यप्रत्यक्षमात्रे इन्द्रियसन्निकर्षः कारणम्' इति नियमासिद्धेरित्यर्थः । जन्यपदं नित्यसाक्षिरूपे प्रत्यक्षे व्यभिचारवारणार्थम् । शाब्दापरोक्षमते शाब्दभिन्नत्वमपि प्रत्यक्षे विशेषणं द्रष्टव्यम् ।

अत्रेदं बोध्यम्—संयोगाद्यन्यतमत्वमनुगतमस्ति, न्यायमते अभावत्वादिवदखण्डोपाधिरूपं वा सन्निकर्षत्वं सम्भवतीत्याद्यनियमविरोधो दुर्वार इति।

आद्यनियमस्यासिद्धिमुक्त्वा 'जन्यद्रव्यप्रत्यक्षे इन्द्रियसंयोगः कारणम्' इति द्वितीयनियममुपेत्य प्रकृते तस्याविरोधमाह—द्वितीयनियमस्येति । द्वितीयनियमस्य व्यवहारदृष्ट्या यद् द्रव्यत्वाधिकरणं तद्विषयत्वेन द्वितीयनियमाविरोधादिति सम्बन्धः । नियमस्य व्यावहारिकद्रव्यविषयत्वकल्पनायां नियामकमाह—संयोगायोग्ये क्वचिदिति । एकत्वद्वित्वादावित्यर्थः । 'एकत्वमेकम्' इत्यादिप्रकारेण तत्रापि सङ्ख्याश्रयत्वभ्रमेण द्रव्यत्वाध्याससम्भवादित्यर्थः । तथा च द्रव्यप्रत्यक्षमात्रे इन्द्रियसंयोगस्य कारणत्वनियमस्य एकत्वादौ द्रव्यत्वाध्यासकाले तत्प्रत्यक्षे व्यभिचार इत्यर्थः । अद्रव्ये द्रव्यत्वारोपे दृष्टान्तमाह—तमसीवेति । सिद्धान्ते तस्य द्रव्यत्वाभ्युपगमादाह—नैयायिकरीत्येति । 'प्रौढालोकाभावस्तमः' इति नैयायिकैरुक्तरीत्येत्यर्थः । 'गुणाश्रयत्वं द्रव्यलक्षणम्' इति जानतां तमसि रूपवत्त्वभ्रमेण द्रव्यत्वभ्रमस्सम्भवतीत्यर्थः ।

ननु शुक्तिरजतादौ घटादाविव स्वभावत एव द्रव्यत्वमस्ति । अन्यथा रजतत्वादिजातिरपि तत्र न स्यात् । न चेष्टापत्तिः । उत्तरत्र तत्र रजतत्वादिजातेस्साधयिष्यमाणत्वात् । ततश्च शुक्तिरजतादिकमपि व्यवहारदृष्ट्या द्रव्यत्वाधिकरणं भवति । व्य-

 

तद्विषयत्वेन प्रातिभासिकरजते द्रव्यत्वस्याधिष्ठानगतस्यैवेदंत्वव-द्ध्यासात् प्रतीत्यभ्युपगमेन च द्वितीयनियमाविरोधात् । द्वितीयनियमरूपसामान्यकार्यकारणभावातिरेकेण विशिष्यापि कार्यकारणभावकल्पनाया गौरवपराहतत्वेन तृतीयनियमासिद्धेः । 'यत्सामान्ये यत्सामान्यं हेतुः, तद्विशेषे तद्विशेषो हेतुः' इति न्यायस्यापि यत्र बीजाङ्कुरादौ सामान्यकार्यकारणभावाभ्युपगमे(१) बीजान्तरादङ्कुरान्तरोत्पत्त्यादिप्रसङ्गः, तद्विषयत्वेन ततोऽजागलस्तनायमानविशेषकार्यकारणभावासिद्धेः ।

न चात्रापि 'द्रव्यप्रत्यक्षे द्रव्यसंयोगः कारणम्' इति सामान्यनियममात्रोपगमे अन्यसंयोगादन्यद्रव्यप्रत्यक्षापत्तिरिति

---

वहारदशायां शुक्तौ रजतबाधवच्छुक्तिरजते द्रव्यत्वरजतत्वादिजातिबाधादर्शनात् । तथा च शुक्तिरजतादेरिन्द्रियासंयुक्तस्य ऐन्द्रियकवृत्तिविषयत्वोपगमे द्वितीयनियमविरोधोऽपि दुर्वार इति चेत्, सत्यम् । शुक्तिरजतादौ रजतत्वद्रव्यत्वादिजातिर्नास्तीति मतमनुसृत्य तत्र द्रव्यत्वप्रतीतिं घटयति-प्रातिभासिकरजत इति । इदमर्थगतेदंत्वस्येव तद्गतद्रव्यत्वस्यापि तत्र संसर्गारोप इत्यर्थः । तथा च शुक्तिरजतं व्यवहारदृष्ट्या द्रव्यत्वाधिकरणं न भवतीति भावः । ननु 'द्रव्यप्रत्यक्षे इन्द्रियसंयोगः कारणम्' इत्युपगमे 'रजतचाक्षुषे रजतचक्षुस्संयोगः कारणम्'इति तृतीयनियमोऽपि दुर्वारः । रजतस्य द्रव्यविशेषत्वाद्, रजतचक्षुस्संयोगस्य च इन्द्रियसंयोगविशेषत्वाद् 'द्रव्यविशेषप्रत्यक्षे इन्द्रियसंयोगविशेषः कारणम्'इत्यस्यार्थस्य यत्सामान्यन्यायसिद्धत्वादिति शङ्कां परिहरति—यत्सामान्य इति । सामान्यकार्यकारणभावो यत्रातिप्रसङ्गावहः, तत्रैवायं न्यायः, नान्यत्रेत्यर्थः । न्यायस्य तद्विषयत्वेनेति सम्बन्धः । तत इति । न्यायादित्यर्थः ।

ननु बीजसामान्यस्याङ्कुरसामान्यस्य च कार्यकारणभावोपगमे बीजान्तरादङ्कुरान्तरोत्पत्तिप्रसङ्गवद् इहापि अतिप्रसङ्गसत्त्वादुक्तन्यायप्रवृत्तिरस्त्वेवेति शङ्कते–न चात्रापीति । उक्तातिप्रसङ्गपरिहाराय तत्तदङ्कुरव्यक्तिं प्रति तत्तद्बीजव्यक्तेरुक्तन्यायेन हेतुत्वकल्पनवत् प्रकृतेऽपि

---

(१) भावमात्राभ्युपगमे इति पाठः ।

अतिप्रसङ्गोऽस्तीति वाच्यम् । 'तत्तद्द्रव्यप्रत्यक्षे तत्तद्द्रव्यसंयोगः कारणम्' इति नियमाभ्युपगमात् । अन्यथा तृतीयनियमेऽप्यतिप्रसङ्गस्य दुर्वारत्वात् । तस्मान्नास्ति क्लृप्तनियमभङ्गप्रसङ्गः ।

किं चात्र क्लृप्तनियमभङ्गेऽपि न दोषः 'इदं रजतं पश्यामि, नीलं जलं पश्यामि' इत्यादेरनन्यथासिद्धस्यानुभवस्य प्रथमगृहीतानामपि 'प्रत्यक्षमात्रे विषयसन्निकर्षः कारणम्' इत्यादिनियमानां व्यावहारिकविषये सङ्कोचकल्पनमन्तरेणोपपादनासम्भवात् ।

---

तत्तद्द्रव्यप्रत्यक्षं प्रति तत्तद्द्रव्यसंयोगस्यैव तेन न्यायेन कारणत्वं सिध्यति, न तु तेन न्यायेन तृतीयकार्यकारणभावस्सिध्यतीत्याशयेनाह—तत्तद्द्रव्येति । ननु तेन न्यायेनातिप्रसङ्गपरिहाराय तृतीयनियम एव कुतो न कल्प्यते ? तत्राह—अन्यथेति । तृतीयनियमकल्पने इत्यर्थः । अतिप्रसङ्गस्येति । अन्यरजतचक्षुस्संयोगाद् अन्यरजतचाक्षुषापत्तिरित्येवंरूपस्येत्यर्थः । न च व्यक्तिनियमवत् तृतीयनियमोऽप्यास्त्विति वाच्यम् । अतिप्रसङ्गपरिहारानुपयुक्तस्य तस्याजागलस्तनायमानस्याकल्पनीयतायाः उक्तत्वादिति भावः । तस्मादिति । प्रथमतृतीयनियमयोरसिद्धत्वात् द्वितीयनियमस्य चाविरुद्धत्वादित्यर्थः ।

ननु प्रथमद्वितीयविरोधस्य दुर्वारतायाः प्रागुक्तत्वात्तदन्तःपातिव्यक्तिनियमविरोधस्यापि दुर्वारत्वाच्च 'नास्ति क्लृप्तनियमभङ्गः' इत्ययुक्तम् अत आह— किं चात्रेति । शुक्तिरजतादिस्थले इत्यर्थः । अनन्यथासिद्धस्येति । स्वप्नकाले केवलसाक्षिभास्येषु रजतादिषु चाक्षुषत्वाद्यनुभवस्येवात्रापि आरोपरूपत्वकल्पनासम्भवाद् अनन्यथासिद्धत्वमसिद्धम्, क्लृप्तसामग्र्यभावस्य स्वप्ने इवात्रापि तुल्यत्वात् । अन्यथा स्वप्नेऽपीन्द्रियव्यापारकल्पनाप्रसङ्गात् । अनुभवविरोधे सति तत्काले तदुपरमश्रवणस्यान्यथानयनोपपत्तेरित्यादिकमत्रानुसन्धेयम्, अनुभवस्योपपादनासम्भवादिति सम्बन्धः ।

क्लृप्तनियमानां सङ्कोचकल्पने सति शुक्तिरजतादेरनिर्व-

न चैवंसति 'प्रमायां सन्निकर्षः कारणं, न भ्रमे' इत्यपि सङ्कोचकल्पनासम्भवाद् असन्निकृष्टस्यैव देशान्तरस्थस्य रजतस्य इहारोपापत्तिरिति अन्यथाख्यातिवादप्रसारिका । अभिव्यक्तचैतन्यावगुण्ठनशून्यस्य देशान्तरस्थस्य रजतस्यापरोक्ष्यानुपपत्तेः । ख्यातिबाधानुपपत्त्यादिभिर्भ्रमविषयस्यानिर्वचनीयत्वसिद्धेश्च ।

चनीयत्वासिद्धिं शङ्कते—न चैवं सतीति । 'देशान्तरस्थं रजतादिकं भ्रमविषयः' इति न्यायमतम् । तत्रासन्निकृष्टस्य कथं प्रत्यक्षत्वमित्यनिर्वचनीयख्यातिवादिभिः शङ्कायां कृतायां 'सन्निकर्षः प्रत्यक्षे कारणम्'इत्यादिनियमस्य भवतां मते व्यावहारिकपदार्थप्रत्यक्षविषयत्वेन सङ्कोचवद्, मम मतेऽपि तस्य प्रत्यक्षप्रमायां 'सन्निकर्षः कारणम्'इति प्रत्यक्षप्रमाविषयत्वेन सङ्कोचकल्पनोपपत्तेः अन्यथाख्यातिवादस्य न किंचिद् बाधकमिति परिहारस्सुवचः परेषामित्यर्थः । भ्रमरूपे प्रत्यक्षे सन्निकर्षस्याहेतुत्वेऽपि नान्यथाख्यातिवादप्रसक्तिरिति परिहरति—अभिव्यक्तेति । अर्थस्यापरोक्षत्वे इन्द्रियसन्निकृष्टत्वं न प्रयोजकं, किं तु 'अभिव्यक्तचैतन्याभिन्नत्वम्' इति वक्ष्यते । तथा च भ्रमविषयस्य रजतादेर्देशान्तरस्थत्वे आपरोक्ष्यं न सम्भवतीति शुक्तितादात्म्यापन्नं रजतं सिध्यतीत्यर्थः । अवगुण्ठनं तादात्म्यम् । नन्वेवमपि शुक्तिरजतं शुक्तिवत् सत्यमेव स्यात् , नानिर्वचनीयम्, मानाभावादित्यत आह—ख्यातीति । ख्यातिरपरोक्षप्रतीतिः, तथाच(१) भ्रमविषयस्य देशान्तरस्थत्वमसत्त्वं च निरस्तं भवति । असतस्संवित्तादात्म्याभावेन प्रत्यक्षत्वायोगात् । 'शुक्तौ कालत्रयेऽपि रजतं नास्ति' इत्यबाधितबाधकप्रत्यक्षबलाद्रजतस्थितिसमयेऽपि शुक्तौ रजताभावस्सिध्यति । शुक्तौ यदि रजतं न स्यात् , तदा ख्यात्यनुपपत्तिः। यदि तत्र तत् सत्यं स्यात्, तदा शुक्तौ शुक्तित्वमिव न बाध्येत । अतः ख्यातिबाधान्यथानुपपत्त्या तस्यानिर्वचनीयत्वं सिध्यति । शुक्तिरजतस्य उत्पत्तिविनाशवत्त्वाच्चानिर्वचनीयत्वसिद्धिः । एतच्च विवर्तलक्षणनिरूपणावसरे प्रपञ्चितमिति नात्र प्रपञ्च्यते । उत्पत्तिमत्त्वादियुक्तिरादिशब्दार्थः ।

शुक्तिरजतादेस्साक्षिभास्यत्ववादी शुक्तिरजतस्य स्वतादात्म्या-

१ 'तया' इति पाठः क्वचित्पुस्तके ।

न चाधिष्ठानसम्प्रयोगमात्रात् प्रातिभासिकस्यैन्द्रियकत्वोपगमे शुक्तिरजताध्याससमये तत्रैव कालान्तरे अध्यसनीयस्य रङ्गस्यापि चाक्षुषत्वं कुतो न स्यादिति वाच्यम्। रजताध्याससमये रङ्गरजतसाधारणचाकचक्यदर्शनाविशेषेऽपि यतो रागादिरूपपुरुषदोषाभावादितस्तत्र तदा न रङ्गाध्यासः, तत एव मया तद्विषयवृत्त्यनुदयस्याभ्युपगमात्। तस्मादिदमंशसंभिन्नरजतगोचरैकैव वृत्तिरिन्द्रियजन्या। न ततः प्रा-

---

श्रयेदमर्थसंप्रयोगादेव चाक्षुषवृत्तिविषयत्वेऽतिप्रसङ्ग इति शङ्कते—न चेति। तत्रैवेति। शुक्तावेव कालान्तरे यदध्यसनीयं, तस्येत्यर्थः। कुत इति। या वृत्तिः शुक्तिरजतं विषयीकरोति, सैव वृत्तिः शुक्तौ कालान्तरेऽध्यसनीयरङ्गमपि कुतो न विषयीकरोति। तस्याः वृत्तेः रजततादात्म्याश्रयेदमर्थसम्प्रयोगजन्यत्वस्येव कालान्तरीयरङ्गतादात्म्याश्रयेदमर्थसम्प्रयोगजन्यत्वस्याप्यविशेषादित्यर्थः। तथा च सम्प्रयोगो न रजतगोचरवृत्तिहेतुः, किं तु सादृश्यविशिष्टधर्मिज्ञानमेव हेतुः। सादृश्यज्ञानं च दोषत्वेन धर्मिज्ञानत्वेन च रजताद्यध्यासे कारणम्। रजतादिकं च स्वगोचरवृत्तिं विनैव चैतन्यभास्यमिति मतमुपेयमिति भावः। तव मतेऽपि शुक्तौ कालान्तरे अध्यसनीयस्य रङ्गस्य रजताध्याससमये एवाध्यासः किं न स्यात्। अधिष्ठानस्य सादृश्यज्ञानस्य च रजतरङ्गाध्याससाधारणत्वादिति दोषतौल्यं सूचयति—रजताध्याससमय इति। यदि च दृश्यमानसादृश्यरूपविषयदोषाविशेषेऽपि रजताध्याससमये रङ्गगोचररागात्मकपुरुषदोषस्याभावाद्रजतरागस्य सत्त्वाच्च न रङ्गाध्यास इति परिहार इष्यते, तदा ममापि तुल्यमुत्तरमित्याशयेनाह—यत इति। रागादिरूपो यः पुरुषदोषः, तदभावादेस्सकाशादित्यर्थः। रागादीत्यादिपदेन रङ्गस्य बुद्धौ विपरिवर्तनं गृह्यते। दोषाभावादीत्यादिपदेन रजतरागो गृह्यते। तत एवेति। रङ्गगोचररागादेरभावाद्रजतरागसत्त्वादन्यस्माद्वा कारणाद् रजतस्यैव तत्रोत्पत्तिः, तत्काले रजतविशिष्टधर्मिगोचरवृत्तेरुदयश्चोपेयत इत्यर्थः। कवितार्किकमतमुपसंहरति—तस्मादिति। धर्मिज्ञानस्य कारणत्वे मानाभावादित्यर्थः। नात्रेति। इदमाकारवृत्ताविर्त्यर्थः।

गिदमाकारा वृत्तिरिति नात्रैवेयमज्ञाननिवर्तकत्वसदसद्भावचिन्ता कार्येति ॥

(वे०सू०मं०) अन्ये त्वेकैव सामान्यवृत्तिर्वा भ्रान्तिकारणम् ॥
तत्साक्षिभास्यमध्यस्तमलं वृत्त्येति मेनिरे ॥ ११२ ॥

अन्ये तु–'अधिष्ठानज्ञानमध्यासकारणम्' इति इदमाकारां वृत्तिमुपेत्य तदभिव्यक्तेनैव साक्षिणा तदध्यस्तस्य रजतस्यावभासस्सम्भवात् तद्भासकसाक्ष्यभिव्याञ्जिकया तयैवेदंवृत्त्या रजतविषयसंस्काराधानोपपत्तेश्च रजताकारवृत्तिर्व्यर्थेति मन्यन्ते ॥

(वे०सू०मं०) वृत्तिरेकेदमाकारा सामान्यज्ञानरूपिणी ॥
इदंरजततादात्म्यगोचराऽन्येति केचन ॥ ११३ ॥

ज्ञानद्वयपक्षे 'इदम्'इत्येका वृत्तिरध्यासकारणभूता । 'इदं

---

धर्मिज्ञानस्य कारणत्वे मानाभाववचनमापातत इत्युपपादितं तत्र तत्र। तदेतदभिसन्धाय तस्य तत्कारणत्वमतमेवाह—अन्ये त्वधिष्ठानज्ञानमिति । इदमाकारवृत्तिपक्षेऽपि रजतगोचरवृत्तिरङ्गीकर्तव्येति केचित् । तन्मतं दूषयति–इदमाकारामिति । अन्ये त्विदमाकारां वृत्तिमुपेत्य रजताकारा वृत्तिर्व्यर्थेति मन्यन्त इति सम्बन्धः । इदमाकारवृत्त्युपगमे हेतुः अधिष्ठानज्ञानमध्यासकारणमितीति । इतिशब्दो हेत्वर्थः । धर्मिज्ञानस्याध्यासकारणत्वादित्यर्थः । इदमाकारवृत्तिव्यतिरिक्ता रजताकारवृत्तिः किं रजतभानार्था, किं वा तत्संस्कारार्था ? नाद्य इत्याह–तदभिव्यक्तेनैवेति । इदमाकारवृत्त्यभिव्यक्तेनैवेत्यर्थः । द्वितीयं दूषयति—तद्भासकेति । न चान्यगोचरवृत्त्या कथमन्यगोचरसंस्काराधानमिति वाच्यम् । 'यद्वृत्त्यवच्छिन्नचैतन्ये यावन्तः पदार्थाः प्रकाशन्ते, तयैव वृत्त्या तावत्सु पदार्थेषु संस्काराधानम्' इति प्रागुक्तत्वादिति भावः ॥

ये तु स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति मन्यन्ते, तेषां मते अध्यस्तरजतगोचरवृत्तिरप्यस्ति । तत्र किं द्वितीया वृत्तिरध्यस्तरजतविशिष्टधर्मिगोचरा, किं वा रजतमात्रगोचरेति संशये मतद्वयेन निर्णयं दर्शयति—ज्ञानद्वयपक्ष इत्यादिना । द्वितीया वृत्तिः 'इदं रजतम्' इत्येवमाकारा साऽपि अध्यस्तरजतविषयेति सम्बन्धः । आकारविशेषोपादानफल-

रजतम्’इति द्वितीया वृत्तिरध्यस्तरजतविषया, न त्विदमंशं विना-ऽध्यस्तमात्रगोचरा सा। ‘इदं रजतं जानामि’इति तस्या इदमर्थ-तादात्म्यापन्नरजतविषयत्वानुभवादिति केचित्।

(वे०सू०मं०) इदं तद्वृत्त्यवच्छिन्नचिन्मोहौ तत्तदन्विते॥
युगपद्रूप्यतद्वृत्ती कुर्वाते इति चापरे॥ ११४॥

अन्ये तु—यथा इदमंशावच्छिन्नचैतन्यस्थाऽविद्या रजताकारेण विवर्तते एवमिदमंशविषयवृत्तिज्ञानावच्छिन्नचैतन्यस्थाऽविद्या रजतज्ञानाभासाकारेण विवर्तते, न त्विदमंशवृत्तिवदनध्यस्तं रजतज्ञानमस्ति। तथा च रजतस्य अधिष्ठानगतेदंत्वसंसर्गभानवत्तज्ज्ञानस्याप्यधिष्ठानगतेदंत्वविषयत्वसंसर्गभानोपपत्तेः न तस्यापीदंविषयत्वमभ्युपगन्तव्यम्।

---

माह—न त्विति। द्वितीयवृत्तेर्विशिष्टविषयकत्वे अनुभवं प्रमाणयति—इदं रजतं जानामीति॥

द्वितीयवृत्तेरध्यस्तमात्रविषयकत्वमिति मतमाह—अन्ये त्विति। ज्ञानद्वयपक्षे द्वितीयवृत्तिरविद्यावृत्तिरिति प्रतिपादयति—यथेत्यादिना। विवर्तते परिणमते इत्यर्थः। एवमिति। इदमंशविषयं यद् वृत्तिज्ञानं, तदवच्छिन्नेत्यर्थः। इदमाकारवृत्त्यवच्छिन्नचैतन्यगताविद्या अध्यस्तरजतमात्रगोचरवृत्तिरूपेण परिणमते। सा च वृत्तिर्ज्ञानाभासः। क्लृप्तज्ञानकारणाजन्यत्वादित्यर्थः। अनध्यस्तमिति। ज्ञानाभासरूपं रजतज्ञानं रजतवत् प्रातिभासिकमेव, न त्विदमाकारवृत्तिवद् व्यावहारिकम्। ज्ञानाभासस्यापि शुक्तिरजतवदेव शुक्त्यज्ञाननिवर्तकप्रत्यक्षबाध्यत्वादित्यर्थः। ज्ञानाभासस्य रजतमात्रविषयकत्वे तस्य ‘इदं रजतम्’इत्याकारो न स्यादित्याशङ्क्य ज्ञानाभासस्य इदमंशविषयकत्वाभावेऽपि तस्य तदाकारस्सम्भवतीत्याशयेनाह—तथा चेति। ज्ञानाभासं प्रति इदंविषयकवृत्त्यवच्छिन्नचैतन्यस्याधिष्ठानत्वे सतीत्यर्थः। इदमंशज्ञाने ज्ञानाभासं प्रत्यधिष्ठानभूते विद्यमानं यद् इदंत्वविषयकत्वं, तत्संसर्गो रजतगोचरज्ञानाभासे भासते, तत्र दृष्टान्तमाह—रजतस्येति। रजताधिष्ठानगतस्येदंत्वस्य संसर्गो यथा रजते भासते, तथेत्यर्थः।

न च रजतत्ववदध्यस्तस्य रजतेदंत्वसंसर्गस्य रजतज्ञानगोचरत्वात् तत्प्रतियोगिन इदंत्वस्यापि तद्विषयत्वं वक्तव्यमिति वाच्यम् । स्वतादात्म्याश्रयस्य इदंत्वविषयत्वादेव तस्य तत्संसर्गविषयत्वे अतिप्रसङ्गाभावात् । न चाधिष्ठानाध्यासयोरेकस्मिन् ज्ञाने प्रकाशनियमस्य सम्भावनाभाष्यविवरणे प्रतिपादनाद् एकवृत्तिविषयत्वं वक्तव्यमिति वाच्यम् । वृत्तिभेदेऽपीदमाकारवृत्त्यभिव्यक्ते एकस्मिन् साक्षिणि तयोः प्रकाशोपगमादित्याहुः ॥ १८ ॥

(वे०सू०मं०) ननु हेतुनियम्यत्वात्परोक्षत्वापरोक्षयोः ॥
वृत्तेर्निर्गमनं व्यर्थमेवं केचित्समादधुः ॥ ११९ ॥

(१९)ननु सर्वपदार्थानां साक्षिप्रसादादेव प्रकाशोपपत्तेः किं

---

ननु ज्ञानाभासेन रजते गृह्यमाणे इदंत्वसंसर्गो गृह्यते चेत्, इदंत्वमपि तेनावश्यं ग्राह्यम्, इदंत्वग्रहणं विना तत्संसर्गग्रहणायोगात् । तथा च ज्ञानाभासस्य रजतविशिष्टेदमंशविषयकत्वसिद्धिरिति शङ्कते—न चेति । संसर्गांशस्य रजतज्ञानाभासगोचरत्वे हेतुगर्भं विशेषणम्—अध्यस्तस्येति । वक्तव्यमिति । अन्यथा घटत्वादिनिरूपितसंसर्गप्रत्यक्षस्य घटत्वादिविषयकत्वं न स्यादित्यतिप्रसङ्गापत्तेरिति भावः । ज्ञानाभासस्य इदंत्वरूपप्रतियोगिविषयकत्वाभावेऽपि ज्ञानाभासं प्रति अधिष्ठानतया ज्ञानाभासतादात्म्यापन्नस्य इदमंशज्ञानस्य प्रतियोगिविषयकत्वात् ज्ञानाभासस्य संसर्गविषयकत्वं सम्भवति । तावतैव उक्तातिप्रसङ्गपरिहारोपपत्तेरिति परिहरति—स्वतादात्म्याश्रयस्येति । स्वपदं ज्ञानाभासपरम् । वृत्तिभेदेऽपीति । अध्यस्तमात्रगोचराविद्यावृत्तेर्विवरणकारैरेवाभ्युपगमात्तदुक्तनियमे ज्ञानपदं साक्षिपरमेव, न वृत्तिपरमिति, विवरणकाराणामाशयो लक्ष्यत इति भावः ॥ १८ ॥

एवं 'बाह्यगोचरापरोक्षवृत्तीनामेवावरणाभिभावकत्वम्'इति नियमस्य भ्रमस्थलीयेदमाकारवृत्तौ व्यभिचारशङ्कायां सत्यां तदनुवृत्त्यभ्युपगमानभ्युपगमाभ्यां तां परिहृत्य प्रसङ्गात् ज्ञानद्वयपक्षे किञ्चिद्विचार्य पूर्वोक्तं वृत्तिनिर्गममाक्षिपति—नन्विति । किं वृत्त्येति । वृत्तिरेव मास्तु । तन्निर्गमो

वृत्त्या, घटादिविषयकसंस्काराधानाद्युपपत्तये तदपेक्षणेऽपि तन्निर्गमाभ्युपगमो व्यर्थः। परोक्षस्थल इवानिर्गतवृत्त्यवच्छिन्नसाक्षिणैव घटादेरपि प्रकाशोपपत्तेः।

न च तथा सति परोक्षापरोक्षवैलक्षण्यानुपपत्तिः। शाब्दानुमित्योरिव करणविशेषप्रयुक्तवृत्तिवैजात्यादेव तदुपपत्तेः॥

(वे॰सू॰मं॰) अर्थेष्वाश्रयवृत्तिस्थचिद्भास्येष्वपरोक्ष्यतः॥
कल्प्यते निर्गमो वृत्तेः परोक्षेऽगतिकल्पना ॥११६॥

अत्र केचिदाहुः—प्रत्यक्षस्थले विषयाधिष्ठानतया तदवच्छिन्नमेव चैतन्यं विषयप्रकाशः। साक्षात्तादात्म्यरूपसम्बन्धसम्भवे स्वरूपसम्बन्धस्य वाऽन्यस्य वा कल्पनाऽयोगादिति तदभिव्य-

---

दूरापास्त एवेत्याशयः। ननु केवलसाक्षिण एव विषयानुभवरूपत्वे कालान्तरे विषयानुसन्धानं न स्यात्, अनुभवनाशलक्षणसंस्काराभावात्, तथा आगन्तुकत्वस्यानङ्गीकारे चक्षुराद्यनुविधानं न स्यात्, नित्यसाक्षिणि चक्षुरादेरनुपयोगात्, अतो वृत्तिरादर्त्तव्येत्याशङ्क्य तामङ्गीकरोति—घटादीति। ननु विषयप्रकाश एव तन्निर्गमफलमिति, नेत्याह—परोक्षस्थल इवेति।

ननु प्रत्यक्षपरोक्षज्ञानयोर्वैलक्षण्यमनुभवसिद्धम्। तच्च प्रत्यक्षस्थले वृत्तिनिर्गमाभ्युपगमे निर्वहति। बहिर्निर्गतवृत्त्यवच्छिन्नचैतन्यमपरोक्षज्ञानम्, अनिर्गतवृत्त्यवच्छिन्नचैतन्यं परोक्षज्ञानमिति, नेत्याह—न च तथासतीत्यादिना। वृत्त्यनिर्गमने सतीत्यर्थः। 'इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्,' 'तदजन्यं ज्ञानं परोक्षम्' इति वैलक्षण्योपपत्तेरित्यर्थः। यथा शाब्दज्ञाने शब्दरूपकरणविशेषप्रयुक्तं शाब्दत्वरूपं वैजात्यम्, यथा वा अनुमितावनुमितित्वम्, तथेत्यर्थः। करणविशेषः इन्द्रियम्, अनुमानादि च, तत्प्रयुक्तवृत्तिषु वैजात्यं प्रत्यक्षत्वादिजातिरूपमुपाधिरूपं वा, तस्मादेवेत्यर्थः॥

वृत्तिनिर्गमं साधयति—अत्र केचिदाहुरिति। विषयाधिष्ठानतया विषयावच्छिन्नं यच्चैतन्यं, तदेव विषयप्रकाशः, न जीवचैतन्यम्, तस्य विषयं प्रति उपादानत्वाभावेन साक्षात्तादात्म्यसम्बन्धाभावादित्यर्थः। अन्यस्य वेति। परम्परासम्बन्धस्य वेत्यर्थः। तादात्म्यरूपसम्बन्धसम्भवे

क्त्यर्थं युक्तो वृत्तिनिर्गमाभ्युपगमः ।

परोक्षस्थले व्यवहिते वह्न्यादौ वृत्तिसंसर्गायोगादिन्द्रियवद्न्वयव्यतिरेकशालिनो वृत्तिनिर्गमद्वारस्यानुपलम्भाच्चानिर्गतवृत्त्यवच्छिन्नचैतन्यमेव स्वरूपसम्बन्धेन विषयगोचरमगत्याऽर्थादभ्युपगम्यते इति ॥

(वे०सू०मं०) साक्षात्प्रमातृसम्पर्के सुखादेरापरोक्ष्यतः ॥
अन्यत्रापि तथेत्याहुर्वृत्तेर्निर्गमनात्परे ॥ ११७ ॥

अन्ये तु—अहङ्कारसुखदुःखादिष्वापरोक्ष्यं साक्षाच्चैतन्यसंसर्गिषु क्लृप्तमिति घटादावपि विषयसंसृष्टमेव चैतन्यमापरोक्ष्यहेतुरिति तदभिव्यक्तये वृत्तिनिर्गमं समर्थयन्ते ॥

(वे०सू०मं) इतरे स्पष्टताहेतुमाचख्युर्वृत्तिनिर्गमम् ॥
न चानुमितमाधुर्यं स्पष्टमास्वादितं यथा ॥ ११८ ॥

इतरे तु—शब्दानुमानावगतेभ्यः प्रत्यक्षावगते स्पष्टता ता-

---

स्वरूपसम्बन्धकल्पनायोगात् । साक्षात्सम्बन्धसम्भवे अन्यस्य सम्बन्धस्य कल्पनाऽयोगादिति भावः । ततः किं ? तत्राह—इति तदभिव्यक्त्यर्थमिति । विषयावच्छिन्नब्रह्मचैतन्यस्यैव विषयप्रकाशकत्वाच्चस्य च आवृतत्वादावरणाभिभवरूपाभिव्यक्तिसिद्ध्यर्थमित्यर्थः ।

ननूक्तयुक्त्या परोक्षस्थलेऽपि विषयावच्छिन्नब्रह्मचैतन्यमेव विषयावभासकं स्यात् । ततश्च तत्रापि तन्निर्गमः प्रसज्येतेति, नेत्याह—परोक्षस्थले इति । वृत्तिनिर्गमनहेतुसन्निकर्षाभावादित्याशयेनाह—व्यवहित इति ॥

वृत्तिनिर्गमने उपपत्त्यन्तरमाह—अन्ये त्विति । संसर्गिषु क्लृप्तमिति । संसर्गः तादात्म्यम् । विषयापरोक्ष्ये क्वचित्क्लृप्तप्रयोजकस्य संसर्गस्यैवान्यत्रापि सम्भवे तत्त्यागायोगादिति भावः । विषयसंसृष्टमेवेति । न तु तदसंसृष्टं जीवचैतन्यमित्येवकारार्थः । तदभिव्यक्तयेति । विषयावच्छिन्नब्रह्मचैतन्याभिव्यक्तये इत्यर्थः ॥

प्रत्यक्षे वस्तुन्यावरणाभिभवस्यावश्यकताप्रतिपादनपूर्वकं तदभिभवार्थं वृत्तिनिर्गमनमिति प्रतिपादयति—इतरे त्विति । ननु शब्दाद्यव-

वदनुभूयते । न हि रसालपरिमलादिविशेषे शतवारमाप्तोपदिष्टेऽपि प्रत्यक्षावगत इव स्पष्टताऽस्ति । तदनन्तरमपि 'कथं तद् ?' इति जिज्ञासाऽनुवृत्तेः ।

न च शब्दान्माधुर्यमात्रावगमेऽपि रसालमाधुर्यादिवृत्त्यवान्तरजातिविशेषवाचिशब्दाभावात्, तत्सत्त्वेऽपि श्रोतात्तस्यागृहीतसङ्गतिकत्वात् शब्दादसाधारणजातिविशेषावच्छिन्नमाधुर्यावगमो नास्तीति जिज्ञासाऽनुवृत्तिर्युक्तेति शङ्क्यम् । 'रसाले सर्वातिशायी माधुर्यविशेषोऽस्ति' इत्यस्माच्छब्दात्तद्गतावान्तरजातिविशेषस्याप्यवगमात् । न ह्ययं विशेषशब्दस्तद्गत

---

गतेऽप्यर्थे स्पष्टता किं न स्यादिति, नेत्याह—न हीति । परिमलं सुगन्धः । आदिपदं रसालगतरससङ्ग्रहार्थम् ।

'आम्रफले मधुररसादिरस्ति' इत्येवंरूपादाप्तवाक्याच्छतवारमुक्तादपि मधुरत्वादिसामान्यविशिष्टतयैव रसादिज्ञानं भवति, न तु मधुरत्वव्याप्यजातिविशेषविशिष्टरसादिज्ञानम् । तथा च रसादिगतजातिविशेषज्ञानाभावादेव जातिविशेषे जिज्ञासा उपपद्यते, न तु शब्दादवगतेऽपि, स्पष्टत्वाभावादित्याशयेन शङ्कते—न च शब्दादिति । माधुर्यं मधुररसः । माधुर्यादिमात्रावगमेऽपि शब्दादसाधारणजातिविशेषावच्छिन्नमाधुर्यावगमो नास्तीति सम्बन्धः । असाधारणो यो जातिविशेषः, तदवच्छिन्नतया माधुर्यावगमो नास्तीत्यर्थः । जातिविशेषावगमाभावे उपायाभावं हेतुमाह—रसालेत्यादिना । रसालस्य यन्माधुर्यादि, तद्वृत्तिर्योऽवान्तरजातिविशेषः, तद्वाचकशब्दाभावादित्यर्थः । तद्बोधकशब्दमङ्गीकृत्यापि शक्तिग्रहाभावात्तदवगमो न सम्भवतीत्याह—तत्सत्त्वेऽपीति । तस्येति । अवान्तरजातिविशेषवाचकशब्दस्येत्यर्थः ! न च शङ्क्यमिति सम्बन्धः । तद्वाचकपदाभावेऽपि तद्बोधको वाक्यरूपशब्दोऽस्ति । तेन च जातिविशेषावगमोऽप्यस्ति । तथा चावगते जातिविशेषे स्पष्टत्वाभावादेव जिज्ञासेत्याशयेनाह—रसाले इत्यादिना । अयं शब्दः किं तद्गतं जातिविशेषं बोधयति, किं वाऽन्यगतम् ? । आद्यमङ्गीकरोति—तद्गतावान्तरेति । द्वितीयं दूषय-

विशेषं विहायान्यगतं विशेषं तत्र बोधयति । अप्रामाण्यापत्तेः । न च तद्गतमेव विशेषं विशेषत्वेन सामान्येन रूपेण बोधयति, न विशिष्येति जिज्ञासेति वाच्यम् । प्रत्यक्षेणापि मधुररसविशेषणस्य जातिविशेषस्य स्वरूपत एव विषयीकरणेन जातिविशेषगतविशेषान्तराविषयीकरणाद् जिज्ञासाऽनुवृत्तिप्रसङ्गात् ।

तस्मात् प्रत्यक्षग्राह्येऽभिव्यक्तापरोक्षैकरसचैतन्यावगुण्ठनात्स्पष्टता जिज्ञासानिवर्तनक्षमा, शब्दादिगम्ये तु तदभावादस्पष्ट-

---

ति—न ह्ययमिति । तत्रेति । रसालमाधुर्यादावित्यर्थः । तात्पर्यविषये एव शब्दस्य प्रामाण्याभ्युपगमादिति भावः । न चाप्रामाण्ये इष्टापत्तिरिति वाच्यम् । आप्तवाक्यस्य तदङ्गीकारायोगादिति भावः । माधुर्यगतजातिविशेषावगममङ्गीकृत्य शङ्कते—न च तद्गतमेवेति । सामान्येनेति । विशेषत्वं रसालमाधुर्यगते जातिविशेषे इव फलान्तरमाधुर्यगतेषु जातिविशेषेष्वपि सत्त्वात् सामान्यरूपमिति भावः । न विशिष्येति । जातिविशेषगतविशेषविशिष्टतया जातिविशेषं न बोधयति । तथा च रसालमाधुर्यगतजातिविशेषस्य स्वरूपेण शब्दादवगतत्वेऽपि स्वगतासाधारणविशेषविशिष्टतयाऽनवगतत्वादेव जिज्ञास्यत्वमिति भावः । जातिविशेषगतासाधारणविशेषः किं जातिरूपः, किं वा जातिविशेषाश्रयेतरावृत्तित्वे सति जातिविशेषाश्रयवृत्तित्वरूप उपाधिर्वा ?। नाद्यः । जातौ तदनङ्गीकारात् । न द्वितीयः । रसालमाधुर्यगतजातिविशेषे प्रत्यक्षेणापि तद्ग्रहणेन प्रत्यक्षावगतेऽपि जातिविशेषे जिज्ञासाऽनुवृत्तिप्रसङ्गात् । तस्मात् प्रत्यक्षेणापि स जातिविशेषः स्वरूपेणैव गृह्यत इति वक्तव्यम् । स्वरूपेण तदवगमश्चोक्तशब्दादप्यस्त्येवेति शब्दावगतस्यापि स्पष्टत्वे तत्र जिज्ञासाऽनुवृत्तिर्न स्यादित्याशयेनाह—प्रत्यक्षेणापीति । तस्मादिति । प्रत्यक्षावगते इव शब्दादिगम्येऽर्थे स्पष्टत्वाभावादित्यर्थः । अनुभवसिद्धायाः स्पष्टतायाः प्रयोजकमाह—अभिव्यक्तेति । अपरोक्षत्वं स्वप्रकाशत्वम् । एकरसत्वम् एकरूपत्वम् । अभिव्यक्तं यदपरोक्षैकरसं चैतन्यं, तत्तादात्म्यात् प्रत्यक्षग्राह्ये स्पष्टता विषयताविशेषरूपेत्यर्थः । अनेन विषयगतस्पष्टताप्रयोजकीभूता या विषयचैतन्याभिव्यक्तिरावरणनिवृत्तिरूपा, तस्यासिद्धये

तेति व्यवस्थाऽभ्युपगन्तव्या। अत एव साक्षिवेद्यस्य सुखादेः स्पष्टता। शाब्दवृत्तिवेद्यस्यापि ब्रह्मणो मननादेः प्रागज्ञानानिवृत्तावस्पष्टता, तदनन्तरं तन्निवृत्तौ स्पष्टतेति वृत्तिनिर्गममुपपादयन्ति॥

(वे०सू०मं०)न चावरणविच्छेदः स्पष्टता तामनिर्गता॥
करोतु(१) तुल्यविषयतत्तदज्ञाननाशिनी॥ ११९॥

नन्वेतावताऽपि विषयावरकाज्ञाननिवृत्त्यर्थं वृत्तिनिर्गम इत्युक्तम्। तदयुक्तम्। विषयावच्छिन्नचैतन्यगतस्य तदावरकाज्ञानस्यानिर्गतवृत्त्या निवृत्त्यभ्युपगमेऽप्यनतिप्रसङ्गात्। नच तथा सति देवदत्तीयघटज्ञानेन यज्ञदत्तीयघटाज्ञानस्यापि निवृत्तिप्रसङ्गः, समानविषयकत्वस्य सत्त्वात्।

---

वृत्तिनिर्गमनमपेक्षितमिति सूचितमिति। आवरणनिवृत्तेः स्पष्टताप्रयोजकत्वे अन्वयव्यतिरेकौ दर्शयति—अत एवेत्यादिना। अभिव्यक्तचैतन्यसंसर्गादेवेत्यर्थः। शाब्दवृत्तीति। शब्दजन्या वृत्तिः मननाद्यनुष्ठानात्प्राग् असम्भावनाविपरीतभावनाभ्यां प्रतिबद्धत्वादज्ञानानिवर्तिका, तदनुष्ठानानन्तरमप्रतिबद्धत्वादज्ञाननिवर्तिकेति भावः।

नन्वेतावताऽपीति। 'अत्र केचिदाहुः' इत्यादिना मतत्रयोपन्यासात्मकग्रन्थेनापीत्यर्थः। विषयावरकाज्ञानस्य पुरुषगतत्वमते अनिर्गतवृत्त्या निवृत्तिसम्भवेऽपि तस्य विषयावच्छिन्नचैतन्यगतत्वपक्षे तन्निर्गमापेक्षा स्यादित्याशङ्क्यानिर्गतवृत्त्यैव विषयगताज्ञानस्यापि निवृत्तौ नास्ति बाधकमित्याशयेनाज्ञानं विशिनष्टि—विषयावच्छिन्नचैतन्यगतस्येति। ननु ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावलक्षणे विरोधे 'समानाश्रयत्वे सति समानविषयकत्वं' तन्त्रम्। समानाश्रयत्वं च वृत्तिनिर्गमने सति सम्भवति। अज्ञानाश्रये विषयचैतन्ये वृत्तिरूपज्ञानस्यापि स्थितिलाभात्। तन्निर्गमाभावे तु तयोः समानाश्रयत्वासम्भवात् समानविषयकत्वमात्रं विरोधप्रयोजकं पर्यवस्यति। तथा चातिप्रसङ्ग इति शङ्कते—न च तथा सतीति। वृत्तिनिर्गमानुपगमे सतीत्यर्थः। सत्त्वादिति। देवदत्तीयघटज्ञानयज्ञदत्तीयघ-

---

(१) वृत्तिरिति शेषः।

अहमर्थविषयचैतन्यनिष्ठयोर्ज्ञानाज्ञानयोर्भिन्नाश्रयत्वेन तयोर्विरोधे समानाश्रयत्वस्यातन्त्रत्वादिति वाच्यम् । समानाश्रयविषयत्वं ज्ञानाज्ञानयोर्विरोधप्रयोजकमङ्गीकृत्य वृत्तिनिर्गमनाभ्युपगमेऽपि देवदत्तीयघटवृत्तेः यज्ञदत्तीयघटाज्ञानस्य च घटावच्छिन्नचैतन्यैकाश्रयत्वप्राप्त्याऽतिप्रसङ्गतादवस्थ्येन 'यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं, तत् तदीयतद्विषयभाननिवर्त्यम्' इति पृथगेव विरोधप्रयोजकस्य वक्तव्यतया समानाश्रयत्वस्यानपेक्षणात् ॥

(वे०सू०मं०)मैवं, परोक्षवृत्त्याऽपि मोहोच्छेदप्रसङ्गतः ॥
आपरोक्ष्यं तु नो जातिरांशिकत्वाच्च सङ्करात्॥१२०॥

---

टाज्ञानयोरिति शेषः । अहमर्थेति । वृत्तिनिर्गमनाभावे सति ज्ञानमहमर्थनिष्ठमेव, न विषयचैतन्यनिष्ठम् । विषयावरकाज्ञानं च विषयचैतन्यनिष्ठमेव, न त्वहमर्थनिष्ठम् । तथा च समानाश्रयत्वं बाधितत्वात् न प्रयोजककोटिप्रविष्टमित्यर्थः । समानाश्रयविषयत्वमिति । ज्ञानाज्ञानयोर्विरोधे 'समानाश्रयत्वे सति समानविषयकत्वं' प्रयोजकं परिकल्प्य तन्निर्वाहाय वृत्तिनिर्गमे स्वीकृतेऽप्युक्तदोषतादवस्थ्येन तयोर्विरोधे उक्तप्रयोजकादन्यदेव प्रयोजकं कल्पनीयम् । तच्च वृत्तिनिर्गमं विनैव सिध्यति । अतो विरोधप्रयोजकोपपादकतयाऽपि वृत्तिनिर्गमो न सिध्यतीति समुदायार्थः । देवदत्तीयेति । यज्ञदत्तीयघटाज्ञानाश्रये घटावच्छिन्नचैतन्ये देवदत्तीयघटज्ञानरूपवृत्तेर्निर्गमनद्वारा सम्बन्धे सति देवदत्तीयघटज्ञानयज्ञदत्तीयघटाज्ञानयोस्समानाश्रयत्वे सति समानविषयकत्वं लभ्यते । न च देवदत्तीयघटवृत्त्या यज्ञदत्तीयघटाज्ञाननिवृत्तिरस्तीत्युक्तदोषतादवस्थ्यमित्यर्थः । यदीदं प्रयोजकं न भवति, किं तर्हि तत्प्रयोजकं वृत्तिनिर्गमननिरपेक्षं पूर्ववादिनस्तवाभिमतम् ? तत्राह—यदज्ञानमिति । तदिति । तदज्ञानं तत्पुरुषीयतद्विषयकज्ञाननिवर्त्यमित्यर्थः । तथा च प्रयोजकशरीरे 'यं पुरुषं प्रति' अनेन 'तदीय'इत्यनेन च यज्ञदत्तं प्रति विषयावरकाज्ञानस्य यज्ञदत्तीयज्ञानेनैव निवृत्तिः, न देवदत्तज्ञानेनेति नियमलाभाद् नोक्तातिप्रसङ्ग इति सूचितम् ॥

अत्राहुः—वृत्तिनिर्गमनानभ्युपगमे ज्ञानाज्ञानयोर्विरोधप्रयोजकमेव दुर्निरूपम्। 'यदज्ञानं यं पुरुषं प्रति' इत्याद्युक्तमिति चेत्; न। परोक्षज्ञानेनापि विषयगताज्ञाननिवृत्तिप्रसङ्गात्।

अपरोक्षत्वमपि निवर्तकज्ञानविशेषणमिति चेत्, । किं तदपरोक्षत्वम्?। न तावज्जातिः। 'दण्ड्ययमासीत्' इति संस्कारोपनीतदण्डविशिष्टपुरुषविषयकस्य चाक्षुषज्ञानस्य दण्डांशेऽपि तत्सत्त्वे तत्रापि विषयगताज्ञाननिवृत्त्यापातात्। 'दण्डं साक्षात्करोमि' इति तदंशेऽप्यापरोक्ष्यानुभवापत्तेश्च। अननुभवेऽपि संस्कारं सन्निकर्षं परिकल्प्य इन्द्रियसन्निकर्षजन्यतया तत्र काल्पनिकापरोक्ष्याभ्युपगमे अनुमित्यादावपि लिङ्गज्ञानादिकं सन्निकर्षं परिकल्प्य तदङ्गीकारापत्तेः। दण्डांशे आपरोक्ष्यासत्त्वे तु तस्य जातित्वायोगाद्, जातेर्व्याप्यवृत्तित्वनि-

---

वृत्तिनिर्गमं साधयितुमुपक्रमते—अत्राहुरित्यादिना। किं तदिति। अपरोक्षत्वं जातिरुपाधिर्वेति किंशब्दार्थः। आद्यं दूषयति—न तावदिति। पूर्वं दण्डविशिष्टतया गृहीते विष्णुमित्रे वर्तमानकाले दण्डवियुक्ते प्रत्यक्षमत्यभिज्ञानं संस्काररूपोपनायकसहितादिन्द्रियात् जायते—'अयं विष्णुमित्रो दण्ड्यासीत्' इति। तत्र दण्डांशे प्रत्यक्षत्वमस्ति, न वा?। आद्ये दोषमाह—दण्डांशेऽपीति। निवृत्त्यापातादिति। न चात्रेष्टापत्तिर्वक्तुं शक्या। 'स दण्ड इदानीं कीदृशः' इति जिज्ञासाऽनुदयप्रसङ्गादिति भावः। नन्वज्ञाननिवृत्त्यनुभवयोरभावेऽपि दण्डांशे प्रत्यक्षत्वं कल्प्यते। कल्पकं च इन्द्रियसन्निकर्षजन्यत्वम्। सन्निकर्षश्च सविषयं प्रत्यासत्तिरिति मतमनुसृत्य संस्कारः कल्प्यते इत्याशङ्क्यातिप्रसङ्गमाह—अननुभवेऽपीत्यादिना। अनुमितौ लिङ्गज्ञानं सन्निकर्षः, उपमितौ सादृश्यज्ञानं सन्निकर्षः, शाब्दे पदार्थोपस्थितिस्सन्निकर्षः, अर्थापत्तावनुपपद्यमानपदार्थज्ञानं सन्निकर्षः, अभावज्ञाने प्रतियोगिज्ञानं सन्निकर्षः इति कल्पनया प्रत्यक्षप्रमाणपरिशेषापत्तेरिति भावः। तदङ्गीकारेति। अपरोक्षत्वाङ्गीकारापत्तेरित्यर्थः। दण्डांशेऽपि न प्रत्यक्षत्वमस्तीति द्वितीयकल्पं दूषयति—दण्डांश इति। व्याप्यवृत्तित्व-

यमात् । तदनियमेऽप्यवच्छेदकोपाधिभेदानिरूपणेन तस्याव्याप्य-वृत्तिजातित्वायोगाच्च ।

नाप्युपाधिः, तदनिर्वचनात् । इन्द्रियजन्यत्वमिति चेत्, न । साक्षिप्रत्यक्षाव्यापनात् । अनुमितिशाब्दज्ञानोपनीत-गुरुत्वादिविशिष्टघटप्रत्यक्षे विशेषणांशातिव्यापनाच्च । करणान्त-राभावेन तदंशे परोक्षेऽप्युपनयसहकारिसामर्थ्यादिन्द्रियस्यैव जन-

नियमादिति । अन्यथा एकस्यामेव प्रत्यभिज्ञायां तत्तांशे संस्कारजन्यत-या स्मृतित्वापत्तौ जातिसंकरापत्तेरिति भावः । तदनियमेऽपीति । जातेर्व्याप्यवृत्तित्वनियमाभावेऽपि प्रकृते प्रत्यभिज्ञायां विष्णुमित्रांशे प्रत्यक्ष-त्वम्, दण्डांशे तदभावश्चास्तीति वक्तव्यम् । ततश्च अवच्छेदकभेदं विना प्रतियोगितदभावयोरेकत्र वृत्त्ययोगादुपाधिभेदो वाच्यः । स च दुर्निरूपः । तस्मादपरोक्षत्वजातेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपाव्याप्यवृ-त्तित्वायोगाद्व्याप्यवृत्तिजातित्वमेव वाच्यम् । तत्र च दूषणमुक्तमिति भावः ।

ननु प्रकृते उपाधिभेदानिरूपणमसिद्धम् । लौकिकसन्निकर्षजन्यत्वतदभा-वयोर्वा, संस्काराजन्यज्ञानत्वतदभावयोर्वा, विष्णुमित्रविषयकत्वतदभावयोर्वा, अपरोक्षत्वतदभावौ प्रत्युपाधित्वसम्भवादिति चेत्, न । उक्तोपाधीनामपि भावाभावरूपतया तदर्थमुपाध्यन्तरापेक्षायामनवस्थाप्रसङ्गादिति भावः ।

अपरोक्षत्वमुपाधिरिति पक्षं दूषयति—नापीति । अनिर्वचनमसिद्धमिति चेत् । तत्र वक्तव्यम्—किमिन्द्रियजन्यत्वमपरोक्षत्वम्, किं वा तत्सन्निकर्षजन्यत्व-म्, सिद्धान्त्यभिमतं वा ? तत्राद्यमनूद्य दूषयति—इन्द्रियेति । सुखादिप्रत्यक्षरूपे नित्यसाक्षिण्यव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह—अनुमितीति । यस्मिन् घ-टे अनुमानेन वा शब्देन वा गुरुत्वमनुभूतं, तस्मिन् इन्द्रियसन्निकर्षे सति 'घटोऽयं गुरुः' इति प्रत्यक्षं भवति तत्र विशेषणीभूतगुरुत्वांशे ऽतिव्याप्तिरि-त्यर्थः । ननु गुरुत्वस्य इन्द्रियायोग्यतया परोक्षे तदंशज्ञाने तज्जन्यत्वमसिद्ध-मित्यत आह—करणान्तरेति । परोक्षेऽपीति । यथा क्वचिदत्तमते अ-नुमितौ मनसः करणत्वं, तथेति भावः । न चेन्द्रियत्वेनेन्द्रियजन्यत्वमपरो-क्षत्वम्, गुरुत्वांशज्ञाने च न-तथा तज्जन्यत्वमिति नातिव्याप्तिरिति वा-च्यम् । तथापि साक्षिप्रत्यक्षाव्याप्त्यनिरासादिति भावः । अनेकेषु रूपादि-साक्षात्कारेषु तज्जन्यत्वं दुर्ग्रहम् । अनुगतजन्यतावच्छेदकाभावेन तज्ज्ञानं

कत्वात्, अनुगतजन्यतावच्छेदकाग्रहेणानेकेष्विन्द्रियजन्यत्वस्य दुर्ग्रहत्वाच्च । तद्ग्रहे च तस्यैव प्रथमप्रतीतस्यापरोक्षरूपत्वोपपत्तौ प्रत्यक्षानुभवायोग्यस्य इन्द्रियजन्यत्वस्य तद्योग्यापरोक्षरूपत्वकल्पनायोगात् ।

एतेन 'इन्द्रियसन्निकर्षजन्यत्वमापरोक्ष्यम् । उपनयसहकृतेन्द्रियजन्यपरोक्षांशे च न सन्निकर्षजन्यत्वम् । अनुमितावप्युपनीतभानसत्त्वेन प्रमाणान्तरसाधारणस्योपनयस्यासन्निकर्षत्वात्' इत्यपि शङ्का निरस्ता । संयोगादिसन्निकर्षाणामननुगमेनाननुगमाच्च ।

---

विना जन्यत्वज्ञानासम्भवादित्याह—अनुगतेति । ननु 'साक्षात् करोमि' इत्यनुभवसिद्धः कश्चिदखण्डोपाधिरेव जन्यतावच्छेदकोऽस्त्वित्याशङ्क्य तर्हि स एवापरोक्षत्वं भवेद्, नान्यदित्याह—तद्ग्रहे चेति । अवच्छेद्यजन्यत्वग्रहात् पूर्वमेवावच्छेदकग्रहस्यावश्यकत्वात् 'साक्षात् करोमि' इत्यनुभवयोग्यस्यापरोक्षत्वस्य तदयोग्यधर्मरूपत्वायोगाच्चेत्यर्थः । अस्तु तर्हि उक्तावच्छेदकोपाधेरेवापरोक्षत्वरूपत्वम् । स किं व्याप्यवृत्तिः, अव्याप्यवृत्तिर्वा ? । नाद्यः । 'दण्ड्ययमासीत्' इति प्रत्यक्षे दण्डांशेऽतिव्याप्तेः । न द्वितीयः । अवच्छेदकभेदानिरूपणात् । न च विष्णुमित्रविषयकत्वावच्छेदेन तत्रापरोक्षत्वरूपोपाधिरस्ति, दण्डविषयकत्वावच्छेदेन तत्रैव तदभावोऽप्यस्तीति वाच्यम् । तथासति दण्डांशे विष्णुमित्रविषयकत्वाभावस्य वक्तव्यतया तत्र प्रत्यक्षे विष्णुमित्रविषयकत्वतदभावयोरविरोधायावच्छेदकान्तरापेक्षायां पूर्वोक्तानवस्थाप्रसङ्गात् । अखण्डोपाधिस्वीकारे जातिमात्रविलयप्रसङ्गाच्च नोक्तोपाधिपक्षस्सम्भवतीति भावः । उपाधिपक्षे द्वितीयकल्पं निराचष्टे—एतेनेति । अव्याप्त्यादिदोषप्रसङ्गेनेत्यर्थः । 'इन्द्रियजन्यत्वमपरोक्षत्वम्' इति पक्षेया अतिव्याप्तिरुक्ता, सा 'तत्सन्निकर्षजन्यत्वं तद्' इति पक्षे नास्तीत्याह शङ्ककः—उपनयेति । कारणान्तराभावेन इन्द्रियजन्यत्वसत्त्वेऽपि तत्सन्निकर्षजन्यत्वं नास्ति । उपनयस्य सन्निकर्षत्वासम्भवात् सन्निकर्षान्तराभावाच्चेति भावः । दूषणान्तरमाह—संयोगादीति । संयोगसंयुक्तसमवायादिसन्निकर्षाणामननुगमेन, संयोगादिष्वनुगतसन्निकर्षत्वा-

यत्तवाभिमतमापरोक्ष्यं, तदेव ममाप्यस्त्विति चेत्, न। तस्य शाब्दापरोक्षनिरूपणप्रस्तावे प्रतिपादनीयस्य तत्रैव दर्शनीयया रीत्या अज्ञाननिवृत्तिप्रयोज्यत्वेन

---

भावेनेति यावत्। अननुगमाच्चेति। इन्द्रियसन्निकर्षजन्यत्वस्येति शेषः। तथा च घटतद्रूपरूपत्वशब्दशब्दत्वसुखादिगोचरसाक्षात्कारेषु 'साक्षात्करोमि' इत्यनुगतप्रत्यक्षं न स्यादिति भावः।

उपाधिपक्षे तृतीयमुपाधिमाशङ्कते—यत्तवाभिमतमिति। तत्र सिद्धान्तिनो यत् ज्ञानगतमपरोक्षत्वं सम्मतं, तदेव मम मतेऽप्यस्तु। तथा चापरोक्षत्वस्याज्ञाननिवर्तकज्ञानविशेषणत्वसम्भवात् न परोक्षज्ञानेन तन्निवृत्तिप्रसङ्ग इति भावः। मदभिमतापरोक्षत्वस्य ज्ञाने तन्निवृत्तिप्रयोजकत्वं न सम्भवतीति सिद्धान्ती दूषयति—न, तस्येति। मदभिमतापरोक्षत्वस्येत्यर्थः। प्रस्तावः प्रकरणम्। तच्च तृतीयपरिच्छेदावसाने द्रष्टव्यम्। तत्रैव दर्शनीययेति। ज्ञानस्यापरोक्षत्वं हि न करणविशेषप्रयुक्तं, किं त्वपरोक्षार्थाभिन्नत्वम्। इदं चापरोक्षत्वं विषयावभासकचैतन्यरूपज्ञाननिष्ठं, न वृत्तिनिष्ठम्। अतो न साक्षिप्रत्यक्षाव्याप्तिः। अर्थापरोक्ष्यं च स्वव्यवहारानुकूलचैतन्याभिन्नत्वम्। स्वपदमर्थपरम्। तद्व्यवहारानुकूलं च चैतन्यं निवृत्तावरणं तत्तदधिष्ठानचैतन्यमेव। तथा च घटाद्यर्थस्य स्वव्यवहारानुकूलेन स्वाधिष्ठानचैतन्येन स्वगोचरवृत्त्यभिव्यक्तेन तादात्म्यलक्षणाभेदसत्त्वात् स्वव्यवहारानुकूलचैतन्याभिन्नत्वरूपमपरोक्षत्वमुपपन्नम्। तथा अहङ्कारादिषु तदधिष्ठानभूतस्य केवलसाक्षिरूपतत्प्रत्यक्षज्ञानस्य बाह्यघटादिषु तत्तदाकारवृत्त्युपहितस्य घटादिप्रत्यक्षज्ञानरूपस्य घटाद्यधिष्ठानचैतन्यस्य च तेन तेन विषयेण तादात्म्यसत्त्वादपरोक्षार्थाभिन्नत्वरूपमपरोक्षत्वमुपपन्नमिति हि तत्र दर्शनीया रीतिः। प्रयोज्यत्वेनेति। विषयचैतन्यगताज्ञाननिवृत्तौ सत्यां विषयस्य घटादेस्स्वव्यवहारानुकूलचैतन्याभिन्नत्वरूपमपरोक्षत्वं लभ्यते। विषयस्य तल्लाभे सति तज्ज्ञानस्यापरोक्षार्थाभिन्नत्वरूपमपरोक्षत्वं लभ्यते। तथा च विषयचैतन्यगताज्ञाननिवृत्तेः पूर्वं ज्ञानस्यापरोक्षत्वालाभेन सिद्धान्त्यभिमतस्य ज्ञानगतापरोक्षत्वस्य विषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यस्य अज्ञाननिवृत्तिं प्रति प्रयोजकत्वासम्भवादित्यर्थः। तन्निवृत्तिं प्रति प्रयोजकतया निवर्तकज्ञानविशेषणत्वायो-

तन्निवृत्तिप्रयोजकविशेषणमात्रायोगात् । तस्मात् 'तरति शोक-मात्मविद्' इति श्रुतस्य ब्रह्मज्ञानस्य मूलाज्ञानाश्रयभूतसर्वोपादान-ब्रह्मसंसर्गनियतस्य मूलाज्ञाननिवर्तकत्वात् । 'ऐन्द्रियकवृत्तयस्त-त्तदिन्द्रियसन्निकर्षसामर्थ्यात्त त्तद्विषयावच्छिन्नचैतन्यसंसृष्टा एव उत्पद्यन्ते' इति नियममुपेत्याज्ञानाश्रयचैतन्यसंसर्गनियतत्वं निव-र्तकज्ञानविशेषणं वाच्यम् । तथाच 'यद् अज्ञानं यं पुरुषं प्रति

---

गादित्यक्षरार्थः। तस्मादिति । 'यद् अज्ञानं यं पुरुषं प्रति'इत्यादिरूपे नि-रुक्ते विरोधप्रयोजके अपरोक्षत्वस्य निवर्तकज्ञानविशेषणत्वासम्भवादित्य-र्थः । तस्मादज्ञानाश्रयचैतन्यसंसर्गनियतत्वं निवर्तकज्ञानविशेषणं वाच्य-मिति सम्बन्धः । परोक्षज्ञानस्य अज्ञाननिवर्तकत्वप्रसङ्गवारणायेति शेषः । ननु विषयसंसृष्टस्य वृत्तिज्ञानस्य विषयगताज्ञाननिवर्तकत्वं क्वचिद्प्यक्लृप्त-मित्याशङ्क्य ब्रह्मगोचरवृत्तिज्ञाने क्लृप्तमित्याशयेनाह—ब्रह्मज्ञानस्येति । मूलाज्ञानाश्रयभूते सर्वोपादाने ब्रह्मणि संसर्गनियतस्येत्यर्थः । यदा ब्रह्म-गोचरवृत्तिज्ञानमुदेति, तदा नियमेन ब्रह्मसंसृष्टमेवोदेतीत्यत्र हेतुत्वेन सर्वो-पादानत्वमुपात्तम् । कार्यमात्रस्य जन्मप्रभृत्युपादानभूतब्रह्मणा सह संसर्ग-नियमे सति ब्रह्मगोचरवृत्तिज्ञानस्यापि स्वनिवर्त्यमूलाज्ञानाश्रयभूते ब्रह्मणि संसर्गनियमोऽप्यर्थसिद्ध इति भावः । ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वे मानमाह—तरति शोकमिति । शोकपदमज्ञानपरम् । आत्मपदं प्रत्यगभिन्नब्रह्मपरम् । 'श्रुतस्य'इति पदात् पूर्वम् 'अज्ञाननिवर्तकत्वेन' इति शेषः । परोक्षवृत्तीनां विषयचैतन्यसंसर्गाभावादैन्द्रियकवृत्तीनां तत्संसर्गे को हेतुः? तत्राह—तत्तदि-न्द्रियसन्निकर्षसामर्थ्यादिति । अनेन परोक्षवृत्तीनामज्ञानाश्रयविषय-चैतन्यसंसर्गनियतत्वरूपविशेषणाभावाद्'यदज्ञानं यं प्रति' इत्याद्यंशसत्त्वेऽपि न तत्रातिप्रसङ्ग इति सूचितम् । पर्यवसितं प्रयोजकं दर्शयति—तथा चेति । उक्तविशेषणे सतीत्यर्थः । घटावच्छिन्नचैतन्ये तदावरकाज्ञानानि बहूनि सन्ति । तेषां मध्ये कानिचिद्देवदत्तं प्रति तदावरकाणि,कानिचिच्च यज्ञद-त्तादिकं प्रति तदावरकाणि । एवं प्रतिविषयं पुरुषभेदेनानेकाज्ञानानि सन्ति । तथा च विषयावरकाज्ञानानां मध्ये यदज्ञानं यं पुरुषं देवदत्तं प्रति यद्विषयावरकं यस्य विषयस्य घटस्यावरकं, तदज्ञानं तदीयेन देव-

यद्विषयावरकं, तत् तदीयतद्विषयतदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभज्ञाननिवर्त्यम्' इति ज्ञानाज्ञानयोर्विरोधप्रयोजकं निरूपितं भवति ।

न चैवंसति नाडीहृदयस्वरूपगोचरशब्दज्ञानस्याप्यज्ञाननिवर्तकत्वप्रसङ्गः । तस्य कदाचिदर्थसम्पन्ननाडीहृदयान्य-

दत्तीयेन तद्विषयेण तद्घटविषयकेण तदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभज्ञानेन निवर्त्यमित्यर्थः । तदज्ञानेतिपदेन देवदत्तं प्रति घटावरकाज्ञानमभिधीयते । तदज्ञानाश्रयचैतन्यं घटावच्छिन्नचैतन्यं, तत्र यस्संसर्गः, तन्नियतस्तद्व्याप्यः आत्मलाभो यस्य घटगोचरवृत्तिज्ञानस्य, तद् ज्ञानं तदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभम् । तच्च तद् ज्ञानं चेति विग्रहः । आत्मलाभः उत्पत्तिः । नियमश्च यदा यदा घटगोचरवृत्तिज्ञानस्य घटेन्द्रियसन्निकर्षजन्यस्यात्मलाभः, तदा तदा घटावच्छिन्नचैतन्ये तस्य घटगोचरवृत्तिज्ञानस्य संसर्ग इत्येवमात्मकः । तदुक्तं प्राग्—'ऐन्द्रियकवृत्तयस्तत्तद्विषयावच्छिन्नचैतन्यसंसृष्टा एवोत्पद्यन्ते इति नियममुपेत्य'इति। अत्र यदा यदा ऐन्द्रियकवृत्तीनामुत्पत्तिः, तदा तदा विषयचैतन्ये तासां संसर्ग इति हि नियमस्स्पष्टं भासते । एवं विषयान्तरेषु पुरुषान्तरेष्वज्ञानान्तरेषु ज्ञानान्तरेषु च इदं प्रयोजकं विशिष्य विशिष्य योजनीयम् ।

ननु परोक्षवृत्तीनां विषयचैतन्यसंसर्गाभावेनोक्तप्रयोजकानाक्रान्तत्वादज्ञाननिवर्तकत्वप्रसङ्गो नास्तीत्युक्तमयुक्तम् । क्वचित् परोक्षवृत्तेरपि विषयसंसर्गसत्त्वात् । तथा हि—'हृदयपुण्डरीके नाड्यस्सन्ति' इति वाक्याज्जायमानाया वृत्तेः कदाचिदन्तःकरणे हृदयपुण्डरीकस्थे नाडीहृदयान्यतरवस्त्ववच्छेदेन जनने सति तस्या वृत्तेस्तन्यतरवस्त्ववच्छिन्नचैतन्यसंसर्गसत्त्वात्तदावरणनिवर्तकत्वप्रसङ्गः । न चेष्टापत्तिः । तदा तदन्यतरवस्तुनि जिज्ञासाऽनुदयप्रसङ्गादिति शङ्कां नियतपदेन निरस्तेत्याह—न चैवंसतीति । विरोधप्रयोजकस्य नियमगर्भत्वे सति शाब्दज्ञानस्याप्यज्ञाननिवर्तकत्वप्रसङ्गो न चेति सम्बन्धः । यदा यदा हृदयादिगोचरशाब्दवृत्तेरुदयः, तदा तदा तस्या वृत्तेर्हृदयाद्यन्यतरवस्त्ववच्छिन्नचैतन्ये संसर्ग इति नियमो नास्तीति हेतुमाह—तस्येति । तादृशशब्दज्ञानस्येत्यर्थः । ऐन्द्रियकवृत्तीनां हि तत्तदिन्द्रियगोलकावच्छिन्नान्तःकरण-

तरवस्तुसंसर्गसम्भवेऽपि विषयसंसर्गं विनाऽपि शाब्दज्ञानसम्भवेन तत्संसर्गनियतात्मलाभत्वाभावात्। तस्माज्ज्ञानाज्ञानविरोधनिर्वाहाय वृत्तिनिर्गमो वक्तव्य इति॥

(वे०सू०मं०) अन्ये विषयसम्मोहभेदनाय तमास्थिताः॥

अन्ये तु—विषयगताज्ञानस्य लाघवात् समानाधिकरणाज्ञाननिवर्त्यत्वसिद्धौ वृत्तिनिर्गमः फलतीत्याहुः॥

(वे०सू० मं०) परे चिदुपरागार्थम्।

अपरे तु—बाह्यप्रकाशस्य बाह्यतमोनिवर्तकत्वं सामानाधिकरण्ये सत्येव दृष्टमिति दृष्टान्तानुरोधाद् वृत्तिनिर्गमः सिध्यतीत्याहुः॥

---

प्रदेशेषूत्पत्तिनियमस्सम्भाव्यते। इन्द्रियनिरपेक्षवृत्तीनां त्वन्तःकरणे जायमानानां प्रदेशनियमे कारणाभावाद् हृदयादिगोचरशाब्दवृत्तिः कदाचिद्दैवयोगाद् हृदयाद्यवच्छेदेनान्तःकरणे जायते, कदाचित्तु हृदयादिप्रदेशं विहाय प्रदेशान्तरावच्छेदेन सा तत्र जायते इति निरुक्तनियमो नास्तीत्यर्थः। अत्र तस्येति षष्ठ्यास्सप्तम्या पञ्चम्या च सम्बन्धः। तस्मादिति। वृत्तिज्ञानस्याज्ञानाश्रयविषयचैतन्यसंसर्गं विना तन्निवर्तकत्वासम्भवादित्यर्थः॥

एवं ज्ञानाज्ञानयोर्विरोधप्रयोजकनिर्वाहकत्वेन वृत्तिनिर्गमनं प्रसाध्य तत्रैव हेत्वन्तराणि मतभेदेनाह—अन्ये त्वित्यादिना। लाघवादिति। विषयगताज्ञानस्यान्वयव्यतिरेकाभ्यां ज्ञाननिवर्त्यत्वग्रहदशायां लाघवात् समानाधिकरणज्ञाननिवर्त्यत्वं गृह्यते, न तु व्यधिकरणज्ञाननिवर्त्यत्वमित्यर्थः।

एतदुक्तं भवति—अज्ञानस्य विषयचैतन्यगतत्वात्तन्निवृत्तिलक्षणं ज्ञानकार्यमपि तद्गतमेव। तथा चाज्ञाननिवृत्तिरूपकार्यस्य स्वकारणभूतज्ञानेन सहेन्द्रियसन्निकर्षसामर्थ्यात् सामानाधिकरण्यलक्षणसम्बन्धसम्भवे तस्यात्यागायोगात् कार्यकारणयोस्सामानाधिकरण्यस्यौत्सर्गिकत्वादिति। बाह्यतम इति। अन्धकारेत्यर्थः। सत्येवेति। अन्यत्र विद्यमानादालोकादन्यत्र तमोनाशो न दृष्ट इत्येवकारार्थः। अज्ञानस्यापि विषयावरक-

(वे०सू०मं०) अभेदव्यक्तयेऽपरे ॥ १२१ ॥

केचित्तु—आवरणाभिभवार्थं वृत्तिनिर्गमानपेक्षायामपि चिदुपरागार्थं, प्रमातृचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्थं वा तदपेक्षेत्याहुः ॥

(वे०सू०मं०) अभेदो जीवपरयोः सिद्धो वेदान्तमानकः ॥
यतोऽत्र सर्ववेदान्तास्तात्पर्येण समन्वियुः ॥१२२॥

इति श्रीमद्गङ्गाधरसरस्वतीविरचितवेदान्तसिद्धान्तसूक्तिमञ्जर्यां प्रथमपरिच्छेदः समाप्तः ।

अथ किंप्रमाणकोऽयं जीवब्रह्मणोरभेदः, यो वृत्त्याऽभिव्यज्यते ?

'वेदान्तप्रमाणकः' इति घण्टाघोषः । सर्वेऽपि वेदान्ताः

---

त्वेन बाह्यतमस्सदृशत्वाद्वृत्तिरूपस्य वृत्त्यारूढचैतन्यरूपस्य वा प्रकाशस्यावरणनिवर्तकत्वेनालोकसदृशत्वात् ज्ञानाज्ञानयोरप्यन्धकारालोकयोरिव समानाधिकरणयोरेव निवर्त्यनिवर्तकभावः कल्प्यते । तच्च सामानाधिकरण्यमज्ञानाश्रये विषयचैतन्ये वृत्तिज्ञानस्य संसर्गरूपम् । स च संसर्गो वृत्तिनिर्गमाधीन इति भावः ॥

एवं विषयचैतन्यगताज्ञाननिवृत्तिरनिर्गतवृत्त्याऽपि सम्भवति । अतो वृत्तिनिर्गमनाभ्युपगमो व्यर्थ इत्याक्षेपे तन्निर्गमं विना तन्निवृत्तिर्न सम्भवतीति तदभ्युपगमस्सफल इति समाधानं दर्शितम् । इदानीं विषयचैतन्यगताज्ञाननिवृत्त्यर्थं वृत्तिनिर्गमनं नापेक्षितमिति पूर्वपक्ष्युक्तमङ्गीकृत्यापि वृत्तिनिर्गमनं साधयति—केचित्त्विति । इदं च प्रकारद्वयं प्रागेव प्रपञ्चितमिति नेह प्रपञ्च्यते इति बोध्यम् ॥

प्रमातृचैतन्यशब्दितजीवस्य ब्रह्माभेदे नास्ति प्रमाणमिति शङ्कते—अथेति । अयमभेदः किं वेदान्तप्रमाणकः, किं वा तदन्यप्रमाणकः ? । तत्र न तावदाद्यः कल्पस्सम्भवति वेदान्तानामुपासनादिपरत्वप्रतीतेः । न द्वितीयः । जीवब्रह्माभेदस्यौपनिषदत्वश्रुतिविरोधादिति भावः ।

तत्राद्यं कल्पं परिगृह्य समाधत्ते—वेदान्तेति । तेषामुपासनादिपरत्वं दूषयति—सर्वेऽपीति । वेदान्तानां क्व तात्पर्यम् ? इति विमृश्यमानास्सर्वेऽपि वेदान्ता

उपक्रमोपसंहारैकरूप्यादितात्पर्यलिङ्गैर्विमृश्यमानाः प्रत्यगभिन्ने ब्रह्मण्यद्वितीये समन्वयन्ति । यथा चायमर्थः, तथा शास्त्रे एव समन्वयाध्याये प्रपञ्चितः । विस्तरभयान्नेह प्रदर्श्यते इति ॥१९॥

इति सिद्धान्तलेशसारसङ्ग्रहे प्रथमः परिच्छेदः समाप्तः ।



अद्वये जीवाभिन्ने ब्रह्मणि समन्वयन्ति समन्वयं तात्पर्यं लभन्ते । तात्पर्यज्ञापकानि लिङ्गानि कथयति—उपक्रमेति । आदिपदमभ्यासादिसङ्ग्रहार्थम् । के ते वेदान्ताः, कथं वा तेषु उक्तलिङ्गानां सत्त्वम्, को वा तैर्लिङ्गैस्तात्पर्यावगमप्रकारः ? इत्याकाङ्क्षायामाह—यथा चेति । सर्वेषां वेदान्तानामयमेव परमतात्पर्यविषयीभूतोऽर्थः, न तूपासनादिरिति प्रपञ्चितमित्यर्थः । अत्रापि कुतो न प्रपञ्च्यते ? तत्राह—विस्तरेति । ग्रन्थविस्तरभयादित्यर्थः ॥ १९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्द-
सरस्वतीचरणारविन्दसंलग्नरजोभूतस्य अच्युत-
कृष्णानन्दतीर्थस्य कृतौ शास्त्रसिद्धान्तले-
शसंग्रहव्याख्यायां कृष्णालंकाराख्या-
यां प्रथमः परिच्छेदस्समाप्तः ॥

श्रीकृष्णं मनसा ध्यात्वा श्रीकृष्णं सम्प्रणम्य च ।
व्याख्यातोऽयं परिच्छेदः श्रीकृष्णपरितुष्टये ॥ १ ॥

॥ श्रीः ॥

# सूचीपत्रम् ।

रु० आ०

१ स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता (जैनदर्शनम्) २—०
२ जीवन्मुक्तिविवेकः– भा० टी० २—८
३ तत्त्वबिन्दुः—सटिप्पणः ०—६
४ नैष्कर्म्यसिद्धिः—सटीका सटीप्पणा ब्रह्मामृतसहिता २—०
५ ब्रह्मसूत्रम्–मूलमात्रम्–(वेदान्तसूत्रम्) ०—२
६ तदेव–रत्नप्रभा–भामती आनन्दगिरि (न्यायनिर्णय) युतम् ८—०
७ ब्रह्मसूत्रदीपिका–श्रीमच्छङ्करानन्दभगवद्भिरचिता । २—०
८ शिवस्तोत्रावली–श्रीमदीश्वरप्रत्यभिज्ञाकाराचार्यचक्रवर्तिवन्द्याभिधानोत्पलदेवाचार्यविरचिता । महामाहेश्वरश्रीक्षेमराजविरचिता वि. स. २—०
९ श्रीभाष्यवार्त्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तः २—०
१० श्रीमदणुभाष्यं प्रकाशव्याख्यासहितम् १५—०
११ ब्रह्मसूत्रवृत्तिः मरीचिका सहिता २—०
१२ ब्रह्मसूत्रभाष्यम् भास्करभाष्यसहितम्– ३—०
१३ ब्रह्मसूत्रभाष्यम् वादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् ६—०
१४ ब्रह्मसूत्रवृत्तिः भावप्रकाशिका (अपूर्णा) १—०
१५ भगवद्गीतामृततरंगिणी टीकोपेता २—०
१६ वेदान्तपरिभाषा—(मूलम्) सटिप्पणा ०—८
१७ सैव–टीकाद्वयोपेता (शिखामणि तथा प्रभासहिता) २—८
१८ वेदान्तसिद्धान्तमुक्तावलिः–इंग्लिश० २—८
१९ तत्त्वदीपनम्–पञ्चपादिकाविवरणस्य व्याख्यानम् । ८—०
२० तत्त्वत्रयम्–भाष्योपबृंहितं विशिष्टाद्वैतदर्शनप्रकरणं श्रीलोकाचार्य्यप्रणीतम् । मातृभाषा–श्रीनारायणतीर्थविरचितप्रकाशसहिता २—०
२१ सिद्धित्रयम्—विशिष्टाद्वैतपरम् ।
श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् १—०
२२ संक्षेपशारीरकम्–रामतीर्थीटीकासहितम् ६—०
२३ " " मधुसूदनसरस्वतीटीकासहितम् १२—०

☞ पत्रादिप्रेषणस्थानम्–हरिदासगुप्तः–
चौखम्बासंस्कृतसीरीज आफीस—
बनारस सिटी ।

# ॥ द्वितीयः परिच्छेदः ॥

(वे०सू०मं०) ननूपजीव्यप्रत्यक्षाविरुद्धं श्रुतियुक्तिभिः ॥
बोध्यते कथमद्वैतम्,

(१)अथ कथमद्वितीये ब्रह्मणि वेदान्तानां समन्वयः, प्रत्यक्षादिविरोधाद् ? इति चेत्, न । आरम्भणाधिकरणो—( उ० मी० अ० २ पा० १ अधि० ६ सू० १४ ) दाहृतश्रुतियुक्तिभिः

---

यो मे विश्वेश्वरक्षेत्रं विश्वेश्वरसमो गुरुः ॥
समध्यास्ते स्वयंज्योतिर्वाणीसंज्ञो भजामि तम् ॥ १ ॥

स्वयंप्रकाशसरस्वतीसंज्ञक इत्यर्थः ।

आचार्यचरणद्वन्द्वस्मृतिर्लेखकरूपिणम् ।
मां कृत्वा कुरुते व्याख्यां नाहमत्र प्रभुर्यतः ॥ २ ॥

अत्र व्याख्याने प्रभुः समर्थ इत्यर्थः ।

प्रथमपरिच्छेदे ब्रह्मलक्षणविचारावसरे लक्षणस्य मतभेदेन ज्ञेयब्रह्मनिष्ठत्वनिरूपणेन ईश्वररूपब्रह्मनिष्ठत्वनिरूपणेन च तत्पदलक्ष्यार्थवाच्यार्थौ निरूपितौ । तथा तदनन्तरं जीवतत्साक्षिणोर्निरूपणेन त्वम्पदवाच्यार्थलक्ष्यार्थौ निरूपितौ । तथा चार्थाद्वाक्यार्थरूपाभेदोऽपि निरूपितो भवति । वाक्यार्थस्य तत्त्वंपदलक्ष्यार्थानतिरेकात् । तथा च जीवाभिन्ने निर्विशेषे ब्रह्मणि वेदान्तसमन्वयरूपः प्रथमाध्यायार्थस्तात्पर्यतः पूर्वपरिच्छेदे निरूपितो भवति ।

इदानीं द्वितीयाध्यायार्थरूपं वेदान्तसमन्वयस्य मानान्तराविरोधं निरूपयितुं परिच्छेदान्तरमारभते—अथ कथमिति । समन्वयस्तात्पर्यम् । प्रत्यक्षेति । ब्रह्मापेक्षया द्वितीयस्य प्रपञ्चस्य प्रत्यक्षसिद्धत्वाद् अद्वितीयत्वं तस्य बाधितम् । तथा च बाधितेऽर्थे कथं श्रुतेस्तात्पर्यम्, अप्रामाण्यप्रसङ्गादिति भावः । प्रपञ्चस्य रज्जुसर्पादिवद् ब्रह्मणि कल्पितत्वाद्वास्तवमद्वितीयत्वमबाधितमिति समाधत्ते—नेति । श्रुति युक्तिभिरिति । एताश्श्रुति-

प्रत्यक्षाद्यधिगम्यस्य प्रपञ्चस्य ब्रह्मविवर्ततया मिथ्यात्वावगमात् ।
ननु न श्रुतियुक्तिभिः प्रपञ्चस्य मिथ्यात्वं प्रत्याययितुं शक्यते ।
'घटस्सन्' इत्यादिघटादिसत्त्वग्राहिप्रत्यक्षादिविरोधात् ।
(वे०मु०मं०) तत्त्वशुद्धिकृतो विदुः ॥ १ ॥

शुक्तीदन्तेव सन्मात्रं सर्वाध्यक्षेषु गोचरः ॥
रूप्यवद्धटभेदादिर्भ्रान्तेरित्यविरुद्धता ॥ २ ॥

अत्राहुस्तत्त्वशुद्धिकाराः—न प्रत्यक्षं घटपटादि तत्सत्त्वं वा गृह्णाति, किं त्वधिष्ठानत्वेन घटाद्यनुगतं सन्मात्रम् । तथा च प्रत्यक्षमपि सद्रूपब्रह्माद्वैतसिद्ध्यनुकूलमेव । तथा सति 'सद्' 'सद्' इत्येव प्रत्यक्षं स्यात्, न तु 'घटः सन्' इत्यादि प्रत्यक्षमिन्द्रियान्वयव्यतिरेकानुविधायीति चेत्, न । यथा भ्रमेष्विदमंशस्याधि-

---

युक्तयो विवर्तलक्षणनिरूपणावसरेऽस्माभिर्दर्शिता इति नात्र प्रदर्श्यन्ते, प्रत्यक्षविरोधे श्रुतियुक्तीनामेव बाधो न्याय्य इति मन्यमान आक्षिपति—ननु नेति । 'घटस्सन्' इत्यादिना घटादिसत्त्वग्राहिप्रत्यक्षेण सह प्रपञ्चमिथ्यात्वप्रत्यायकश्रुतियुक्तीनां विरोधसत्त्वादित्यर्थः ।

श्रुत्यादिगम्यमिथ्यात्वविरुद्धं सत्त्वं प्रत्यक्षग्राह्यमेव न भवति । अतस्तद्विरोधशङ्कैव निरालम्बनेति पञ्चभिर्मतैः प्रतिपादयति—अत्राहुरित्यादिना । प्रत्यक्षं घटादि न गृह्णाति, तस्य घटादेस्सत्त्वं वा न गृह्णाति चेत्, तर्हि निर्विषयं तत् प्रसज्येतेति शङ्कते—किं त्विति । उत्तरम्—अधिष्ठानेति । सन्मात्रमिति । सद्रूपं ब्रह्मैव प्रत्यक्षप्रमेयमित्यर्थः । एवं स्थिते न केवलं प्रत्यक्षविरोधाभावः, किं तु लाभोऽप्यस्तीत्याह—तथा चेति । घटादेरैन्द्रियकत्ववादी शङ्कते—तथा सतीति । तस्य सन्मात्रविषयकत्वे सतीत्यर्थः । इन्द्रियेति । न च सन्मात्रप्रत्यक्षे एव इन्द्रियान्वयाद्यनुविधानोपपत्तेः प्रत्यक्षस्य घटादिविषयकत्वाभावे तदनुविधानं न स्यादित्येतदभिप्रायकं विशेषणमयुक्तमिति वाच्यम् । स्वप्रकाशस्य सन्मात्रस्य प्रकाशनाय इन्द्रियापेक्षाऽनुपपत्तेरिति भावः । अत्राक्षेप्ता किं सिद्धान्त्येकदेशी, किं वा भेदवादी ? । आद्ये तत्स-

ष्ठानस्य प्रत्यक्षेण ग्रहणम्, इन्द्रियान्वयव्यतिरेकयोः तत्रैवोपक्षयः। रजतांशस्य त्वारोपितस्य भ्रान्त्या प्रतिभासः, तथा सर्वत्र सन्मात्रस्य प्रत्यक्षेण ग्रहणम्, तत्रैवेन्द्रियव्यापारः। घटादिभेदवस्तुप्रतिभासो भ्रान्त्येत्यभ्युपगमात्।

ननु तद्वदिह बाधादर्शनात् तथाऽभ्युपगम एव निर्मूल इति चेत्, न। बाधादर्शनेऽपि देशकालव्यवहितवस्तुवद् घटादिभेदवस्तुनः प्रत्यक्षायोग्यत्वस्यैव तत्र मूलत्वात्।

तथाहि—इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते। तदा तत्र घटादिभेदे संशयविपर्ययादर्शनात्।

---

म्मतदृष्टान्तेन सन्मात्रस्य प्रत्यक्षप्रमेयत्वमाह—यथेति। तत्रैवेति। अधिष्ठानग्रहणे एवेत्यर्थः। भ्रान्त्येति। साक्षिरूपयेत्यर्थः। सन्मात्रस्येति। तस्य स्वप्रकाशत्वेऽप्यावृतत्वादावरणनिवर्तकवृत्त्युत्पत्तये इन्द्रियापेक्षेति भावः। घटादीति। घटादेस्तद्भेदाख्यस्य च वस्तुनः प्रतिभासो भ्रान्त्या ऐन्द्रियवृत्त्यभिव्यक्तसन्मात्ररूपसाक्षिचैतन्यलक्षणयेत्यभ्युपगमादित्यर्थः। एतेन 'सत् सद्' इत्येव प्रत्यक्षं स्यादित्याक्षेपो भेदवाद्यपि निरस्तः। सिद्धान्तिना घटादौ तत्सत्त्वे च प्रत्यक्षस्य प्रामाण्यानङ्गीकारेऽपि घटादेः प्रत्यक्षज्ञाने साक्षिरूपे भानाङ्गीकारात्।

भेदवादी शङ्कते—नन्विति। शुक्तिरजतादेर्बाधदर्शनाद्युक्तं तस्य भ्रान्त्या प्रतिभासाङ्गीकरणम्। तथा घटादिद्वैतस्य बाधादर्शनात्तस्य भ्रान्तिमात्रसिद्धत्वमनुपपन्नमित्यर्थः। किं श्रौतबाधादर्शनं विवक्षितम्, किं वा प्रत्यक्षबाधादर्शनम्, यौक्तिकबाधादर्शनं वा?। आद्यमसिद्धम्। द्वयमात्रस्य ब्रह्मणि "नेह नानाऽस्ति" इत्यादिश्रुत्या बाधदर्शनादित्याह—नेति। द्वितीयमङ्गीकरोति—बाधादर्शनेऽपीति। तृतीयमप्यसिद्ध्या दूषयति—देशकालेति। घटादीति। घटादेस्तद्धर्मिकभेदरूपस्य च वस्तुन इत्यर्थः।

प्रत्यक्षायोग्यत्वमेव दर्शयितुं प्रथमं सम्मतमर्थं दर्शयति—इन्द्रियेति। तत्रेतिपदव्याख्या—घटादिभेदे इति। घटादिधर्मिकभेदे इ-

यत्रापि स्थाण्वादौ पुरुषत्वादिसंशयः, तत्रापि तद्व्यतिरिक्तेभ्यो भेदोऽसन्दिग्धविपर्यस्तत्वात् प्रकाशत एव । भेदस्य च प्रतियोगिसहोपलम्भनियमवतो न प्रत्यक्षेण ग्रहणं सम्भवति । देशकालव्यवधानेनासन्निकृष्टानामपि प्रतियोगिनां सम्भवात् । भेदज्ञानं प्रतियोग्यंशे संस्कारापेक्षणात् स्मृतिरूपमस्तु प्रत्यभिज्ञानमिव तत्तांशे इति चेत् न । तथापि भेदगतप्रतियोगिवैशिष्ट्यांशे तदभावात् ।

न च कनकाचलो भेदप्रतियोगी, वस्तुत्वादिति भेदे प्रतियोगिवैशिष्ट्यगोचरानुमित्या तत्संस्कारसम्भवः । भेदे ज्ञानं त्रि-

---

त्यर्थः । सर्वतो भिन्न एव प्रतीयत इत्ययुक्तम् । इन्द्रियसन्निकृष्टे स्थाण्वादौ क्वचित् पुरुषादिप्रतियोगिकभेदस्याप्रतीतेः, प्रतीतौ वा संशयाभावापत्तेरत आह—यत्रापीति । ततः किम् ? तत्राह—भेदस्य चेति । प्रतियोगिसहोपलम्भनियमवत इति । ससम्बन्धिकपदार्थप्रत्यक्षे यावत्सम्बन्धिविषयकत्वस्य यावत्सम्बन्धिप्रत्यक्षजन्यतायाश्च संयोगादिप्रत्यक्षे क्लृप्तत्वाद् भेदप्रत्यक्षेऽपि यावत्प्रतियोगिविषयकत्वं यावत्प्रतियोगिप्रत्यक्षजन्यत्वं च वाच्यम् । भेदप्रत्यक्षस्यापि ससम्बन्धिकपदार्थप्रत्यक्षत्वात् । तथा च यावन्तः प्रतियोगिनः तावतां प्रतियोगिनां प्रत्यक्षासम्भवेन क्लृप्तसामग्र्यभावाद् न भेदः प्रत्यक्षप्रमायोग्य इति तस्य भ्रान्तिमात्रसिद्धत्वं युक्तम् । सिद्धान्ते तु भेदे प्रत्यक्षस्य नित्यसाक्षिरूपत्वाद् न कारणापेक्षेति भावः । सहोपलम्भनियममात्रस्य भेदसत्यत्वमते कथञ्चिदुद्धारं शङ्कते—भेदज्ञानमिति । संस्कारापेक्षणादिति । तज्जन्यत्वसम्भवादित्यर्थः । भेदज्ञाने हि प्रतियोगिनां प्रतियोगितावच्छेदकरूपेणैव भानं परैरुपेयते । तेन रूपेण सकलप्रतियोगिगोचरपूर्वानुभवासम्भवेन संस्कारासम्भवाद् असन्निकृष्टप्रतियोग्यंशे स्मृतिरूपत्वमपि न सम्भवति । तदभ्युपगम्याप्याह सिद्धान्ती—न, तथाऽपीति । कनकाचलादिपदार्थानां सन्निकृष्टघटनिष्ठभेदप्रतियोगित्वेन पूर्वमननुभूतत्वादिति भावः । वैशिष्ट्यांशे पूर्वानुभवं शङ्कते—कनकाचल इति । एवमितरपदार्थेष्वपि अनुमानं द्रष्टव्यमिति भा-

नाऽनुमित्यभावेना(१)त्माश्रयापत्तेः । पक्षसाध्यहेतुपक्षताद्यभेदभ्रमे सति सिद्धसाधनादिनाऽनुमानाप्रवृत्त्या तदभेदज्ञानविघटनीयस्य तद्भेदज्ञानस्यापेक्षितत्वात् ।

अस्तु तर्हि भेदांशे इव प्रतियोगिवैशिष्ट्यांशेऽपि प्रत्यक्षमिति चेत्, न । प्रतियोगिनोऽप्रत्यक्षत्वे तद्वैशिष्ट्यप्रत्यक्षायोगात् सम्बन्धिद्वयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात् । तस्मात् प्रत्यक्षायोग्यस्य प्रतियोगिनो भ्रान्तिरूप एव प्रतिभास इति तदेकवित्तिवेद्यत्वनियतस्य भेदस्य भेदैकवित्तिवेद्यत्वनियतस्य घटादेश्च भ्रमैकविषयत्वात् प्रत्यक्षं निर्विशेषसन्मात्रग्राह्याद्वैतसिद्ध्यनुकूलमिति ॥

(वे०सू०मं०) ब्रह्मसत्तानुविद्धं हि विश्वमिन्द्रियगोचरः ॥
स्वतो नेत्थविरुद्धत्वमाहुर्न्यायसुधाकृतः ॥ ३ ॥

न्यायसुधाकृतस्त्वाहुः—घटादेरैन्द्रियकत्वेऽपि 'सन् घटः'

---

वः। आत्माश्रयापत्तेरिति। भेदज्ञानस्य भेदज्ञानाधीनत्वेन न किञ्चिद् भेदज्ञानं सिध्येदिति भावः। अप्रवृत्त्येति। तथा च पक्षाद्यभेदज्ञानस्य अनुमितिप्रतिबन्धकतया तद्विघटकं पक्षादिभेदज्ञानमावश्यकमिति भावः। तर्हीति। प्रतियोगिवैशिष्ट्यांशज्ञानस्य स्मृतिरूपत्वासम्भवे सतीत्यर्थः। तदेकेति। तत्पदं प्रतियोगिपरम्। नियमेन प्रतियोगिज्ञानविषयस्येत्यर्थः। वित्तिपदं प्रत्यक्षपरम्। भेदपदजन्यभेदज्ञानस्य प्रतियोगिविषयकत्वादर्शनादिति बोध्यम्। भ्रमैकविषयत्वादिति। अधिष्ठानस्यापि भ्रमविषयत्वात् कल्पितत्वप्रसङ्गवारणाय एकपदम्। अधिष्ठानस्य च सम्यग्दर्शनं प्रत्यपि विषयत्वात् भ्रान्त्येकविषयत्वमसिद्धम्। तथा च प्रत्यक्षं सद्वस्तुन्येव प्रमाणं सत् श्रुत्यनुकूलमित्यर्थः।

अस्तु वा घटादेश्चाक्षुषत्वाद्यनुभवानुरोधेन चक्षुरादिगम्यत्वम्, तथाऽपि प्रपञ्चमिथ्यात्वसाधकश्रुतियुक्तीनां न प्रत्यक्षविरोधः। प्रत्यक्षस्यापि घटादौ पृथक्सत्त्वग्राहित्वाभावादित्याह—न्यायसुधाकृतस्त्वाहुरिति। 'सन् घटः'

---

(१) अनुमानप्रवृत्त्ययोगेनेति पाठः।

इत्यादिरधिष्ठानसत्तानुवेध इति न विरोधः । एवं "नीलो घटः" इत्यादिरधिष्ठाननैल्यानुवेधः किं न स्यादिति चेत्, न । श्रुत्या सद्रूपस्य वस्तुनो जगदुपादानत्वमुक्तमविरोधात् सर्वसम्मतमिति, तदनुवेधेनैव 'सन् घटः' इत्यादिप्रतिभासोपपत्तौ घटादावपि सत्ताकल्पने गौरवम् । तस्य रूपादिहीनत्वाद्, नैल्यादिकं घटादावेव कल्पनीयमिति वैषम्यादिति ॥

(वे०सू० मं०) जडेष्वावरणायोगाच्चक्षुरादेर्न तात्त्विकी ॥
मानतेत्यविरुद्धत्वं संक्षेपाचार्यदर्शने ॥ ४ ॥

संक्षेपशारीरकाचार्यास्त्वाहुः—प्रत्यक्षस्य घटादिसत्त्वग्राहित्वेऽपि पराग्विषयस्य प्रत्यक्षादेस्तत्त्वावेदकत्वलक्षणप्रामाण्याभावाद् न तद्विरोधेनाद्वैतश्रुत्यादिबाधशङ्का । अज्ञातबोध-

---

इत्यादिः घटादेस्सत्त्वप्रतिभासः अधिष्ठानसत्तासम्बन्धविषयक एव, अतो न विरोध इत्यर्थः । घटादौ प्रतीयमानसत्त्वस्याधिष्ठानगतत्वस्वीकारेऽतिप्रसङ्गं शङ्कते—एवमिति । 'नीलो घटः' इत्यादिः घटादौ नैल्यप्रतिभासोऽप्यधिष्ठाननैल्यसम्बन्धगोचरः किं न स्यादित्यर्थः । तथा च ब्रह्म रूपवत् स्यादिति भावः । नैल्यादेः सत्तावैषम्येण परिहरति—नेति । श्रुत्येति । "सदेव"इत्यादिश्रुत्येत्यर्थः । सर्वसम्मतमिति । सर्वैरेव स्वीकर्तव्यमित्यर्थः । न तु यथाश्रुतम्, वैशेषिकादिभिरनङ्गीकारात् । अविरोधादिति । रज्ज्वादेस्सर्पाद्युपादानत्ववत् कूटस्थब्रह्मणोऽप्युपादानत्वाविरोधादित्यर्थः । तदन्विति । तत्पदमधिष्ठानसत्तापरम् । तस्येति । जगदधिष्ठानभूतब्रह्मण इत्यर्थः । घटादावेवेति । न ब्रह्मणि तत् कल्पयितुं शक्यम्, श्रुतिविरोधादिति भावः ॥

प्रत्यक्षस्य घटादौ पृथक्सत्त्वग्राहित्वेऽपि तस्य प्रमाणाभासत्वाद् न तेन श्रुतेर्बाधशङ्काऽवकाश इत्याह—संक्षेपशारीरकाचार्यास्त्विति । पराग्विषयस्येति । जडमात्रविषयकस्येत्यर्थः । तत्त्वेति । अनधिगतत्वे सत्यबाधितं तत्त्वं तदावेदकं तद्बोधकं तत्त्वं प्रमाणलक्षणमिति बहुवादिसम्मतम् । तच्च प्रत्यक्षस्य नास्तीति प्रमाणाभासरूपं प्रत्यक्षमि-

कं हि प्रमाणम् । न च प्रत्यक्षादिविषयस्य घटादेरज्ञातत्व-मस्ति । जडे आवरणकृत्याभावेनाज्ञानविषयत्वानुपगमात् । स्वप्रकाशतया प्रसक्तप्रकाशं ब्रह्मैवाज्ञानविषय इति तद्बोधक-मेव तत्त्वावेदकं प्रमाणम् । तदेव प्रमितिविषयः ।

अत एव श्रुतिरपि "आत्मा वा अरे द्रष्टव्यः" इत्यात्मन एव प्रमेयत्वमिति नियच्छति। न हि "द्रष्टव्यः" इत्यनेन दर्शनं विधीयते, प्रमाणपरतन्त्रस्य तस्य विध्यगोचरत्वात् किं तु 'आत्मा द-र्शनार्हः' इति। अज्ञातत्वादात्मन एव प्रमेयत्वमुचितं, नान्यस्येति नियम्यते इति ॥

(वे० सू० मं०) जातिकालादिकं सत्त्वमिष्टमध्यक्षगोचरः ॥
नहि तच्छ्रौतमिथ्यात्वाविरुद्धमिति केचन ॥ ९ ॥

केचित्तु—घटादिसत्त्वग्राहिणः प्रत्यक्षस्य प्रामाण्ये ब्रह्मप्रमाणन्यू-नताऽनवगमेऽपि तद्ग्राह्यं सत्त्वमनुगतप्रत्ययात् सत्ताजातिरूपं

---

ति भावः । घटादेरिति । तस्याबाधितत्वे सत्यप्यज्ञातत्वं नास्ती-त्यभिप्रायः । अन्यथा तदभावादपि प्रत्यक्षस्य प्रमाणाभासत्वप्रतिपाद-नसम्भवे अज्ञातत्वाभावमात्रप्रतिपादनायोगात् । अतो बाधितत्वाभावमु-पेत्य तस्याभासत्वप्रतिपादनमिह विवक्षितमिति बोध्यम् । कृत्यं कार्यं फलमिति यावत् । स्वप्रकाशात्मन एव प्रमेयत्वे श्रुतिमपि प्रमाणय-ति—अत एवेति । अज्ञातत्वादेवेत्यर्थः । ननु 'द्रष्टव्यः' इति श्रुतिरात्मद-र्शनं विधत्ते, नेत्याह—न हीति । अगोचरत्वादिति । पुरुषयत्नसाध्य-क्रियाया एव विधियोग्यत्वादिति भावः । विधिप्रत्ययस्य गतिं पृच्छति—किं त्विति । अर्हार्थस्तव्यप्रत्यय इत्याह—आत्मेति ।

प्रत्यक्षविषयजडस्याज्ञातत्वमुपेत्य जडबोधकप्रत्यक्षस्य श्रुतितुल्य-प्रमाणत्वस्वीकारेऽपि प्रत्यक्षग्राह्यघटादिसत्त्वस्य मिथ्यात्वाविरुद्धत्वाद् न मिथ्यात्वबोधकश्रुत्यादीनां प्रत्यक्षविरोधशङ्केत्याह—केचित्त्विति । प्रत्य-क्षग्राह्यं सत्त्वं सत्ताजातिरूपं वा, तत्तद्देशकालसम्बन्धरूपं वा, घटादिस्वरूपं वा पर्यवस्यतीति सम्बन्धः । जातिरूपत्वे मानमाह—अनुगतेति । 'सन् घ-

वा, 'इहेदानीं घटोऽस्ति' इति देशकालसम्बन्धप्रतीतेः तत्तद्देशकाल-सम्बन्धरूपं वा, 'नास्ति घटः' इति स्वरूपनिषेधप्रतीतेर्घटादिस्वरूपं वा पर्यवस्यति । तच्च स्वमिथ्यात्वेन न विरुध्यते । न हि मिथ्यात्ववादिनाऽपि घटादेः स्वरूपं वा, तस्य देशकालसम्बन्धो वा, तत्र जात्यादिकं वा नाभ्युपगम्यते, किं तु तेषामबाध्यत्वम् । न चाबाध्यत्वमेव सत्त्वं प्रत्यक्षग्राह्यमस्त्विति वाच्यम् । 'कालत्रयेऽपि नास्य बाधः' इति वर्तमानमात्रग्राहिणा प्रत्यक्षेण ग्रहीतुमशक्यत्वादित्याहुः ॥

(वे०सू०मं०) अयावज्ज्ञानबाध्यत्वमबाध्यत्वमिति द्विधा ॥
सत्त्वयोर्भेदमाश्रित्याविरोधमितरे जगुः ॥ ६ ॥

---

टः, सन् पटः' इत्यादिरूपेत्यर्थः । द्वितीये मानमाह—इहेति । 'इहेदानीं घटः' इति प्रतीतिर्घटे प्रतीयमानदेशकालसम्बन्धमेव सत्तारूपतया विषयीकरोतीति भावः । तृतीये मानमाह—नास्ति घट इतीति । 'घटो नास्ति' इति घटास्तितानिषेधत्वेन रूपेण घटस्वरूपनिषेधस्यैवानुभवाद् घटास्तित्वं घटस्वरूपं पर्यवस्यतीत्यर्थः । ततः किं ? तत्राह—तच्चेति । न हीति । तुच्छविलक्षणप्रपञ्चस्वरूपाङ्गीकारादिति भावः । घटादेः स्वरूपं वा नाभ्युपगम्यते इति न हीति सम्बन्धः । तथा तस्य देशकालसम्बन्धो वा नाभ्युपगम्यत इति न हीति सम्बन्धः । तत्र जात्यादिकं वा नाभ्युपगम्यते इति न हीति सम्बन्धः । एतत् सर्वं जगन्मिथ्यात्ववादिनाऽभ्युपगम्यते एव । विरोधाभावादिति भावः । तर्हि कीदृशं सत्त्वं मिथ्यात्वविरोधि यत्त्वया नाभ्युपेयते जगतीति पृच्छति—किंत्विति । उत्तरम्—तेषामिति । घटादीनामित्यर्थः । किं तु तेषामबाध्यत्वं नाभ्युपगम्यते इति सम्बन्धः । मिथ्यात्वस्य बाध्यत्वरूपत्वात्तद्विरुद्धं सत्त्वमबाध्यत्वरूपमेव चेत्, तर्हीदमेव सत्त्वं प्रत्यक्षविषयोऽस्तु । तथा च प्रत्यक्षविरोधशङ्का स्यादेवेत्याशयवतीं शङ्कामुद्भाव्य निराचष्टे न चेत्यादिना । नास्येति । जगत इत्यर्थः ।

अबाध्यत्वरूपमेव सत्त्वं प्रत्यक्षविषय इत्युपेत्यापि प्रत्यक्षविरोधाभाव-

अन्येतु—अबाध्यत्वरूपसत्यत्वस्य प्रत्यक्षग्राह्यत्वेऽपि "प्राणा वै सत्यं तेषामेष सत्यम्" इति श्रुत्या प्रधानभूतप्राणग्रहणोपलक्षितस्य कृत्स्नस्य प्रपञ्चस्य ब्रह्मणश्च सत्यत्वोत्कर्षापकर्षप्रतीतेः, सत्यत्वे चाबाध्यत्वरूपे सर्वदैवाबाध्यत्वं किञ्चित्कालमबाध्यत्वमित्येवंविधोत्कर्षापकर्षं विना 'राजराजो मन्मथमन्मथः' इत्यादिशब्दतात्पर्यगोचरानियन्तृत्वसौन्दर्यादीनामिव भूयोविषयत्वाल्पविषयत्वादिरूपोत्कर्षापकर्षासम्भवाद्, विधान्तरेण तत्सम्भवेऽपि प्रपञ्चस्य

---

माह—अन्ये त्विति। अबाध्यत्वरूपसत्यत्वस्य प्रत्यक्षग्राह्यत्वेऽपि न मिथ्यात्वश्रुतिविरोध इति सम्बन्धः। कालत्रयाबाध्यत्वरूपं सत्त्वं मिथ्यात्वविरोधि। तच्च ब्रह्मण एव। प्रपञ्चस्य तु यावत्तत्त्वज्ञानमबाध्यत्वरूपं सत्त्वम्। एतच्च न मिथ्यात्वविरोधीति न प्रत्यक्षविरोध इति वक्तुं प्रपञ्चब्रह्मणोस्सत्त्वे वैलक्षण्ये प्रमाणमाह—प्राणा इति। प्राणग्रहणं कृत्स्नप्रपञ्चोपलक्षणार्थम्। एष परमात्मा तेषां सत्यं तानपेक्ष्य सत्य इत्यर्थः। तथा च श्रुतौ प्रपञ्चस्य सत्यत्वं निकृष्टं, ब्रह्मणस्सत्यत्वमुत्कृष्टमित्युक्तं भवति। तत्र प्राणपदेन प्रपञ्चोपलक्षणे नियामकमाह—प्रधानभूतेति। सूत्रात्मरूपस्य प्राणस्य जगद्विधारकत्वात् प्राधान्यं द्रष्टव्यम्। न चोपलक्षणे मानाभावः शङ्कनीयः। ब्रह्मस्वरूपप्रतिपादनपरे वाक्ये प्रपञ्चैकदेशभूतप्राणग्रहणे प्रयोजनाभावात्। कृत्स्नोपलक्षणे तु सत्यत्वेन प्रसिद्धप्रपञ्चाधिष्ठानतया ब्रह्मैव परमार्थसत्यं, न तु प्रपञ्चः, तस्य श्रुतिबाधितत्वेन परमार्थसत्यत्वायोगादिति ब्रह्मप्रमितिरूपप्रयोजनसत्त्वादिति भावः। ततः किं? तत्राह—सत्यत्वे चेति। राजेति। राजत्वं पालकत्वरूपं नियन्तृत्वम्। तच्च पाल्यदेशापेक्षम्। तथा च 'विष्णुशर्मा राजराजः' इति प्रयोगे विष्णुशर्मण इतरराजापेक्षया उत्कर्षः प्रतीयते, इतरेषां च निकर्षः। तौ च पालनस्य भूयोदेशविषयकत्वाल्पदेशविषयकत्वरूपौ। 'मन्मथस्तावन्नारायणपुत्रस्सुन्दरः' इति प्रसिद्धिः पुराणेषु। तथा च 'अतिसुन्दरोऽयम्' इति तात्पर्येण 'मन्मथमन्मथः श्रीरामः' इति प्रयोगो दृश्यते। तत्र सौन्दर्यं नाम उत्कृष्टरूपादिमत्त्वम्, अतिसौन्दर्यं ततोऽप्युत्कृष्टरूपादिमत्त्वमिति बोध्यम्। असम्भवादिति। नियन्तृत्वसौन्दर्यादिविलक्षणे बाधाभावरूपे सत्त्वे

ब्रह्मज्ञानबाध्यत्वश्रुत्यन्तरैकार्थ्याद् उक्तोत्कर्षापकर्षे एव पर्यवसानाच्च प्रत्यक्षग्राह्यं घटादिसत्यत्वं यावद्ब्रह्मज्ञानमबाध्यत्वरूपमिति न मिथ्यात्वश्रुतिविरोध इत्याहुः ॥

(वे०सू०मं०) प्रत्यक्षं बाध्यमाचख्युरपच्छेदनयात् परे ॥
यतः शङ्कितदोषं तन्निर्दोषा बाधते श्रुतिः ॥ ७ ॥

अपरे तु—प्रपञ्चस्य मिथ्यात्वसत्यत्वग्राहिणोः श्रुतिप्रत्यक्षयोर्विरोधेऽपि दोषशङ्काकलङ्कितात् प्रथमप्रवृत्तात् प्रत्यक्षाद् निर्दोषत्वादपच्छेदन्यायेन परत्वाच्च श्रुतिरेव बलीयसी ।

---

भूयोविषयत्वाल्पविषयत्वरूपोत्कर्षापकर्षयोर्जातिविशेषरूपयोश्चासम्भवादित्यर्थः । ननु अबाधितत्वरूपेऽपि सत्त्वे प्रकारान्तरेण उत्कर्षापकर्षौ सम्भवत एव ।

तथा हि—प्रपञ्चब्रह्मणोः कालत्रयाबाध्यत्वरूपे सत्त्वे समानेऽपि ब्रह्मगतं सत्त्वं श्रुतिगम्यत्वादुत्कृष्टम्, इतरत्तु लौकिकप्रमाणगम्यत्वाद् निकृष्टमिति श्रुत्यर्थोपपादनसम्भवात् । तथा च मिथ्यात्वविरुद्धसत्त्वग्राहिलौकिकप्रमाणविरोधशङ्का स्यादेवेति,नेत्याह—विधान्तरेणेति । "प्राणा वै सत्यम्"इति श्रुतौ सत्यशब्दः प्रपञ्चस्य यदि कालत्रयाबाध्यत्वरूपं सत्यत्वं प्रतिपादयेत, तदा निखिलप्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वप्रतिपादकश्रुत्यन्तरेण सह "प्राणा वै सत्यम्" इतिश्रुतेर्विरोधस्स्यात् । न चाविरोधेन श्रुतिद्वयप्रामाण्यसम्भवे विरोधेन प्रामाण्यं हातव्यम् । तस्माच्छ्रुत्युक्तसत्त्वोत्कर्षापकर्षयोः कालत्रयाबाध्यत्वादावेव पर्यवसानं वाच्यं, नान्यत्रेत्यर्थः ॥

एवम् 'अत्राहुः'इत्यादिना प्रपञ्चमिथ्यात्वसाधकश्रुतियुक्तीनां प्रत्यक्षं विरोधि न भवतीति प्रतिपादितम् । इदानीं प्रत्यक्षस्य कालत्रयाबाध्यत्वरूपसत्त्वग्राहित्वेन श्रुतिविरोधित्वेऽपि न मिथ्यात्वसिद्ध्यनुपपत्तिः । श्रुत्या प्रत्यक्षस्य बाधोपपत्तेरित्याह—अपरे त्विति । श्रुतिरेव प्रत्यक्षाद् बलीयसीति सम्बन्धः । श्रुतेः प्राबल्ये हेतुद्वयमाह—निर्दोषत्वादिति । अपच्छेदन्यायो वक्ष्यते । प्रत्यक्षस्यापि निर्दोषत्वादिकं तुल्यमिति शङ्कां वारयति—दोषेति । एतच्चाग्रे स्पष्टं भविष्यति । श्रुतेः प्राबल्ये मनुवचनमपि नियामकमित्याह—प्राबल्यमिति । जात्या आगमत्वेनैव तेषु प्रकृतेषु त्रिषु

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्॥ इति स्मरणाच्च।

न च वेदैकगम्यार्थविषयकमिदं स्मरणम्। तत्र प्रत्यक्षविरोधशङ्काऽभावेन शङ्कितप्रत्यक्षविरोधे एव वेदार्थे वेदस्य प्राबल्योक्त्यौचित्यात्।

तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव॥
न तलं विद्यते व्योम न खद्योतो हुताशनः॥ १॥
तस्मात् प्रत्यक्षदृष्टेऽपि युक्तमर्थे परीक्षितुम्॥
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात् परिहीयते॥ २॥

---

प्रत्यक्षानुमानागमेषु स्मृतं वैदिकेषु प्रसिद्धमित्यर्थः। ननु वेदैकगम्ये स्वर्गसाधनत्वादौ वेदस्य प्राबल्यप्रतिपादकं तद् वचनम्। मिथ्यात्वं तु न वेदैकगम्यम्। तस्यानुमानादिनाऽपि सिद्ध्युपगमात्। अतस्तत्र श्रुतेः प्राबल्ये तद् वचनं न प्रमाणमिति मत्वा शङ्कते—न चेति। निराकरोति—तत्रेति। वेदैकगम्यार्थे इत्यर्थः। तथा च वचनस्य तद्विषयत्वे वैयर्थ्यं स्यादिति भावः। वचनस्य मिथ्यात्वप्रतिपादकश्रुतिप्राबल्यपरत्वे तु सार्थक्यमित्याह—शङ्कितेति। शङ्कितः प्रत्यक्षेण सह विरोधो यस्य मिथ्यात्वरूपस्य वेदार्थस्य, स तथा।

एतदुक्तं भवति—यस्मिन्नर्थे वेदतदितरप्रमाणयोर्विरोधः प्रसक्तः, तस्मिन्नर्थे द्वयोः प्रामाण्यायोगाद् अन्यतरबाधे कर्तव्ये सति तत्र प्रबलेन दुर्बलस्य बाध इति च स्थिते 'कस्य प्राबल्यम्' इति भवत्यपेक्षा। तथा च वचनस्यापेक्षितार्थसमर्पकत्वात् सार्थक्यमिति। ननु प्रत्यक्षस्य क्वचिदप्रामाण्ये दृष्टे सति प्रपञ्चसत्त्वग्राहिप्रत्यक्षेऽपि मिथ्यात्वरूपविरोधिकोट्यनुसन्धानवतां स्यादप्रामाण्यरूपदोषशङ्का, ततश्च शङ्कितदोषं प्रत्यक्षं मिथ्यात्वश्रुत्या निर्दोषत्वेन प्रबलया बाध्यत इति वक्तव्यम्। तच्च न सम्भवति। क्वचिदपि प्रत्यक्षाप्रामाण्यादर्शनादिति सत्ख्यातिवादिनः शङ्कां नारदवचनोदाहरणेन निराकरोति—तलवदिति। तलमिन्द्रनीलमणिमयकटाहाकारत्वम्। तस्मादिति। सर्वजनप्रसिद्धस्यापि व्योमादौ तलादिप्रत्यक्षस्याप्रामाण्यदर्शनादित्यर्थः। अर्थे इति। प्रत्यक्षदृष्टेऽप्यर्थे इत्यर्थः। ज्ञापयन्निति। आचार्यः शिष्यान् प्रति शास्त्रार्थान् बोधयन् धर्मात् श्रेयस्सा-

इति नारदस्मृतौ साक्षिप्रकरणे प्रत्यक्षदृष्टस्यापि प्रत्यक्षमविश्वस्य प्रमाणोपदेशादिभिः परीक्षणीयत्वप्रतिपादनाच्च। न हि नभोनैल्यप्रत्यक्षं नभसः शब्दादिषु पञ्चसु शब्दैकगुणत्वप्रतिपादकागमोपदेशमन्तरेण प्रत्यक्षादिना शक्यमपवदितुम्। न च 'नभसि समीपे नैल्यानुपलम्भाद् दूरे तद्धीर्दूरत्वदोषजन्या' इति निश्चयेन तद्बाधः। दूरे नैल्यदर्शनात् समीपे तदनुपलम्भस्तुहिनावगुण्ठनानुपल-

---

धनभूतात् न प्रच्यवते इत्यर्थः। आत्मनः श्रुत्युक्तं साक्षित्वमनुपपन्नम् तस्य बोद्धृत्वेऽपि कर्तृत्वेनोदासीनत्वाभावादिति पूर्वपक्षे प्राप्ते 'अहं करोमि' इति प्रत्यक्षमात्रेणात्मनि कर्तृत्वं वास्तवमिति सहसा विश्वासो न कर्तव्यः। लोके प्रत्यक्षदृष्टस्यापि बाधदर्शनात्। अतः प्रत्यक्षदृष्टमप्यात्मनि कर्तृत्वं किं चैतन्यवद्वास्तवम्, किं वा कल्पितमिति सम्यग्विचार्य श्रुतिन्यायाभ्यां कल्पितमेव तद्, अतो न साक्षित्वस्यानुपपत्तिरिति शिष्यान् प्रति बोधयन्नाचार्यो धर्मान्न परिहीयते इत्येतद्विषयकं नारदवचनद्वयमिति सूचयति—साक्षिप्रकरण इति। एवं प्रत्यक्षदृष्टमपि प्रपञ्चतत्त्वं किं तस्य वास्तवं, किं वा काल्पनिकमिति परीक्षा युक्तेत्याशयेन नारदवचनस्य प्रकृतसाधारणं तात्पर्यं कथयति–प्रत्यक्षदृष्टस्यापीति। प्रमाणपदमागमपरम्। अनुमानार्थापत्त्यादय आदिपदग्राह्याः। प्रतिपादनाच्च प्रत्यक्षापेक्षया श्रुतिरेव बलीयसीति सम्बन्धः। प्रत्यक्षस्य दोषशङ्काकलङ्कितत्वं प्रदर्श्य तस्यागमेन बाधं प्रकृतोपयोगितया प्रतिपादयति—न हीत्यादिना। नभोनैल्यप्रत्यक्षं प्रत्यक्षादिना न हि शक्यमपवदितुमिति सम्बन्धः। आगमं विनाऽपि 'नीलं नभः' इति प्रत्यक्षस्य बाधकमस्तीति शङ्कते–नचेति। समीपे गगने रूपानुपलम्भेन समीपे रूपाभावनिश्चये सति दूरेऽपि तत्र रूपं नास्तीति निश्चीयते। रूपस्य व्याप्यवृत्तित्वनियमेन तदेकदेशवृत्तित्वायोगादित्यर्थः। कथं तर्हि दूरे 'नीलं नभः' इति धीस्तत्राह–दूरे तद्धीरिति। तद्बाध इति। तस्य नभोनैल्यप्रत्यक्षस्य इतिनिश्चयेन बाधः। न चेत्यत्र हेतुमाह— दूरे नैल्यदर्शनादिति। तुहिनावगुण्ठनं हिमरूपमावरणम्। तद्धि समीपे सदपि न दृश्यते। दूरे तु वृक्षाद्यावरणरूपत्वेन दृश्यते। तद्वद् सर्वत्र गगने विद्यमानमपि रूपं समीपे न दृश्यते इत्यर्थः।

म्भवत् सामीप्यदोषजन्य इत्यपि सम्भवाद्। अनुभवबलाद् नभोनैल्यमव्याप्यवृत्तीत्युपपत्तेश्च।

नापि दूरस्थस्य पुंसो यत्र भूसन्निहिते नभःप्रदेशे नैल्यधीः, तत्रैव समीपं गतस्य तस्या नैल्यबुद्धेरभावप्रत्यक्षेण बाधः। उपरिस्थितस्यैव नैल्यस्याभ्रनक्षत्रादेरिव दूरत्वदोषाद् भूसन्निधानावभास इत्युपपत्तेः। पृथिव्यादिषु सङ्कीर्णतया प्रतीयमानानां गन्धादीनाम्—

उपलभ्याप्सु चेद्गन्धं केचिद् ब्रूयुरनैपुणाः।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्॥ १॥

इत्यादिभिरागमैरेव व्यवस्थाया वक्तव्यत्वेन प्रत्यक्षादागमप्रा-

---

दोषजन्य इति। दोषाधीनस्थितिक इत्यर्थः। यथाश्रुते अनुपलम्भस्य उपलम्भप्रागभावरूपस्य जन्यत्वाभावादसङ्गतिस्स्यात्। सामीप्यदोषेण तदुपलम्भे निरुद्धे तत्प्रागभावस्य नाशाभावाद्दोषाधीनस्थितिकत्वमस्तीति नासङ्गतिरिति मन्तव्यम्। रूपस्य व्याप्यवृत्तित्वनियममुपेत्य समीपे तदनुपलम्भस्य गतिरुक्ता। इदानीं व्याप्यवृत्तित्वनियमस्यासिद्धिमाह—अनुभवबलादिति। नभोनैल्यप्रत्यक्षस्य यौक्तिकनिश्चयबाध्यत्वं निरस्य प्रत्यक्षबाध्यत्वमाशङ्क्य निराकरोति—नापीत्यादिना। भूसन्निहितगगनभागे कुत्रापि नैल्यं नास्त्येव। तत्र तत्प्रतीतिस्तु दूरस्थत्वदोषात् सम्भवतीत्याह—उपरिस्थितस्येति। तथा च गगननैल्यप्रत्यक्षमागमैकबाध्यमिति स्थितम्। प्रत्यक्षस्यागमेन बाधे उदाहरणान्तरमाह—पृथिव्यादिष्विति। अप्सु वायौ च पृथिव्यामिव गन्धमुपलभ्य केचिदनैपुणाः ब्रूयुः—'तयोरपि गन्धः स्वाभाविकः' इति, तद् न तथा ग्राह्यं, किं त्वपो वायुं च संश्रितं गन्धं तदन्तर्गतपृथिव्यामेव स्थितं विद्यादिति वचनार्थः। इत्यादिभिरिति। आदिपदेन रसो जलमात्रगुणः, रूपं तेजोमात्रगुणः, स्पर्शो वायुमात्रगुणः, शब्दः आकाशमात्रगुणः, पृथिव्यादिषु रसाद्युपलब्धिरपि पृथिव्याद्यन्तर्गतजलाद्याश्रितरसादिविषयेति व्यवस्थाप्रतिपादकपुराणवचनानि ग्राह्याणि। ननु जले पुष्पादिरूपपार्थिवांशसंसर्गे सति गन्धोपलब्धिरस्ति, नान्यथेत्यन्वय-

बलस्य निर्विशङ्कत्वाच्च । न ह्याजानसिद्धजलोपष्टम्भादिगतं गन्धादि 'पृथिवीगुण एव गन्धः, न जलादिगुणः' इत्यादिरूपेणास्मदादिभिः प्रत्यक्षेण शक्यं विवेचयितुम् । पृथिव्यादीनां प्रायः परस्परसंसृष्टतयाऽन्यधर्मस्यान्यत्रावभासः सम्भवति इति शङ्कितदोषं प्रत्यक्षम् । अतस्तत्रागमेन शिक्ष्यत इति चेत्, तर्हि इहापि ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन परस्परसंसृष्टतयाऽन्यधर्मस्यान्यत्रावभासः सम्भाव्यते इति शङ्कितदोषं प्रत्यक्षम्—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ १ ॥

इति वृद्धोक्तप्रकारेणागमेन व्यवस्थाप्यतामिति तुल्यम् ।

---

व्यतिरेकाभ्यामेव गन्धस्य पृथिवीमात्रगुणत्वस्य निर्णयसम्भवात् किमागमेनेति चेत्, नेत्याह—न हीति । आजानसिद्धो यो जलोपष्टम्भः पार्थिवो द्रव्यविशेषः, तदादिगतमित्यर्थः । जले एव गन्धः क्वचित् स्वाभाविकः, क्वचिदौपाधिक इति कल्पनोपपत्तेश्चेति भावः । ननु जलादौ गन्धादिप्रत्यक्षमप्रामाण्यरूपदोषशङ्काकलङ्कितत्वादागमेन शिक्ष्यत इति युक्तम् । प्रपञ्चसत्त्वग्राहिप्रत्यक्षं तु तच्छङ्काशून्यमिति कथं तस्यागमेन बाध इत्याशयेन शङ्कते—पृथिव्यादीनामिति । तस्य तच्छङ्काशून्यत्वमसिद्धमिति तस्याप्यागमबाध्यत्वं युक्तमित्याह—तर्हीति । संसृष्टतयेति । संसर्गस्तादात्म्यम् । अन्यधर्मस्येति । जगदुपादानत्वेन श्रुतिसिद्धस्य सद्वस्तुनो धर्मः सत्ता, तस्या एव प्रपञ्चे प्रतीतिस्सम्भाव्यते । अतः प्रपञ्चसत्त्वग्राहिप्रत्यक्षमन्यसत्ताविषयकत्वेन भ्रान्तिरूपं वा, प्रपञ्चस्य स्वाभाविकसत्ताविषयकत्वेन प्रमारूपं वेति शङ्काकलङ्कितमित्यर्थः । प्रत्यक्षबाधप्रकारं वृद्धवचनेन दर्शयति—अस्तीति । अस्ति घटः, भाति घटः, प्रियो घटः, इति घटसत्त्वचैतन्यानन्दास्तावदनुभूयन्ते । प्रियशब्दस्यानन्दे मुख्यत्वाद् घटस्यानन्दतादात्म्यप्रतीतिरुपपद्यते । एवं पटादिष्वपि द्रष्टव्यम् । नाम घटशब्दादि । कम्बुग्रीवाद्यात्मकं वस्तुरूपम् । अंशपञ्चकम् अंशाः पञ्च यस्य जगतः, तदंशपञ्चकमनुभूयते । न च कृत्स्नेऽपि जगति पञ्चात्मकत्वानुभवो नास्ति, दुःखं प्रियमित्यनुभ-

न चैवमुपजीव्यविरोधः। आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्यानुपजीव्यतत्सत्यत्वांशोपमर्दनादित्याहुः ॥१॥

(वे०सू०मं०) ननु सोमपदे नैवं(१) भवेन्मत्वर्थलक्षणा ॥
प्रस्तरो यजमानः स्याद्

(२)नन्वागमस्य प्रत्यक्षाद् बलीयस्त्वे "यजमानः प्रस्तरः" इत्यत्र प्रत्यक्षाविरोधाय यजमानशब्दस्य प्रस्तरे गौणी वृत्तिर्न कल्पनीया। तथा "सोमेन यजेत" इत्यत्र वैयधिकरण्येनान्वये यागे इष्ट-

---

वादर्शनादिति वाच्यम्। केषांचिद् परकीये दुःखे तदनुभवस्यापि सत्त्वात्। तथा च सर्वत्रानुगतं सच्चिदानन्दरूपं वस्तु ब्रह्मैव। ब्रह्मणस्तद्रूपतायाः श्रुतिसिद्धत्वात्। नामरूपात्मकरूपद्वयं जगत्, तस्य नामरूपमात्रतायाः "सर्वाणि रूपाणि विचित्य धीरः" इत्यादिश्रुतिसिद्धत्वादित्यनेन प्रकारेण प्रपञ्चसत्त्वग्राहिप्रत्यक्षं जगतस्स्वाभाविकसत्ताविषयकं न भवति, किं त्वधिष्ठानतया जगत्यनुगतब्रह्मसत्ताविषयकमेवेति व्यवस्थाप्यते श्रुत्येत्यर्थः। एवं प्रत्यक्षस्यागमापेक्षया स्वतः प्राबल्यं निरस्य उपजीव्यत्वप्रयुक्तं तन्निरस्यति—न चैवमिति। प्रत्यक्षस्यागमेन बाधाङ्गीकारे इत्यर्थः। वर्णपदवाक्यात्मकशब्दप्रत्यक्षं हि श्रुतिजन्यमिथ्यात्वबोधं प्रति उपजीव्यम्। शब्दज्ञानं विना शाब्दबोधानुदयात्। तथा च श्रुत्या प्रत्यक्षमात्रबाधे शब्दप्रत्यक्षस्यापि बाधः प्रसज्येत। तथाचोपजीव्यबाधस्स्यादित्यर्थः। श्रोत्रेन्द्रियेण जायमानं प्रत्यक्षं शब्दस्वरूपं, तस्य सत्त्वं च विषयीकरोति। श्रुत्या च सत्त्वांशप्रत्यक्षमेव बाध्यते। तच्च न श्रुतेरुपजीव्यम्। कल्पितशब्दस्यापि बोधकत्वसम्भवेन शाब्दबोधार्थं तत्सत्त्वस्यानपेक्षितत्वात्। यच्च शब्दस्वरूपांशप्रत्यक्षमुपजीव्य, तद् न बाध्यते, विरोधाभावाद् अतो नोपजीव्यविरोध इति परिहरति—आगमप्रमाणेनेति ॥ १ ॥

आगमात्रस्य प्रत्यक्षात् प्राबल्यमुक्तमाक्षिपति—नन्वागमस्येति। गौणीति। क्रतुनिर्वर्तकत्वं गुणः। तथेति। सिद्धान्ते इष्टसाधनत्वं विध्य-

---

(१) एवम्—प्रत्यक्षाद् आगमस्य प्राबल्ये सति सोमपदे मत्वर्थलक्षणा न भवेदित्यन्वयः

साधनत्वं, सोमलतायां यागसाधनत्वं च बोधनीयमिति व्यापारभेदेन वाक्यभेदापत्तेः । सामानाधिकरण्येनान्वये वक्तव्ये प्रत्यक्षाविरोधाय 'सोमवता यागेन' इति मत्वर्थलक्षणा न कल्पनीया । उभयत्रापि सत्यपि प्रत्यक्षविरोधे तदनादृत्यागमेन बलीयसा प्रस्तरे यजमानाभेदस्य, यागे सोमाभेदस्य च सिद्धिसम्भवादिति चेत्,

(वे०सू०मं०) अत्राहुर्भामतीकृतः ॥ ८ ॥

मानान्तराद्बलवती श्रुतिस्तात्पर्यगोचरे ॥

अन्यत्र त्वविरुद्धार्थे(१) देवताविग्रहादिके ॥ ९ ॥

अत्रोक्तं भामतीनिबन्धे—तात्पर्यवती श्रुतिः प्रत्यक्षात् ब-

---

र्थः । ततश्च सोमपदयजिपदयोर्वैयधिकरण्येनान्वये स्वीक्रियमाणे 'याग इष्टसाधनं, सोमो यागरूपेष्टस्य साधनम्' इति सकृच्छ्रुतस्य विधिप्रत्ययस्य व्यापारभेदापत्त्या तद्घटितवाक्यस्यापि व्यापारभेदापत्तेस्तत्परिहाराय तयोस्सामानाधिकरण्येनान्वयो वक्तव्यः इति सिद्धान्ते स्थिते सतीत्यर्थः । प्रत्यक्षाविरोधायेति । सामानाधिकरण्यप्रसक्ते सोमयागयोरभेदो वक्तव्यः । 'सोऽयम्' इत्यादिस्थले समानाधिकरणपदद्वयस्य पदार्थद्वयाभेदार्थकतायाः क्लृप्तत्वात् । स च प्रत्यक्षविरुद्ध इति तत्परिहारायेत्यर्थः । सोमवतेति । सोमपदस्य मत्वर्थे लक्षणा । तथा च 'सोमवता यागेनेष्टं भावयेत्' इति मीमांसकरीत्या वाक्यार्थः । सिद्धान्तरीत्या तु 'सोमवदभिन्नो याग इष्टसाधनम्' इति वाक्यार्थो द्रष्टव्यः । सोमस्य यागेन सह मत्वर्थसम्बन्धश्च वस्तुगत्या क्रियाकारकभावलक्षण इति ज्ञापनाय सोमेनेति तृतीया । भामतीति । भामतीसंज्ञकग्रन्थे वाचस्पतिमिश्रैरुक्तमित्यर्थः । न श्रुतिमात्रमिति । तथा च 'सोमेन यजेत' इत्यत्र सोमयागसम्बन्धे श्रुतेस्तात्पर्याभावाच्छ्रुत्यपेक्षया प्रत्यक्षमेव बलवदिति तदविरोधाय लक्षणाकल्पनमुचितम् । तथा 'यजमानः प्रस्तरः' इत्याद्यर्थवादानामपि स्वार्थे तात्पर्याभावात् प्रत्यक्षप्राबल्यमिति तत्रापि तदविरोधाय गौण्यादिकल्पनं युक्तम् । प्रपञ्चमिथ्यात्वबोधकश्रुतीनां तु स्वार्थे तात्पर्यसत्त्वात् प्रत्यक्षापेक्षया प्राबल्यमिति तासां तद्बाधकत्वं निष्प्रत्यूहमिति समाधानग्रन्थः । ननु

---

(१) मानमिति शेषः ।

ल्वती, न श्रुतिमात्रम्। मन्त्रार्थवादानां तु स्तुतिद्वारभूतेऽर्थे वाक्यार्थद्वारभूते पदार्थे इव न तात्पर्यम्। तात्पर्याभावे मानान्तराविरुद्धदेवताविग्रहादिकं न तेभ्यः सिध्येत्। तात्पर्यवत्येव शब्दस्य प्रामाण्यनियमादिति चेत्, न। "एतस्यैव रेवतीषु वा-

---

मन्त्रार्थवादादीनामपि स्वार्थे तात्पर्यं किं न स्यात्? तत्राह—मन्त्रेति। तेषां स्वार्थे फलाभावाद् गौरवाच्च तात्पर्यं न कल्प्यते इति भावः। "देवस्य त्वा"इत्यादिमन्त्रैः "यजमानः प्रस्तरः" इत्याद्यर्थवादैश्च विधेयगता स्तुतिर्लक्षणीया। ततश्च मन्त्रादिवाक्यार्थस्य द्रव्यदेवतादिरूपस्य लक्षणीयया स्तुत्या सह सम्बन्धो वाच्यः। इतरथा मन्त्रादीनां स्वज्ञाप्यसम्बन्धाभावेन स्तुतिलक्षकत्वानुपपत्तिः। अतस्स्तुतौ लक्षणीयायां मन्त्रादिवाक्यार्थो द्वारभूतः। यथा गङ्गापदेन तीरे लक्षणीये प्रवाहः। अतोऽपि न तत्र तेषां तात्पर्यम्। लक्षणास्थले द्वारभूतार्थे तात्पर्यादर्शनादित्याशयेनाह—स्तुतिद्वारभूत इति। तत्र स्वयं दृष्टान्तमाह—वाक्यार्थद्वारभूत इति। वाक्यार्थतात्पर्येण प्रयुक्तानां पदानां वाक्यार्थप्रतिपत्तिद्वारभूतेषु स्मारितपदार्थेषु यथा तात्पर्यं नास्ति, तथेत्यर्थः। विधिपरमन्त्रार्थवादानां स्वार्थे तात्पर्याभावे देवताविग्रहादिप्रतिपादकानां "वज्रहस्तः पुरन्दरः" इत्यादीनामपि देवताविग्रहादौ स्वार्थे तात्पर्याभावापत्त्या तेषां देवताविग्रहादिप्रमितिजनकत्वं न स्यात्। वेदतात्पर्यविषयत्वस्य वेदजन्यप्रमितिविषयत्वं प्रति व्यापकत्वाद् व्यापकनिवृत्त्या तन्निवृत्तेरावश्यकत्वात्। तदाहुः—'यत्परश्शब्दः स शब्दार्थः' इति। तथा च देवताधिकरण-(उ०मी०अ० १ पा० ३ अधि० ८)विरोधः। तत्रान्यपरेभ्योऽपि मन्त्रादिभ्यो देवताविग्रहादिसिद्धिप्रतिपादनादित्याशयेन शङ्कते—तात्पर्याभावे इति। मानान्तराविरुद्धत्वविशेषणं "यजमानः प्रस्तरः" इत्यादिवारणाय। इदमुपलक्षणं मानान्तराप्राप्तत्वस्यापि। एतच्च विशेषणम् "अग्निर्हिमस्य भेषजम्"इत्यादिवारणाय। अग्नेर्हिमभेषजत्वस्य प्रत्यक्षसिद्धत्वेन तस्यार्थवादतस्सिद्ध्यनपेक्षणात्। तथा च मानान्तरेण विरोधप्राप्त्योरभावे सत्यन्यपरेभ्योऽपि मन्त्रादिभ्योऽवगम्यमानोऽर्थः सिध्यत्येव। देवताविग्रहादिश्च तथाविध इति तत्सिद्धिरप्रत्यूहेति प्रतिपादितं देवताधिकरणे इति भावः। परिहरति—नेति। एतस्यैवेति। इदमे-

रवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत'' इति विशिष्टविधेस्तात्पर्यागोचरेऽपि विशेषणस्वरूपे प्रामाण्यदर्शनेन उक्तनियमासिद्धेः। अत्र हि रेवतीऋगाधारं वारवन्तीयं साम विशेषणम्। न चैतत् सोमादिविशेषणवल्लोकसिद्धम्। येन तद्विशिष्टयागविधिमात्रे प्रामाण्यं वाक्यस्य स्यात्। नापि विशिष्टविधिना विशेषणाक्षेपः। आक्षेपाद्विशेषणप्रतिपत्तौ विशिष्टगोचरो विधिः, तस्मिंश्च सति तेन विशेषणाक्षेपः इति परस्परा-

---

तत्पद प्रकृताग्निष्टुद्धर्मातिदेशकम्। तथा च 'रेवत्याधारकं वारवन्तीयाख्यम् अग्निष्टोमसाम कृत्वा प्रकृताग्निष्टुद्धर्मकेणानेन यागेन पशून् भावयेद्' इति श्रुत्यर्थः। विशिष्टविधेरिति। रेवत्याधारकवारवन्तीयसामादिविशेषणविशिष्टक्रतुभावनाविधेरित्यर्थः। उक्तेति। शाब्दतात्पर्यविषयत्वस्य शाब्दप्रमितिविषयत्वं प्रति व्यापकत्वरूपनियमासिद्धेरित्यर्थः। उक्तमर्थं विवृणोति—अत्र हीति। न चैतदिति। यदि वारवन्तीयं साम रेवतीषु ऋक्षु अध्ययनसिद्धं भवेत्, तदा तस्य विशेषणस्य दध्यादिवल्लोकत एवावगतत्वाद्वाक्यस्य तद्व्यतिरिक्तार्थे एव प्रमितिजनकत्वरूपं प्रामाण्यं भवेत्। न त्वेतदस्ति। वारवन्तीयसाम्नः ऋगन्तरेष्वेवाध्ययनसिद्धत्वात्। अतो वाक्यादेव रेवत्याधारकवारवन्तीयाख्यविशेषणस्य प्रमितिर्वक्तव्येत्यर्थः। ननु विशिष्टविषयको विधिरप्रसिद्धविशेषणस्वरूपप्रमितिजनकं 'रेवतीषु वारवन्तीयं साम कुर्याद्' इत्येवमात्मकं विशेषणविधिमाक्षिपति। तथा च तस्य विशेषणस्य नैतद्वाक्यप्रमेयत्वमिति, नेत्याह—नापीति। विशेषगुणगोचरविधिकल्पनात् पूर्वं विशिष्टविधिना विशेषणस्वरूपं प्रमितं वा, न वा?। आद्ये तत्कल्पनं व्यर्थम्। द्वितीये विध्याक्षेपो न सिध्यति। प्रमितस्यैव द्रव्यदेवतासम्बन्धस्य यागविध्याक्षेपकत्वदर्शनात्। तथा च विशिष्टविधिना विशेषणविधिराक्षिप्यते इति वदता आक्षेपात् प्राग्विशेषणस्य प्रमितत्वं वाच्यम्। तत्प्रमापकश्च कल्पितविधिरिति च वक्तव्यम्। ततश्च आक्षिप्तविधिना विशेषणस्वरूपे प्रमिते सति प्रकृतविधिर्विशिष्टगोचरस्सिध्यति, तस्मिंश्च प्रकृतविधौ विशिष्टगोचरे सति तेन विशिष्टविधिना विशेषणविध्या-

श्रयापत्तेः। अतो विशिष्टविधिपरस्यैव वाक्यस्य विशेषणस्वरूपेऽपि प्रामाण्यं वक्तव्यम्। अथ च न तत्र तात्पर्यम्। उभयत्र तात्पर्ये वाक्यभेदापत्तेः।

एवमर्थवादानामपि विधेयस्तुतिपराणां स्तुतिद्वारभूतेऽर्थे न तात्पर्यमिति तेभ्यः प्रत्यक्षस्यैव बलवत्त्वात् तदविरोधाय तेषु वृत्त्यन्तरकल्पनम्। "सोमेन यजेत" इत्यत्र विशिष्टविधिपरे वाक्ये सोमद्रव्याभिन्नयागरूपं विशिष्टं विधेयमित्युपगमे तस्य विधेयस्य "दध्ना जुहोति" इत्यादौ विधेयस्य दध्यादेरिव लोकसिद्धत्वाभावेन विधिपराद्वाक्यादेव रेवत्याधारवारवन्तीयविशेषणस्येव विना तात्पर्यं सिद्धिरेष्टव्या। न हि तात्पर्यविरहितादागमाद्यागसोमलताभेदग्राहिप्रत्यक्षविरुद्धार्थः सिध्यतीति तत्रापि तदविरोधाय मत्वर्थलक्षणाश्रयणम्।

---

क्षेप इति परस्पराश्रयापत्त्या विशेषणविध्याक्षेपासिद्धेरित्यर्थः। अत इति। रेवत्याधारकवारवन्तीयसामाख्यविशेषणस्य प्रकृतवाक्यादन्यतः प्रमित्यसम्भवादित्यर्थः। तर्हि तत्रापि तात्पर्यमस्तु, नेत्याह—अथ चेति। गौरवादिति भावः। न च 'यत्परशब्दस्स शब्दार्थः' इति न्यायविरोधः शङ्कनीयः। तस्यौत्सर्गिकत्वोपपत्तेः। प्रकृते च गौरवलक्षणबाधकसत्त्वान्न तस्येह प्रवृत्तिः। एवम्—विशिष्टविधेर्विशेषणस्वरूप इवेत्यर्थः। न तात्पर्यमिति। तथा च तात्पर्याविषयेऽपि रेवतीवारवन्तीयविशेषणस्वरूपे श्रुतेः प्रमितिजनकत्ववदन्यपराणामपि मन्त्रादीनां देवताविग्रहादिप्रमितिजनकत्वं सम्भवतीति न देवताधिकरणविरोध इति भावः। प्रकृतमाह—तेभ्य इति। मन्त्रार्थवादेभ्यः तात्पर्यरहितश्रुतिवाक्येभ्य इति यावत्। "सोमेन यजेत" इत्यत्र सामानाधिकरण्येनान्वय इति सिद्धान्ते कथं प्रत्यक्षविरोधः, कथं वा तदविरोधाय लक्षणाकल्पनमित्याकाङ्क्षायामाह—सोमेनेति। तत्रापीति। "यजमानः प्रस्तरः" इत्यत्रेवेत्यपिशब्दार्थः। प्रत्यक्षाविरोधाय वृत्त्यन्तरकल्पनमात्रे दृष्टान्तः, न तु मत्वर्थलक्षणांशेऽपीति बोध्यम्। ननु द्वैतस्य मिथ्यात्वबोधकाद्वैतश्रुतेरपि न स्वार्थे मिथ्यात्वे तात्पर्यम्, माना-

अद्वैतश्रुतिस्तु उपक्रमोपसंहारैकरूप्यादिषड्विधलिङ्गावग-मिताद्वैततात्पर्या प्रत्यक्षाद् बलवतीति ततः प्रत्यक्षस्यैव बाधः, न तदविरोधाय श्रुतेरन्यथानयनमिति ।

(वे०सू०मं०) कथं चिद्विषयप्राप्त्या मानान्तरसमर्थने ॥ ९ ॥
श्रुतिर्बलीयसी नोचेद्विपरीतं बलाबलम् ॥ १० ॥

विवरणवार्तिके तु प्रतिपादितम्—न तात्पर्यवत्त्वेन श्रुतेः प्रत्यक्षात् प्राबल्यम् । "कृष्णलं श्रपयेद्" इति विधेः श्रपणस्य कृष्णलार्थत्वप्रतिपादने तात्पर्येऽपि कृष्णले रूपरसपरावृत्तिप्रादुर्भावपर्यन्तमुख्यश्रपणसम्बन्धः प्रत्यक्षविरुद्ध इति तदविरोधाय श्रपणशब्दस्य उष्णीकरणमात्रे लक्षणाऽभ्युपगमात् ।

---

भावात् । तथा च द्वैतस्य सत्यत्वग्राहिप्रत्यक्षविरोधपरिहारायाद्वैतश्रुतेरप्यन्यथानयनमेव न्याय्यमिति, नेत्याह—अद्वैतश्रुतिस्त्विति । तात्पर्यलिङ्गानि च शास्त्रे व्यक्तानि । तत इति । अद्वैतश्रुतेस्सकाशादित्यर्थः ।

वाचस्पत्युक्तं तात्पर्यस्य प्राबल्यप्रयोजकत्वं दूषयति—विवरणवार्तिके त्विति । कृष्णलाः सुवर्णविकारभूताः माषाः । कृष्णलशेषत्वेन श्रपणं विधीयत इति श्रुतेस्तत्र तात्पर्यं सिद्धमिति भावः । रूपरसपरावृत्तिप्रादुर्भावो नाम पूर्वरूपरसादिनाशपूर्वकं रूपरसाद्यन्तरोत्पत्तिः, तत्पर्यन्तो योऽधिश्रयणादिव्यापारः, स एव श्रपणशब्दस्य मुख्योऽर्थः, तत्सम्बन्ध इत्यर्थः । कृष्णलानामधिश्रयणज्वालादिसम्पादनरूपे पाके कृतेऽपि रूपरसादिपरावृत्तिप्रादुर्भावो नास्तीति प्रत्यक्षसिद्धमिति भावः । नन्वत्र श्रपणं विधीयते । तच्च न प्रत्यक्षबाधितम् । ज्वालाधिश्रयणादिक्रियारूपपाकस्यैव श्रपणशब्दार्थत्वेन तस्य तत्रापि सम्भवात् । रूपरसादिपरावृत्तिप्रादुर्भावस्तु न धात्वर्थः । तस्य पाकफलस्य कर्मत्वरूपस्य द्वितीयार्थत्वात् । फलस्य विध्ययोग्यत्वेन विधेयश्रपणरूपत्वायोगाच्च । तथा च विधेयश्रपणस्य दृष्टप्रयोजनाभावाददृष्टार्थो विधिः पर्यवस्यतीति श्रुतितात्पर्यविषयश्रपणस्य प्रत्यक्षबाधाभावादुष्णीकरणमात्रे श्रपणशब्दस्य लक्षणा न स-

"तत्त्वमसि" इति वाक्यस्य जीवब्रह्माभेदप्रतिपादने तात्पर्येऽपि त्वम्पदवाच्यस्य तत्पदवाच्याभेदः प्रत्यक्षविरुद्ध इति तदविरोधाय निष्कृष्टचैतन्ये लक्षणाऽभ्युपगमाच्च।

अर्थवादानामपि प्रयाजाद्यङ्गविधिवाक्यानामिव स्वार्थप्रमितावनन्यार्थतया प्रमितानामेवार्थानां प्रयोजनवशादन्यार्थतेति

---

प्रतिपन्नेत्यस्वरसादाह—तत्त्वमसीतिवाक्यस्येति। निष्कृष्टेति। निष्कृष्टं विशिष्टरूपाद्वाच्यार्थाव पृथक्कृतं विशेष्यमात्रं यच्चैतन्यम्, तत्रेत्यर्थः॥

अत्रेदं बोध्यम्—महावाक्यानामखण्डैकरसचैतन्यरूपवस्तुमात्रबोधने तात्पर्यम्। कुतः?। "तमेवैकं जानथ आत्मानम्" "तमेव विदित्वाऽतिमृत्युमेति" "एकधैवानु द्रष्टव्यम्" इत्यादिश्रुतिसहस्रेण मुक्तिसाधनीभूतमहावाक्यार्थज्ञानं प्रति तादृशवस्तुमात्रस्यैव विषयत्वेन नियमनात्।

श्रुतीनामेषोऽर्थः—यस्मिन् कृत्स्नं जगदध्यस्तं, तमात्मानं जानथ हे मुमुक्षवः!। अत्राधेयस्य कृत्स्नस्य जगतः ज्ञेयत्वनिषेधार्थमवधारणम्। एकपदं चैकरसत्वप्रतिपादनपरम्। मुमुक्षुज्ञेयस्यात्मनो नानारसत्वे एकपदमनर्थकं स्यात्। एकत्वसङ्ख्यायोगस्यात्मन एकवचनादेव सिद्धत्वात्। अस्याः श्रुतेरिदं तात्पर्यं द्युभ्वाद्यधिकरणभाष्ये (उ० मी० अ० १ पा० ३ अधि० १ सू० ५) स्फुटं प्रदर्शितम्। तमेव प्रकृतं परमात्मानमेव, न तु तद्व्यतिरिक्तमण्वपीत्येवकारार्थः। विदित्वा साक्षात्कृत्य मृत्युशब्दितं संसारमत्येति। एकधैव एकरूपेणैव शास्त्राचार्योपदेशमनु द्रष्टव्यमिति।

तच्चाखण्डैकरसवस्तुमात्रबोधने तात्पर्यं महावाक्येषु तत्त्वमादिपदानां लक्षणां विना न निर्वहतीति तेषु तात्पर्यानुसारेणैव लक्षणाभ्युपगमः, न तु प्रत्यक्षविरोधपरिहाराय। परं तु तत्त्वंपदयोश्चैतन्यमात्रे लक्षणां स्वीकृत्य वाक्यार्थबोधाभ्युपगमे प्रत्यक्षविरोधोऽपि परिहृतो भवतीत्येतावन्मात्रेण प्रत्यक्षविरोधपरिहाराय महावाक्येषु लक्षणेति निबन्धनेषु व्यवहारः। तथा च सत्यपि तात्पर्ये तदनादृत्य प्रत्यक्षविरोधपरिहारायैव महावाक्येषु लक्षणाभ्युपगमात् तात्पर्यस्य प्राबल्यप्रयोजकत्वं नास्तीत्युक्तं, तद् दूषयति—अर्थवादानामपीति। अनन्यार्थता स्वार्थपरतेत्यर्थः। तर्हि अर्थवादानां विधिशेषत्वं न स्यादित्याशङ्क्याह—प्र-

प्रयाजादिवाक्यवत्तेषामप्यवान्तरसंसर्गे तात्पर्यमस्त्येव । वाक्यैकवाक्यत्वात्। पदैकवाक्यतायामेव परमवान्तरतात्पर्यानभ्युपगमादिति विवरणाचार्यैर्न्यायनिर्णये व्यवस्थापनेन "यजमानः प्रस्तरः" इत्यादीनामपि मुख्यार्थतात्पर्यप्रसक्तौ प्रत्यक्षाविरोधायैव लक्षणाऽभ्युपगमाच्च ।

---

मितानामेवेति। मानान्तरसंवादविसंवादरहितार्थवादादिभिरिति शेषः। तेषां स्वार्थप्रमितिमात्रेण फलाभावाद् विधेयस्तावकत्वेन विध्येकवाक्यत्वं कल्प्यते इत्यर्थः। यथा प्रयाजादिकर्मणां प्रयोजनाकाङ्क्षावशेन प्रयाजादिवाक्यानां फलवद्दर्शपूर्णमासविधिवाक्यैरेकवाक्यत्वम् तथेति भावः। अवान्तरसंसर्ग इति। अर्थवादानामपि विध्यन्वयात् प्राक् स्वरसतः प्रतीयमाने देवताया विग्रहादिसंसर्गे अवान्तरतात्पर्यमस्तीत्यर्थः। प्रयाजादिवाक्यानामर्थवादादिवाक्यानां च स्वार्थप्रमितौ तात्पर्ये हेतुमाह—वाक्यैकवाक्यत्वादिति। वाक्यानां सतामेव तेषां विधिवाक्यैरेकवाक्यत्वाभ्युपगमाद्वाक्यानां च वाक्यार्थे तात्पर्यस्य सामान्यतस्सिद्धत्वादित्यर्थः। यत्तु, 'वाक्यार्थद्वारभूते पदार्थ इव'इति स्तुतिद्वारभूतेऽर्थे तात्पर्याभावे दृष्टान्तप्रदर्शनम्, तद् विघटयति—पदैकवाक्यतायामेवेति। पदानां सतामेवैकवाक्यार्थबोधनेनैकवाक्यत्वमित्यर्थः। तत्र पदार्थानां वाक्यार्थस्येवापूर्वत्वाभावाद् न तेष्ववान्तरतात्पर्यमपि स्वीक्रियते इत्यर्थः।

एतेन—रेवत्याधारकवारवन्तीयसामाख्यविशेषणेऽपि तात्पर्यं व्याख्यातम्। वाक्यस्य वाक्यार्थे तात्पर्यस्योत्सर्गतस्सिद्धत्वात्। विशिष्टविधेर्विशिष्टभावनायां तात्पर्यवत्त्वाच्च तस्य विशेषणेषु तात्पर्यं सिध्यति। विशिष्टविधितात्पर्यविषयत्वस्य विशेष्यमात्रवृत्तित्वे तत्तात्पर्यस्य विशिष्टविषयकत्वानुपपत्तेः। मीमांसकानां विशिष्टविधेर्विशेषणेषु तात्पर्याभावव्यवहारस्य विशेषणेषु प्रत्येकं तात्पर्याभावपरत्वात्। तस्मात् 'तात्पर्यविषये एव वेदस्य प्रमितिजनकत्वम्'इति नियमस्य न्यायनिर्णये विवरणाचार्यैर्व्यवस्थापितत्वेनेत्यर्थः। ततः किं? तत्राह—यजमानः प्रस्तर इत्यादीनामिति। उक्तरीत्या तेषामपि यजमानप्रस्तराभेदादौ तात्पर्यं स्यादेव। तच्च प्रत्यक्षेण बाध्यते इति वक्तव्यम्। अतस्तात्पर्यवत्त्वं श्रुतेः प्राबल्यप्रयोजकं न भवतीत्यर्थः। अत्र मन्त्रार्थवादानामपि प्रयाजादिवाक्यानामिव स्तुतिद्वार-

कथं तर्हि श्रुतेः प्राबल्यम्?। उच्यते—निर्दोषत्वात् परत्वाच्च। श्रुतिमात्रस्य(१) प्रत्यक्षात् प्राबल्यमित्युत्सर्गः। किं तु श्रुतिबाधितमपि प्रत्यक्षं कथंचित् स्वोचितविषयोपहारेण सम्भावनीयम् निर्विषयज्ञानायोगात्। अत एवाद्वैतश्रुतिविरोधेन तत्त्वावेदनात् प्रच्यावितं सत्यत्वम् अर्थक्रियासमर्थव्यावहारिकविषयसमर्पणेनोपपाद्यते। किं बहुना 'नेदं रजतम्'इति सर्वसिद्धप्र-

---

भूतेऽर्थे यद्यवान्तरतात्पर्यमवश्यं कल्पनीयम्, तर्ह्यस्तु तत्। तावता तात्पर्यस्य न प्राबल्यप्रयोजकत्वक्षतिः। महातात्पर्यस्य तत्प्रयोजकत्वसम्भवादद्वैतश्रुतीनां प्रपञ्चमिथ्यात्वे महातात्पर्याभ्युपगमेन तत्र प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य मिथ्यात्वश्रुत्या बाधोपपत्तेरित्यादिकमालोचनीयम्। तर्हीति। तात्पर्यस्य प्राबल्यप्रयोजकत्वाभावे सतीत्यर्थः। ननु श्रुतिमात्रस्य प्राबल्ये सिद्धे तस्यौत्सर्गिकत्वं वक्तव्यं स्यात्। तदेव कुतः इति चेद्, न।

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्॥

इतिवचनेन श्रुतिमात्रस्य प्रत्यक्षाद्यपेक्षया आगमत्वादेव सिद्धत्वात्। तन्मात्रस्य प्राबल्ये अन्यदपि हेतुद्वयं दर्शयति—निर्दोषत्वात्, परत्वाच्चेति। उत्सर्ग इति। श्रुतितदितरप्रमाणयोर्विरोधे सति श्रुतिरेव बाधिका भवति। यत्र च श्रुतिबाधितं प्रत्यक्षादि निरवकाशं भवति, तत्र निरवकाशेन तेन श्रुतिरेव बाध्यते। 'सावकाशनिरवकाशयोर्निरवकाशं बलवद्'इति न्यायादित्यर्थः। ननु श्रुतिबाधितस्य प्रत्यक्षादेर्निरवकाशत्वस्थले तेन श्रुतेर्बाधः किमर्थमुपेयते? तत्राह—किं त्वित्यादिना। सम्भावनीयम्—उपपादनीयमित्यर्थः। अत एवेति। निर्विषयप्रत्यक्षायोगादेवेत्यर्थः। प्रच्यावितमिति। श्रुतिबाधितस्य द्वैतस्य तत्त्वरूपत्वायोगाद् द्वैतबोधकप्रत्यक्षस्य तत्त्वावेदकत्वरूपात् प्रामाण्यात् प्रच्यावितत्वं बोध्यम्। उपपाद्यते—भाष्यादिष्विति शेषः। श्रुतिबाधितप्रत्यक्षादीनां सिद्धान्ते व्यावहारिकप्रामाण्योपगमेन प्रत्यक्षज्ञानस्य निर्विषयत्वरूपं निरवकाशत्वं सिद्धान्तसम्मतं न भवतीत्युपपाद्य तत्र कैमुतिकन्यायमाह—किं बहुनेति। अद्वैतश्रुतिबाधि-

---

(१) श्रुतिमात्रं प्रत्यक्षात् प्रबलमिति पाठः।

त्यक्षबाधितमपि शुक्तिरजतप्रत्यक्षमनुभवानुरोधात् पुरोदेशे शुक्तिसंभिन्नरजतोपगमेन समर्थ्यते । न तु तद्विरोधेन व्यवहितमान्तरमसदेव वा रजतं विषय इति परिकल्प्यते । एवं च प्रस्तरे यजमानभेदग्राहिणो यावद्ब्रह्मज्ञानमर्थक्रियासंवादेनानुवर्तमानस्य प्रत्यक्षस्य प्रातिभासिकविषयत्वाभ्युपगमेनोपपादनायोगाद् "यजमानः प्रस्तर" इति श्रुतिबाध्यत्वे सर्वथा निर्विषयत्वं स्यादिति

तघटादिप्रत्यक्षस्य निर्विषयत्वोपगमे सर्वव्यवहारोच्छेदप्रसङ्गलक्षणं बाधकं यथा विद्यते, न तथा शुक्तिरजतादिप्रत्यक्षस्य निर्विषयत्वोपगमे बाधकमस्ति । क्वचिदसतोऽपि रजतादेर्भानोपगमात् । तथाऽपि तस्य तत्कालोत्पन्नरजतादिविषयकत्वं सिद्धान्ते स्वीक्रियते । अनुभवस्य निर्विषयत्वायोगात् । तस्मात् श्रुतिबाधितस्य प्रत्यक्षस्य निरवकाशत्वं यत्र प्रसज्येत, तत्र तेन श्रुतिबाधो युक्तस्सिद्धान्तसम्मतश्चेति श्रुतेः प्राबल्यमौत्सर्गिकमित्येतत्सिद्धमिति भावः । शुक्तिसम्भिन्नेति । शुक्तितादात्म्यापन्नेत्यर्थः । व्यवहितमिति । बाह्यदेशान्तरस्थमित्यर्थः । आन्तरमिति । ज्ञानाकाररूपमित्यर्थः । न कल्प्यत इत्यत्र हेतुः—तद्विरोधेनेति । रजतस्य इदमर्थाभिन्नत्वानुभवविरोधेनेत्यर्थः । व्यवहितरजतादीनामिदमर्थतादात्म्यासम्भवादिति भावः । एवं चेति । विरोधस्थले निरवकाशप्रमाणान्तरेण श्रुतिबाधे न्याय्ये सतीत्यर्थः । ननु प्रस्तरयजमानयोरभेदश्रुतिबाधितस्य तयोर्भेदप्रत्यक्षस्य शुक्तिरजतप्रत्यक्षवत् प्रातिभासिकविषयसम्भवान्न तत्र श्रुतिबाधः कल्पनीय इति नेत्याह—प्रातिभासिकविषयत्वाभ्युपगमेनेति । प्रत्यक्षविषयस्य प्रस्तरे यजमानभेदस्य प्रातिभासिकत्वासम्भवे युक्तिं सूचयति—यावदिति । यथा शुक्तिरजतस्य ब्रह्मज्ञानात् प्रागेव 'नेदं रजतम्' इति प्रत्यक्षेण निवृत्तिः, स्वोचितार्थक्रियाभावश्च तस्य प्रातिभासिकत्वहेतुरस्ति, न तथा प्रस्तरे यजमानभेदस्य ब्रह्मज्ञानात् प्राग्बाधः अर्थक्रियासामर्थ्याभावश्च प्रातिभासिकत्वहेतुरस्तीत्यर्थः । यावद्ब्रह्मज्ञानमनुवर्तमानस्येत्यस्य ब्रह्मज्ञानात् प्राग् बाधरहितस्येत्यर्थः । अर्थक्रियासंवादेनेत्यस्यार्थक्रियासमर्थभेदविषयकत्वेनेत्यर्थः । बाध्यत्व इति । प्रस्तरे यजमानभेदग्राहिणः प्रत्यक्षस्येत्यनुषङ्गः । सर्वथेति । अयमर्थः—प्रातिभासिकभेदविषयकत्वं तस्य

तत्परिहाराय उत्सर्गमपोह्य श्रुतिरेव तत्सिद्ध्यधिकरणादिप्रतिपादितप्रकारेणान्यथा नीयते ।

न चाद्वैतश्रुतिप्रत्यक्षयोरिव इह श्रुतिप्रत्यक्षयोस्तात्त्विकव्यावहारिकविषयत्वोपगमेन प्रत्यक्षोपपादनं कर्तुं शक्यम् । ब्रह्मातिरिक्तसकलमिथ्यात्वप्रतिपादकषड्विधतात्पर्यलिङ्गोपपन्नानेकश्रु-

---

प्रत्यक्षस्य न सम्भवतीत्युक्तम् । तथा व्यावहारिकभेदविषयकत्वं तस्य न भवतीत्यनुपदमेव वक्ष्यते । पारमार्थिकभेदश्चाद्वैतश्रुतिविरोधादेव नाभ्युपगन्तुं शक्यते । तथा च तस्य निर्विषयत्वरूपं निरवकाशत्वं स्यादेवेति । श्रुतिरेवान्यथा नीयत इति सम्बन्धः । अन्यथानयनप्रकारमाह—तत्सिद्धीति । मुख्यार्थस्याभेदस्य प्रत्यक्षविरोधेनासम्भवात् प्रस्तरं यजमानशब्दस्य गौणवृत्तौ कल्पनीयायां को गुण इत्याकाङ्क्षायां सूत्रकारेण गुणो दर्शितः—तत्सिद्धीति । तस्य क्रतोस्सिद्धिः उपकारो यजमानप्रस्तरसाध्यो गुणः तयोः क्रतुनिर्वर्तकत्वरूपं सादृश्यं गुण इति यावत् । एवमन्येषामप्यर्थवादानां प्रत्यक्षविरोधपरिहाराय यथासम्भवमालम्बनानि जैमिनिना भगवता अधिकरणान्तरेषु कल्पितानीत्यर्थः । नन्वद्वैतश्रुतिप्रत्यक्षयोर्विरोधस्थले पारमार्थिकमद्वैतं श्रुतिविषयः, व्यावहारिकं द्वैतं प्रत्यक्षविषय इति यथा कल्प्यते तथा प्रकृतेऽपि यजमानप्रस्तरयोर्वास्तवाभेदः श्रुतिविषयः, कल्पितभेदः प्रत्यक्षविषय इति व्यवस्था कल्प्यतामिति, नेत्याह—न चेति । इहेति । "यजमानः प्रस्तरः" इत्यत्रेत्यर्थः । "यजमानः प्रस्तरः" इत्यर्थवादेन तयोस्तात्त्विकं तादात्म्यं प्रतिपादयितुं न शक्यम् । ब्रह्माद्वैतश्रुतिभिः विरोधात् । न चाद्वैतश्रुतीनामपि विधिरूपत्वाभावेनार्थवादत्वाविशेषाद्विनिगमनाविरह इति वाच्यम् । तथाऽपि तासां बहुत्वेन विनिगमनाविरहानवतारादित्याशयेनाह—अनेकेति । किं च यजमानप्रस्तराभेदे तस्यार्थवादस्य तात्पर्यं नास्ति, तद्ग्राहकलिङ्गाभावात् । अद्वैतश्रुतीनां च स्वार्थे तात्पर्यग्राहकलिङ्गानि षड्विधान्यपि सन्ति ।

तथाहि—छान्दोग्ये षष्ठाध्याये "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रम्य "ऐतदात्म्यमिदं सर्वम्" इतिसर्वात्मकमद्वितीयं व-

तिविरुद्धेन एकेनार्थवादेन प्रस्तरे यजमानतादात्म्यस्य तात्त्विकस्य प्रतिपादनासम्भवात् । एवं तत्त्वमसिवाक्येन त्वंपदवाच्यस्य सर्वज्ञत्वाभोक्तृत्वाकर्तृत्वादिविशिष्टब्रह्मस्वरूपत्वबोधने तन्ना-

---

स्तूपसंहरति श्रुतिः । अत उपक्रमोपसंहारयोरैकरूप्यलक्षणेन लिङ्गेन तस्याध्यायस्याद्वितीये वस्तुनि तात्पर्यं निश्चीयते । 'हे सोम्य इदं परिदृश्यमानं जगत् सृष्टेः प्रागद्वितीयमेकरूपं ब्रह्मैवासीद्' इति श्वेतकेतुं पुत्रं प्रति उद्दालकवचनम् । इदं सर्वमैतदात्म्यम् एतदात्मकं प्रकृतसद्वस्त्वात्मकमित्यर्थः । भावप्रत्ययोऽविवक्षितः । "ऐतदात्म्यमिदं सर्वम्" इति वाक्यस्यासकृत्पाठादभ्याससिद्धिः । अद्वितीयवस्तुनो मानान्तरायोग्यत्वादपूर्वत्वसिद्धिः । "आचार्यवान् पुरुषो वेद" इति वाक्येन प्रकृताद्वैतसद्वस्तुज्ञानं प्रकृत्य सम्पत्तिवाक्येन तस्य मुक्तिलक्षणफलश्रवणात् फलमपि तत्र तात्पर्यग्राहकमस्ति । पितृपुत्राख्यायिकादिरूपार्थवादश्च तत्तात्पर्यग्राहकस्तत्रास्ति । मृदादिदृष्टान्तैः प्रपञ्चस्य ब्रह्मकार्यत्वप्रतिपादनपूर्वकं ब्रह्मानन्यत्वप्रतिपादनमुपपत्तिस्तत्रास्ति । तथा च षड्विधैस्तात्पर्यलिङ्गैरद्वितीयवस्तुपरत्वं तस्याध्यायस्य सिद्धम् । एवमध्यायान्तरेषु श्रुत्यन्तरेषु च तात्पर्यलिङ्गानि द्रष्टव्यानि ।

तथा च उक्ततात्पर्यलिङ्गैरुपेतत्वादद्वैतश्रुतीनां प्राबल्यमित्याशयेनाह—षड्विधेति । ननु तर्हि व्यावहारिको यजमानप्रस्तरयोरभेदः श्रुत्यर्थोऽस्तु । ततश्च व्यावहारिकतदभेदप्रतिपादकश्रुतिबाधितं तयोर्भेदप्रत्यक्षमपि व्यावहारिकभेदविषयकमस्तु । तथा च प्रत्यक्षस्य निरवकाशत्वाभावान्न श्रुतिबाधकत्वमिति चेद् । न । समानसत्ताकयोर्भेदाभेदयोरेकत्रासम्भवेन तथा कल्पनायोगात् । अस्तु तर्हि प्रातिभासिकस्तयोरभेदः श्रुत्यर्थः । न । शुक्तौ रजताभेदस्येव प्रस्तरे यजमानाभेदस्य प्रत्यक्षप्रतिभासाभावादिति भावः । 'श्रुतेः प्रत्यक्षाद् प्राबल्यम्' इत्युत्सर्गस्य "यजमानः प्रस्तरः" इत्यत्रापवादस्थलं दर्शयित्वा अपवादस्थलान्तरमाह—एवं तत्त्वमसीति । "तत्त्वमसि"इतिवाक्येन हि स्वरसतः किञ्चिज्ज्ञत्वकर्तृत्वभोक्तृत्वादिविशिष्टचैतन्यरूपजीवस्य तद्विपरीतेन सर्वज्ञत्वाभोक्तृत्वाकर्तृत्वादिविशिष्टचैतन्यरूपेण ब्रह्मणा सहाभेदः सार्वकालिकः प्रतिपाद्यते । तदनुरोधेन जीवे सदा सर्वज्ञत्वादिधर्माङ्गीकारे जीवे तद्विरुद्धासर्वज्ञत्वकर्तृत्वादिरूपसंसारावगाहिप्रत्यक्षं निरालम्बनं स्यात् । अतो निरवकाशसंसारप्रत्यक्षेण श्रुतेर्बाधः स्वीक-

सर्वज्ञत्वभोक्तृत्वादिप्रत्यक्षमत्यन्तं निरालम्बनं स्यादिति तत्परिहाराय 'अहंकारशबलितस्य भोक्तृत्वादि, ततो निष्कृष्टस्य शुद्धस्य उदासीनब्रह्मस्वरूपत्वम्' इति व्यवस्थामाश्रित्य भागत्यागलक्षणाऽऽश्रीयते। एवं "कृष्णलं श्रपयेद्" इत्यादावपि प्रत्यक्षस्यात्यन्तनिर्विषयत्वप्रसक्तौ तत्परिहाराय श्रुतौ लक्षणा उष्णीकरणे। "नेह नानाऽस्ति किञ्चन" इत्यत्र प्रत्यक्षस्य कथंचिद्विषयोपपादनसम्भवे तु न प्रबलायाः श्रुतेरन्यथानयनमिति न कश्चिदप्यव्यवस्थाप्रसङ्गः।

---

तव्यः। स च बाधः विशेष्यचैतन्यांशमात्राभेदप्रतिपादकत्वेन श्रुतेस्सङ्कोचरूप एव, न तु "यजमानः प्रस्तरः" इत्यत्रेव कार्त्स्न्येन मुख्यार्थं त्यक्त्वा गौणार्थकल्पनरूप इति विशेष इत्यर्थः। अहङ्कारशबलितस्येति। अन्तःकरणविशिष्टचैतन्यस्येत्यर्थः। भागत्यागेति। त्वंपदवाच्यार्थस्य द्वौ भागौ स्तः—विशेषणभागो विशेष्यभागश्चेति। तत्र विशेषणरूपस्य भागस्य त्यागपूर्वकं त्वंपदस्य विशेष्यभागे चैतन्यमात्रे लक्षणा स्वीक्रियते। एवं तत्पदार्थेऽपि द्रष्टव्यम्। अपवादस्थलान्तरमाह—एवं कृष्णलमिति। प्रसक्ताविति। श्रुतिबलात् कृष्णलेषु रूपरसपरावृत्तिप्रादुर्भावपर्यन्तपाकरूपस्य श्रपणस्याङ्गीकारे तेषु श्रपणाभावप्रत्यक्षस्य विषयो न लभ्यते। अद्वैतश्रुतिविरोधेन तेषु पारमार्थिकस्य श्रपणाभावस्यासम्भवात्, श्रुत्युक्तश्रपणस्य तेषु व्यावहारिकस्यैव वक्तव्यतया तेषु तदभावस्यापि व्यावहारिकस्यासम्भवाद्, व्यवहारकाले बाधरहितस्य श्रपणाभावस्य प्रातिभासिकत्वासम्भवाच्च। तस्मात् प्रत्यक्षं निर्विषयं स्यादित्यर्थः। एवं "सोमेन यजेत" इत्यत्रापि 'सोमेन यागेनेष्टं भावयेद्' इति—वाक्यार्थे स्थिते श्रुतिबलात् सोमयागयोर्भेदाङ्गीकारे तयोर्भेदग्राहि प्रत्यक्षं निरवकाशं स्यादिति तद्विरोधपरिहाराय सोमपदस्य मत्वर्थलक्षणा स्वीक्रियते इत्यपि द्रष्टव्यम्। एवं निरवकाशप्रत्यक्षेण श्रुतिबाधमुत्सर्गस्यापवादरूपं दर्शयित्वा औत्सर्गिकं श्रुतिप्राबल्यं प्रकृताभिप्रायेण दर्शयति—कथञ्चिदिति। द्वैतमिथ्यात्वश्रुतीनाम्, तत्सत्यत्वग्राहिप्रत्यक्षस्य च विरोधस्थले प्रत्यक्षस्य श्रुतिबाधितस्यापि न निरवकाशत्वम्। कल्पितद्वैततद्गतसत्ताजात्यादिविषयकत्वेन सावकाशत्वात्। अतोऽत्र श्रुत्या प्रत्यक्षस्यैव बाध इति भावः। कथञ्चिदित्यस्य कल्पितद्वैतादिसमर्पणेन वेत्यर्थः। कथञ्चिच्छब्दात् पूर्वं प्रत्यक्षस्येति शेषः न कश्चिदपीति। तात्पर्यस्य

(वे० सू०मं०) अथवा कृष्णले ऽशक्तेर्लक्षणा श्रपयेदिह ॥
व्यवस्थेत्थं विवरणवार्तिके समुदीरिता ॥ ११ ॥

अथवा "कृष्णलं श्रपयेत्" "सोमेन यजेत" इत्यादौ न प्रत्यक्षानुरोधेन लक्षणाऽऽश्रयणम्, किं त्वनुष्ठानाशक्त्या । न हि कृष्णले उष्णीकरणमात्रमिव मुख्यः पाकोऽनुष्ठातुं शक्यते । न वा सोमद्रव्यकरणको याग इव तदभिन्नो यागः केनाचिदनुष्ठातुं शक्यते । न चानुष्ठेयत्वाभिमतस्य प्रत्यक्षविरोध एवानुष्ठानाशक्तिरिति शब्दान्तरेण व्यवह्रियते इति वाच्यम् । 'शशिमण्डलं कान्तिमत् कुर्याद्' इति विधौ अनुष्ठेयत्वाभिमतस्य शशिमण्डले कान्तिमत्त्वस्य प्रत्यक्षाविरोधेऽप्यनुष्ठानाशक्तिदर्शनेन तस्यास्ततो भिन्नत्वात् । तथा च तत्र तत एव लक्षणाऽऽश्रयणम् । तस्मादपच्छेदन्यायादिसिद्धस्य श्रुतिबलीयस्त्वस्य न कश्चिद् बाध इति ।

---

प्राबल्यप्रयोजकत्वपक्षे यथा तात्पर्यविषयस्यापि श्रपणादेर्बाधदर्शनरूपा अव्यवस्था प्रसक्ता, न तथा श्रुतिप्राबल्यौत्सर्गिकत्वपक्षे सा प्रसज्यते । अनुपलम्भादिसर्थः ।

ननु प्रत्यक्षेण श्रुतिबाधे बहून्युदाहरणानि दर्शितानि । श्रुत्या प्रत्यक्षबाधोदाहरणं त्वेकमेव दर्शितम् । तथा च 'प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यमित्युत्सर्गः' इति वक्तव्यम्, न तु वैपरीत्यमित्यस्वरसादाह— अथवेति । तदभिन्न इति । सोमाभिन्न इत्यर्थः । तस्या इति । अनुष्ठानाशक्तेरित्यर्थः । तत इति । प्रत्यक्षविरोधादित्यर्थः । तत एवेति । अनुष्ठानाशक्तेरेव, न तु प्रत्यक्षविरोधात् । अतो न प्रत्यक्षप्राबल्यस्यौत्सर्गिकत्वम् । आगमबाध्यानां गगननैल्यप्रत्यक्षादीनां भूयसां प्राग् दर्शितत्वादित्यर्थः । तस्मादिति । आगमप्राबल्यस्यौत्सर्गिकत्वसम्भवादित्यर्थः । न कश्चिद्बाध इति । 'आगमस्य प्रत्यक्षात्प्राबल्ये "यजमानः प्रस्तरः" इत्यादावपि यजमानप्रस्तराभेदादिसिद्धिप्रसङ्गः' इति यो बाध आशङ्कितः पूर्वं, स नास्ति । तस्य बहुभिः प्रकारैः परिहृतत्वादित्यर्थः ।

अथ कथमत्रापच्छेदन्यायप्रवृत्तिः ? । उच्यते—यथा ज्योतिष्टोमे बहिष्पवमानार्थं प्रसर्पतामुद्गातुरपच्छेदे सति "यद्युद्गाताऽपच्छिद्येतादक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत" इति श्रुतिनिरीक्षणेन जाता उद्गात्रपच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताबुद्धिः पश्चात् प्रतिहर्त्रपच्छेदे सति "यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्याद्" इति श्रुतिनिरीक्षणेन जातया तद्विरुद्धप्रतिहर्त्रपच्छेदनिमित्तप्रायश्चित्तकर्तव्यताबुद्ध्या बाध्यते ।

एवं पूर्वं घटादिसत्यत्वप्रत्यक्षं परया तन्मिथ्या-

---

अपच्छेदन्यायं प्रकृते योजयितुमाक्षिपति—अथ कथमिति । कथंशब्दसूचितस्याक्षेपस्य विवरणं तन्निराकरणं च यत्त्वित्यादिना भविष्यति । प्रथमं तन्न्यायं प्रकृते योजयति—उच्यत इति । बहिष्पवमानस्तोत्रमुद्दिश्यान्वारब्धतया गच्छतामृत्विजां मध्ये उद्गातुरपच्छेदे सति आरब्धं क्रतुमदक्षिणतया समाप्य पुनस्स एव क्रतुरनुष्ठेय इति तदपच्छेदनिमित्तकमारब्धक्रतोरदक्षिणतया समापनं प्रायश्चित्ततया विहितम् । तथा प्रतिहर्त्रपच्छेदनिमित्तकं सर्वस्वदानरूपदक्षिणादानविशिष्टतया आरब्धस्य क्रतोस्समानरूपं प्रायश्चित्तं विहितम् । तथा च एकस्मिन् प्रयोगे दैवात् क्रमेणोभयोरपच्छेदे सति विरुद्धयोरुक्तप्रायश्चित्तयोरनुष्ठातुमशक्यत्वादन्यतरस्यानुष्ठेयत्वे स्थिते सति 'किं पूर्वनिमित्तकप्रायश्चित्तमनुष्ठेयम्, किं वा उत्तरनिमित्तकम्' ? इति विशये निर्णयमाह—उद्गातुरपच्छेद इत्यादिना । यत्र प्रयोगे प्रथममुद्गातुरपच्छेदो भवति तत्प्रयोगाभिप्रायोऽयं ग्रन्थः । श्रुतिनिरीक्षणेनेति । निमित्तोपजननानन्तरमेव नैमित्तिकशास्त्रस्य बुद्धिस्थत्वादिति भावः । अपच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताबुद्धिरिति । उद्गात्रपच्छेदो निमित्तं यस्य प्रायश्चित्तस्य, तदुद्गात्रपच्छेदनिमित्तम्, तस्य कर्तव्यताबुद्धिरित्यर्थः । तद्विरुद्धेति । उद्गात्रपच्छेदनिमित्तकर्तव्यता तच्छब्दार्थः । तद्विरुद्धत्वं च कर्तव्यताविशेषणम् । एवमिति । एकस्मिन् प्रयोगे अदक्षिणत्वसर्वस्वदक्षिणाकत्वयोरिव एकत्र घटादिप्रपञ्चसत्यत्वमिथ्यात्वयोरपि विरुद्धत्वात्तद्बुद्ध्यो-

त्वश्रुतिजन्यबुद्ध्या बाध्यते। न चोदाहृतस्थले पूर्वनैमित्तिककर्तव्यताबुद्धेः परनैमित्तिककर्तव्यताबुद्ध्या बाधेऽपि पूर्वनैमित्तिककर्तव्यताजनकं शास्त्रं यत्रोद्गातृमात्रापच्छेदः, उभयोरपि युगपदपच्छेदौ वा, उद्गात्रपच्छेदस्य परत्वं वा, तत्र सावकाशम्, प्रत्यक्षं तु अद्वैतश्रुत्या बाधे विषयान्तराभावान्निरालम्बनं स्यादिति वैषम्यं शङ्कनीयम्। यत्र घटादौ श्रुत्या बाध्यं प्रत्यक्षं प्रवर्तते, तत्रैव व्यावहारिकं विषयं लब्ध्वा कृतार्थस्य तस्य परापच्छेदस्थले सर्वथा बाधितस्य पूर्वापच्छेदशास्त्रस्येव विषयान्तरान्वेषणाभावात्। इहापि सर्वप्रत्ययवे-

---

द्यबाध्यबाधकभावः। न चोदाहृतस्थले इति। यत्र प्रथममुद्गात्रपच्छेदस्तत्रेत्यर्थः। शास्त्रमिति। "यद्युद्गाताऽपच्छिद्येत" इति शास्त्रमित्यर्थः। युगपदिति। 'उद्गातृप्रतिहर्त्रपच्छेदयोर्यौगपद्यस्थले उद्गात्रपच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयम्' इत्यापस्तम्बाचार्यैरुक्तत्वादिति भावः। प्रत्यक्षं त्विति। द्वैतसत्यत्वप्रत्यक्षमित्यर्थः। अद्वैतश्रुत्येति। द्वैतमिथ्यात्वश्रुत्येत्यर्थः। विषयान्तराभावादिति। द्वैतप्रपञ्चे प्रतीयमानसत्त्वस्य श्रुत्या बाधे सति तत्र सत्त्वान्तराभावात् सत्त्वप्रत्यक्षं निर्विषयं स्यात्। न चैतद्युज्यते। प्रत्यक्षज्ञानस्य निर्विषयत्वादर्शनात्, तदनुपगमाच्चेति भावः। द्वैतप्रपञ्चे पारमार्थिकस्य सत्त्वस्य श्रुत्या अपहृतत्वेऽपि व्यावहारिकस्य तत्सत्त्वस्य तयाऽनपहृतत्वात् सत्त्वप्रत्यक्षस्य न निरवकाशत्वमिति परिहरति—यत्रेति। विषयमिति। सत्त्वरूपमिति शेषः। ननु ब्रह्मणि सत्त्वं पारमार्थिकम्, घटादिप्रपञ्चे सत्त्वं व्यावहारिकम्, शुक्तिरजतादौ सत्त्वं प्रातिभासिकमिति सत्तात्रैविध्यपक्षे घटादिसत्त्वप्रत्यक्षस्य विषयान्तरं नान्वेषणीयम्। व्यावहारिकसत्त्वस्य घटादौ विद्यमानस्यैव तद्विषयस्य लाभात्। 'एकैव सर्वत्र सत्ता' इति पक्षे व्यावहारिकसत्त्वप्रातिभासिकसत्त्वयोरभावात् सत्त्वप्रत्यक्षस्य विषयान्तरमन्वेषणीयमेव। यथा उत्तरभाविविरुद्धापच्छेदस्थले सर्वथा बाधितस्य पूर्वापच्छेदनिमित्तकप्रायश्चित्तशास्त्रस्येत्याशङ्क्याह—इहापीति। द्वैतसत्त्वप्रत्यक्षं घटादिद्वैते सत्तामलभमानमपि न निरवकाशम्। पूर्वापच्छेदनिमित्तकप्रायश्चित्तशास्त्रस्य प्रयोगान्तरे सावका-

द्यब्रह्मसत्ताया सावकाशं प्रत्यक्षमिति वक्तुं शक्यत्वाच्च।

यत्त्वेकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां क्रतौ तत्तन्नैमित्तिककर्तव्यतयोर्बदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पादाद् रूपज्ञानद्वयवत् कर्तव्यताज्ञानद्वयमपि प्रमाणमेवेति न परेण पूर्वज्ञानबाधे अपच्छेदन्याय उदाहरणम्।

अत एवापच्छेदाधिकरणे (पू०मी०अ०६पा०५अधि०१९) "नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तोपजननात् प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सत्यन्यथा कर्तव्यः" इति शास्त्र-

---

शत्ववदिहापि घटादिद्वैतादन्यत्र तदधिष्ठानभूतब्रह्मसत्तायां सावकाशत्वसम्भवादित्यर्थः। ब्रह्मस्वरूपसत्तायाः प्रत्यक्षविषयत्वे कैमुतिकन्यायमभिप्रेत्याह—सर्वेति। सर्वप्रत्ययवेद्यत्वं सत्ताविशेषणम्। लोके हि यद्यद्वस्तु मनसि स्फुरति, तत् सर्वं सदित्येव प्रतीयते। अतस्सर्वस्य जगतस्सत्ता सर्वप्रत्ययवेद्या। सा च सर्वाधिष्ठानभूतब्रह्मसत्तैव, न तु तदतिरिक्ता। कल्पनागौरवादिति भावः। पूर्वं कथंशब्दसूचितमाक्षेपमिदानीमुद्भावयति—यत्त्विति। बदरफल इति। यथा तत्र पूर्वं श्यामरूपमुत्पद्यते, तत्रैव पश्चात् पूर्वरूपनाशपूर्वकं रक्तरूपमुत्पद्यते, तथा पूर्वनिमित्तेन जातमात्रेण पूर्वनैमित्तिककर्तव्यता जायते, पाश्चात्येन च निमित्तेन पूर्वकर्तव्यतानाशपूर्वकमुत्तरनैमित्तिककर्तव्यता उत्पाद्यते इत्यर्थः। ततः किम्, तत्राह—रूपज्ञानद्वयवदिति। तथा च उत्तरभाविविरुद्धापच्छेदवत्यपि क्रतौ पूर्वनैमित्तिकशास्त्रस्य नाप्रामाण्यमिति तत्प्रामाण्यसंरक्षणमेव तथा कल्पकमिति भावः। उत्तरनिमित्तोपजननात् प्राक् पूर्वनैमित्तिककर्तव्यता वस्तुत आसीदित्यत्र सम्मतिमाह—अत एवेति। पूर्वं वस्तुतस्तदभ्युपगमादेवेत्यर्थः। उत्तरभाविप्रतिहर्त्रपच्छेदजननात् प्रागन्यथा अदक्षिणतया वस्तुतः कर्तव्योऽपि क्रतुः पश्चात् प्रतिहर्त्रपच्छेदरूपे निमित्ते सत्यन्यथा सर्ववेदसदक्षिणतया कर्तव्य इति शङ्काभिप्रायानुसारेण वचनार्थः। क्रमेण विरुद्धापच्छेदद्वयवति क्रतौ पूर्वनैमित्तिकस्य कर्तव्यतानिष्पत्तौ मानं नास्ति। तत्र पूर्वप्रायश्चित्तस्यानङ्गत्वात्। अनङ्गत्वं च तद्बोधकमानाभावात्। न च

---

१ द्वयज्ञानेति पाठः।

दीपिकावचनमिति, तन्न । अङ्गस्य सतः कर्तव्यत्वम् । न च पश्चाद्भाविप्रतिहर्त्रपच्छेदवति क्रतौ पूर्ववृत्तोद्गात्रपच्छेदनिमित्तकस्य प्रायश्चित्तस्याङ्गत्वमस्ति । आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववद् "यद्युद्गाताऽपच्छिद्येत"इति शास्त्रस्य पश्चाद्भाविप्रतिहर्त्रपच्छेदरहितक्रतुविषयत्वात् ।

उक्तं हि न्यायरत्नमालायाम्—

'साधारणस्य शास्त्रस्य विशेषविषयादिना ।
संकोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते ॥'

इत्युक्तलक्षणप्राप्तबाधविवेचने, "तत्रैवं सति शास्त्रार्थो भवति, पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदवतः क्रतोस्सर्ववेदसदानमङ्गम्, एवमुद्गात्रपच्छेदेऽपि द्रष्टव्यम्"इति ।

---

पूर्वनैमित्तिकशास्त्रं तत्र मानम् । तस्य प्रयोगान्तरेषु सावकाशत्वेन तत्राप्यङ्गत्वबोधकत्वाभावादित्याशयेन दूषयति—तन्नेति । आहवनीयेति । "आहवनीये जुहोति"इति होममात्रे आहवनीयं विधातुं प्रवृत्तस्य सामान्यशास्त्रस्य होमविशेषे पदरूपाधिकरणविधायकविशेषशास्त्रवशेन पदहोमातिरिक्तहोमेषु आहवनीयविधायकत्ववदित्यर्थः । क्रतुविषयत्वादिति । तादृशक्रतावेव उद्गात्रपच्छेदनिमित्तकप्रायश्चित्तस्याङ्गत्वबोधकत्वादित्यर्थः । उक्तार्थे सम्मतिमाह—उक्तं हीति । क्लृप्तरूपस्य प्रत्यक्षसिद्धस्य साधारणस्य होममात्रे प्राप्तस्य "आहवनीये जुहोति"इति शास्त्रस्य विशेषशास्त्रेण यस्सङ्कोचः, स प्राप्तबाधोऽभिधीयते । यथा सामान्यशास्त्रस्य विशेषशास्त्रं बाधकं तथा सामान्यशास्त्रयोरेव क्वचिद्विषये विरोधे सति पूर्वं प्राप्तस्य पश्चात् प्राप्तं परत्वाद् बाधकं भवति । यथा विरुद्धापच्छेदनिमित्तकशास्त्रयोः । तथा च विशेषविषयादिनेत्यादिपदं परत्वादिसङ्ग्रहार्थमिति श्लोकार्थः । तत्रैवंसतीति । अपच्छेदस्थल उत्तरज्ञानेन पूर्वज्ञानबाधे सतीत्यर्थः । द्रष्टव्यमिति । पश्चाद्भाविप्रतिहर्त्रपच्छेदविधुरस्य उद्गात्रपच्छेदवतः क्रतोरदक्षिणतया क्रतुसमापनमङ्गमिति ज्ञातव्यमित्यर्थः । शास्त्रदीपिकावचनमपि न त्वदभिमतार्थपरम् । तत्पूर्वग्रन्थविरोधात्, पूर्वग्रन्थार्थनिगमनरूपस्य त्वदुदाहृतवचनस्य पूर्वग्रन्था-

यत्तु शास्त्रदीपिकावचनमुदाहृतम्, तदपि तेनोत्पन्नमपि पूर्वं प्रायश्चित्तज्ञानं मिथ्या भवति बाधितत्वाद्, उत्तरस्य तु न किञ्चिद्बाधकमस्तीति पूर्वकर्तव्यताबाध्यत्वप्रतिपादकग्रन्थोपसंहारपठितत्वाद् निमित्तोपजननात्प्राङ् निमित्तोपजननं विना निमित्तोपजननाभावे सति अन्यथा कर्तव्योऽपीति कृत्वाचिन्तामात्रपरम्। न तूत्तरनिमित्तोपजननात्प्राक्पूर्वनैमित्तिककर्तव्यता वस्तुत आसीदित्येवंपरम्। पूर्वग्रन्थसन्दर्भविरोधापत्तेः।

आस्तां मीमांसकमर्यादा। श्यामतदुत्तररक्तरूपन्यायेन क्रमिककर्तव्यताद्वयोत्पत्त्युपगमे को विरोधः?।

उच्यते—तथाहि—किं तत् कर्तव्यत्वम्, यत् परनैमित्तिककर्तव्यतोत्पत्त्या निवर्तेत। न तावत् पूर्वनैमित्तिकस्य कृतिसाध्यत्वयोग्यत्वम्। तस्य पश्चादप्यनपायात्। नापि फलमुखं कृ-

---

नुसारेणैव नेतव्यत्वाच्चेत्याह—तदपीति। तदपि कृत्वाचिन्तामात्रपरमिति सम्बन्धः। कृत्वाचिन्तापरत्वे हेतुमाह—तेनेत्यादिना। तेनेत्यस्य क्लृप्तपूर्वप्रवृत्तिनैमित्तिकशास्त्रेणेत्यर्थः। परोदाहृतवचनस्य शास्त्रदीपिकागतपूर्वग्रन्थानुसारिणमर्थमाह—निमित्तोपजननं विनेति। 'क्रमेण विरुद्धापच्छेदद्वयवति क्रतौ यदि द्वितीयनिमित्तोपजननं न स्यात्, तदा पूर्वनिमित्तवशादन्यथाकर्तव्यो भवेदप्ययं क्रतुः, न त्वेतदस्ति' इत्येतदर्थपरोऽयं ग्रन्थ इत्यर्थः। पराभिमतं तद्वचनार्थं निषेधति—न त्विति।

तिष्ठन्तु मीमांसकाः दर्शितदर्शिनः। कुशलैरस्माभिः कल्पितस्य श्रुत्यर्थस्य काऽनुपपत्तिरिति शङ्कते—आस्तामिति। उत्तरनैमित्तिककर्तव्यतोत्पत्त्या नाश्यत्वेन पराभिमतं पूर्वनैमित्तिकस्य कर्तव्यत्वमेव तावद् दुर्निरूपम्।

तथा हि—'तत् किं कृतिसाध्यत्वयोग्यत्वम्, किं वा फलमुखं कृतिसाध्यत्वम्, क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालित्वं वा, अङ्गत्वं वा, अन्यद्वा किञ्चिद्' इति विकल्पं मनसि निधायाद्यं दूषयति—न तावदिति। अनपायादिति। तथा च उत्तरनैमित्तिककर्तव्यताकालेऽपि अनुवर्तमानायाः पूर्वकर्तव्यतायाः तन्नाश्यत्वायोगेन बदरफलगतश्यामता-

तिसाध्यत्वम् । तस्य पूर्वमप्यजननात् । नापि यदननुष्ठान क्रतोर्वैकल्यं,तत्त्वम्,अङ्गत्वं वा । अननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य नियमविशेषरूपत्वेन कर्माङ्गत्वस्य फलोपकारितया

---

रक्तयोरिव तयोः क्रमिकत्वाभ्युपगमविरोध इति भावः । द्वितीयं दूषयति–नापि फलेति । अजननादिति । तथा च पूर्वनैमित्तिककर्तव्यताज्ञानस्य मीमांसकमर्यादासिद्धं भ्रान्तित्वमेवायाति, न त्वदभिमतं श्यामताज्ञानस्येव प्रमात्वमिति भावः । तृतीयचतुर्थावनुवदति–नापि यदिति । यस्यानुष्ठानाभावे क्रतोर्वैकल्यं भवति, तत् क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालि पर्यवस्यति तत्त्वमित्यर्थः ।

यत्र प्रथममुद्गात्रपच्छेदः , पश्चात् प्रतिहर्त्रपच्छेदः, तत्र उद्गात्रपच्छेदप्रायश्चित्ताननुष्ठानं क्रतुवैकल्यप्रयोजकम् , तत्प्रायश्चित्तं तस्य क्रतोरङ्गमिति च वदता वक्तव्यम्—पूर्वप्रायश्चित्ताननुष्ठानस्य क्रतुवैकल्यप्रयोजकत्वं किं वैकल्योत्पादकत्वम्, किं वा तद्व्यापकत्वम्, तद्व्याप्यत्वं वा ? । नाद्यः । अभावरूपस्याननुष्ठानस्योत्पादकत्वासम्भवात्, क्रतुवैकल्यस्यापि क्रतूपकारप्रागभावरूपतया तदुत्पाद्यत्वायोगाच्च । न द्वितीयः । यत्रोद्गातृमात्रापच्छेदवति क्रतौ तत्प्रायश्चित्तं कृतं कारणान्तराद्वैकल्यं च, तत्र क्रतुवैकल्यसत्त्वेऽपि उद्गात्रपच्छेदप्रायश्चित्ताननुष्ठानाभावेन व्यभिचारात् ।

तस्मात् तृतीयः परिशिष्यते इत्याशयेनाह—नियमविशेषरूपत्वेनेति । व्याप्यत्वरूपत्वेनेत्यर्थः । फलोपकारित्वं परमापूर्वरूपफलं प्रत्यदृष्टद्वारा कारणत्वम् । यथा प्रयाजादीनाम् । सन्निपत्योपकारकत्वं च यागस्वरूपोत्पादकत्वम् । यथा द्रव्यदेवतादेः । अस्तु तयोरुक्तरूपत्वमिति चेत्, तत्र वक्तव्यम्–क्रमिकविरुद्धापच्छेदद्वयवति क्रतौ पूर्वप्रायश्चित्ताननुष्ठानगतं क्रतुवैकल्यव्याप्यत्वरूपं क्रतुवैकल्यप्रयोजकत्वं पूर्वप्रायश्चित्तगतमङ्गत्वं च द्वितीयनिमित्तजननानन्तरमप्यनुवर्तते, न वेति । आद्ये क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालित्वरूपायाः पूर्वप्रायश्चित्तकर्तव्यतायाः, तत्प्रायश्चित्तगताङ्गत्वरूपकर्तव्यतायाश्च उत्तरनैमित्तिककर्तव्यतानाश्यत्वाभ्युपगमभङ्गापत्तेः । द्वितीयकल्पे च पूर्वप्रायश्चित्ताननुष्ठानस्य क्रतुवैकल्यव्याप्यत्वं द्वितीयनिमित्तजननात् प्रागेवास्ति, तज्जननानन्तरं तु नास्तीति पर्यवस्यति । तथा पूर्वप्रायश्चित्तगताङ्गत्वरूपा कर्तव्यता पूर्वप्रा-

सन्निपातितया वा कारणत्वविशेषरूपत्वेन च तयोः कादाचित्क-त्वायोगेन स्वाभाविकत्वनिर्वाहाय पश्चाद्भाविविरुद्धापच्छेदाभाववत्तः क्रतोः पूर्वापच्छेदनैमित्तिकमङ्गम्, तत्रैव तदननुष्ठानं क्रतुवैकल्य-प्रयोजकमिति विशेषणीयतया पाश्चात्त्यापच्छेदान्तरवति क्रतौ पूर्वापच्छेदनैमित्तिके क्रत्वङ्गस्य, तदननुष्ठाने क्रतुवैकल्यप्रयोजक-त्वस्य वा पाश्चात्त्यापच्छेदोत्पत्तेः पूर्वमसम्भवात्। न हि वस्तु किञ्चिद्वस्त्वन्तरं प्रति कञ्चित्कालं व्याप्य पश्चान्नेति वा, कञ्चित्कालं कारणं पश्चान्नेति वा, क्वचिद् दृष्टम्, युक्तं वा। नापि कर्तव्यत्वं नाम धर्मान्तरमेवागमापाययोग्यं कल्प्यम्। मानाभावात्। विरुद्धापच्छेदशास्त्रयोः पदाहवनीयशास्त्रवद्व्यवस्थोपपत्तेः।

---

यश्चित्तस्य द्वितीयनिमित्तजननात्प्रागेवास्ति, पश्चात्तु नास्तीति पर्यवस्यति। तथा च व्याप्यत्वकारणत्वयोः स्वाश्रये कादाचित्कत्वमभ्युपगतं स्यात्। तच्च न सम्भवतीत्यनुपदमेव वक्ष्यति—न हीत्यादिना। तस्मात्तयोः यावदाश्रयभावित्वरूपस्वाभाविकत्वनिर्वाहाय क्रमिकविरुद्धापच्छेदवत्क्रतुव्यावर्तकविशेषणमुभयत्रापि देयमित्याह—पश्चाद्भावीति। असम्भवादिति। तथा च क्रमिकविरुद्धापच्छेदवति क्रतौ पूर्वनैमित्तिककर्तव्यताज्ञानं भ्रान्तिरेवेति भावः। तयोः कादाचित्कत्वायोगे हेतुमाह—न हीति। धूमादौ वह्न्यादिव्याप्यतायाः, वह्न्यादौ धूमादिकारणतायाश्च कदाचित्कत्वादर्शनादित्यर्थः। नन्वदृष्टमपि युक्तं चेत् सङ्ग्राह्यमेव, नेत्याह—युक्तं वेति। वाकारो नञनुकर्षणार्थः। तयोः कादाचित्कत्वपक्षे धूमादेः कदाचिद् वह्निव्याप्यत्वाभावापत्त्या तदभावप्रयोजकोपाधिमत्त्वप्रसङ्गस्स्यात्। वह्न्यादेः कदाचित् धूमादिकारणत्वाभावापत्त्या धूमादिकार्यार्थिनो वह्न्याद्युपादाने तत्कारणत्वाभावशङ्कया निष्कम्पप्रवृत्तिश्च न स्यात्। अतस्तयोः कादाचित्कत्वमयुक्तमित्यर्थः। पञ्चमं निराकरोति—नापीति। प्रथमनिमित्तजननानन्तरमेवागमयोग्यम्, द्वितीयनिमित्तजननानन्तरमेवापाययोग्यं चेत्यर्थः। पूर्वनैमित्तिकशास्त्रस्याहवनीयादिशास्त्रवदन्यत्र सावकाशतायाउक्तत्वेन तस्यैतादृशधर्मे मानत्वायोगादित्याशयेनाह—विरुद्धेति। क्रमि-

तस्मान्निरालम्बनं क्रमिककर्तव्यताद्वयोत्पत्तिवचः ॥

(व्र०सू०मं०) ननूपक्रमवत् पूर्वं प्रत्यक्षं त्ववलवच्छ्रुतेः ॥
नैकवाक्येष्विदं बाधस्त्वपच्छेदनयादिह ॥ १२ ॥

ननु चोपक्रमाधिकरणन्यायेनासञ्जातविरोधित्वात् प्रत्यक्षमेवागमाद् बलीयः किं न स्यात् ? ।

उच्यते—यत्रैकवाक्यता प्रतीयते, तत्रैकस्मिन्नेवार्थे पर्यवसानेन भाव्यम्, अर्थभेदे प्रतीतैकवाक्यताभङ्गप्रसङ्गात् । अतस्तत्र प्रथमसञ्जातप्रतिपक्षेण "प्रजापतिर्वरुणायाश्वमनयद्" इत्याद्युपक्रमेण परकृतिसरूपार्थवादेन दातुरिष्टौ बुद्धिमधिरोपितायां तद्विरुद्धार्थं "यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेद्" इत्युपसंहारगतं पदजातमुपजातप्रतिपक्षत्वाद्यथा-

कविरुद्धापच्छेदवति क्रतौ पूर्वनैमित्तिककर्तव्यत्वज्ञानस्याप्रमात्वसम्भवाद् सति विरोध उत्तरज्ञानेन पूर्वज्ञानाबाधे अपच्छेदन्याय उदाहरणं भवत्येवेत्याशयेनोपसंहरति—तस्मादिति ।

नन्वपच्छेदन्यायेन श्रुतेः प्रत्यक्षापेक्षया प्राबल्यावगतिवदुपक्रमाधिकरणन्यायेन प्रत्यक्षस्यापि श्रुत्यपेक्षया प्राबल्यावगमात्तयोर्बाध्यबाधकभावे विनिगमनाविरह इत्याशयेन शङ्कते—ननु चेति । असञ्जातेति । यथा उपक्रमवाक्यार्थज्ञानकाले उपसंहारवाक्यार्थज्ञानाभावेन विरोधस्फुरणाभावादुपक्रमस्यासञ्जातविरोधित्वम्, तथा द्वैतसत्यत्वप्रत्यक्षप्रवृत्तिकाले द्वैतमिथ्यात्वबोधकश्रुत्यर्थानुभवाभावेन विरोधस्फूर्त्यभावात् प्रत्यक्षस्यासञ्जातविरोधित्वमित्यर्थः । दृष्टान्तवैषम्येण परिहरति—उच्यत इति । अश्वमनयदिति । अश्वं दत्तवानित्यर्थः । परस्य प्रजापतेः कृतिरनुष्ठानं परकृतिः । परकृतिपदं तत्प्रतिपादकवाक्यपरम्, तत्सदृशार्थवादेनेत्यर्थः । प्रजापतेः कर्माधिकाराभावेन वस्तुतस्तत्प्रतिपादकत्वाभावादिति सरूपेत्युक्तम् । दातुरिति । "स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपद्" इत्युपक्रमे श्रवणादिति भावः । स इत्यनेन प्रकृतः प्रजापतिः परामृश्यते । उपक्रमोपसंहारयोर्वारुणेष्टिरूपैकार्थस्पर्शित्वात्तयोरत्रैकवाक्यत्वमवगतम् । तत्संरक्षणायानयोरेकार्थपर्यवसानं वक्तव्यम् । उपक्रमो दातुरिष्टिं विधत्ते,

श्रुतार्थसमर्पणेन तदेकवाक्यताम्प्रतिपद्यमानमेकवाक्यतानिर्वाहाय णिजर्थमन्तर्भाव्य तदानुगुण्येनैवात्मानं लभते इति उपक्रमस्य प्राबल्यम्। यत्र तु परस्परमेकवाक्यता न प्रतीयते। तत्र पूर्ववृत्तमविगणय्य लब्धात्मकं विरुद्धार्थकं वाक्यं स्वार्थं बोधयत्येवेति न तत्र पूर्ववृत्तस्य प्राबल्यम्।

अत एव षोडशिग्रहणवाक्यं पूर्ववृत्तमविगणय्य तदग्रहणवाक्यस्यापि स्वार्थबोधकत्वमुपेयते, किन्तूभयोर्विषयान्तराभावाद् अगत्या तत्रैव विकल्पानुष्ठानमिष्यते।

एवं चाद्वैतागमस्य प्रत्यक्षेणैकवाक्यत्वशङ्काऽभावात् पूर्ववृत्तमपि तदविगणय्य स्वार्थबोधकत्वमप्रतिहतम्।

तदर्थबोधजनने च—

पूर्वं परमजातत्वादबाधित्वैव जायते।

---

उपसंहारः प्रतिग्रहीतुरिति यथाश्रुतवाक्यार्थाभ्युपगमे प्रतीतैकवाक्यत्वं न स्यादित्यर्थः। णिजर्थमिति। प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्यर्थः। एकवाक्यत्वप्रतीतिस्थल एवोत्तरस्य पूर्वापेक्षेत्युक्तार्थदार्ढ्याय एकवाक्यत्वप्रतीत्यभावस्थले उत्तरेण पूर्वं नादर्तव्यमित्याशयेनाह—यत्र त्विति। नन्वेकस्मिन्नतिरात्रक्रतौ षोडशिग्रहणतदभावयोर्विरुद्धत्वाद्वाक्यद्वयं कथं प्रमाणं स्यादिति शङ्कते—किं त्विति। प्रयोगभेदेन विरोधसमाधानमाह—उभयोरिति। ननु ग्रहणवाक्यं तन्निषेधवाक्यं च क्रतुभेदेन व्यवस्थितं किं न स्यादित्यत आह—विषयान्तराभावादिति। तयोर्वाक्ययोरेकप्रकरणगतत्वादित्यर्थः। अगत्येति। समुच्चयस्याप्यसम्भवेनेत्यर्थः। तत्रैवेति। अतिरात्रे एवेत्यर्थः। एवं चेति। उपक्रमन्यायस्य प्रतीतैकवाक्यताकग्रन्थविषयत्वे सतीत्यर्थः। शङ्काऽभावादिति। तथा च न प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यशङ्केति भावः। अपच्छेदन्यायप्रवृत्तिं प्रकृते शङ्कासमाधानाभ्यां निरूप्य निगमयति—तदर्थेति। पूर्वमिति। क्रमिकविरुद्धापच्छेदवति क्रतौ प्रथमापच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताज्ञानं पूर्वशब्दार्थः। उत्तरनैमित्तिककर्तव्यताज्ञानं परशब्दार्थः। पूर्वेण परस्य बाधाभावे हेतुमाह—अजातत्वादिति। परस्यान्यथा पूर्वज्ञानबाधमन्तरा उ-

परस्यानन्यथोत्पादान्नाद्याबाधेन सम्भवः ॥'

इत्यपच्छेदन्यायस्यैव प्रवृत्तिः, नोपक्रमन्यायस्य।

अत एव लोकेऽपि प्रथमवृत्तं शुक्तिरूप्यप्रत्यक्षमाप्तोपदेशेन बाध्यत इति ॥ २ ॥

(वे०सू०मं०) ननूपजीव्यप्रत्यक्षाविरुद्धेऽर्थे श्रुतेः कथम् ॥
मानत्वं युक्तमिति चेद्

(३)ननु तथाऽप्युपजीव्यत्वेन प्रत्यक्षस्यैव प्राबल्यं दुर्वारम्। अपच्छेदशास्त्रयोर्हि न पूर्वं परस्योपजीव्यमिति युक्तः परेण पूर्वस्य बाधः। इह तु वर्णपदादिस्वरूपग्राहकतया मिथ्यात्वबोधकागमं प्रति प्रत्यक्षस्योपजीव्यत्वाद् आगमस्यैव तद्विरुद्धमिथ्यात्वाबोधकत्वरूपो बाधो युज्यते। न च मिथ्यात्वश्रुत्या वर्णपदादिसत्यत्वांशोपमर्देऽपि उपजीव्यस्वरूपांशोपमर्दाभावान्नोपजीव्यविरोध इति वाच्यम्। "नेह नानास्ति किञ्चन"इत्यादिश्रुतिभिः

---

त्पत्तुमयोग्यत्वादाद्यस्याबाधेन परस्य सम्भवो नास्तीति श्लोकार्थः। पूर्वप्रवृत्तस्य प्रत्यक्षस्यापि परेण शब्देन बाधे उदाहरणमाह—अत एवेति। परत्वादेवेत्यर्थः ॥ २ ॥

नन्विति। यद्यपीयं शङ्का 'न चैवमुपजीव्यप्रत्यक्षविरोधः' इत्यादिना पूर्वं निराकृता, तत्रोक्तं परिहारमाक्षेप्तुं तच्छङ्कापरिहारौ पुनर्लिखति—तथाऽपीति। आगमवद् प्रत्यक्षस्य स्वतःप्राबल्याभावेऽपीत्यर्थः। नन्वपच्छेदन्यायेन श्रुतेरपि प्राबल्यं दुर्वारम्। तथा च बाध्यबाधकभावे विनिगमनाविरह एवेति शङ्ककस्य नेष्टसिद्धिः, प्रत्यक्षेण श्रुतिबाधस्य तदिष्टत्वादित्याशङ्क्यापच्छेदन्यायानवतारं शङ्कः प्रकृते दर्शयति—अपच्छेदशास्त्रयोर्हीति। उपजीव्यविरोधशङ्कायां पूर्वोक्तं परिहारं स्मारयति—न च मिथ्यात्वश्रुत्येति। श्रुत्या प्रपञ्चसत्यत्वमात्रनिषेधे सति तथा परिहारो युज्यते। सा तु प्रपञ्चस्वरूपमेव निषेधति। तथा च वर्णपदादिस्वरूपस्यैवाभावादुपजीव्यविरोधो दुर्वार इत्याह—नेहेति। इह ब्रह्मणि नाना भिन्नं वस्तु किञ्चिद-

स्वरूपेणैव प्रपञ्चाभावबोधनात् ॥

(वे०सू०मं०) अत्र केचित् प्रचक्षते ॥ १३ ॥

न पदज्ञानमानत्वनियता शाब्दमानता ॥
वृषभादिपदे भ्रान्त्या न्यूनाधिक्येऽपि दर्शनात् ॥ १४ ॥

अत्र केचिदाहुः—'वृषमानय'इत्यादिवाक्यं श्रवणदोषाद् 'वृषभमानय'इत्यादिरूपेण शृण्वतोऽपि शाब्दप्रमितिदर्शनेन शाब्दप्रमितौ वर्णपदादिप्रत्यक्षं प्रमाभ्रमसाधारणमेवापेक्षितमित्यद्वैतागमेन वर्णपदादिप्रत्यक्षमात्रमुपजीव्यम्, न तत्प्रमा। तथा च वर्णपदादिस्वरूपोपमर्देऽपि नोपजीव्यविरोध इति ॥

(वे०सू०मं०) असद्विलक्षणं रूपमुपजीव्यं न तात्त्विकम् ॥
तच्चानिर्वचनीयार्थेऽप्यविरुद्धमितीतरे ॥ १५ ॥

अन्ये त्वाहुः—शाब्दप्रमितौ वर्णपदादिस्वरूपसिद्ध्यनपेक्षायामप्ययोग्यशब्दात् प्रमित्यनुदयाद्योग्यतास्वरूपसिद्ध्यपेक्षाऽस्ति।

---

पि नास्तीत्यर्थः।

स्वरूपोपमर्दमुपेत्यैव उपजीव्यविरोधं परिहरति—अत्र केचिदाहुरिति। प्रपञ्चसत्यत्वपक्षेऽपि 'वृषमानय'इत्युदाहरणानुरोधेन भ्रमप्रमासाधारणमेव शब्दप्रत्यक्षं शाब्दबोधोपजीव्यमिति वक्तव्यम्। अस्माकं तु निषेधश्रुतिप्रामाण्यात् सर्वत्र भ्रमरूपमेव प्रत्यक्षं शाब्दबोधे व्यवहारान्तरेषु च कारणमिति विशेष इति नोपजीव्यविरोधः। शब्दस्वरूपस्यानुपजीव्यत्वादित्यर्थः ॥

उपजीव्यविरोधं प्रकारान्तरेण परिहरति—अन्ये त्वाहुरिति। प्रथमं पूर्वमते अस्वरसं दर्शयति–शाब्दप्रमिताविति। अनपेक्षायामपीति। अत्रापिशब्देन वस्तुतोऽपेक्षाऽस्तीति सूचितम्। तथा हि–पूर्वमते प्रत्यक्षज्ञानमात्रमुपजीव्य विषयो वर्णपदादिलक्षणो नोपजीव्य इत्युक्तम्, तदयुक्तम्। निर्विषयप्रत्यक्षज्ञानायोगात्। अतो वर्णपदादिस्वरूपमपि स्वीकर्तव्यमेव। तथा च उपजीव्यविरोधे पूर्वसमाधानं न साध्विति भावः। अस्तीति। तथा च योग्यताया

तदपेक्षायामपि नोपजीव्यविरोधः । "नेह नानास्ति" इतिश्रुत्या निषेधेऽपि यावद्ब्रह्मज्ञानमनुवर्तमानस्यार्थक्रियासंवादिनोऽसद्विलक्षणप्रपञ्चस्वरूपस्याङ्गीकारात् । अन्यथा प्रत्यक्षादीनां व्यावहारिकप्रमाणानां निर्विषयत्वप्रसङ्गात् ।

न च स्वरूपेण निषेधेऽपि कथं प्रपञ्चस्वरूपस्यात्मलाभः । निषेधस्य प्रतियोग्यप्रतिक्षेपरूपत्वे व्याघातादिति वाच्यम् । शुक्तौ 'इदं रजतम्,' 'नेदं रजतम्'इति प्रतीतिद्वयानुरोधेनाधिष्ठानग-

---

उपजीव्यत्वमवर्जनीयमिति तद्विरोधः पूर्वमते आवश्यक इति भावः ।

न चैतावता पूर्वचार्याभिमतस्य कृत्स्नप्रपञ्चस्य स्वरूपं न सिध्यतीति वाच्यम् । शाब्दप्रमितिलक्षणकार्यानुरोधेन ब्रह्मातिरिक्तयोग्यतास्वरूपसिद्धौ तद्वदेव जलाहरणादिकार्यानुरोधेन घटादिस्वरूपमपि सिध्यत्येवेत्याशयात् ।

ननु यदि चैतन्यव्यतिरिक्तं कृत्स्नं जगदुपेयते, तर्हि तद्ग्राहिप्रत्यक्षादेरसंविषयस्योपजीव्यत्वात्तद्विरोध इत्यत आह—तदपेक्षायामपीति । निषेधश्रुत्यर्थाविरुद्धस्य प्रपञ्चस्वरूपस्यास्माभिरप्यङ्गीकारान्नास्माकं मते उपजीव्यविरोध इति भावः । असद्विलक्षणस्वरूपानङ्गीकारे बाधकं पूर्वमतानुवर्तिनं प्रत्याह—अन्यथेति ।

प्रपञ्चसत्यत्ववादी शङ्कते—न चेति । ननु ब्रह्मणि प्रपञ्चस्तन्निषेधश्च युगपदास्ताम्, को दोष इत्याशङ्क्याह—निषेधस्येति । भूतलादौ घटाद्यभावस्य प्रतियोगिस्थितिविरोधित्वदर्शनादिति भावः । व्याघातादिति । निषेधस्वव्याघातादित्यर्थः । कल्पितपदार्थप्रतियोगिकाभावस्याधिष्ठानादन्यत्र सदा प्रतियोगिविरोधित्वेऽप्यधिष्ठाने कञ्चित्कालं प्रतियोगिस्थितिसहिष्णुत्वस्वभावः कल्प्यते । न च तथाकल्पकाभावः । द्वैतग्राहिप्रत्यक्षादेर्निषेधश्रुतेश्च मानत्वात् । यथा परमते घटाद्यसन्ताभावस्य स्वाधिकरणमात्रे प्रतियोगिप्रतिक्षेपकत्वेऽपि संयोगाद्यत्यन्ताभावस्य क्वचित्स्वाधिकरणे प्रतियोग्यप्रतिक्षेपकता प्रतीतिबलात् स्वीक्रियते, तद्वदिति समाधानाभिप्रायं मनसि निधाय स्वमतसिद्धं दृष्टान्तं सोपपत्तिकमाह—शुक्ताविति ।

ताध्यस्ताभावस्य बाधपर्यन्तानुवृत्तिकासद्विलक्षणप्रतियोगिस्वरूपसहिष्णुत्वाभ्युपगमात्।

एतेन प्रपञ्चस्य स्वरूपेण निषेधे शशशृङ्गवदसत्त्वमेव स्यादिति निरस्तम्। ब्रह्मज्ञाननिवर्त्यस्वरूपाङ्गीकारेण वैषम्यात्।

न चास्याध्यस्तस्याधिष्ठाने स्वरूपेण निषेधे अन्यत्र तस्य स्वरूपेण निषेधः स्वतः सिद्ध इति तस्य सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वापत्त्या असत्त्वं दुर्वारम्। 'सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वमसत्त्वम्' इत्येवासत्त्वनिर्वचनाद्, विधान्तरेण तन्निर्वचनायोगादिति वाच्यम्। असतः सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वमुपगच्छता, तस्य तथात्वे—प्रत्यक्षस्य सर्वदेशकालयोः प्रत्यक्षीकरणायोगेन, आगमस्य तादृशागमानुपलम्भेन च प्रमाणयितुमशक्यतयाऽनुमानमेव प्रमाणयितव्यमिति तदनुमाने यत् सद्व्यावृत्तं लिङ्गं वाच्यम्, तस्यैव प्रथमप्रतीतस्यासत्त्वनि-

---

एतच्छब्दार्थमाह—ब्रह्मज्ञानेति। वैषम्यादिति। शशशृङ्गादिवैषम्यादित्यर्थः।

अन्यत्रेति। अधिष्ठानादन्यत्र देशे काले चेत्यर्थः। ननु प्रकारान्तरेणासत्त्वनिर्वचनमस्तु, तथा च प्रपञ्चे तदभावान्न तस्यासत्त्वप्रसक्तिरिति नेत्याह—विधान्तरेणेति। प्रसिद्धासतः शशशृङ्गादेरुक्तलक्षणे सिद्धे सति प्रपञ्चेऽपि तल्लक्षणसत्त्वात्तस्याप्यसत्त्वापत्त्या तद्विलक्षणत्वाभ्युपगमपूर्वकवैषम्योक्तिरयुक्तेति शङ्कितुं शक्यम्। तदेवासिद्धम्। मानाभावात्। कथं मानाभाव इति चेत्। तत्र वक्तव्यम्—किमसत उक्तलक्षणयोगे प्रत्यक्षं प्रमाणम्, किं वा आगमः, अथवा अनुमानमिति विकल्पं मनसि निधायाद्यद्वितीययोर्निराकरणपूर्वकं तृतीयं परिशेषयति—असत इत्यादिना। प्रत्यक्षस्यागमस्य च प्रमाणयितुमशक्यतयेति सम्बन्धः। तादृशेति। 'शशशृङ्गादिकं सर्वदेशकालसम्बन्धिनिषेधप्रतियोगि' इत्येवमाकारकागमानुपलम्भेन चेत्यर्थः। अस्तु तर्हि परिशिष्टमनुमानमेव तत्र मानमिति, नेत्याह—तदनुमान इति। यदिति। निःस्वरूपत्वमित्यर्थः। वाच्यमिति। स्व-

र्वचनत्वोपपत्तेरित्याहुः ॥

(वे०सू०मं०) पारमार्थिकसत्यत्वं नेहनानेति नुद्यते ॥
व्यावहारिकसत्यत्वं न निषिद्धमिततिरे ॥ १६ ॥

अपरेतु "नेह नानास्ति" इति श्रुतेः सत्यत्वेन प्रपञ्चनिषेधे एव तात्पर्यम्, न स्वरूपेण । निषेधस्य स्वरूपाप्रतिक्षेपकत्वे तस्य तन्निषेधत्वायोगात् । तत्प्रतिक्षेपकत्वे प्रत्यक्षविरोधात् ।

न च सत्यत्वस्यापि 'सन् घटः' इत्यादिप्रत्यक्षसिद्धत्वाद् न ते-

---

येति शेषः । विनिगमनाविरहं परिहरति—प्रथमप्रतीतस्येति । उपपत्तेरिति । तथा च प्रपञ्चस्य ज्ञाननिवर्त्यस्वरूपाङ्गीकारान्निःस्वरूपत्वलक्षणासत्त्वं नास्तीति तस्य शशशृङ्गादिवैषम्योक्तिर्युक्तेति भावः ॥

उपजीव्यविरोधं प्रकारान्तरेण परिहरति—अपरे त्विति । अयोगादिति । तथा चाभावाधिकरणमात्रे प्रतियोगिस्थित्ययोगात् प्रपञ्चाधिकरणे ब्रह्मणि तदभावो न निषेधश्रुतिगम्य इति भावः ।

ननु 'सत्यत्वेन ब्रह्मणि प्रपञ्चनिषेधः' इति मतेऽपि किं सत्यत्वविशिष्टप्रपञ्चाभावो ब्रह्मणि विवक्षितः, किं वा सत्यत्वधर्मावच्छिन्नप्रतियोगिताकः प्रपञ्चमात्रप्रतियोगिको निषेधो ब्रह्मणि विवक्षितः ? । नोभयथाऽपि सम्भवति । प्रतियोग्यधिकरणे तदभावानङ्गीकारात् । प्रपञ्चे सत्यत्वस्याङ्गीकारेण तस्य प्रतियोगिकोटिप्रवेशप्रतियोगितावच्छेदकत्वयोरसम्भवाच्चेति चेत् ।

उच्यते—'प्रपञ्चे धर्मिणि सत्यत्वनिषेधे श्रुतेस्तात्पर्यम्' इत्येतन्मताभिप्रायः, न तु यथाश्रुतार्थे तात्पर्यमस्य मतस्य । अत एव वक्ष्यति—'सत्यत्वाभासप्रतीतिरेव सत्यत्वप्रसक्तिरिति तन्निषेधोपपत्तेः' इति ।

अत्र हि वाक्ये प्रपञ्च एव सत्यत्वनिषेधः स्पष्टं प्रतीयते । अतो नास्मिन्मते प्रतियोगितदभावयोरेकाधिकरणत्वशङ्काऽवकाशः ।

ननु ब्रह्मणि प्रपञ्चस्वरूपं यथा प्रत्यक्षादिसिद्धमस्ति, तथा प्रपञ्चे सत्यत्वमपि प्रत्यक्षादिसिद्धमस्त्येवेति तन्निषेधेऽपि श्रुतेस्तात्पर्यं कल्पयितुं न शक्यमिति शङ्कते—न चेति । प्रत्यक्षादिग्राह्यं प्रपञ्चसत्यत्वं ब्रह्मसत्यत्ववत् परमार्थं न भवति । तथा सति उपक्रमाद्यवगतस्वार्थतात्पर्यवतीनां भूयसीनां निषेधश्रुतीनां निर्विषयत्वप्रसङ्गात् । किं तु व्यावहारिकसत्यत्वादिरूपं

नापि रूपेण निषेधो युक्त इति वाच्यम्। प्रत्यक्षस्य श्रुत्यविरोधाय सत्यत्वाभासरूपव्यावहारिकसत्यत्वविषयत्वोपपत्तेः । न चैवं सति परमार्थिकसत्यत्वस्य ब्रह्मगतस्य प्रपञ्चे प्रसक्त्यभावात् तेन रूपेण प्रपञ्चनिषेधानुपपत्तिः । यथा शुक्तौ रजताभासप्रतीतिरेव सत्यरजतप्रसक्तिरिति तन्निषेधः, अत एव 'नेदं रजतम्, किं तु तत्,' 'नेयं मदीया गौः, किं तु सैव,' 'नात्र वर्तमानश्चैत्रः, किं त्वपवरके' इति निषिध्यमानस्यान्यत्र सत्त्वमवगम्यते, एवं सत्यत्वाभासप्रतीतिरेव सत्यत्वप्रसक्तिरिति तन्निषेधोपपत्तेः । अतो वर्णपदयोग्यतादिस्वरूपोपमर्दशङ्काभावान्नोपजीव्यविरोध इत्याहुः ॥

(वि०सू०म०) अन्येऽविवेकादेकैव ब्रह्मसत्ता घटादिषु ॥
असन्निकृष्टे ह्यध्यासो ऽन्यत्र संसर्गकल्पनम् ॥ १७ ॥

अन्ये तु ब्रह्मणि पारमार्थिकसत्यत्वम्, प्रपञ्चे व्यावहारिकसत्यत्वं सत्यत्वाभासरूपम्, शुक्तिरजतादौ प्रातिभासिकसत्यत्वं ततोऽपि निकृष्टमिति सत्तात्रैविध्यं नोपेयते, अधिष्ठानब्रह्मगतपारमार्थिकसत्ताऽनुवेधादेव घटादौ शुक्तिरजतादौ च सत्त्वाभि-

---

मत कल्प्यते । ततो न सत्यत्वनिषेधानुपपत्तिरिति परिहरति—प्रत्यक्षस्येति । न चैवंसतीति । प्रपञ्चसत्यत्वस्य व्यावहारिकत्वाङ्गीकारे इत्यर्थः । दृष्टान्तपूर्वकं प्रसक्तिमाह—यथा शुक्ताविति । 'नेदं रजतम्' इति निषेधप्रत्यक्षस्य सत्यरजतनिषेधविषयकत्वं वक्तव्यम् । प्रातिभासिकरजताधिकरणे शुक्तिशकले कल्पितरजताभावस्यास्मिन्मतेऽनङ्गीकारेण बाधप्रत्यक्षस्य तद्विषयत्वायोगादिति भावः । शुक्त्यादौ निषिध्यमानस्य देशान्तरस्थत्वे नियामकमाह—अत एवेति ॥

'प्रपञ्चे पारमार्थिकसत्यत्वस्य प्रसक्त्यभावान्निषेधानुपपत्तिः' इति शङ्कायां सत्त्वत्रैविध्यमतमालम्ब्य परिहारो दर्शितः । इदानीं सर्वत्र सत्तैक्यपक्षे प्रसक्त्यभावशङ्कां परिहरति—अन्ये त्विति । प्रथमं सत्तात्रैविध्यपक्षं दूषयति—ब्रह्मणीत्यादिना । ब्रह्मगतेति । पारमार्थिकसत्तायाः ब्रह्मस्वरूपत्वेऽपि भेदकल्पनया तद्गतत्वोक्तिः । अनुवेधादेवेति । प्रतीतेरेवेत्यर्थः ।

मानोपपत्त्या सत्यत्वाभासकल्पनस्य निष्प्रमाणकत्वात् । एवं च प्रपञ्चे सत्यत्वप्रतीत्यभावात्, तत्तादात्म्यापन्ने ब्रह्मणि तत्प्रतीतेरेवाविवेकेन प्रपञ्चे तत्प्रसक्त्युपपत्तेश्च सत्यत्वेन प्रपञ्चनिषेधे नोपजीव्यविरोधः, न वा अप्रसक्तनिषेधनम् ।

न च ब्रह्मगतपारमार्थिकसत्त्वाऽतिरेकेण प्रपञ्चे सत्त्वाभासानुपगमे व्यवहितसत्यरजतातिरेकेण शुक्तौ रजताभासोत्पत्तिः किमर्थमुपेयत इति वाच्यम् । व्यवहितस्यासन्निकृष्टस्यापरोक्ष्यासम्भवात् तन्निर्वाहाय तदुपगमात् ॥ ३ ॥

(वे०सू०मं०) नन्वेवं स्वमुखं स्वस्यासन्निकृष्टमितीतरव ॥
दर्पणे ऽध्यस्ततत्ताऽऽपन्नं प्रतिबिम्बं मृषेति चेद् ॥१८॥

(४)नन्वेवं प्रतिबिम्बभ्रमस्थलेऽपि ग्रीवास्थमुखातिरेकेण द-

---

एवं चेति । 'सन् घटः' इत्यादिप्रतीतेर्घटादितादात्म्यापन्ने 'सन्'इति प्रतीयमाने सद्रूपस्वंशरूपे ब्रह्मण्येव सत्ताविषयकत्वम्, 'मृद् घटः'इति प्रतीतेरिव मृदंशे मृत्त्वविषयकत्वम्, ब्रह्मणि सत्ताप्रतीतिवशादेव घटादौ सत्त्वव्यवहार इति स्थिते सतीत्यर्थः । यत्तु भेदवादिभिरुच्यते—प्रपञ्चे श्रुत्या सत्यत्वनिषेधो न सम्भवति, प्रपञ्चे सत्यत्वगोचरप्रत्यक्षप्रतीतिविरोधादिति । तन्न । हेत्वसिद्धेरित्याह—प्रपञ्चे इति । यच्चोक्तं 'तर्ह्यप्रसक्तप्रतिषेधः'इति, तत्राह—तत्तादात्म्येति । तत्पदं घटादिपरम् । प्रपञ्चब्रह्मणोर्भेदाग्रहेण ब्रह्मणि या सत्ताप्रतीतिः, सैव प्रपञ्चे सत्त्वप्रसक्तिर्भवति, तन्मूलश्च तत्र सत्त्वव्यवहार इत्यर्थः । नोपजीव्यविरोध इति । श्रौतमिथ्यात्वबोधं प्रत्युपजीव्यस्य वर्णपदादिप्रत्यक्षस्य सालम्बनत्वाभ्युपगमात्, तदबाधाच्चेति भावः ।

ननु यदि घटादिप्रपञ्चे ब्रह्मसत्तयैव सत्त्वव्यवहारसिद्धौ पृथक्सत्त्वं न कल्प्यते तत्कल्पने मानाभावाल्लाघवाच्च, तर्ह्यतिप्रसङ्ग इति शङ्कते—न चेति । किमर्थमिति । तत्कल्पने गौरवात् । तथा चानिर्वचनीयरजताद्यसिद्धिरिति शङ्काभिप्रायः । गौरवं प्रामाणिकत्वाद् न दोषायेत्याशयेन परिहरति—व्यवहितस्येति । असन्निकृष्टस्येति । अभिव्यक्तचैतन्यतादात्म्यशून्यस्येति यावत् ।

नन्वेवमिति । आपरोक्ष्याय रजताभासोत्पत्त्युपगमे इत्यर्थः ।

र्पणे मुखाभासोत्पत्तिरुपेया स्यात् । स्वकीये ग्रीवास्थमुखे नासाद्यवच्छिन्नप्रदेशापरोक्ष्यसम्भवेऽपि नयनगोलकललाटादिप्रदेशापरोक्ष्यायोगात् । प्रतिबिम्बभ्रमे नयनगोलकादिप्रदेशापरोक्ष्यदर्शनाच्च । न च बिम्बातिरिक्तप्रतिबिम्बाभ्युपगमे इष्टापत्तिः। ब्रह्मप्रतिबिम्बजीवस्यापि ततो भेदेन मिथ्यात्वापत्तेः।

(वे०सू०म०) दर्पणादिपरावृत्तैर्निजैर्नयनरश्मिभिः॥
सन्निकृष्टं मुखं तत्रोपाध्यन्तःस्थितिविभ्रमः॥ १९॥
न दर्पणे मुखाध्यासः संस्कारादेरसंभवात्॥
ममेदमिति भानाच्चेत्याहुर्विवरणानुगाः॥ २०॥

अत्र विवरणानुसारिणः प्राहुः—ग्रीवास्थ एव मुखे-

---

प्रतिविम्बस्य विम्बाभिन्नत्वेऽपि प्रतिविम्बापरोक्ष्यं सम्भवतीति न सा स्वीकार्येत्यत आह—स्वकीये इति। मुखे इति। प्रतिविम्बत्वेनोपेत इति शेषः। नासादीति तदंशे सन्निकर्षसम्भवादित्यर्थः। यदि विम्बप्रतिविम्बयोरभेदे प्रतिबिम्बापरोक्ष्यं स्वमुखप्रतिविम्बस्थले न सम्भवति, तर्हि प्रतिविम्बो विम्बाद् भिन्नो मिथ्याभूत एवास्तु, का हानिरद्वैतवादिन इति शङ्कते—न चेति। तस्य हानिं पूर्ववादी दर्शयति—ब्रह्मप्रतिबिम्बेति। जीवो ब्रह्मणस्सकाशाद् स्वरूपतो भिद्यते, ब्रह्मप्रतिविम्बत्वाद्, सामान्यव्याप्तौ मुखप्रतिविम्बवद् । ततश्च जीवो मिथ्या, ब्रह्मभिन्नत्वाद्, घटादिवदित्यर्थः।

विम्बप्रतिविम्बयोर्लोके भेदाभावान्नोक्तदोष इति परिहरति—अत्र विवरणेति। ननु 'दर्पणे मुखस्याप्यध्यासो न कल्पनीयः, गौरवाद्' इत्ययुक्तम्। प्रतिविम्बमुखे 'दर्पणे मुखम्' इति दर्पणस्थत्वानुभवाद्, ग्रीवास्थमुखस्य दर्पणस्थत्वायोगाद्, तथा प्रतिविम्बमुखस्य ग्रीवास्थमुखं प्रत्याभिमुख्यानुभवाद्, मुखप्रतिमुखयोरभेदपक्षे तस्यैव तदाभिमुख्यायोगात्तयोर्भेदस्यैव स्फुटमनुभवाच्च । तस्मादनुभवत्रयानुरोधेनोपाधावनिर्वचनीयप्रतिविम्बाध्यास उपेयः। गौरवं च प्रामाणिकत्वान्न दोषावहमित्याशङ्क्य तदनुभवत्रयेऽप्यन्यथासिद्धिमाह—ग्रीवास्थ एवेति । धर्मिकल्पनापेक्षया बहुधर्मकल्पनमपि लघ्वेवेति भावः। ननु प्रतिबिम्बस्य बाधदर्शनान्मिथ्यात्वमित्याशङ्क्य

दर्पणोपाधिसन्निधानदोषाद् दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदाना-मध्यासस्सम्भवेन न दर्पणे मुखस्याध्यासः कल्पनीयः । गौरवाद् । 'दर्पणे मुखं नास्ति'इति संसर्गमात्रबाधात् । मिथ्यावस्त्वन्तरत्वे 'नेदं मुखम्'इति स्वरूपबाधापत्तेः । 'दर्पणे मम मुखं भाति'इति स्वमुखाभेदप्रत्यभिज्ञानाच्च ।

न च ग्रीवास्थमुखस्याधिष्ठानस्यापरोक्ष्यासम्भवः । उपाधिप्रति-हतनयनरश्मीनां परावृत्य बिम्बग्राहित्वनियमाभ्युपगमाल्लुता(१)दि-

हेत्वसिद्धिमाह—दर्पण इति । मात्रपदं प्रतिविम्बस्वरूपबाधाभावार्थकम् । बाधादित्यनन्तरं दर्पणस्थत्वरूपसंसर्गस्य मिथ्यात्वं प्रतिविम्बस्य सत्यत्वञ्चेति शेषः । विपक्षे दोषमाह—मिथ्यावस्त्वन्तरत्वे इति ।

नन्वेवं 'भूतले घटो नास्ति'इत्यत्रापि घटसंसर्गाभाव एव प्रतीयेतेति चेद् । न । इष्टापत्तेः । ननु तर्हि भूतले घटाभावो न सिध्येदिति चेद्, न । 'घटा-भाववद् भूतलम्' इति प्रतीत्या तत्सम्भवादिति भावः । विम्वप्रतिविम्वयो-र्भेदमात्रकल्पनायां स्वरूपाभेदप्रत्यभिज्ञानमप्यनुकूलयति—दर्पणे ममेति । लाघवसमुच्चयार्थश्चकारः । यद्वा प्रतिविम्वस्य सत्यत्वे विम्वाभिन्नत्वं हेतु-मभिप्रेत्य तत्र मानमाह—दर्पणे ममेति । चकारो बाधाभावसमुच्चयार्थः । तथा च प्रतिविम्वस्य न मिथ्यात्वम् । बाधाभावाद्, विम्वाभिन्नत्वाच्चेत्य-र्थः । एवं लोके प्रतिविम्वस्य विम्वाभिन्नत्वसत्यत्वयोः प्रसाधनेन ब्रह्म-प्रतिविम्वजीवस्य ब्रह्माभिन्नत्वमिथ्यात्वप्रसङ्गो निरस्तः ।

यत्तु 'तयोरभेदपक्षे ग्रीवास्थमुखस्य नयनगोलकादिप्रदेशेषु स्वचक्षुः-सन्निकर्षाभावेन प्रतिविम्वस्य साकल्येन प्रत्यक्षत्वं न सम्भवति'इत्युक्तम्, तदनूद्य निराकरोति—न चेत्यादिना । अधिष्ठानस्येति । प्रतिविम्व-त्वप्रत्यङ्मुखत्वदर्पणस्थत्वप्रतिविम्वभेदानां कल्पनाधिष्ठानस्येत्यर्थः । 'अ-सम्भवो न च'इत्यत्र हेतुमाह—उपाधिप्रतिहतेति । नयनरश्मयश्चक्षुर्गो-लकाद् वहिर्निर्गत्य दर्पणाद्युपाधिं प्राप्य तेन प्रतिहताः पुनः परावृत्य ग्रीवास्थमुखतदवयवैःसंसृज्यन्ते । ततश्चाभिमुखपुरुषान्तरमुखसाक्षात्कारवत् साकल्येन स्वग्रीवास्थमुखसाक्षात्कारःसम्भवति । न च परावृत्तनयनरश्मी-नां गोलकद्वाराऽन्तःप्रवेशस्यैवान्यत्र क्लृप्तत्वादत्र तथाकल्पनं गौरवग्रस्तमि-

(१) लतादिवदिति पाठः कुत्रचित्पुस्तके नास्ति ।

वद्। तन्नियमानभ्युपगमे परमाणोः, कुड्यादिव्यवहितस्थूलस्यापि चाक्षुषप्रतिबिम्बभ्रमप्रसङ्गात्। न च 'अव्यवहितस्थूलोद्भूतरूपवत एव चाक्षुषप्रतिबिम्बभ्रमः, नान्यस्य' इति नियम इति वाच्यम्।

---

ति वाच्यम्। प्रतिविम्बोत्पत्तिवादिनाऽपि चक्षुःसन्निकृष्टस्यैव विम्बताया वक्तव्यत्वेन उक्तनियमस्य तेनापि स्वीकार्यत्वात्। अतः सम्प्रतिपन्नत्वाद् गौरवं न दोषायेति भावः। ननु प्रतिविम्बाध्यासवादिना सन्निकृष्टस्यैव विम्बत्वं नाङ्गीक्रियते, अतो ग्रीवास्थमुखस्य विम्बत्वनिर्वाहाय स्वचक्षुःसन्निकर्षापेक्षाभावान्नायं नियमस्तेनादर्तव्य इसत आह–तन्नियमानभ्युपगमे इति। विम्बसन्निकर्षस्य चाक्षुषप्रतिविम्बाध्यासाहेतुत्वे व्यवहितस्यापि चाक्षुषप्रतिविम्बप्रसङ्गः। किमनेन विशेषणेन यस्य कस्यापि प्रतिविम्बापत्त्या परमाणोर्वायोश्च तत्प्रसङ्गादित्यर्थः। प्रतिविम्बाध्यासे विम्बसन्निकर्षस्य हेतुत्वं विनैवोक्तातिप्रसङ्गं परिहरति प्रतिविम्बाध्यासवादी–न चाव्यवहितेति। तथा च कुड्यादिव्यवहितमुखादेः, परमाणोः, वायोश्च न चाक्षुषप्रतिविम्बापत्तिरिति भावः। द्रव्यचाक्षुषं प्रति द्रव्यगतमहत्त्वोद्भूतरूपयोः कारणत्वं क्लृप्तम्। तथा कुड्यादेः सन्निकर्षविघटनद्वारा वाह्यवस्तुगोचरप्रत्यक्षप्रतिवन्धकत्वं क्लृप्तम्। तथा च विम्बप्रतिविम्बयोरभेदपक्षे विम्बचाक्षुषस्यैव प्रतिविम्बचाक्षुषत्वाद् विम्बभूतमुखादिगतयोः स्थूलत्वोद्भूतरूपयोः क्लृप्तचाक्षुषप्रत्यक्षादन्यत्र कारणत्वं न कल्पनीयमिति लाघवम्। शुक्तिरजतादिवत् साक्षिभास्यप्रतिविम्बाध्यासोत्पत्तिपक्षे तु विम्बसन्निकर्षस्य प्रतिविम्बाध्यासहेतुत्वानुपगमेन वायुपरमाण्वोश्चाक्षुषप्रतिविम्बवारणाय विम्बभूतद्रव्यगतयोर्महत्त्वोद्भूतरूपयोः स्वाश्रयगोचरचाक्षुष इव स्वाश्रयद्रव्यरूपविम्बहेतुकप्रतिविम्बाध्यासोत्पत्तावपि हेतुत्वं कल्पनीयमिति गौरवम्। तथा बिम्बप्रतिविम्बाभेदपक्षे नयनरश्मीनां परावृत्त्य विम्बसम्बन्धाभ्युपगमेन प्रतिविम्बभ्रमस्थलेऽपि विम्बसन्निकर्षकस्य हेतुत्वसत्त्वाद् घटादिचाक्षुष इव प्रतिविम्बचाक्षुषेऽपि कुड्यादेः सन्निकर्षविघटनद्वारैव प्रतिवन्धकत्वम्, न त्वन्यत्राक्लृप्तं साक्षात्प्रतिवन्धकत्वं कल्प्यमिति लाघवम्। प्रतिविम्बाध्यासपक्षे तु विम्बसन्निकर्षस्य हेतुत्वानभ्युपगमेन कुड्यादेः सन्निकर्षविघटकत्वस्य क्लृप्तस्य प्रतिविम्बभ्रमस्थले वक्तुमशक्यतया प्रतिबिम्बाध्यासं प्रति साक्षादेव प्रतिबन्धकत्वं व्यवहितस्य

बिम्बस्थौल्योद्भूतरूपयोः क्लृप्तेन चाक्षुषज्ञानजननेन उपयोगसम्भवे विधान्तरेणोपयोगकल्पनानुपपत्तेः । कुड्यादिव्यवधानस्य प्रतिहतनयनरश्मिसम्बन्धविघटनं विनैवेह प्रतिबन्धकत्वे तथैव घटप्रत्यक्षादिस्थलेऽपि तस्य प्रतिबन्धकत्वसम्भवेन चक्षुःसन्निकर्षमात्रस्य कारणत्वविलोपप्रसङ्गाच्च । दर्पणे मिथ्यामुखाध्यासवादिनाऽपि कारणत्रयान्तर्गतसंस्कारसिद्ध्यर्थं नयनरश्मीनां कदाचित् परावृत्य स्वमुखग्राहकत्वकल्पनयैव पूर्वानुभवस्य समर्थनीयत्वाच्च । न च नासादिप्रदेशावच्छिन्नपूर्वानुभवादेव संस्कारोपपत्तिः । तावता नयनगोलकादिप्रतिबिम्बाध्यासानुपपत्तेः तटाकसलिले तटविटपिसमारूढादृष्टचरपुरुषप्रतिबिम्बाध्यासस्थले कथमपि पूर्वानुभवस्य दुर्वचत्वाच्च । एवं चोपाधिप्रतिहतनयनरश्मीना बिम्बं प्राप्य

---

प्रतिबिम्बवारणाय कल्पनीयमिति गौरवमित्याशयेन दूषयति—बिम्बस्थौल्येति । विधान्तरेणेति । स्वाश्रयभूतबिम्बद्वारा प्रतिबिम्बाध्यासोत्पत्तावुपयोगकल्पनानुपपत्तेरित्यर्थः । इहेति । प्रतिबिम्बभ्रमस्थले इत्यर्थः । न केवलमक्लृप्तकल्पनागौरवं दोषः, दोषान्तरमपि प्रसज्यते इत्याह—तथैवेति । सन्निकर्षविघटनं विनैवेत्यर्थः । तथा चोक्तगौरवादिदोषपरिहाराय 'परावृत्य' इति नियम उपेयो बिम्बसन्निकर्षायेति भावः । चाक्षुषप्रतिबिम्बभ्रमस्थले बिम्बसन्निकर्षस्य त्वयाऽपि वाच्यत्वात् परावृत्येति नियमो नाप्रयोजक इत्याह—दर्पणे मिथ्येति । कारणत्रयेति । दोषसम्प्रयोगसंस्काररूपकारणत्रयेत्यर्थः । स्वमुखस्य स्वचक्षुस्सन्निकर्षानुपगमे दर्पणादावारोप्यप्रतिमुखसजातीयस्वमुखसाक्षात्कारस्य कदाऽप्यसम्भवेनाध्यासकारणभूतस्यारोप्यसजातीयगोचरपूर्वानुभवजन्यसंस्कारस्यालाभात् प्रतिबिम्बरूपाध्यासस्योत्पत्तिर्न स्यात् । अतः स्वमुखस्य स्वचक्षुस्सन्निकर्षलाभाय उक्तनियम आदर्तव्य इति भावः । तावतेति । नासादिप्रदेशावच्छिन्नपूर्वानुभवमात्रेणेत्यर्थः । इदमपि क्वचिद् दुर्लभमित्याह-तटाकेति । अदृष्टचरेति । कदाऽप्यदृष्टेत्यर्थः । एवं चेति ।

तद्ग्राहकत्वे ऽवश्यं वक्तव्ये फलबलाद्दर्पणाद्यभिहतानामेव बिम्बं प्राप्य तद्ग्राहकत्वम्, न शिलादिप्रतिहतानाम् । अनतिस्वच्छताम्रादिप्रतिहतानां मलिनोपाधिसम्बन्धदोषाद् मुखादिसंस्थानविशेषाग्राहकत्वं साक्षात्सूर्यं प्रेप्सूनामिव उपाधिं प्राप्य निवृत्तानां न तथा सौरतेजसा प्रतिहतिरिति न प्रतिबिम्बसूर्यावलोकने साक्षात्तदवलोकने इवाशक्यत्वम् । जलाद्युपाधिसन्निकर्षे केषां चिदुपाधिप्रतिहतानां बिम्बप्राप्तावपि केषां चित्तदन्तर्गमनेनान्तरसिकतादिग्रहणमित्यादिकल्पनान्न कश्चिद्दोष इति ॥

---

वक्तमकारेणेत्यर्थः । उक्तनियमस्यातिप्रसङ्गं परिहरति—फलवशादिति । दर्पणादौ प्रतिबिम्बभ्रमदर्शनलक्षणफलानुरोधादित्यर्थः । एवकारव्यवच्छेद्यमाह—न शिलादीति । शिलादौ प्रतिबिम्बादर्शनादिति भावः । नन्वस्वच्छताम्रादेः प्रतिबिम्बग्राहित्वेन शिलादिवैलक्षण्यसत्त्वात्तत्प्रतिहतानां दर्पणादिप्रतिहतानामिव नयनरश्मीनां साकल्येन मुखादिग्राहकत्वं स्याद्, अत आह—मलिनोपाधीति । संस्थानविशेषो नयनगोलकादिः । फलबलानुसारिपदार्थस्वभावकल्पनेन दोषान्तराण्यपि निरस्तानीत्याह—साक्षादित्यादिना । साक्षात्तदिति । साक्षात्सूर्यावलोकने इत्यर्थः । ननु प्रतिबिम्बोपाधिभूतजलेन प्रतिहतानां नयनरश्मीनां बिम्बदेशप्राप्त्युपगमे जलान्तर्गतसिकतादिप्रत्यक्षं न स्यात्, सन्निकर्षाभावादिति दूषणमपि निरस्तमित्याह—जलाद्युपाधीति । ननूपाधिप्रतिहतानां बिम्बदेशप्राप्त्युपगमे पृष्ठभागव्यवहितपदार्थस्यापि प्रतिबिम्बप्रसङ्ग इति चेत् । नायं दोषः । फलबलेन शरीरावयवानां सन्निकर्षविघटकत्वकल्पनादित्यभिप्रेत्याह—इत्यादिकल्पनादिति । नयनरश्मीनां परावृत्त्य बिम्बग्राहित्वं सुरेश्वराचार्यैरुक्तम्—

'दर्पणाभिहता दृष्टिः परावृत्त्य स्वमाननम् ।
व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्' ॥ इति ।

बिम्बप्रतिबिम्बयोर्भेदपक्षनिराकरणपूर्वकं तदभेदपक्षो निरूपितः ।

(वे०सू०मं०) अद्वैतविद्याचार्यास्तु पार्श्वस्थैर्भेददर्शनात् ॥
ग्रीवास्थादन्यदध्यस्तं प्रतिबिम्बमुखं विदुः ॥ २१ ॥

अद्वैतविद्याकृतस्तु प्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतां त्रिविधजीववादिनां विद्यारण्यगुरुप्रभृतीनामभिप्रायमेवमाहुः—

चैत्रमुखाद् भेदेन तत्सदृशत्वेन च पार्श्वस्थैः स्पष्टं निरीक्ष्यमाणं दर्पणे तत्प्रतिबिम्बं ततो भिन्नं स्वरूपतो मिथ्यैव, स्वकरगतादिव रजताच्छुक्तिरजतम् । न च 'दर्पणे मम मुखं भाति' इति बिम्बाभेदज्ञानविरोधः । स्पष्टभेदद्वित्वप्रत्यङ्मुखत्वादिज्ञानविरोधेनाभेदज्ञानासम्भवाद् । 'दर्पणे मम मुखम्' इति व्यपदेशस्य स्वच्छायामुखे स्वमुखव्यपदेशवद् गौणत्वाच्च ।

---

इदानीं तयो रभेदनिराकरणपूर्वकं भेदपक्षं निरूपयति—अद्वैतविद्याकृतस्त्विति । त्रिविधेति । पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन जीवस्त्रिविध इति पक्षः प्रथमपरिच्छेदे निरूपित इति बोध्यम् । एवमिति । वक्ष्यमाणप्रकारेणेत्यर्थः । चैत्रेति । चैत्रो यदा दर्पणे स्वमुखं पश्यति, तदा पार्श्वस्थैश्चैत्रग्रीवायां बिम्बभूतं मुखं दर्पणे चैत्रमुखप्रतिबिम्बं च परस्परं भिन्नत्वेन परस्परं सदृशत्वेन चासंन्दिग्धाविपर्यस्तमनुभूयते इत्यर्थः । स्वकरेति । स्वहस्तगताद् सत्यरजताद् भिन्नत्वेन तत्सदृशत्वेन चानुभूयमानं शुक्तिरजतं यथा तद्भिन्नम्, मिथ्या च, तद्वदित्यर्थः । अभेदज्ञानमसिद्धमित्याह—स्पष्टेति । उदाहृतरजतयोरभेदज्ञानादर्शनादिति भावः । आदिपदं प्राङ्मुखत्वग्रीवास्थत्वदर्पणस्थत्वस्वातन्त्र्यादिसङ्ग्रहार्थम् । तर्हि सर्वानुभवसिद्धस्याभेदव्यपदेशस्य का गतिः ज्ञानपूर्वकत्वाद्व्यपदेशस्येत्याशङ्क्य नायमभेदव्यपदेश इत्याह—दर्पणे ममेति । स्फुटभेदज्ञाने सति अभेदव्यपदेशायोगादिति भावः । ननु 'दर्पणे मम मुखं भाति' 'मम मुखं मलिनं भाति' 'मम मुखं दीर्घं भाति' 'मुखं ग्रीवास्थमेव, न दर्पणादौ' इत्यभेदानुभवानामपि स्फुटानां भूयसां सत्त्वादभेदव्यपदेशो मुख्यः । अभेदानुभवविरोधेन भेदानुभवस्यैवासम्भवाद् भेदव्यपदेशमात्रमवशिष्यते । तच्च बिम्बप्रतिबिम्बयोर्वस्तुगत्या भेदाभावेऽपि कल्पितभेदसत्त्वादुपपद्यते इति वैपरीत्यमाशङ्क्य

न चाभेदज्ञानविरोधाद् भेदव्यपदेश एव गौणः किं न स्यादिति शङ्क्यम् । बालानां प्रतिबिम्बे पुरुषान्तरभ्रमस्य हानोपादित्साद्यर्थक्रियापर्यन्तस्यापलपितुमशक्यत्वात् । न च प्रेक्षावतामपि स्वमुखविशेषपरिज्ञानाय दर्पणाद्युपादानदर्शनाद् अभेदज्ञानमप्यर्थक्रियापर्यन्तमिति वाच्यम् । भेदेऽपि प्रतिबिम्बस्य बिम्बसमानाकारत्वनियमविशेषपरिज्ञानादेव तदुपादानोपपत्तेः ।

---

निषेधति—न चेत्यादिना । प्रतिबिम्बगोचरप्रवृत्त्यादिदर्शनं तस्य बिम्बाद् भेदं विना न सिध्यतीति विनिगमकमाह—बालानामिति । बालाः खलु जलाशयादौ भयङ्करं प्रतिबिम्बं दृष्ट्वा तं विहाय पलायन्ते, सौम्यं प्रीतिकरं प्रतिबिम्बं दृष्ट्वा तमुपादातुमिच्छन्ति, प्रतिबिम्बदेशं गच्छन्ति चेति सर्वानुभवसिद्धम् ।

तदुक्तं कर्णामृताचार्यैः—

'रत्नस्थले जानुचरः कुमारः सङ्क्रान्तमात्मीयमुखारविन्दम् ।
आदातुकामस्तदलाभखेदाद्विलोक्य धात्रीवदनं रुरोद ॥' इति ।

कुमारः श्रीकृष्णरूपशिशुः अतिनिर्मलरत्नमयवेदिकायां जानुभ्यां सञ्चरन् तत्र सङ्क्रान्तं प्रतिबिम्बितं विविधैः कुण्डलादिभूषणैर्भूषितं निःसीमसौन्दर्योपेतं गोपीजनमनोहरं ब्रह्मादिभिरपि सदा स्पृहणीयं स्वकीयमुखारविन्दमुपलभ्य लोकसिद्धां बालचेष्टामनुवर्तमानस्तदादानेच्छया चिरकालं हस्तव्यापारं कृत्वाऽपि यदा तन्न लब्धवान्, तदा तदलाभखेदेन धात्र्या मुखं दृष्ट्वा 'त्वया इदं गृहीत्वा मह्यं देयम्'इत्यभिसन्धिमान् मुक्तकण्ठतया रोदनं कृतवानित्यर्थः ।

अभेदज्ञानस्याप्यर्थक्रियापर्यन्तत्वं समानमित्याशङ्क्य निषेधति—न चेत्यादिना । यदि बिम्बप्रतिबिम्बयोर्वस्तुतो भेद एव, तदा परीक्षकाणां तद्भेदनिर्णय आवश्यक इति तेषां स्वमुखगतविशेषनिर्णयाय दर्पणाद्यादानं न स्यात् । तेषामपि तद्दर्शनादभेदनिश्चयस्तेषां वाच्य इत्यर्थः । तेषां प्रवृत्तेरन्यथासिद्धिमाह—भेदेऽपीति । बिम्बप्रतिबिम्बयोः स्वरूपतो भेदे सत्यपीत्यर्थः । परीक्षकत्वादेव तेषामुक्तोपपत्तिभिर्भेदनिश्चयवत्त्वं नियमविशेषज्ञानवत्त्वं च सम्भवतीति भावः ।

यत्तु 'नात्र मुखम्'इति दर्पणे मुखसंसर्गमात्रस्य बाधः, न मुखस्येति । तन्न । 'नेदं रजतम्'इत्यत्रापि इदमर्थे रजततादात्म्यमा-

ननु बालाना प्रतिबिम्बगोचरहानादिक्रियाऽपि बिम्बस्योपाधिस्थत्वभ्रमादेव सम्भवतीत्यन्यथासिद्धिस्तत्रापि तुल्या । तथा च बिम्बप्रतिबिम्बयोर्भेदाभेदानुभवानां भेदाभेदप्रयुक्तार्थक्रियाणां च तुल्यत्वे सति अभेदस्य स्वाभाविकत्वकल्पनमेव युक्तम् । लाघवाद्, बिम्बप्रतिबिम्बभावापन्नतया श्रुतिसिद्धजीवब्रह्माभेदप्रतिपत्त्युपयोगितया लौकिकबिम्बप्रतिबिम्बाभेदकल्पनस्याभेदश्रुत्युपोद्बलितत्वाच्च, प्रतिबिम्बजीवस्यैव ब्रह्माभेदसम्भवे तदतिरिक्तपारमार्थिकावच्छिन्नजीवकल्पनाया गौरवग्रस्तत्वाच्च, "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिमन्त्रस्य तयोरभेदपक्ष एव स्वारस्याच्च ।

तत्र हि यथा विवस्वदादेर्बहुषूपाधिषु प्रतिबिम्बितत्वप्रयुक्तं नानात्वम्, स्वत एकत्वम्, तथा चैतन्यस्य बहुषूपाधिषु प्रतिबिम्बितत्वप्रयुक्तं नानात्वं स्वत एकत्वमिति प्रतिपाद्यते । तच्च बिम्बप्रतिबिम्बयोर्भेदपक्षे न सम्भवति । तत्पक्षे हि बिम्बचैतन्यस्यैकत्वं प्रतिबिम्बानां नानात्वमिति पर्यवसानेनैकस्यैवौपाधिकनानात्वपर्यवसानासम्भवात् । तस्माच्चैतन्यप्रतिबिम्बाङ्गीकारपक्षे लोके चैत्रप्रतिबिम्बस्थले च बिम्बप्रतिबिम्बयोरभेदपक्ष एव विवरणाद्यभिमतः श्रेयानिति चेत् सत्यम् ।

सूक्ष्मदृष्ट्या एवमेव । अत एव भामतीनिबन्धनादिषु जीवब्रह्मणोरभेदेऽपि लौकिकबिम्बप्रतिबिम्बयोरिव कल्पितभेदसत्त्वाद्धर्मव्यवस्थेति सार्वत्रिको व्यवहारः । श्रीविद्यारण्यगुरुप्रभृतिभिस्तु मन्दाधिकारिणां तत्त्वे बुद्ध्यारोहाय प्रतिबिम्बोत्पत्तिप्रक्रिया उपपादिता । मन्दाधिकारिणां हि यथा 'कर्तृत्वभोक्तृत्वादिसंसाराश्रयश्चिदाभासो मिथ्याभूतः, स चात्मा न भवति, आत्मा त्वसङ्गचैतन्यरूपो न संसाराश्रयः' इति प्रक्रियया तत्त्वं बुद्ध्यारोहति, न तथा 'आत्मनो ब्रह्मप्रतिबिम्बस्य स्वतः सिद्धं ब्रह्मत्वम्, अन्तःकरणतादात्म्यात् संसाराश्रयत्वम्'इति प्रक्रियया तत्त्वं बुद्ध्यारोहति । लोके विरुद्धधर्मसाङ्कर्यस्य धर्मिभेदस्थल इव धर्म्यभेदस्थले स्फुटत्वाभावात् । अयं च तेषामभिप्रायः कूटस्थदीपे 'यथा यथा भवेत् पुंसाम्' इति वार्तिकवचनोदाहरणेन स्पष्टः । तच्च वचनम् आदावेवोदाहृत्य व्याख्यातमिति संक्षेपः ।

प्रतिबिम्बस्थले दर्पणस्थत्वादिरूपसंसर्गमात्रबाधमुक्तमनूद्य प्रतिबन्द्या प्रतिबिम्बस्वरूपबाधं साधयति—यत्त्वित्यादिना । आपत्तेरि-

तस्य बाधो, न रजतस्येत्यापत्तेः। यदि च इदमंशे रजतस्य तादात्म्येनाध्यासाद् 'नेदं रजतम्' इति तादात्म्येन रजतस्यैव बाधः, न तादात्म्यमात्रस्य, तदा दर्पणे मुखस्य संसर्गितयाऽध्यासाद् 'नात्र मुखम्' इति संसर्गितया मुखस्यैव बाधः, न संसर्गमात्रस्येति तुल्यम्।

यत्तु धर्मिणोऽप्यध्यासकल्पने गौरवमिति, तद् रजताभासकल्पनागौरववत् प्रामाणिकत्वान्न दोषः। स्वनेत्रगोलकादिप्रतिबिम्बभ्रमस्थले बिम्बापरोक्ष्यकल्पनोपायाभावात्। नयनरश्मीनामुपाधिप्रतिहतानां बिम्बप्राप्तिकल्पने हि दृष्टविरुद्धं बह्वापद्यते। कथं हि जलसन्निकर्षे केषुचिन्नयनरश्मिषु अप्रतिहतमन्तर्गच्छत्सु अन्ये जलसम्बन्धेनापि प्रतिहन्यमाना नितान्तमृदवः सकलनयनरश्मिप्रतिघातिनं किरणसमूहं निर्जित्य तन्मध्यगतं

---

ति। तथा च शुक्तिरजतस्यानिर्वचनीयत्वं सिद्धान्ताभिमतं न स्यादिति भावः। अत्र यद्यपि तादात्म्यमात्रस्य बाध्यत्वेऽपि रजतस्यानिर्वचनीयस्योत्पत्तिरनिवार्या, देशान्तरस्थरजतादेः संविदभिन्नत्वाभावेन पुरोवर्त्यभिन्नतया प्रत्यक्षत्वानुपपत्तिरित्युक्तत्वात्, तथापि शुक्तिरजतस्य बाधोऽप्युपपादयितुं शक्यते इति मत्वा बिम्बप्रतिबिम्बाभेदवादी शङ्कते—यदि चेति। संसर्गितयेति। आधेयतयेत्यर्थः।

प्रामाणिकत्वादिति। बाधकप्रमाणस्य शुक्तिरजत इव प्रतिबिम्बेऽपि सत्त्वेनाध्यासकल्पनागौरवस्य तन्मूलकत्वाविशेषादित्यर्थः। अभेदपक्षे स्वमुखगतनयनगोलकादिप्रतिबिम्बस्यापरोक्ष्यासम्भवाच्च तदध्यासकल्पनागौरवं प्रामाणिकमित्याह—स्वनेत्रेति। पूर्वोक्तोपायमनूद्य निराकरोति—नयरश्मीनामिति। किरणसमूहमिति। सूर्यकिरणसमूहमित्यर्थः। नन्वत्र जलस्य प्रतिघातकत्वं न कल्प्यते, किं तु जलान्तर्गतसिकतादीनाम्। अतो न नितान्तमृदुत्वम्। यथा सूर्यादिकिरणानां स्वतस्तृणादिदाहकत्वाभावेऽपि सूर्यकान्तमणिप्रतिहतानां तद्दाहकत्वम्, तथा नयनकिरणानां स्वतस्सूर्यकिरणप्रतिघातकत्वाभावेऽपि प्रतिबिम्बोपाधिप्रति-

सूर्यमण्डलं प्रविशेयुः। कथं च चन्द्रावलोकन इव तत्प्रतिबिम्बावलोकनेऽपि अमृतशीतलं तद्बिम्बसन्निकर्षविशेषे लोचनयोः शैत्याभिव्यक्त्या आप्यायनं न स्यात्। कथं च जलसम्बन्धेनापि प्रतिहन्यमानाः शिलादिसम्बन्धेन न प्रतिहन्येरन्। तत्प्रतिहत्या परावृत्तौ वा नयनगोलकादिभिर्न संसृज्येरन्। तत्संसर्गे वा संसृष्टं न साक्षात्कारयेयुः। दोषेणापि हि विशेषांशग्रहणमात्रं प्रतिबध्यमानं दृश्यते, न तु

---

हतानां तद्विजये सामर्थ्यातिशयकल्पनोपपद्यते। तथा च नोक्तदोष इत्यस्वरसादाह—कथं चेति। कथं चाप्यायनं न स्यादिति सम्बन्धः। अमृतमिव शीतलं यत् तस्य चन्द्रस्य बिम्बं तत्सन्निकर्षविशेषे इत्यर्थः। आप्यायनम् औष्ण्यशान्तिः। यदा पुमानधोमुखस्सन् जलाशयादौ चन्द्रमण्डलप्रतिबिम्बं नैरन्तर्येण पश्यति, तदा लोचनयोश्शैत्याभिव्यक्त्यादिकं स्याद्, बिम्बप्रतिबिम्बयोरभेदेन प्रतिबिम्बसन्निकर्षस्यैव बिम्बसन्निकर्षत्वादित्यर्थः। ननु लोचनयोः शैत्याभिव्यक्तिश्चन्द्रसन्निकर्षादिकृता न भवति, किं तु तयोश्चन्द्रकिरणसंसर्गसन्ततिकृता। तथा चाधोमुखस्य लोचनयोस्तदभावाच्चन्द्रसन्निकर्षतद्दर्शनसत्त्वेऽपि न शैत्याभिव्यक्त्यादिप्रसक्तिरित्यस्वरसादाह—कथं च जलेति। कथं च न प्रतिहन्येरन्निति सम्बन्धः। प्रतिहन्येरन्नेवेत्यर्थः। ततः किम्, तत्राह—तत्प्रतिहत्येति। कथं न संसृज्येरन्निति सम्बन्धः। ततोऽपि किम्, तत्राह—तत्संसर्गे वेति। शिलादिदर्शनकाले शिलादिना प्रतिहताः नयनरश्मयः स्वमुखगतनयनगोलकादिभिस्संसृष्टाश्चेव संसृष्टं नयनगोलकादिकं कथं न साक्षात्कारयेयुः। साक्षात्कारयेयुरेवेत्यर्थः। ननु दोषबलात् संसृष्टमपि न साक्षात्कारयेयुः, अतो नोक्तदोष इत्यत आह—दोषेणापि हीति। दृश्यते इति। शुक्तिरजतादिभ्रमस्थलेष्विति शेषः। तथा च शिलादिसन्निकर्षकाले मुखत्वादिसामान्यरूपेण वा स्वमुखसाक्षात्कारप्रसङ्ग इति भावः।

वस्तुतस्तु अनन्यथासिद्धफलबलात् स्वच्छद्रव्यस्य तत्संसृष्टस्य वा प्रतिबिम्बोदययोग्यस्यैव प्रतिघातकत्वमुपेयते। अतो नोक्तदोष इति बोध्यम्।

सन्निकृष्टधर्मिस्वरूपग्रहणमपि।

प्रतिमुखाध्यासपक्षे तु न किञ्चिद् दृष्टविरुद्धं कल्पनीयम्। तथाहि—अव्यवहितस्थूलोद्भूतरूपस्यैव चाक्षुषाध्यासदर्शनाद्बिम्बगतस्थौल्योद्भूतरूपयोः स्वाश्रयसाक्षात्कारकारणत्वेन क्लृप्तयोः स्वाश्रयप्रतिबिम्बाध्यासेऽपि कारणत्वम्, कुड्याद्यावरणद्रव्यस्य त्वगिन्द्रियादिन्यायेन प्राप्यकारितयाऽवगतनयनसन्निकर्षविघटनद्वारा व्यवहितवस्तुसाक्षात्कारप्रतिबन्धकत्वेन क्लृप्तस्य व्यवहितप्रतिबिम्बाध्यासेऽपि विनैव द्वारान्तरं प्रतिबन्धकत्वं च कल्पनीयम्। तत्र को विरोधः क्वचित् कारणत्वादिना क्लृप्तस्य फलबलादन्यत्रापि कारणत्वादिकल्पने।

---

एवं बिम्बप्रतिबिम्बाभेदपक्षे दृष्टविरोधबाहुल्यमापाततो दर्शयित्वा प्रतिबिम्बाध्यासोत्पत्तिपक्षमुपपादयति—प्रतिमुखाध्यासपक्षे त्विति। कारणत्वं प्रतिबन्धकत्वं च कल्पनीयमिति सम्बन्धः। स्वाश्रयेति। महत्त्वोद्भूतरूपाश्रयद्रव्यगोचरचाक्षुषत्वावच्छिन्नं प्रति घटादिचाक्षुषे क्लृप्तयोरित्यर्थः। द्वितीयस्वपदमपि स्थौल्योद्भूतरूपपरम्। अध्यासेऽपीति। बिम्बभूतमुखादिचाक्षुष इव स्वाश्रयमुखादेर्यः प्रतिबिम्बरूपोऽध्यासः, तदुत्पत्तावपीत्यर्थः।

यदुक्तं 'प्रतिबिम्बाध्यासं प्रति कुड्यादेस्साक्षात्प्रतिबन्धकत्वस्वीकारे अन्यत्रापि तथात्वापत्त्या सन्निकर्षमात्रविलोपप्रसङ्गः' इति, तन्न। सन्निकर्षहेतुत्वग्राहकप्रमाणानुरोधेन सन्निकर्षविघटनद्वारैव तस्य प्रत्यक्षप्रतिबन्धकत्वाभ्युपगमादित्याशयेन सन्निकर्षस्य हेतुत्वग्राहकप्रमाणं सूचयति—त्वगिन्द्रियेति। त्वगिन्द्रियस्य विषयं प्राप्तस्यैव विषयप्रत्यक्षकारित्वदर्शनात्तद्दृष्टान्तेन नयनादेरपि प्राप्यकारित्वमवगतमित्यर्थः। व्यवहितेति छेदः। व्यवहितप्रतिबिम्बेति। कुड्यादिव्यवहितस्य मुखादेः प्रतिबिम्बाध्यासे साक्षात्प्रतिबन्धकत्वं कल्पनीयम्। अन्यथा प्रतिबिम्बोत्पत्तिपक्षे बिम्बसन्निकर्षस्य हेतुत्वानुपगमेन व्यवहितस्यापि प्रतिबिम्बप्रसङ्गस्य प्राग्दर्शितत्वादित्यर्थः। तत्र कल्पने को विरोध इति सम्बन्धः। तस्मिन् कल्पन इत्यर्थः।

एतेनोपाधिप्रतिहतनयनरश्मीनां बिम्बप्राप्त्यनुपगमे व्यवहितस्योद्भूतरूपादिरहितस्य च चाक्षुषप्रतिबिम्बभ्रमप्रसङ्ग इति निरस्तम् ।

किं च तदुपगमे एव उक्तदूषणप्रसङ्गः । कथम् ? । साक्षात् सूर्यावलोकन इव विना चक्षुर्विक्षेपमवनतमौलिना निरीक्ष्यमाणे सलिले ततः प्रतिहतानां नयनरश्मीनामूर्ध्वमुत्प्लुत्य बिम्बसूर्यग्राहकत्ववत् तिर्यक्चक्षुर्विक्षेपं विना ऋजुचक्षुषा दर्पणे विलोक्यमाने तत्प्रतिहतानां पार्श्वस्थमुखग्राहकत्ववच्च वदनसाचीकरणाभावेऽप्युपाधिप्रतिहतानां पृष्ठभागव्यवहितग्राहकत्वं तावद्दुर्वारम् । उपाधिप्रतिहतनयनरश्मीनां प्रतिनिवृत्तिनियमं विहाय

---

अव्यवहितत्वस्थूलत्वोद्भूतरूपाणां मुखादिप्रतिबिम्बाध्यासोपयोगकल्पनस्य प्रयोजनमाह—एतेनेति । आदिपदं स्थौल्यसङ्ग्रहार्थम् । उक्तेति । व्यवहितादिप्रतिबिम्बप्रसङ्ग इत्यर्थः । प्रसङ्गप्रकारानभिज्ञः पृच्छति—कथमिति । तमाह—साक्षादिति । गगनस्थसूर्यावलोकने चक्षुर्विक्षेपः क्लृप्तः तं विनेत्यर्थः । अवनतमौलिना—अधोमुखेन । तिर्यगिति । स्वाभिमुखे दर्पणे स्वप्रतिबिम्बग्रहणकाले स्वपार्श्वस्थितपुरुषप्रतिबिम्बग्रहणमप्यस्ति । प्रतिबिम्बाभावकाले स्वपार्श्वस्थितपुरुषग्रहणाय स्वचक्षुषस्तिर्यग्विक्षेपोऽस्ति । ऋजुचक्षुषा स्वाभिमुखपुरुषस्येव स्वपार्श्वस्थितपुरुषस्य ग्रहणादर्शनात् । तथा च स्वाभिमुखे दर्पणे स्वपार्श्वस्थितपुरुषप्रतिबिम्बग्रहणाय चक्षुषस्तिर्यग्विक्षेपं विना दर्पणप्रतिहतानां स्वपार्श्वस्थितपुरुषग्राहकत्ववदित्यर्थः । वदनेति । वदनसाचीकरणं नाम चक्षुषा स्वपृष्ठभागव्यवहितपदार्थग्रहणानुकूलो वदनव्यापारः । प्रतिनिवृत्तिनियममिति । नयनगोलकाभिमुखविषयप्रतिहतानां पुनर्गोलकद्वारा शरीरान्तःप्रवेशनियममित्यर्थः । ननु प्रतिनिवृत्तिनियमाभावपक्षेऽपि बिम्बसन्निकर्षविघटकव्यवधानाभावापेक्षाऽस्ति । अवनतमौलिनयनरश्मीनां सूर्यप्राप्तिस्थले, ऋजुचक्षुषा दर्पणे विलोक्यमाने दर्पणप्रतिहतानां पार्श्वस्थपुरुषप्राप्तिस्थले च सन्निकर्षविघटकाभावात् तत्प्राप्तिस्सम्भवति । प्रकृते च शरीरतदवयवानां व्यवधायकानां स-

यत्र बिम्बं तत्रैव गमनोपगमात्। तथा मलिनदर्पणे श्यामतया गौरमुखप्रतिबिम्बस्थले विद्यमानस्यापि बिम्बगतगौररूपस्य चाक्षुषज्ञानेऽनुपयोगितया पीतशङ्खभ्रमन्यायेनारोप्यरूपवैशिष्ट्येनैव बिम्बमुखस्य चाक्षुषत्वं निर्वाह्यमिति, तथैव नीरूपस्यापि दर्पणोपाधिश्यामत्ववैशिष्ट्येन चाक्षुषप्रतिबिम्बभ्रमविषयत्वमपि दुर्वारम्। स्वतो नीरूपस्यापि नभसोऽध्यस्तनैल्यवैशिष्ट्येन चाक्षुषत्वसंप्रतिपत्तेः। तस्मात् स्वरूपतः प्रतिमुखाध्यासपक्षे

स्वाद् दर्पणप्रतिहतानां न पृष्ठभागव्यवहितवस्तुप्राप्तिरित्यस्वरसादाह—तथेति। उपाधिप्रतिहतनयनरश्मीनां प्रतिनिवृत्तिनियमाभावपक्षे पृष्ठभागव्यवहितस्य प्रतिबिम्बापत्तिवन्नीरूपवाय्वादेरपि चाक्षुषप्रतिबिम्बापत्तिरिति दूषणान्तरसमुच्चयार्थस्तथाशब्दः। ननु नीरूपस्यापि वाय्वादेर्दर्पणाद्युपाधिगतरूपोपधानेन चाक्षुषप्रतिबिम्बभ्रमविषयत्वं दुर्वारमित्यनुपपन्नम्। द्रव्यस्य चाक्षुषप्रतिबिम्बभ्रमे बिम्बगतस्य महत्त्ववदुद्भूतरूपस्यापि कारणत्वादित्याशङ्क्य द्रव्यगोचरचाक्षुषप्रतिबिम्बभ्रमे बिम्बगतरूपस्यानुपयोगाद् नैवमित्याह—मलिनेति। मलिनदर्पणे गौरमुखस्य प्रतिबिम्बे सति प्रतिबिम्बं श्यामतया गृह्यते, न गौरतया, तथा च तत्र गौरमुखे आरोप्येणैव श्यामरूपेणोपहितस्य गौरमुखस्य चाक्षुषत्वं निर्वाह्यमित्यर्थः। आरोप्यरूपेणैव क्वचिद् द्रव्यस्य चाक्षुषत्वे दृष्टान्तमाह—पीतशङ्खेति। कवितार्किकमतोपपदनावसरे 'शङ्खस्यारोप्यपीतरूपविशिष्टतयैव भ्रमस्थले चाक्षुषत्वम्, नान्यथा' इत्युक्तमिति भावः।

वस्तुतस्तु 'द्रव्यचाक्षुषे द्रव्यगतमेवोद्भूतरूपं कारणम्' इति न नीरूपद्रव्यस्य चाक्षुषप्रतिबिम्बभ्रमविषयत्वं प्रसज्यते। मलिनदर्पणे गौरमुखप्रतिबिम्बभ्रमस्थले पीतशङ्खादिभ्रमस्थले च 'श्यामं मुखम्' 'पीतशङ्खः' इत्यादिभ्रमप्राचीनधर्मिज्ञानेऽध्यासकारणभूते गौरशुक्लादिरूपस्य कारणतया उपयोगाभावासिद्धेः। द्रव्यचाक्षुषे रूपविषयकत्वनियमाभावस्य कवितार्किकग्रन्थव्याख्यानावसरे दर्शितत्वेन पीतशङ्खभ्रमसम्भवाच्चेति बोध्यम्।

आरोप्यरूपविशिष्टतयैव चाक्षुषत्वे उदाहरणान्तरमाह—स्वत इति। सम्प्रतिपत्तेरिति। आपाततो गगनस्य चाक्षुषवृत्तिविषयत्वं कवितार्किकमात्रसम्मतम्, न तु पूर्वाचार्यसम्मतम्। आचार्याणां मते तु गगनव्यापिसौरा-

क्ष एव श्रेयान् ।

(वे०सू०म०) सामान्यतोऽपि संस्कारो विशेषारोपकारणम् ॥
स्वप्ने तथैव वाच्यत्वादिह विम्बानुसारिता ॥२२॥

न च तत्रापि पूर्वानुभवसंस्कारदौर्घट्यम् । पुरुषसामान्यानुभवसंस्कारमात्रेण स्वप्नेष्वदृष्टचरपुरुषाध्यासवन्मुखसामान्यानुभवसंस्कारमात्रेण दर्पणेषु मुखविशेषाध्यासोपपत्तेः ।

इयांस्तु भेदः—स्वप्नेषु शुभाशुभहेत्वदृष्टानुरोधेन पुरुषाकृतिविशेषाध्यासः, इह तु बिम्बसन्निधानानुरोधेन मुखाकृतिविशेषाध्यास इति ।

न च प्रतिविम्बस्य स्वरूपतो मिथ्यात्वे ब्रह्मप्रतिबिम्बजीवस्यापि मिथ्यात्वापत्तिर्दोषः । प्रतिबिम्बजीवस्य तथात्वेऽप्यवच्छिन्नजीवस्य सत्यतया मुक्तिभाक्त्वोपपत्तेरिति ॥

---

लोकादिगोचरचाक्षुषवृत्त्या आलोकाद्यवच्छिन्नचैतन्याभिव्यक्तिकाले आलोकाद्यनुगतगगनावच्छिन्नचैतन्यस्याप्यभिव्यक्तिं स्वीकृत्याभिव्यक्ते गगनावच्छिन्ने साक्षिणि नैल्याद्यध्यासाभ्युपगमेन नैल्यादिविशिष्टगगनस्य साक्षिमात्रभास्यत्वादिति ध्येयम् । तस्मादिति । दृष्टविरोधरूपबाधकाभावात् साधकसत्त्वाच्चेति भावः । श्रेयानिति । मन्दाधिकारिणः प्रतीति वस्तुगतिः ।

'उपाधिप्रतिहतानां विम्बप्राप्त्यनुपगमे अध्यस्यमानमुखसजातीयगोचरपूर्वानुभवासम्भवादध्यासकारणसंस्कारानुपपत्तिः' इत्युक्तमनूद्य निराकरोति—न च तत्रापीति । प्रतिबिम्बाध्यासपक्षे स्वसंस्कारदौर्घट्यमपि नेत्यर्थः । अदृष्टचरेति । कदाऽप्यननुभूतेत्यर्थः ।

ननु मुखसामान्यानुभवजन्यसंस्कारस्य प्रतिमुखाध्यासहेतुत्वे चैत्रमुखदर्पणयोः सान्निध्ये सति यस्य कस्यापि मुखस्याध्यासप्रसङ्गः स्वप्नवदेव, न तु नियमेनाभिमुखमुखाध्यास इत्याशङ्क्य व्यवस्थामाह—इयांस्तु भेद इति । स्वप्नप्रतिबिम्बाध्यासयोरिति शेषः । आदौ 'त्रिविधजीववादिनाम्' इतिविशेषणेन सूचितं परिहारमाविष्करोति—प्रतिबिम्बजीवस्येति । मुक्तिभाक्त्वं ब्रह्माभेदः ।

(वे०सू०मं०) न छाया नापि वस्त्वन्यत्प्रतिबिम्बमसंभवात् ॥

यत्तु प्रतिबिम्बं दर्पणादिषु मुखच्छायाविशेषरूपतया सत्यमेवेति कस्यचिन्मतम्, तन्न। छाया हि नाम शरीरादेस्तत्तदवयवैरालोके कियद्देशव्यापिनि निरुद्धे तत्र देशे लब्धात्मकं तम एव। न च मौक्तिकमाणिक्यादिप्रतिबिम्बस्य तमोविरुद्धसितलोहितादिरूपवतस्तमोरूपच्छायात्वं युक्तम्। न वा तमोरूपच्छायारहिततपनादिप्रतिबिम्बस्य तथात्वमुपपन्नम्।

ननु तर्हि प्रतिबिम्बरूपच्छायायास्तमोरूपत्वासम्भवे द्रव्यान्तरत्वमस्तु, क्लृप्तद्रव्यानन्तर्भावे तमोवद् द्रव्यान्तरत्वकल्पनोपपत्तेरिति चेत्। तत् किं द्रव्यान्तरे प्रतीयमानरूपपरिमाणसंस्थानविशेषप्रत्यङ्मुखत्वादिधर्मयुक्तम्, तद्रहितं वा स्यात्?। अन्त्ये

---

प्रतिबिम्बस्य मिथ्यात्वदार्ढ्याय तत्सत्यत्वमतं दूषयितुमनुभाषते—यत्त्विति। ननु वृक्षादिच्छायायाः नैल्यदर्शनात्प्रतिबिम्बेषु प्रायेण नैल्यादर्शनेन छायावैलक्षण्यसत्त्वात् प्रतिबिम्बस्य छायारूपत्वमनुपपन्नमिति शङ्कानिराकरणार्थं विशेषपदम्, तथा च बिम्बभिन्नोऽपि मुखाद्याभासः शुक्तिरजतादिवत् प्रातिभासिको न भवति, किं तु बिम्बवत् सत्यः। छायाविशेषरूपत्वाभ्युपगमात्तस्येत्यर्थः। छायाया नीलरूपवत्त्वनियमात्तद्विशेषरूपत्वं प्रतिबिम्बस्य न सम्भवतीति छायास्वरूपकथनपूर्वकं दूषयति—तन्नेति। शरीरादेश्छाया नाम तम एव, नान्यदिति प्रसिद्धमित्यर्थः। कियद्देशव्यापिन्यालोके शरीरतदवयवैर्निरुद्धे सतीति सम्बन्धः। न चेति। मौक्तिकस्फटिकादिप्रतिबिम्बस्य सितरूपवतस्तद्विरुद्धतमोरूपच्छायात्वं न युक्तम्, तथा माणिक्यकनकादिप्रतिबिम्बस्य लोहितपीतरूपादिमतस्तद्विरुद्धच्छायात्वं न युक्तमिति विभज्य योजनीयम्। तपनादेश्छायैव नास्तीति तत्प्रतिबिम्बस्य छायारूपत्वमनुपपन्नमेवेत्यर्थः। तमोवदिति। यथा तमसो द्रव्यस्य क्लृप्तद्रव्यानन्तर्भावे सिद्धान्ते दशमद्रव्यत्वं कल्पितं तद्वदित्यर्थः। प्रथमे कथं सत्यतानिर्वाह इति सम्बन्धः। यद्येकमपि दर्पणं विशालं स्यात्, तदा अनेकप्रतिबिम्बानामसङ्कीर्णतया तत्रावस्थानं

न तेन द्रव्यान्तरेण रूपविशेषादिघटितप्रतिबिम्बोपलम्भनिर्वाह इति व्यर्थं तत्कल्पनम् । प्रथमे तु कथमेकस्मिन्नल्पपरिमाणे युगपदसंकीर्णतया प्रतीयमानाना महापरिमाणानामनेकमुखप्रतिबिम्बानां सत्यतानिर्वाहः ? । कथं च निबिडावयवानुस्यूते दर्पणे तथैवावतिष्ठमाने तदन्तर्हनुनासिकाद्यनेकनिम्नोन्नतप्रदेशवतो द्रव्यान्तरस्योत्पत्तिः ? । किं च सितपीतरक्ताद्यनेकवर्णादिमतः प्रतिबिम्बस्योत्पत्तौ दर्पणमध्ये स्थितं तत्सन्निहितं न तादृशं कारणमस्ति ।

---

सम्भवेदिति शङ्कावारणायाह—अल्पेति । अल्पपरिमाणानामपि दर्पणानामनेकत्वे सति एकैकस्मिन् दर्पणे एकैकं प्रतिबिम्बमसङ्कीर्णतयाऽवतिष्ठेत, तदपि नास्तीत्याह—एकस्मिन्निति । एकस्मिन्नल्पपरिमाणेऽपि दर्पणे क्रमेणानेकप्रतिबिम्बानामसङ्कीर्णता स्यात् , तदपि नास्तीत्याह—युगपदिति । प्रतिबिम्बस्य मिथ्यात्वे तु नायं दोषो भवति । स्वप्नदशायां स्वल्पेऽपि शरीरस्यान्तराकाशे रथगजादिपदार्थानां तदुचितवैशाल्यस्य चाध्यासवदल्पपरिमाणेऽपि दर्पणे परस्परमसङ्कीर्णतया अनेकप्रतिबिम्बानां तदुचितवैशाल्यस्य चाध्याससम्भवादिति भावः । कथं च द्रव्यान्तरस्योत्पत्तिरिति सम्बन्धः । सत्यस्येति शेषः । सामग्र्यभावाच्च न तस्योत्पत्तिः सम्भवतीत्याह—किं चेति । दर्पणस्य यो वर्णः, स एव प्रतिबिम्बस्यापीति नियमसत्त्वे तद्वर्णयुक्तं किञ्चित्कारणं दर्पणे सम्भाव्येत । न त्वेतदस्ति । दर्पणरूपविलक्षणनानारूपवतां प्रतिबिम्बानामनुभवादित्याह—अनेकेति । सितपीतरक्ताद्यनेकवर्णयुक्तानां बिम्बानामेव कारणत्वमस्तु, नेत्याह—दर्पणमध्ये स्थितमिति । तेषां निमित्तत्वेऽप्युपादानत्वं न सम्भवति, प्रतिबिम्बोत्पत्तिदेशे तेषामभावादित्यर्थः । तादृशमिति । सितपीतरक्ताद्यनेकवर्णयुक्तं कारणं प्रतिबिम्बोदयकाले नियमेन नास्ति । अनुपलम्भादित्यर्थः । प्रतिबिम्बं हि दर्पणस्यान्तः दर्पणस्य पृष्ठभागे दर्पणसन्निहितमनुभूयते, न तु दर्पणगतरूपपरिमाणादिवद्दर्पणस्योपरिभागे । ततस्तत्कारणेनापि तत्रैव भवितव्यमिति मत्वा 'दर्पणमध्ये स्थितं तत्सन्निहितम्'इत्युक्तम् । मध्यशब्दोऽन्तरर्थकः ।

यद्युच्येत—'उपाधिमध्यविश्रान्तियोग्यपरिमाणानामेव प्रतिबिम्बानां महापरिमाणज्ञानं तादृशंनिम्नोन्नतादिज्ञानं च भ्रम एव । यथापूर्वं दर्पणतदवयवावस्थानाविरोधेन तादृक्प्रतिबिम्बोत्पादनसमर्थं च किञ्चित् कारणं कल्प्यम्'इति । तर्हि शुक्तिरजतमपि सत्यमस्तु । तत्रापि शुक्तौ यथापूर्वं स्थितायामेव तत्तादात्म्यापन्नरजतोत्पादनसमर्थं किञ्चित्कारणं परिकल्प्य तस्य रजतस्य दोषत्वाभिमतकारणसहकृतेन्द्रियग्राह्यत्वनियमवर्णनोपपत्तेः किं 'शुक्तिरजतमसत्यम्, प्रतिबिम्बः सत्यः' इत्यर्धजरतीयन्यायेन । न च तथासति 'रजतम्'इति दृश्यमानायाः शुक्तेरग्नौ प्रक्षेपे रजतवद् द्रवीभावापत्तिः । अनलकस्तूरिकादिप्रतिबिम्बस्यौष्ण्यसौरभादिराहित्यवच्छुक्तिरजतस्य द्रवीभावयोग्यताराहित्योपपत्तेः ।

---

प्रतिबिम्बस्वरूपमात्रं सत्यम्, तत्र प्रतीयमानधर्मास्तु कल्पिता एवेति तत्सत्यत्वेऽभिनिविशमानः शङ्कते—यद्युच्येतेति । वस्तुगत्या उपाधिमध्ये विश्रान्तियोग्यान्येव प्रतिबिम्बान्युत्पद्यन्ते । तेषु महापरिमाणादिकं भ्रान्त्या भासते इत्यर्थः । कल्प्यमिति । नीवारावयवेषु व्रीह्यवयवा यथा मीमांसकैः कल्प्यन्ते, तद्वद्दर्पणावयवसंसृष्टाः प्रतिबिम्बावयवाः कल्प्या इत्यर्थः । प्रतिबन्दीमाह—तर्हीति । पूर्वोक्तदृष्टान्तं मनसि निधाय शुक्तिरजतस्यापि कारणं कल्पयति—तत्रापीति । शुक्तिरजतस्थलेऽपीत्यर्थः । ननु 'शुक्तिरजतं सत्यम्'इति स्वीकारे तस्य शुक्तौ सदा सत्त्वाच्छुक्तिप्रत्यक्षकाले नियमेन तदपि गृह्येत । न च गृह्यते । अतो न तस्य सत्यत्वं सम्भवतीत्याशङ्कां परिहरति—तस्येति । ततः किं, तत्राह—किमिति । अर्धजरतीयन्यायेनेति । जरती वृद्धा, तस्या अर्धं मुखमात्रं कामयते, नाधःकायमित्येतद् यथा उपपत्तिशून्यम्, एवमिदमपीत्यर्थः । ननु प्रसिद्धरजतमग्नौ क्षिप्तं द्रवीभवति, शुक्तिरजतं तु न तथेति तस्य मिथ्यात्वमेवेति मत्वा शङ्कते—न च तथासतीति । तस्य सत्यत्वे सतीत्यर्थः । प्रतिबन्दीं समर्थयते—अनलेति । यद्य-

अथोच्येत—"'नेदं रजतम्', 'मिथ्यैव रजतमभाद्' इति सर्वसंप्रतिपन्नबाधान्न शुक्तिरजतं सत्यम्' इति । तर्हि 'दर्पणे मुखं नास्ति, मिथ्यैवात्र दर्पणे मुखमभाद्' इत्यादिसर्वसिद्धबाधात् प्रतिबिम्बमप्यसत्यमित्येव युक्तम् । तस्मादसङ्गतः प्रतिबिम्बसत्यत्ववादः ॥

(वे०सू०मं०) नन्वध्यासोऽप्ययुक्तोऽस्योपादानाज्ञानसंक्षयाद् ॥ २३ ॥

नंनु तन्मिथ्यात्ववादोऽप्ययुक्तः । शुक्तिरजत इव कस्य

प्यत्र इष्टापत्तिरेव । प्रतिबिम्बसत्यत्ववादिमते शुक्तिरजतादेरपि सत्यत्वसम्भवात्, तथाऽपि प्रतिबन्दीव्याजेन शुक्तिरजतादेरपि मिथ्यात्वनिरूपणे तात्पर्यं बोध्यम् । प्रतिबन्द्याः परिहारं शङ्कते प्रतिबिम्बसत्यत्ववादी—अथोच्येतेति । परिहारसाम्यमाह—तर्हीति । मिथ्यैवात्रेति । बिम्बप्रतिबिम्बाभेदपक्षे प्रतिबिम्बमिथ्यात्वानुभवः प्रतिबिम्बत्वविशिष्टरूपेण प्रतिबिम्बगोचरः, न स्वरूपेणेति बोध्यम् । ननु तर्हि शुक्तिरजतमिथ्यात्वानुभवोऽपीदमर्थतादात्म्यापन्नतयैव रजतगोचरः, न स्वरूपेणेति वक्तुं शक्यतया 'रजतेदमर्थयोस्तादात्म्यमात्रं कल्पितम्, रजतं त्वकल्पितम्' इति प्रसज्येतेति चेद्, न । रजतस्य शुक्तावनुत्पत्तौ तस्य संविदभिन्नत्वाभावेन प्रत्यक्षत्वानुपपत्तेस्तस्य तत्रोत्पत्तिरपरिहार्या । तदुत्पत्तौ च 'अन्वयव्यतिरेकाभ्यामनिर्वचनीयाज्ञानमेव कारणम्, नान्यद्' इति प्राक् प्रतिपादितत्वेन तस्य मिथ्यात्वोपपत्तेः, पूर्वोक्तरीत्या बिम्बप्रतिबिम्बाभेदसाधकप्रमाणसत्त्ववच्छुक्तिरजतसत्यत्वसाधकानन्यथासिद्धप्रमाणाभावेन शुक्तिरजतमिथ्यात्वानुभवस्य रजतस्वरूपगोचरत्वोपपत्तेश्च तस्य मिथ्यात्वमिति भावः । तस्मादिति । बिम्बाभिन्नस्य प्रतिबिम्बस्य सत्यत्वे मानाभावादित्यर्थः ॥

नन्विति । प्रतिबिम्बाध्यासपक्षे हि तस्योपादानमज्ञानं वाच्यम् । तच्च न सम्भवति । सर्वात्मना दर्पणादिरूपाधिष्ठानगोचरसाक्षात्कारेण दर्पणाद्यवच्छिन्नचैतन्यनिष्ठाज्ञानस्य निवृत्तत्वात् तादृशसाक्षात्कारे सत्येवानुवर्तमानस्य प्रतिबिम्बाध्यासस्य तन्निवर्त्यत्वायोगात्तन्निवर्तकज्ञानान्तरानुपलम्भाच्च ज्ञानैकनिवर्त्यत्वं विना तस्य मिथ्यात्वानुप-

चिदन्वयव्यतिरेकशालिनः कारणस्याज्ञानस्य निवर्तकस्य च ज्ञानस्य चानिरूपणात् ॥

(वे०सू०मं०) अत्र केचिदविद्याऽत्रावरणांशे विनश्यति ॥
विक्षेपांशेतु बिम्बादिप्रतिबद्धाऽस्य कारणम् ॥ २४ ॥

अत्र केचित्—यद्यपि सर्वात्मनाऽधिष्ठानज्ञानानन्तरमपि जायमाने प्रतिबिम्बाध्यासे नाधिष्ठानावरणमज्ञानमुपादानम्, न त्वाऽधिष्ठानविशेषांशज्ञानं निवर्तकम्, तथाऽप्यधिष्ठानाज्ञानस्यावरणशक्त्यंशेन निवृत्तावपि विक्षेपशक्त्यंशेनानुवृत्तिसम्भवात् तदेवोपादानम् । बिम्बोपाधिसन्निधिनिवृत्तिसचिवं चाधिष्ठानज्ञानं सोपादानस्य तस्य निवर्तकमिति ॥

---

त्तेः । तस्मात्तन्मिथ्यात्ववादोऽप्यसङ्गत इत्याक्षेपाभिप्रायः ।

यथा शुक्तिरजते शुक्त्यज्ञानस्य तत्कारणस्यान्वयव्यतिरेकसिद्धस्य पूर्वं निरूपणं कृतम्,तथा प्रतिबिम्बाध्यासे 'दर्पणाद्यज्ञाने सति प्रतिबिम्बाध्यासः, तदभावे तदभावः' इत्यन्वयव्यतिरेकशालिनस्तत्कारणस्याज्ञानस्य कस्यचिदनिरूपणात् तन्निवर्तकज्ञानस्य चानिरूपणादित्यक्षरार्थः ।

परिहरति—अत्र केचिदिति । आक्षेपाभिप्रायमनुवदति—यद्यपीति । सर्वात्मनेति । शुक्तौ रजताध्यासात् पूर्वमिदन्त्वात्मना साक्षात्कारसत्त्वेऽपि शुक्तित्वादिविशेषात्मना साक्षात्कारो नास्तीति तत्राधिष्ठानविशेषांशावरणमज्ञानमुपादानं लभ्यते । प्रकृते तु चक्षुस्संनिकृष्टे दर्पणे प्रतिबिम्बाध्यासात् पूर्वमिदन्त्वात्मनेव दर्पणत्वादिविशेषात्मनाऽपि साक्षात्कारसत्त्वेन सर्वात्मनाऽधिष्ठानसाक्षात्कारोऽस्ति । तथा च तेनाधिष्ठानविशेषावरणस्याज्ञानस्य निवृत्तत्वान्न तद् उपादानं सम्भवतीत्येतद्युक्तमेवेत्यर्थः । अपिरवधारणे । निवर्तकमिति । प्रतिबिम्बाध्यासस्येति शेषः । कथं तर्ह्युपादानादिलाभः, तत्राह—तथाऽपीति । तदेवेति । अधिष्ठानाज्ञानमेवेत्यर्थः । 'सर्वात्मनाऽधिष्ठानसाक्षात्कारेणाप्यज्ञानैकदेशस्यैव निवृत्तिः, न तु कार्त्स्न्येन' इति फलबलात् कल्प्यते इति भावः । निवर्तकज्ञानं च निरूपयति—बिम्बेति । बिम्बोपाध्योस्सन्निधिनिवृत्तिसहकृतं 'दर्पणे मुखं नास्ति' इति ज्ञानमेव प्रतिबिम्बाध्यासस्य

(वे०सू०म०) मूलाविद्या ऽथवा हेतुर्विक्षेपांशेन संस्थिता ॥
बिम्बादिदोषजन्यत्वान्मिथ्येत्यन्ये प्रचक्षते ॥ २९ ॥

अन्ये तु ज्ञानस्य विक्षेपशक्त्यंशं विहायावरणशक्त्यंशमात्रनिवर्तकत्वं न स्वाभाविकम् । ब्रह्मज्ञानेन मूलाज्ञानस्य शुक्त्यादिज्ञानेनाऽवस्थाऽज्ञानस्य चावरणशक्त्यंशमात्रनिवृत्तौ तस्य विक्षेपशक्त्या सर्वदाऽनुवृत्तिप्रसङ्गात् । न च बिम्बोपाधिसन्निधिरूपविक्षेपशक्त्यंशनिवृत्तिप्रतिबन्धकप्रयुक्तं तत् । बिम्बोपाधिसन्निधानात्

निवर्तकमित्यर्थः ।

दर्पणाद्यवच्छिन्नचैतन्ये दर्पणाद्युपादानभूतं मूलाज्ञानमेकमस्ति । दर्पणादिज्ञाननिवर्त्यमवस्थारूपाज्ञानमप्यपरमस्ति । तत्र मूलाज्ञानस्यैव दर्पणाद्युपादानत्ववत् प्रतिबिम्बाध्यासोपादानत्वमपीति परिहारान्तरमाह—अन्ये त्विति । ननु पूर्वमतोक्तरीत्या शुक्तिरजतादेरिव प्रतिबिम्बाध्यासस्याऽप्यवस्थाज्ञानपरिणामत्वसम्भवे किं मूलाज्ञानस्य तत्कल्पनयेति, नेत्याह—ज्ञानस्येत्यादिना । ज्ञानस्यावरणमात्रनिवर्तकत्वं किं स्वाभाविकम्, किं वा विक्षेपशक्त्यंशनिवृत्तिप्रतिबन्धकसत्त्वप्रयुक्तम् ? । नाद्य इत्यत्र हेतुमाह—ब्रह्मज्ञानेनेति । तस्येति । द्विविधस्याप्यज्ञानस्य निवर्तकाभावेन विक्षेपशक्तिसहकृतस्य विदेहकैवल्येऽप्यनुवृत्तिप्रसङ्गादित्यर्थः । द्वितीयमनुवदति—न चेति । तदिति । आवरणमात्रनिवर्तकत्वमित्यर्थः । विक्षेपशक्तिमदज्ञानांशनिवृत्तिप्रतिबन्धकप्रारब्धनाशे सति ब्रह्मज्ञानसंस्कारविशिष्टचैतन्यमात्रादेव विक्षेपांशनिवृत्तिसम्भवात् न पूर्वोक्तदोष इति मत्वा दोषमाह—बिम्बोपाधिसन्निधानात् प्रागिति । बिम्बोपाध्योराभिमुख्यलक्षणसन्निधानात् पूर्वक्षणे एवेत्यर्थः । बिम्बप्रतिबिम्बाभेदपक्षे प्रतिबिम्बोत्पत्त्यभावेऽपि चैत्रस्य मुखे बिम्बभूते बिम्बत्वप्रतिबिम्बत्वदर्पणस्थत्वादेरनिर्वचनीयस्योत्पत्त्युपगमेन तस्य चैत्रमुखावच्छिन्नचैतन्यनिष्ठावस्थाऽज्ञानमेव कारणं वाच्यम् । तच्च चैत्रमुखे दर्पणाभिमुख्यात् प्राग्विष्णुमित्रेण निरीक्ष्यमाणे सति तदा प्रतिबन्धकाभावाच्चैत्रमुखगोचरेण विष्णुमित्रीयसाक्षात्कारेण विक्षेपशक्त्या सह निवर्तते, उत्तरक्षण एव चैत्रमुखस्य दर्पणाभिमुख्ये सति विष्णुमित्रस्य 'दर्पणे चैत्रस्य मुखम्' इति प्रतिबिम्बभ्रमो भवति । तत्र चैत्रमुखे दर्पणस्थत्वादेरुत्पत्तिर्न स्याद्, उपा-

प्रागेव बिम्बे चैत्रमुखे दर्पणसंसर्गाद्यभावे दर्पणे चैत्रमुखाभावे वा प्रत्यक्षतोऽवगम्यमाने विक्षेपशक्त्यंशस्यापि निवृत्त्यवश्यम्भावेन तत्काले तयोस्सन्निधाने सति उपादानाभावेन प्रतिविम्बभ्रमाभावप्रसङ्गात्। अतो मूलाज्ञानमेव प्रतिबिम्बाध्यासस्योपादानम्। न चात्राप्युक्तदोषतौल्यम्। पराग्विषयवृत्तिपरिणामाना स्वस्वविषयावच्छिन्नचैतन्यप्रदेशे मूलाज्ञानावरणशक्त्यंशाभिभाव-

---

दानाभावादित्याह—बिम्ब इति। दर्पणसंसर्गो दर्पणस्थत्वम्। आदिपदं प्रसङ्गमुखत्वादिसङ्ग्रहार्थम्। तथा च संसर्गाद्यभावे प्रत्यक्षतोऽवगम्यमाने इति सम्बन्धः। 'चैत्रमुखे दर्पणस्थत्वादिकं नास्ति'इत्यवगतिप्रकारो बोध्यः। दर्पणे प्रतिबिम्बाध्यासोत्पत्तिपक्षे अवगतिप्रकारमाह—दर्पण इति। प्रतिबिम्बाध्यासपक्षे संसर्गितया प्रतिमुखस्यैवाध्यासोपगमाद् 'दर्पणे चैत्रमुखं नास्ति'इत्यनेन प्रकारेण दर्पणे चैत्रमुखाभावे प्रत्यक्षतोऽवगम्यमाने इत्यर्थः। एवं मतभेदेनाधिष्ठानभेदतत्साक्षात्काराकारभेदयोः प्रदर्शनार्थमेव चैत्रमुखे दर्पणे च पृथक् सप्तमीनिर्देशः कृतः। मतभेदज्ञापनार्थश्च वाकारः। तत्कालइति। अधिष्ठानभूते चैत्रमुखे दर्पणे च विक्षेपशक्त्या सहाज्ञाननिवर्तकसाक्षात्कारोत्पत्तिद्वितीयक्षणे इत्यर्थः। तयोरिति। चैत्रमुखदर्पणयोः सन्निधाने सति अधिष्ठानसाक्षात्कारवतो विष्णुमित्रस्य 'दर्पणे चैत्रमुखम्' इति यः प्रतिविम्बभ्रमो भवति, तस्याभावप्रसङ्गादित्यत्र हेतुमाह—उपादानाभावेनेति। तत्र हेतुमाह—विक्षेपशक्त्यंशस्यापि निवृत्त्यवश्यंभावेनेति। अत इति। अवस्थाऽज्ञानस्य प्रतिविम्बाध्यासकारणत्वायोगादित्यर्थः। नन्वस्मिन् पक्षेऽपि बिम्बोपाधिसन्निधानाव पूर्वक्षणोत्पन्नचैत्रमुखादिसाक्षात्कारेण चैत्रमुखाद्यवच्छिन्नचैतन्यावरकमूलाज्ञानस्यापि निवृत्तत्वादुपादानाज्ञानाभावदोषस्तुल्यः। तेन तदनिवृत्तौ च चैत्रमुखाद्यनवभासप्रसङ्गः, यत्किञ्चिदावरणस्य सत्त्वादित्याशङ्क्याह—न चात्रापीति। ब्रह्मज्ञानस्यैव मूलाज्ञाननिवर्तकत्वम्। जडविषयकवृत्तिरूपाणामन्तःकरणपरिणामानां तु स्वस्वविषयचैतन्यस्थमूलाज्ञानस्य योऽयमावरणांशः, तदभिभावकत्वमात्रं यावद्विषयस्फुरणमङ्गीक्रियते, न त्ववस्थाऽज्ञानविक्षेपांशनिवर्तकत्ववद् मूलाज्ञानाविक्षेपांशनिवर्त-

कत्वेऽपि तदीयविक्षेपशक्त्यंशानिवर्तकत्वात् । अन्यथा तत्प्रदेशस्थितव्यावहारिकविक्षेपाणामपि विलयापत्तेः ।

न च प्रतिबिम्बस्य मूलाज्ञानकार्यत्वे व्यावहारिकत्वापत्तिः ।

अविद्यातिरिक्तदोषाजन्यत्वस्य व्यावहारिकत्वप्रयोजकत्वात् । प्रकृते च तदतिरिक्तबिम्बोपाधिसन्निधानदोषसद्भावेन प्रातिभासिकत्वोपपत्तेः ।

(वे०सू०मं०) बिम्बापसरणाध्यक्षाद्विक्षेपांशस्य बाधनम् ।
विरोधादथवा ब्रह्मज्ञानेनैवास्य बाधनम् ॥ २६ ॥

न चैवं सति बिम्बोपाधिसन्निधिनिवृत्तिसहकृतस्याप्यधिष्ठानज्ञानस्य प्रतिबिम्बाध्यासानिवर्तकत्वप्रसङ्गः, तन्मूलाज्ञाननिवर्तकत्वाभावादिति वाच्यम् । विरोधाभावात् । ब्रह्माज्ञानानिवर्तक-

---

कत्वमपीत्यर्थः । अन्यथेति । विषयचैतन्यस्थस्य मूलाज्ञानस्य विषयज्ञानेन निवृत्तौ दर्पणादीनां व्यावहारिकाणां विक्षेपशब्दितकार्याणां नाशप्रसङ्ग उपादाननाशादित्यर्थः । प्रातिभासिकविक्षेपाणामिवेत्यपिशब्दार्थः ।

ननु मूलाज्ञानकार्यस्य दर्पणादेर्व्यावहारिकत्वदर्शनात् प्रतिबिम्बाध्यासस्यापि तत्कार्यत्वे तदापत्तिरित्याशङ्क्य निराकरोति—न चेत्यादिना । मूलाज्ञानकार्यत्वं व्यावहारिकत्वप्रयोजकं न भवति, अनाद्यविद्यादौ तदभावेऽपि व्यावहारिकत्वसत्त्वात्, किं त्वन्यदेव तत्प्रयोजकमित्याह—अविद्याऽतिरिक्तेति । अनाद्यविद्यादावविद्याजन्यत्वाभावेऽपि तदतिरिक्तदोषजन्यत्वसत्त्वान्नाव्याप्तिरिति भावः । प्रतिबिम्बाध्यासस्य मूलाज्ञानकार्यस्यापि न व्यावहारिकत्वम्, तत्प्रयोजकाभावादित्याह—प्रकृते चेति । प्रतिबिम्बाध्यासे इत्यर्थः ।

न चैवं सतीति । प्रतिबिम्बाध्यासस्य मूलाज्ञानकार्यत्वे सतीत्यर्थः । तन्मूलेति । शुक्तिरजतादिमूलाविद्यानिवर्तकशुक्त्यादिसाक्षात्कारस्यैव रजताद्यध्यासनिवर्तकत्वदर्शनादिति भावः । विरोधाभावादिति । मूलाज्ञानं ब्रह्मविषयकम्, प्रतिबिम्बाध्यासाधिष्ठानभूतदर्पणादिज्ञानं तु दर्पणाद्यवच्छिन्नचैतन्यविषयकमिति तयोरसमानविषयकत्वस्य विरोधप्रयोजक-

त्वेऽपि तदुपादानकप्रतिबिम्बाध्यासविरोधिविषयकतयाऽधिष्ठान-याथात्म्यज्ञानस्य प्रतिबन्धकविरहसचिवस्य तन्निवर्तकत्वोपपत्तेः । अवस्थाऽज्ञानोपादानत्वपक्षेऽपि तस्य प्राचीनाधिष्ठानज्ञाननिवर्ति-तावरणशक्तिकस्य समानविषयत्वभङ्गेन प्रतिबन्धकाभावका-लीनाधिष्ठानज्ञानेन निवर्तयितुमशक्यतया प्रतिविम्बाध्यासमात्र-स्यैव तन्निवर्त्यत्वस्योपेयत्वात् । अथवा स्वोपादानाज्ञाननि-

---

स्याभावेन विरोधाभावादधिष्ठानयाथात्म्यज्ञानस्य ब्रह्माज्ञानानिवर्तकत्वेऽपीत्यर्थः । तत्पदं ब्रह्माज्ञानपरम् । विरोधिविषयकतयेति । 'दर्पणे मुखं नास्ति' इत्यादिरूपस्याधिष्ठानयाथात्म्यज्ञानस्य प्रतिविम्बाध्यासाभाव-विषयकतयेत्यर्थः । ननु प्रतिविम्बाध्यासस्यावस्थाज्ञानोपादानकत्वपक्षे विम्बोपाधिसन्निधिनिवृत्तिसहकृताधिष्ठानज्ञानस्य तदुपादानाज्ञाननिवर्तक-त्वं लभ्यते । तथा च ज्ञानमज्ञानस्यैव निवर्तकम्, अज्ञानकार्यस्य तूपादा-नाज्ञाननिवृत्त्या निवृत्तिरिति पञ्चपादिकाकारोक्तं सङ्गच्छते इत्याशङ्क्याह— अवस्थाऽज्ञानेति । तस्येति । अवस्थाऽज्ञानस्येत्यर्थः । प्राचीनेति । प्रतिविम्बाध्यासात्प्राचीनेनाधिष्ठानज्ञानेन 'दर्पणे मुखं नास्ति' इत्याद्याकारेण निवर्तिता आवरणशक्तिर्यस्यावस्थाऽज्ञानस्य, तत्तथा तस्येत्यर्थः । अज्ञान-विषयत्वमज्ञानावृतत्वम् । आवरणनाशे च दर्पणाद्यवच्छिन्नचैतन्यस्याव-स्थाऽज्ञानविषयत्वाभावादधिष्ठानज्ञानस्यावस्थाऽज्ञानसमानविषयकत्वं विरोध-प्रयोजकं भग्नमित्यर्थः । प्रतिबन्धकपदं विम्बोपाध्योः सन्निधिपरम् । तस्य निर्वतयितुमशक्यतयेति सम्बन्धः । तन्निवर्त्येति । तत्पदमधिष्ठानज्ञानप-रम् । अवस्थाऽज्ञानोपादानत्वपक्षेऽपि प्रतिविम्बाध्यासमात्रस्यैव तन्निवर्त्य-त्वस्योपेयत्वादिति सम्बन्धः । तथा च पञ्चपादिकाविरोधः प्रतिबि-म्बाध्यासस्यावस्थाज्ञानोपादानकत्वपक्षेऽपि तुल्य इति भावः । तदवि-रुद्धं प्रकारमाह—अथवेति । स्वपदं प्रतिविम्बाध्यासपरम् । नि-वर्त्य एवेति । विम्बोपाध्योस्सन्निधिविगमकाले प्रतिविम्बाध्यासस्य सूक्ष्मावस्थालक्षणनाशे सत्यपि बाधरूपा निवृत्तिस्तदा नास्ति । सा तु ब्रह्मज्ञानाधीनैव । तस्यैव तदुपादानमूलाज्ञाननिवर्तकत्वादिति भावः । ननु ब्रह्मज्ञानबाध्यस्य घटादेरिव तद्बाध्यस्यापि व्यावहारिकत्वापत्ति-

वर्तकब्रह्मज्ञाननिवर्त्य एवायमध्यासोऽस्तु । व्यावहारिकत्वा-पत्तिस्तु अविद्यातिरिक्तदोषजन्यत्वेन प्रत्युक्तेत्याहुः ॥ ४ ॥

(वे०सू०मं०) सुषुप्त्याख्यं तमोऽज्ञानं तद्बीजं स्वप्नबन्धयोः ।
इत्याचार्योक्तितः स्वाप्नाध्यासोऽप्येवं प्रतीयताम्॥२७॥

(५) एवं स्वप्नाध्यासस्याप्यनवच्छिन्नचैतन्ये अहङ्कारोपहितचैतन्ये वाऽवस्थारूपाज्ञानशून्येऽध्यासात्;

'सुषुप्त्याख्यं तमोऽज्ञानं यद् बीजं स्वप्नबोधयोः' । इति—आचार्याणां स्वप्नजाग्रत्प्रपञ्चयोरेकाज्ञानकार्यत्वोक्तेश्च मूलाज्ञानकार्यतया स्वोपादाननिवर्तकब्रह्मज्ञानैकबाध्यस्य अविद्याऽतिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासिकत्वमिति केचिदाहुः ॥

---

रिति, नेत्याह—व्यावहारिकत्वापत्तिस्त्विति । तुशब्दोऽवधारणे । प्रत्युक्तेवेति सम्बन्धः । बिम्बोपाधिसन्निधिर्दोषः ॥

उक्तन्यायमन्यत्राप्यतिदिशति—एवमिति । एवं स्वप्नाध्यासस्यापि मूलाज्ञानकार्यतया अविद्याऽतिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासिकत्वमिति सम्बन्धः । न त्ववस्थाऽज्ञानकार्यतया प्रातिभासिकत्वमित्येवकारार्थः । अवस्थाऽज्ञानस्य स्वप्नोपादानत्वाभावे हेतुमाह—अवस्थारूपाज्ञानशून्येऽध्यासादिति । मतभेदेन स्वाप्नाध्यासाधिष्ठानभेदमाह—अनवच्छिन्नेति । अहङ्कारानवच्छिन्नब्रह्मचैतन्यस्य मूलाज्ञानमात्राश्रयत्वादवस्थाऽज्ञानशून्यत्वमहङ्कारोपहितस्य साक्षिचैतन्यस्य सुखाद्यधिष्ठानस्यावरणानङ्गीकारादवस्थाऽज्ञानशून्यत्वमिति भावः । अत्राज्ञानकार्यस्य स्वप्नाध्यासस्यावस्थाऽज्ञानशून्यचैतन्येऽध्यासोक्त्या अर्थान्मूलाज्ञानकार्यत्वमुक्तम्, तत्र हेत्वन्तरमाह—सुषुप्त्याख्यमिति । सुषुप्तेरज्ञानावस्थारूपत्वविवक्षया सुषुप्त्याख्यत्वमज्ञानस्योक्तम् । बीजम् उपादानम्, बोधः जाग्रत्प्रपञ्चः, तस्य शुक्तिरजतादिव्यतिरिक्तस्य मूलाज्ञानकार्यत्वं सम्प्रतिपन्नमिति भावः । आचार्याणामुक्तेश्चेति सम्बन्धः । स्वपदं स्वप्नाध्यासपरम् । ब्रह्मज्ञानैकेति । प्रबोधकाले स्वप्नप्रपञ्चस्य सूक्ष्मावस्थाऽऽपत्तिरूपनाशे सत्यपि बाधरूपा निवृत्तिर्ब्रह्मज्ञानैकसाध्येति बोध्यम् ॥

(वे०सू०मं०) जाग्रत्प्रबोधबाध्यत्वमन्ये स्वप्नस्य मन्वते ।
दण्डभ्रान्तेरहिभ्रान्त्या दृढयेवात्र बाधनम् ॥ २८ ॥

अन्ये तु 'बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे' इति भाष्योक्तेः, 'अविद्यात्मकबन्धप्रत्यनीकत्वाद् जाग्रद्बोधवद्' इति विवरणदर्शनाद्, उत्थितस्य स्वप्नमिथ्यात्वानुभवाच्च जाग्रद्बोधस्स्वाप्नाध्यासनिवर्तक इति ब्रह्मज्ञानेतरज्ञानबाध्यतयैव तस्य प्रातिभासिकत्वम् । न चाधिष्ठानयाथात्म्यागोचरं स्वोपादानाज्ञानानिवर्तकं ज्ञानं कथमध्यासनिवर्तकं स्यादिति वाच्यम् । रज्जुसर्पाध्यासस्य स्वोपादानाज्ञाननिवर्तकाधि-

---

'अविद्याऽतिरिक्तदोषजन्यत्वं प्रातिभासिकत्वप्रयोजकम्'इति मतेन स्वप्नाध्यासस्य निद्रादिदोषजन्यस्य प्रातिभासिकत्वमुपपादितम् । 'व्यवहारकाले बाध्यमानत्वं प्रातिभासिकत्वप्रयोजकम्'इति मतेन तस्य तदुपपादयति—अन्ये त्विति । भाष्यगतं प्रबोधपदं सप्तम्यन्तम् । बन्धस्याविद्याकार्यत्वादविद्याऽऽत्मकत्वम्, प्रत्यनीकत्वं निवर्तकत्वम् । पञ्चम्यनन्तरं ब्रह्मज्ञानस्येति शेषः । यथा जाग्रत्कालीनो घटादिबोधः स्वप्नबन्धनिवर्तकः, तद्वदित्यर्थः । उत्थितस्येति । 'मिथ्यैव मया स्वप्ने महाजनसमागमो दृष्टः । न ह्यस्ति महाजनसमागमः' इति तस्य मिथ्यात्वानुभवादित्यर्थः । यदि स्वप्नप्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वप्रयुक्तं मिथ्यात्वम्, तदा स्वप्नादुत्थितस्य तन्मिथ्यात्वानुभवो न स्यात् । ब्रह्मज्ञानात्पूर्वं तद्बाध्ये घटादौ मिथ्यात्वानुभवादर्शनात् । अतो ब्रह्मज्ञानादितरेण जाग्रत्प्रबोधेनैव बाधः स्वप्नप्रपञ्चस्य वक्तव्य इति शुक्तिरजतादिवद् व्यवहारकालीनबाधवशादेव तस्य प्रातिभासिकत्वम् । व्यवहारकालश्च ब्रह्मतत्त्वज्ञानात्पूर्वकाल इति भावः । ज्ञानमिति । ब्रह्मज्ञानेतरज्ञानमित्यर्थः । तस्य स्वप्नाध्यासनिवर्तकत्वाभावे हेतुं सूचयति—स्वेति । स्वस्य स्वप्नाध्यासस्य उपादानं मूलाज्ञानम्, तदनिवर्तकमित्यर्थः । तदनिवर्तकत्वे हेतुं सूचयति—अधिष्ठानेति । स्वप्नाधिष्ठानस्य पूर्वोक्तस्य यद्याथात्म्यमनवच्छिन्नब्रह्मचैतन्यादि, तदविषयकमित्यर्थः । अधिष्ठानयाथात्म्यज्ञानस्यैवाज्ञाननिवृत्तिद्वाराऽध्यासनिवर्तकत्वनियमादिति भावः । उक्तनियमासिद्ध्या दूषयति—रज्जुसर्पेति । स्वपदं सर्पाध्यासपरम् । ज्ञानेनेवेति । 'नायं सर्पः,

ष्ठानयाथात्म्यज्ञानेनैव तत्रैव स्वानन्तरोत्पन्नदण्डभ्रमेणापि नि-
वृत्तिदर्शनादित्याहुः ।

(वे०सू०मं०) जाग्रत्प्रपञ्चमावृत्य जीवं निद्रा तमोमयी ।
स्वाप्नमाविष्करोत्यर्थं बाध्यं प्राग्जीवबोधतः ॥२९॥

अपरे तु जाग्रद्भोगप्रदकर्मोपरमे सति जाग्रत्प्रपञ्चद्रष्टारं प्रतिबिम्बरूपं व्यावहारिकं जीवं तद्दृश्यं जाग्रत्प्रपञ्चमप्यावृत्य जायमानो निद्रारूपो मूलाज्ञानस्यावस्थाभेदः स्वाप्नप्रपञ्चाध्यासोपादानम्, न मूलाज्ञानम् । न च निद्राया अवस्थाज्ञानरूपत्वे मानाभावः । मूलाज्ञानेनावृतस्य जाग्रत्प्रपञ्चद्रष्टुः व्यावहारिकजीवस्य 'मनुष्योऽहम्, ब्राह्मणोऽहम्, देवदत्तपुत्रोऽहम्'

---

रज्जुरेषा'इति ज्ञानेनेवेत्यर्थः । तत्रैवेति । सर्पाध्यासाधिष्ठानरज्जावेवेत्यर्थः । स्वेति । सर्पभ्रमानन्तरोत्पन्नेन 'नायं सर्पः दण्डोऽयम्'इति भ्रमेणेत्यर्थः । निवृत्तिदर्शनादिति । बाधदर्शनादित्यर्थः ॥

अधिष्ठानयाथात्म्यज्ञानस्यैवाध्यासनिवर्तकत्वनियमेऽपि प्रकृते नानुपपत्तिरिति मत्वा तदनुगुणं मतमाह—अपरे त्विति । अस्मिन्मते व्यावहारिकजीवः स्वप्नप्रपञ्चद्रष्टुः प्रातिभासिकजीवस्याधिष्ठानम् । स्वप्नप्रपञ्चस्य च जाग्रत्प्रपञ्च एवाधिष्ठानम्, न त्वनवच्छिन्नचैतन्यादिकम् । द्विविधाधिष्ठानावरणद्वारा च निद्रारूपमवस्थाऽज्ञानं द्रष्टृदृश्यात्मकद्विविधस्वप्नप्रपञ्चोपादानम्,न तु मूलाज्ञानम् । तस्य ब्रह्मचैतन्यमात्रावारकत्वेन व्यावहारिकजीवाद्यावारकत्वाभावात् । ततश्च व्यावहारिकजीवजगद्गोचरस्य प्रबोधस्याधिष्ठानयाथात्म्यज्ञानरूपत्वात् तेन स्वप्नाध्यासबाधः सम्भवतीति तात्पर्यार्थः । कर्मोपरमे सति जायमान इति सम्बन्धः । आवृत्येत्यनेन उपादानमित्यनेन च निद्रायाः आवरणविक्षेपशक्तिमत्त्वरूपाज्ञानलक्षणमुक्तम् । एवमज्ञानत्वे तस्याः सिद्धे सत्युत्पत्तिमत्त्वात्तदवस्थारूपत्वं सिध्यति । अस्मिन्मते सर्वेषामेवावस्थाऽज्ञानानामादिमत्त्वस्य प्रथमपरिच्छेदे उक्तत्वादिति भावः । सङ्क्षेपेणोक्तमर्थमाशङ्कापूर्वकं प्रपञ्चयति—न च निद्राया इत्यादिना । मूलाज्ञानेनानावृतस्य व्यावहारिकजीवस्य जाग्रत्प्रपञ्चवृत्तान्तस्य च स्वप्नकाले केनचिदावरणाभावे 'यज्ञदत्तपुत्रोऽहम्'इत्यादिभ्रमस्य स्वपितामहजीवद्दशानुभवस्य चाभावप्रसङ्गेन निद्राया एवं

इत्यादिना स्वात्मानमसन्दिग्धाविपर्यस्तमभिमन्यमानस्य तदीयचिरपरिचयेन तं प्रति सर्वदा अनावृतैकरूपस्यानुभूतस्वपितामहात्ययादिजाग्रत्प्रपञ्चवृत्तान्तस्य च स्वप्नसमये केनचिदावरणाभावे जागरण इव स्वप्नेऽपि 'व्याघ्रोऽहम्, शूद्रोऽहम्, यज्ञदत्तपुत्रोऽहम्'इत्यादिभ्रमस्य स्वपितामहजीवद्दशादिभ्रमस्य चाभावप्रसङ्गेन निद्राया एव तत्कालोत्पन्नव्यावहारिकजगज्जीवावारकाज्ञानावस्थाभेदरूपत्वसिद्धेः। न चैवं जीवस्याप्यावृतत्वात् स्वप्नप्रपञ्चस्य द्रष्टृभावप्रसङ्गः। स्वप्नप्रपञ्चेन सह द्रष्टुर्जीवस्यापि प्रातिभासिकाध्यासात्। एवं च पुनर्जाग्रद्भोगप्रदकर्मोद्भूते बोधे व्यावहारिकजीवस्वरूपज्ञानात् स्वोपादाननिद्राभेदरूपत्वसिद्धेरिति सम्बन्धः। जाग्रत्काले ब्राह्मणत्वादिरूपसत्त्वे संशयविपर्यययोरभावमाह—असन्दिग्धेति। असन्दिग्धाविपर्यस्तं यथा भवति, तथा अभिमन्यमानस्येति सन्देहविपर्यासभिन्नत्वमभिमानक्रियाविशेषणम्। स्वपितामहात्ययादेर्जाग्रत्प्रपञ्चवृत्तान्तस्य तं देवदत्तपुत्रं प्रति सर्वदाऽनावृतत्वेनैकरूपतयाऽवस्थाने हेतुमाह—तदीयेति। देवदत्तपुत्रो हि स्वपितामहादिमरणं प्रथममनुभूय पश्चात्प्रतिमासं प्रतिवत्सरं च श्राद्धतर्पणादिकं करोति। ततश्च तन्मरणादिगोचरानुभवस्मरणाभ्यासश्चिरपरिचयः, तेन स्वपितामहात्ययादौ संशयादिनिवृत्तिभाक्त्वलक्षणमनावृतत्वं सदा एकरूपेण वर्तते इत्यर्थः। जागरणे यथा देवदत्तपुत्रस्य व्याघ्रत्वादिभ्रमाभावः, स्वपितामहजीवद्दशानुभवाभावश्च, तथा स्वप्नेऽप्यभावप्रसङ्गेनेत्यर्थः। तत्कालेति। निद्राकाले उत्पन्नो यो व्यावहारिकजगज्जीवयोरावारकोऽज्ञानावस्थाभेदः, तद्रूपत्वं निद्राया एव सिध्यति, नान्यस्य, आवरणविक्षेपशक्तिमत्त्वेन तस्या उपस्थितत्वादन्यस्यानुपस्थितत्वादित्यर्थः। न चैवमिति। निद्रायां व्यावहारिकजीवाद्यावारकज्ञानावस्थाविशेषरूपत्वसिद्धौ सत्यामित्यर्थः। प्रातिभासिकान्तःकरणे चित्प्रतिबिम्बरूपस्य जीवान्तरस्याभ्युपगमान्नैतच्चोद्यावकाश इत्याशयेनाह—स्वप्नप्रपञ्चेन सहेति। एवं चेति। व्यावहारिकजीवजगतोरेव स्वप्नजीवजगदधिष्ठानत्वे सिद्धे सतीत्यर्थः। कर्मोद्भूते बोध इति।

रूपाज्ञाननिवर्तकादेव स्वाप्नप्रपञ्चबाधः । न चैवं तद्द्रष्टुः प्रातिभासिकजीवस्यापि ततो बाधे 'स्वप्ने करिणमन्वभूवम्' इत्यनुसन्धानं न स्यादिति वाच्यम् । व्यावहारिकजीवे प्रातिभासिकजीवस्याध्यस्ततया तदनुभवाद्व्यावहारिकजीवस्यानुसन्धानोपगमेऽप्यतिप्रसङ्गाभावादित्याहुः ।

(वे०सू०मं०) नन्वहङ्कृत्यवच्छिन्ने ऽनवच्छिन्ने च नोचितः ॥
स्वाप्नाध्यासो ऽनहंभावाच्चक्षुराद्यनपेक्षणात् ॥३०॥

नन्वनवच्छिन्नचैतन्ये अहङ्कारोपहितचैतन्ये वा स्वाप्न-

---

कर्मजन्ये जागरणे इत्यर्थः । जीवस्वरूपज्ञानादिति । 'मनुष्योऽहम्, 'ब्राह्मणोऽहम्' देवदत्तपुत्रोऽहम्', इत्यादिरूपादित्यर्थः । उपलक्षणं चैतत् । स्वपितामहाद्यपाद्यज्ञानाच्चेत्यपि द्रष्टव्यम् । स्वपदं स्वप्नप्रपञ्चपरम् । न चैवमित्येवंशब्दार्थमाह—तद्द्रष्टुरिति । तस्य स्वाप्नप्रपञ्चस्य द्रष्टुः 'व्याघ्रोऽहं शूद्रोऽहम्' इत्यादिरूपेण स्वात्मानमभिमन्यमानस्येत्यर्थः । तत इति । व्यावहारिकजीवस्वरूपज्ञानादित्यर्थः । न स्यादिति । अन्यानुभूतेऽर्थेऽन्यस्य स्मरणायोगादिति भावः । अध्यस्ततयेति । तथा च व्यावहारिकप्रातिभासिकजीवयोरधिष्ठानारोप्ययोस्तादात्म्यसत्त्वात् प्रातिभासिकजीवकर्तृकानुभवाद्व्यावहारिकजीवस्य स्वाप्नपदार्थानुसन्धानं सम्भवतीत्यर्थः । अतिप्रसङ्गेति । यज्ञदत्तानुभूतार्थे विष्णुमित्रस्याप्यनुसन्धानप्रसङ्गरूपातिप्रसङ्गाभावादित्यर्थः । तयोस्तादात्म्याभावादिति भावः ॥

ननु जीवत्रैविध्यपक्षे द्रष्टृदृश्यात्मकस्वप्नाध्यासाधिष्ठानत्वेनोपगतस्य व्यावहारिकजीवादेर्मिथ्यात्वेन जडतया स्वप्नप्रपञ्चावभासकत्वं न सम्भवति । न च चैतन्यमेव तदवभासकमिति वाच्यम् । तथा सति तस्यैवाधिष्ठानतया तत्सत्तास्फूर्तिरूपत्वसम्भवे जडस्याधिष्ठानत्वाभ्युपगमायोगात् । तर्हि तदेवाधिष्ठानमस्त्विति चेन्न । तत्राप्यनुपपत्तिसत्त्वादित्याह—नन्वित्यादिना । अनवच्छिन्नचैतन्याधिष्ठानत्वपक्षे स्वाप्नगजादेर्देहाद् बाह्यदेशस्थत्वं वक्तव्यम्, तथा च तस्य किं साक्षिभास्यत्वम्, ऐन्द्रियकत्वं वा ? । नाद्य इत्याह—अहङ्कारेति । साक्षिण इति पञ्चमी । विच्छेदोक्त्या साक्षिणस्स्वाप्नगजादिना सह स्व-

प्रपञ्चाध्यास इति प्रागुक्तं पक्षद्वयमप्ययुक्तम्। आद्ये स्वाप्नगजादेरहङ्कारोपहितसाक्षिणो विच्छिन्नदेशत्वेन सुखादिवदन्तःकरणवृत्तिसंसर्गमनपेक्ष्य तेन प्रकाशनस्य, चक्षुरादीनामुपरततया वृत्त्युदयासम्भवेन तत्संसर्गमपेक्ष्य तेन प्रकाशनस्य चायोगात्। द्वितीये 'इदं रजतम्' इतिवद् 'अहं गजः' इति वा 'अहं सुखी' इतिवद् 'अहं गजवान्' इति वाऽध्यासप्रसङ्गात्॥

(वे०सू०मं०) अत्र द्वितीय आचख्युः केचिद्देहान्तरेव तम्।
स्वाप्नधीवृत्त्यभिव्यक्तशुद्धचैतन्यसंश्रयम्॥ ३१॥

अत्र केचिदाद्यपक्षं समर्थयन्ते—अहङ्कारानवच्छिन्नचैतन्यं न देहाद्बहिः स्वाप्नप्रपञ्चस्याधिष्ठानमुपेयते, किं तु तदन्तरेव। अत एव दृश्यमानपरिमाणोचितदेशसम्पत्त्यभावात्

---

तत्संसर्गाभावो दर्शितः। अन्तःकरणवृत्तिसंसर्गमनपेक्ष्य स्वाप्नगजादेस्तेन प्रकाशस्य, तत्संसर्गमपेक्ष्य तेन प्रकाशस्य चायोगादिति सम्बन्धः। तेनेतिपदद्वयं साक्षिपरम्। यथा सुखादेस्सुखादिगोचरान्तःकरणवृत्तिसंसर्गमनपेक्ष्य तेन प्रकाशः, तथा तेन स्वाप्नगजादेः प्रकाशायोगादित्यर्थः। द्वितीयं निरस्यति—चक्षुरादीनामिति। द्वितीय इति। अहमनुभवगोचराहङ्कारोपहितचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वपक्षे इत्यर्थः। किं गजादेस्तादात्म्येन तत्राध्यासः, किं वा आधाराधेयभावलक्षणसंसर्गेण?। आद्यं दूषयति—इदं रजतमितिवदिति। द्वितीयं निराकरोति—अहं सुखीतिवदिति। द्वितीये 'अहं गजः' इति 'अहं गजवान्' इति वाऽध्यासप्रसङ्गादिति योजना॥

अहङ्कारानवच्छिन्नेति। अविद्यायां बिम्बभूतमीश्वरचैतन्यमिहानवच्छिन्नचैतन्यं विवक्षितम्। ईश्वरचैतन्यस्यैव सर्वाधिष्ठानत्वाद्। नाविद्याप्रतिबिम्बरूपं जीवचैतन्यम्। तस्यानुपादानत्वादिति बोध्यम्। आन्तरचैतन्यस्यैवाधिष्ठानत्वे नियामकमाह—अत एवेति। आन्तरचैतन्यस्यैवाधिष्ठानत्वोपगमादेवेत्यर्थः। स्वप्नकाले दृश्यमानपरिमाणवतां गजादीनां शरीरस्यान्तरुचितदेशसम्पत्त्यभावाच प्रातिभासिकत्वमुच्यते सू-

स्वाप्नगजादीनां मायामयत्वमुच्यते । एवं चान्तःकरणस्य देहाद्बहिरस्वातन्त्र्याज्जागरणे बाह्यशुक्तीदमंशादिगोचरवृत्त्युत्पादाय चक्षुराद्यपेक्षायामपि देहान्तरन्तःकरणस्य स्वतन्त्रस्य स्वयमेव वृत्तिसम्भवाद्देहान्तरन्तःकरणवृत्त्यभिव्यक्तस्यानवच्छिन्नचैतन्यस्याधिष्ठानत्वे न काचिदनुपपत्तिः । अत एव यथा जागरणे सम्प्रयोगजन्यवृत्त्यभिव्यक्तशुक्तीदमंशावच्छिन्नचैतन्यस्थिताऽविद्या रूप्याकारेण विवर्तते, तथा स्वप्नेऽपि देहस्यान्तरन्तःकरणवृत्तौ निद्रादिदोषोपहितायामभिव्यक्तचैतन्यस्थाविद्या अदृष्टोद्बोधितनानाविषयसंस्कारसहि-

---

त्वकारादिभिः । शरीराद्बाह्यचैतन्यस्याधिष्ठानत्वे तु जाग्रद्गजादीनामिव स्वाप्नगजादीनामपि योग्यदेशलाभाद् व्यावहारिकत्वमेव स्यात् । तथा च सूत्रादिविरोध इत्यर्थः । एवं चेति । आन्तरस्यैव चैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वे प्रमाणसिद्धे सतीत्यर्थः । ननु शरीरान्तर्गतस्यापि ब्रह्मचैतन्यस्यावृतत्वात्तत्राध्यस्तानां स्वाप्नगजादीनामनवभासप्रसङ्गः । न चान्तःकरणवृत्त्या आवरणनाशे सति तेषामवभाससम्भवतीति वाच्यम् । स्वप्ने चक्षुरादीनामुपरतत्वेन वृत्त्यसम्भवात् । न च स्वयमेवान्तःकरणवृत्तिस्तदा सम्भवतीति वाच्यम् । जागरणेऽपि तथाप्रसङ्गेन तदाऽपि चक्षुराद्यपेक्षाभावप्रसङ्गादित्यत आह—अन्तःकरणस्येति । स्वयमेवेति । चक्षुरादिकमनपेक्ष्यैवेत्यर्थः । न काचिदिति । अभिव्यक्तचैतन्यस्यैवान्तरस्याधिष्ठानत्वोपगमेन स्वाप्नप्रपञ्चस्यावभासानुपपत्तिर्वा प्रातिभासिकत्वानुपपत्तिर्वा नास्तीत्यर्थः । अन्तःकरणवृत्त्यभिव्यक्तचैतन्यस्यैवाधिष्ठानत्वे सम्मतिमाह—अत एवेति । अन्तःकरणवृत्त्यभिव्यक्तचैतन्यस्यैवाधिष्ठानत्वोपगमादित्यर्थः । विवर्तते परिणमते इत्यर्थः । नन्वन्तःकरणे चक्षुरादिनिरपेक्षतया वृत्तेस्तदा सम्भवात्तदभिव्यक्ते चैतन्ये सदा सुलभे सदा स्वप्नाध्यासप्रसङ्ग इत्यत आह—निद्रादीति । पित्तोद्रेकादिरादिशब्दार्थः । दोषोपप्लुतायां वृत्तावभिव्यक्तं यच्चैतन्यम्, तत्र विद्यमाना अविद्येत्यर्थः । स्वप्नप्रपञ्चवैचित्र्यप्रयोजकमाह—नानाविषयेति । जागरणे नानाविधविषयानुभवजनितास्संस्कारा अन्तःकरणे

ता प्रपञ्चाकारेण विवर्ततामिति विवरणोपन्यासे भारतीतीर्थवचनमिति ॥

(वे०सू०म०) अन्येऽनहमवच्छिन्नाविद्याबिम्बितचिद्गतम् ॥
तद्भास्यं तदधिष्ठानवृत्त्या मातरि तत्प्रथाम् ॥३२॥

अन्ये त्वनवच्छिन्नचैतन्यं न वृत्त्यभिव्यक्तं सत् स्वाप्नप्रपञ्चस्याधिष्ठानम् । अशब्दमूलकानवच्छिन्नचैतन्यगोचरवृत्त्युदयासम्भवाद् अहङ्काराद्यवच्छिन्नचैतन्य एवाहमाकारवृत्त्युदयदर्शनात् । तस्मात् स्वतोऽपरोक्षमहङ्काराद्यनवच्छिन्नचैतन्यं तदधिष्ठानम् ।

अत एव संक्षेपशारीरके—(सं० शा० श्लो० ४१)
'अपरोक्षरूपविषयभ्रमधीरपरोक्षमास्पदमपेक्ष्य भवेत् ।

---

तिष्ठन्ति, तैरदृष्टोद्बोधितैस्सहिता अविद्या विचित्रप्रपञ्चाकारेण परिणमते इत्यर्थः ॥

इदानीमविद्यायां प्रतिबिम्बभूतमनवच्छिन्नचैतन्यमेवाधिष्ठानमिति मतान्तरमाह—अन्ये त्विति । पूर्वमेव अनुपपत्तिमाह—अनवच्छिन्नचैतन्यमिति । बिम्बभूतमिति शेषः । अशब्दमूलकेति । शुद्धब्रह्मण इव ईश्वरचैतन्यस्यापि शास्त्रैकगम्यत्वादिति भावः । नन्वनवच्छिन्नेऽप्यविद्याप्रतिबिम्बरूपजीवचैतन्ये शब्दनिरपेक्षाहमाकारवृत्त्युदयदर्शनाद् ब्रह्मचैतन्येऽपि तथा किं न स्यादिति, नेत्याह—अहङ्काराद्यवच्छिन्नचैतन्य इति । इयं विषयसप्तमी । आदिपदं शरीरादिसङ्ग्रहार्थम् । न त्वहङ्काराद्यनवच्छिन्नजीवचैतन्य इत्येवकारार्थः । जीवचैतन्यस्यापि व्यापकत्वं त्वम्पदार्थशोधकश्रुतितदनुकूलन्यायगम्यमेवेति दृष्टान्तासिद्धिरिति भावः । तस्मादिति । बिम्बभूतानवच्छिन्नब्रह्मचैतन्यस्याधिष्ठानत्वासम्भवादित्यर्थः । स्वत इति । वृत्तिमन्तरेणैवाभिव्यक्तमित्यर्थः । चैतन्यमिति । पूर्वमत इव आन्तरमेवेति शेषः । अत एवेति । स्वतोऽपरोक्षचैतन्यस्यैव स्वाप्नाध्यासाधिष्ठानत्वेन स्वीकारादेवेत्यर्थः । अपरोक्षरूपा विषयस्य शुक्तिरजतादेर्या भ्रमरूपा धीः, सा अपरोक्षमधिष्ठानमपेक्ष्य भवति । यद्वा अपरोक्षरूपा विषयस्य शुक्तिर-

मनसा स्वतो नयनतो यदि वा स्वपनभ्रमादिषु तथा प्रथितेः'॥

इति श्लोकेनापरोक्षाध्यासापेक्षितमधिष्ठानापरोक्ष्यं क्वचित् स्वतः, क्वचिन्मानसवृत्त्या, क्वचिद् बहिरिन्द्रियवृत्त्येत्यभिधाय,

'स्वतोऽपरोक्षा चितिरत्र विभ्रमस्तथाऽपि रूपाकृतिरेव जायते।
मनोनिमित्तं स्वपने मुहुर्मुहुर्विनाऽपि चक्षुर्विषयं स्वमास्पदम् ॥
मनोऽवगम्येऽप्यपरोक्षताबलात्तथाऽम्बरे रूपमुपोल्लिखन् भ्रमः।
सितादिभेदैर्बहुधा समीक्ष्यते यथाऽक्षगम्ये रजतादिविभ्रमे' ॥

इत्याद्यनन्तरश्लोकेन स्वप्नाध्यासे स्वतोऽधिष्ठानापरोक्ष्यमुदाहृतम् । न चाहङ्कारानवच्छिन्नचैतन्यमात्रमावृतमिति वृत्तिम-

---

जतादेर्या भ्रमरूपा धीस्तस्येत्यर्थः । तच्चाधिष्ठानापरोक्ष्यं केन भवतीत्यत आह—मनसेत्यादिना । मनसा स्वतो वा यदि वा नयनत इति योजना । तत्र प्रमाणमाह—स्वपनभ्रमादिषु तथाप्रथितेरिति । अन्वयादिना तथा प्रतीतेरित्यर्थः ।

तथाहि—'शुक्तीदमंशस्य नयनसन्निकर्षे सति तस्य रजताध्यासापेक्षितमापरोक्ष्यं भवति, नान्यथा'इत्यन्वयव्यतिरेकाभ्यां क्वचिदधिष्ठानापरोक्ष्यं नयनत इति प्रथते । तथा गगननैल्याद्यध्यासापेक्षितं गगनावच्छिन्नचैतन्यरूपस्याधिष्ठानस्यापरोक्ष्यं मनसा भवतीति गम्यते । मनसेत्यनेन गगनावच्छिन्नचैतन्यव्यञ्जिका आलोकादिगोचरचाक्षुषवृत्तिर्विवक्षिता । नीरूपगगनगोचरचाक्षुषवृत्तेरसम्भवाद् 'चक्षुरुन्मीलनानन्तरमेव 'नीलं नभः' इत्यादिप्रत्यक्षम्, नान्यथा'इत्यन्वयव्यतिरेकाभ्यां गगनचैतन्याभिव्यक्तौ चाक्षुषवृत्तेरुपयोगावगमाच्च । तथा च फलबलादन्याकारवृत्त्याऽप्यन्यावच्छिन्नचैतन्याभिव्यक्तिरिष्यते । इदं चाद्वैतदीपिकादौ प्रपञ्चितमिति बोध्यम् ।

उदाहृतश्लोकस्य तात्पर्यमाह—इतिश्लोकेनेति । अत्रेति । प्रकृतेऽपि भ्रमे स्वप्नाध्यासरूपे स्वतोऽपरोक्षं चैतन्यमधिष्ठानमित्यर्थः । अत एव संक्षेपशारीरके स्वप्नाध्यासे स्वतोऽधिष्ठानापरोक्ष्यमुदाहृतमिति सम्बन्धः । स्वप्नाध्यासाधिष्ठानचैतन्यापरोक्ष्यस्य स्वतस्सिद्धत्वमाक्षेपसमाधानाभ्यां दर्शयति—न चाहङ्कारानवच्छिन्नेति । मात्रपदं कार्त्स्न्यार्थकम् । तथा च शरीरान्तर्गतमपि चैतन्यमावृतमेवेति भावः । वृत्ति-

न्तरेण न तदभिव्यक्तिरिति वाच्यम् । ब्रह्मचैतन्यमेवावृतमवि-द्याप्रतिबिम्बजीवचैतन्यमहङ्कारानवच्छिन्नमप्यनावृतमित्युपगमाद् । एवं चाहङ्कारानवच्छिन्नचैतन्येऽध्यस्यमाने स्वाप्नगजादौ त-त्समनियताधिष्ठानगोचरान्तःकरणादिवृत्तिकृताभेदाभिव्यक्त्या प्र-मातृचैतन्यस्यापि 'इदं पश्यामि' इति व्यवहार इत्याहुः ॥

(वे०सू०म०) आद्येऽहङ्कृत्युपहितचिदाभासास्पदं परे ॥
अहन्ताधीप्रसक्तिस्तु नाहङ्कारविशेषणात् ॥ ३३ ॥

अपरे तु द्वितीयं पक्षं समर्थयन्ते—अहङ्कारावच्छिन्न-

---

मिति । वृत्तिरप्यनवच्छिन्नगोचरा शब्दमन्तरेण न सम्भवतीति प्रा-गुक्तमिति ध्येयम् । अनावृतमिति । तदेव स्वप्नाध्यासाधिष्ठा-नमिति भावः ।

ननु सर्वगतस्य जीवचैतन्यस्यानावृतत्वे तस्य घटादिविषयदेशे सदा सत्त्वेन चाक्षुषादिवृत्तिमनपेक्ष्य सदा सर्वविषयावभासप्रसङ्ग इति चेद्, न । सर्वत्र विद्यमानस्यापि तस्यानुपादानतया घटादिविषयै-स्सह सम्बन्धाभावेन सम्बन्धार्थतया वृत्त्यपेक्षायाः प्रतिकर्मव्यवस्थाया-मुक्तत्वात् ।

नन्वविद्याप्रतिबिम्बरूपजीवचैतन्ये शरीरान्तर्गते विशेषणत्वेनोपा-धित्वेन वाऽहङ्कारनिरपेक्षे अनवच्छिन्नचैतन्यशब्दिते स्वप्नाध्यासोपगमे स-ति तस्यैव स्वप्नकाले द्रष्टृत्वं स्याद्, न तु प्रमातुः । तस्याह-ङ्कारतादात्म्यापन्नया तदवच्छिन्नस्य ततो भिन्नत्वात् । न चेष्टापत्तिः । स्वप्नकाले 'अहं श्रीकृष्णं पश्यामि' इति प्रमातुः स्वप्नपदार्थद्रष्टृत्वानु-भवविरोधापत्तेरित्यत आह—एवं चेति । स्वतोऽपरोक्षजीवचैतन्यस्या-धिष्ठानत्वे सतीत्यर्थः । तत्समनियतेति । यदा गजादिरध्यस्यते, तदैव तदधिष्ठानगोचरान्तःकरणवृत्तिरविद्यावृत्तिर्वा जायते । तथा च स्वाप्नगजा-द्यधिष्ठानचैतन्यस्य वृत्तिमदन्तःकरणसम्बन्धेन प्रमातृत्वप्राप्तौ सत्यां प्र-मातुस्तद्द्रष्टृत्वं सम्भवतीत्यर्थः । अभेदाभिव्यक्त्येति । उक्तप्रका-रेण प्रमातृविषयचैतन्ययोरभेदाभिव्यक्त्येत्यर्थः ॥

द्वितीयमिति । 'अवच्छिन्नचैतन्यं स्वप्नाध्यासाधिष्ठानम्' इति पक्षमि-

चैतन्यमधिष्ठानमित्यहङ्कारस्य विशेषणभावेनाधिष्ठानकोटिप्रवेशो नेष्यते, किं त्वहङ्कारोपहितं तत्प्रतिबिम्बरूपचैतन्यमात्रमधिष्ठानमिति । अतो 'नाहं गजः' इत्याद्यनुभवप्रसङ्ग इति ।

(वे०सू०म०) इदंवृत्तिचिदाभासे इत्थं रजतकल्पनात् ॥
नाहं रजतधीस्तद्वदनन्यनरवेद्यता ॥ ३४ ॥

एवं शुक्तिरजतमपि शुक्तीदमंशावच्छिन्नचैतन्यप्रतिबिम्बे वृत्तिमदन्तःकरणगतेऽध्यस्यते । शुक्तीदमंशावच्छिन्नबिम्बचैतन्ये सर्वसाधारणे तस्याध्यासे सुखादिवदनन्यवेद्यत्वाभावप्रसङ्गादिति केचित् ॥

---

त्यर्थः । 'अयं गजः' इति प्रत्ययस्थाने 'अहं गजः' इत्यादिप्रत्ययप्रसङ्गवारणायाहङ्कारांशस्याधिष्ठानत्वं नाङ्गीक्रियते चेत्, तर्ह्यनवच्छिन्नस्याधिष्ठानत्वमागतमिति पूर्वमताभेदप्रसक्तिरिति शङ्कते—किं त्विति । अन्तःकरणे चैतन्यप्रतिबिम्बभूतं यज्जीवचैतन्यं तन्मात्रमधिष्ठानमुपेयते । तच्च परिच्छिन्नमेव, उपाधेः परिच्छिन्नत्वादिति परिहरति—अहङ्कारोपहितमिति । अत इति । अहमुल्लेखप्रयोजकस्याहङ्कारात्मकान्तःकरणस्याधिष्ठानकोटावननुप्रवेशादित्यर्थः ।

अविद्यायां बिम्बभूतब्रह्मचैतन्यस्य तस्यां प्रतिबिम्बभूतजीवचैतन्यस्य वा स्वप्नप्रपञ्चाध्यासाधिष्ठानत्वमते तयोस्सर्वप्रमातृसाधारणत्वात्स्वप्नप्रपञ्चस्यापि साधारण्यं स्यात् । अन्तःकरणप्रतिबिम्बचैतन्यस्य तदधिष्ठानत्वे तु साधारण्यप्रसङ्गदोषो नास्तीत्याशयेनास्य द्वितीयपक्षस्य प्रवृत्तिरिति बोध्यम् ।

नन्वेवं शुक्तिरजतादेरसाधारण्यं न स्यात् । तदधिष्ठानचैतन्यस्य साधारणत्वादित्याशङ्क्य हेत्वसिद्धिमाह—एवमिति । वृत्तिमदन्तःकरणेति । शुक्तीदमंशसंसृष्टायां वृत्तौ शुक्तीदमंशावच्छिन्नब्रह्मचैतन्यस्य यः प्रतिबिम्बः, तस्मिन्नध्यस्यते । स च प्रतिबिम्बो वृत्तिगत एव । तस्य वृत्तिवृत्तिमतोरभेदोपचाराद् वृत्तिमदन्तःकरणगतत्वोक्तिरनन्यवेद्यत्वस्फुटीकरणायेति बोध्यम् । वृत्तिगतस्य ब्रह्मप्रतिबिम्बस्य शुक्तिरजताधिष्ठानत्वानुपगमे साधारण्यप्रसङ्गतादवस्थ्यमभिप्रेत्याह—शुक्तीदमंशावच्छिन्नेति ।

(वे०सू०म०) अन्येतु बिम्बचैतन्ये रजताध्यासवादिनः ॥
प्राहुस्तत्तदविद्योत्थन्तत्तत्पुरुषगोचरम् ॥ ३५ ॥

केचित्तु बिम्बचैतन्य एव तदध्यासमुपेत्य 'यदीयाज्ञानोपादानकं यत्, तत्तस्यैव प्रत्यक्षम्, न जीवान्तरस्य' इत्यनन्यवेद्यत्वमुपपादयन्ति ॥ ५ ॥

(वे०सू०म०) नन्वस्तु रजताध्यासे कथञ्चिच्चाक्षुषत्वधीः ॥
कथं स्वप्नगजज्ञाने तस्याः साधु समर्थनम् ॥ ३६ ॥

(६) ननु शुक्तिरजताध्यासे चाक्षुषत्वानुभवः साक्षाद्वाऽधिष्ठानज्ञानद्वारा तदपेक्षणाद्वा मथ्समर्थ्यते। स्वाप्नगजादिचाक्षुषत्वानुभवः कथं समर्थनीयः।

---

सुखादेरिव शुक्तिरजतादेर्यद् अनन्यवेद्यत्वम्, तस्याभावप्रसङ्गादित्यर्थः। देवदत्तसुखदुःखरागद्वेषादिकं देवदत्तादन्यस्य वेद्यं प्रत्यक्षं न भवतीत्यनन्यवेद्यं तदित्यर्थः॥

अधिष्ठानचैतन्यस्य साधारणत्वेऽपि शुक्तिरजताद्युपादानाज्ञानस्यासाधारण्यात् शुक्तिरजतादेरसाधारण्यमित्याह—केचित्त्विति। बिम्बचैतन्य एवेति। वृत्तिगतप्रतिबिम्बं प्रति बिम्बचैतन्ये इत्यर्थः। यद्वा अविद्याप्रतिबिम्बं प्रति बिम्बभूते ब्रह्मचैतन्ये शुक्तीदमंशावच्छिन्ने इत्यर्थः। न त्वसाधारणे वृत्तिप्रतिबिम्बे इत्येवकारार्थः। यदीयेति। 'यद् रजतं यत्पुरुषीयाज्ञानोपादानकम्, तद् रजतं तस्यैव पुरुषस्य प्रत्यक्षं, नान्यस्य' इति कल्पनोपपत्तेर्न शुक्तिरजतादेस्साधारण्यप्रसङ्ग इत्यर्थः॥

एवं स्वप्नप्रपञ्चाध्यासस्याधिष्ठानं निरूप्य स्वाप्नपदार्थानुभवः किमैन्द्रियकः, किं वा साक्षिरूप इति संशये निर्णयायाक्षेपमवतारयति—नन्विति। साक्षाद्वेति। इदं च शुक्तिरजतादेरैन्द्रियकत्वमिति कवितार्किकमतानुसारेणेति बोध्यम्। शुक्तिरजतादेस्साक्षिभास्यत्वमतानुसारेणाह—अधिष्ठानज्ञानद्वारेति। धर्मिज्ञानद्वारा चक्षुरपेक्षत्वात् शुक्तिरजतादेरित्यर्थः। कथमिति। स्वाप्नगजादिचाक्षुषत्वानुभवो हि वासनामयैरिन्द्रियैर्वा, व्यावहारिकैरिन्द्रियैर्वा, सूक्ष्मेन्द्रियैर्वा, आरोपरूपतया वा समर्थनीयतया सम्भाव्यते। तथा च स केन प्रकारेण समर्थनीय इति प्रश्ना-

(वे०सू०म०) स्वानां विरामादग्राह्यप्रातिभासिकानिह्नवात् ॥
स्वयञ्ज्योतिष्ट्ववादाच्च न स्वाप्नेन्द्रियकल्पना ॥३७॥

उच्यते । न तावत् तत्समर्थनाय स्वाप्नदेहवद्विषयवच्च इन्द्रियाणामपि प्रातिभासिको विवर्तः शक्यते वक्तुम् । प्रातिभासिकस्याज्ञातसत्त्वाभावात् । इन्द्रियाणां चातीन्द्रियाणां सत्त्वेऽज्ञातसत्त्वस्य वाच्यत्वात् । नापि व्यावहारिकाणामेवेन्द्रियाणां स्वस्वगोलकेभ्यो निष्क्रम्य स्वाप्नदेहमाश्रित्य स्वस्वविषयग्राहकत्वं वक्तुं शक्यते । स्वप्नसमये तेषां व्यापाररााहित्यरूपोपरतिश्रवणात् । व्यावहारिकस्य स्पर्शनेन्द्रियस्य स्वोचितव्यावहारिकदेशसम्पत्तिविधुरान्तःशरीरे स्वाधिकपरिमाणकृत्स्नस्वाप्नशरीरव्यापि-

---

र्थः । चतुर्थप्रकारेण तत्समर्थनं प्रतिजानीते—उच्यत इति । आद्यं प्रकारत्रयं निराकरोति—न तावदित्यादिना । वासनामयैः प्रातिभासिकैरिन्द्रियैश्चाक्षुषत्वानुभवसमर्थनप्रकारं प्रथमं दूषयति—स्वाप्नदेहवदिति । स्वाप्नो देहः स्वाप्नाश्च विषयाः प्रातिभासिकाश्चैतन्यविवर्तरूपा यथा अभ्युपगम्यन्ते, न तथा इन्द्रियाणां स्वरूपभूतश्चैतन्यविवर्तः प्रातिभासिकोऽभ्युपगन्तुं शक्यते इत्यर्थः । वाच्यत्वादिति । तेषामज्ञातसत्त्वनियमस्य दर्शनाद्, दृष्टानुसारित्वाच्च कल्पनाया इति भावः । द्वितीयं प्रकारं निराकरोति—नापीति । ननु व्यावहारिकेन्द्रियैः स्वाप्नगजादीनां चाक्षुषत्वानुभवसमर्थनप्रकारस्योत्थितिरेव नास्ति । तेषां जाग्रद्देहस्थत्वेन स्वप्नदेहस्थत्वाभावादित्याशङ्क्याह—स्वस्वेति । श्रवणादिति । "य एषु सुप्तेषु जागर्ति" इत्यादिश्रुतिष्विति शेषः । श्रुतौ सुप्तेष्वित्यनन्तरं करणेष्विति शेषः । करणानां स्वापो नाम उपरतिः । सा च स्वप्नसमये व्यापाराराहित्यरूपैव, न तु तेषां स्वरूपोपरतिः । तस्याः सुषुप्तावेव श्रवणादिति बोध्यम् । त्वगिन्द्रियमात्रे दोषान्तरमाह—व्यावहारिकस्येति । स्वस्य स्पर्शनेन्द्रियस्य उचितो यो व्यावहारिकदेशः, तत्संपत्तिविधुरे शरीरस्यान्तःप्रदेशे स्थितं व्यावहारिकत्वगिन्द्रियपरिमाणापेक्षया कदाचिदधिकपरिमाणवत्स्वाप्नदेहं कृत्स्नं न व्याप्नुयात् त्वगिन्द्रियमित्यर्थः । व्यावहारिकस्पर्शनेन्द्रियस्योचितदेशकालसंपत्तिवैधुर्यविशेषणेन तस्य स्वप्नदेहमवेशायान्तःशरी-

त्त्वायोगाच्च। तदेकदेशाश्रयत्वे च तस्य, स्वाप्नजलावगाहनज-न्यसर्वाङ्गीणशीतस्पर्शानिर्वाहात्।

अत एव 'स्वप्ने जाग्रदिन्द्रियाणामुपरतावपि तैजसव्यव-हारोपयुक्तानि सूक्ष्मशरीरावयवभूतानि सूक्ष्मेन्द्रियाणि सन्तीति तैस्स्वाप्नपदार्थानामैन्द्रियकत्वम्, इत्युपपादनशङ्काऽपि निरस्ता। जाग्रदिन्द्रियव्यतिरिक्तसूक्ष्मेन्द्रियाप्रसिद्धेः।

किञ्च 'अत्रायं पुरुषः स्वयञ्ज्योतिः' इति जागरे आदित्यादिज्यो-

---

रे गमनमेव न सम्भवतीति सूचितम्। यदि व्यावहारिकस्पर्शनेन्द्रियस्य कृ-त्स्नस्वाप्नदेहव्यापित्वायोगः, तर्हि स्वाप्नदेहैकदेशाश्रयत्वमेवास्तु, को दोषः?, तत्राह—तदेकदेशेति। तस्येति। स्पर्शनेन्द्रियस्येत्यर्थः। तृतीयं प्र-कारं निराकरोति—अत एवेति। व्यावहारिकस्पर्शनेन्द्रियस्यैव स्वाधि-कपरिमाणकृत्स्नस्वाप्नशरीरव्यापित्वायोगे सति तदवयवभूतसूक्ष्मस्पर्शने-न्द्रियस्य सुतरां स्वाप्नदेहव्यापित्वायोगादित्यर्थः। तैजसः स्वप्नावस्था-गतो जीवः। सूक्ष्मशरीरशब्देन व्यावहारिकाण्येकादशेन्द्रियाण्युच्यन्ते। स्पर्शनेन्द्रियमात्रे दोषमतिदेशेन दर्शयित्वा साधारणदोषमाह—जाग्र-दिन्द्रियेति।

नन्वप्रसिद्धान्यपि स्वप्नकाले पदार्थानां चाक्षुषत्वाद्यनुभवानुरोधेन कल्प्यन्ते इत्याशङ्क्य श्रुतिविरोधान्नैवमित्याह—किं चात्रेति। श्रुतावत्रेति-पदेन स्वप्नावस्थाग्रहणस्य तात्पर्यमाह—जागर इति। जागरे कार्यकार-णसङ्घातानामासनगमनादिलक्षणव्यवहारसाधनत्वेनादित्यादिज्योतींषि व्य-वह्रियमाणपदार्थैः सह सङ्कीर्णानि तिष्ठन्ति। तथा व्यवहारसाधनत्वेनैव च-क्षुरादिजन्या वृत्तयो विषयदेशं प्रति गच्छन्तीत्यर्थः। व्यतिकरः सम्पर्कः। संसर्ग इति यावत्। जागरे दुर्विवेकमिति सम्बन्धः। दुःखेन विवेको नि-र्णयो यस्य, तद् दुर्विवेकम्। अनायासेन निर्णेतुमशक्यमिति यावत्। आत्मनः स्वयञ्ज्योतिष्ट्वं नाम अन्यानवभास्यत्वे सति स्वव्यतिरिक्तसकलाव-भासकत्वयोग्यत्वम्। तच्च जागरे ग्रहीतुमशक्यम्।

तथा हि—'आत्मव्यतिरिक्तस्य सर्वस्यात्ममात्रानवभास्यत्वं वक्तुं न शक्यते। आदित्यादिज्योतिषां चक्षुरादिजन्यवृत्तिज्ञानानां च लोके जगद-

तिर्व्यतिकराच्चक्षुरादिवृत्तिसञ्चाराच्च दुर्विवेकमात्मनः स्वयंज्योतिष्ट्वमिति स्वप्नावस्थामधिकृत्य तत्रात्मनः स्वयञ्ज्योतिष्ट्वं प्रतिपादयति । अन्यथा तस्य सर्वदा स्वयञ्ज्योतिष्ट्वेनात्रेति वैयर्थ्यात् । तत्र यदि स्वप्नेऽपि चक्षुरादिवृत्तिसञ्चारः कल्प्येत, तदा तत्रापि जागर इव तस्य स्वयञ्ज्योतिष्ट्वं दुर्विवेचं स्यादित्युदाहृता श्रुतिः पीड्येत ।

ननु स्वप्ने चक्षुराद्युपरमकल्पनेऽपि अन्तःकरणमनुपरतमास्त इति परिशेषासिद्धेर्न स्वयञ्ज्योतिष्ट्वविवेकः । मैवम् ।

---

वभासकत्वेन प्रसिद्धानां सत्त्वात् । आत्मनोऽपि 'अहम्'इति ज्ञानप्रकाश्यत्वेन तस्यान्यानवभास्यत्वस्य वक्तुमशक्यत्वाच्च'इति शङ्कायाः जागरे परिहर्तुमशक्यत्वेन जागरे स्वयञ्ज्योतिष्ट्वनिर्णयायोगात् । स्वप्नावस्थायां तु जागरणे प्रसिद्धानामादित्यादिज्योतिषां चक्षुरादिजन्यज्ञानानां चाभावाद् 'आत्मचैतन्यमात्रावभास्यं स्वाप्नं जगद्'इति निर्णयस्सम्भवति । तथा "अहम्'इति ज्ञानं वृत्तिरूपमात्मनः प्रकाशकं न भवति' इति वक्ष्यते । तथा चान्यानवभास्यत्वे सति सकलजगदवभासकत्वयोग्यत्वरूपं स्वयंज्योतिष्ट्वमात्मनः स्वप्नावस्थासाक्षित्वेन निर्णेतुं शक्यमित्यर्थः ।

ननु 'स्वप्नदशायामेव तस्य स्वयञ्ज्योतिष्ट्वम्, न त्ववस्थाऽन्तरे'इति यथाश्रुतार्थे एव श्रुतेस्तात्पर्यं किं न स्यादिति, नेत्याह—अन्यथेति । श्रुतेः 'स्वप्नावस्थामाश्रित्य तत्साक्षित्वेन स्वयञ्ज्योतिष्ट्वमात्मनः सुविवेकम्'इति तात्पर्याकल्पने इत्यर्थः । सर्वदेति । "तमेव भान्तमनु भाति सर्वम्"इत्यादिश्रुतिपर्यालोचनया तस्य सर्वदा स्वयञ्ज्योतिष्ट्वनिश्चयादिति भावः । अत्रेतीति । 'अत्र'इतिविशेषणस्य व्यावर्तकत्वासम्भवेन व्यर्थत्वं स्यात् । अतो न यथाश्रुतार्थे तात्पर्यम्, किं तूक्तार्थे तात्पर्यमिति भावः । एवं श्रुतितात्पर्यं निरूप्य स्वप्नकाले चक्षुरादिव्यापारकल्पनं तद्बाधितमित्याह—तत्रेति । 'स्वयंज्योतिष्ट्वं स्वप्नावस्थासाक्षित्वेन सुगमम्'इत्यत्र श्रुतितात्पर्ये सिद्धे सतीत्यर्थः ।

ननु 'स्वाप्नजगतोऽवभासकान्तराभावादात्ममात्रभास्यत्वम्'इत्युक्तमयुक्तमिति शङ्कते—नन्विति । अनुपरतमास्त इतीति । तथा च मनस एव स्वाप्नजगदवभासकत्वसम्भवादवभासकान्तराभावरूपपरिशेषासिद्धिरित्यर्थः । स्वप्नावस्थानां मनसो ज्ञानकरणत्वमसिद्धम्, अतस्तस्य

'कर्ता शास्त्रार्थवत्त्वाद्' इत्यधिकरणे (उ० मी० अ० २ पा० ३ सू० ३३) न्यायनिर्णयोक्तरीत्याऽन्तःकरणस्य चक्षुरादिकरणान्तरनिरपेक्षस्य ज्ञानसाधनत्वाभावाद्वा, तत्त्वप्रदीपिकोक्तरीत्या स्वप्ने तस्यैव गजाद्याकारेण परिणामेन ज्ञानकर्मतयाऽवस्थितत्वेन तदानीं ज्ञानसाधनत्वायोगाद्वा परिशेषोपपत्तेः।

न च स्वप्नेऽन्तःकरणवृत्त्यभावे उत्थितस्य स्वप्नदृष्टगजाद्यनुसन्धानानुपपत्तिः। सुषुप्तिक्लृप्तया अविद्यावृत्त्या तदुपपत्तेः। सुषुप्तौ तदवस्थोपहितमेव स्वरूपचैतन्यमज्ञानसुखादिप्रकाशः उत्थितस्यानुसन्धानमुपाधिभूतावस्थाविनाशजन्यसंस्कारेणेति वेदान्तकौमुद्यभिमते सुषुप्तावविद्यावृत्त्यभावपक्षे इहापि स्वाप्नगजा-

---

स्वाप्नजगदवभासकत्वासम्भवात् परिशेषसिद्धिरिति परिहरति—नैवमिति। आत्मा कर्ता भवितुमर्हति। तथा सति 'कर्ता विज्ञानात्मा पुरुषः' इत्यादिशास्त्रस्यार्थवत्त्वोपपत्तेरिति सूत्रार्थः। उक्तरीत्येति। 'मनस उपादानत्वेन स्वतो ज्ञानकरणत्वं नास्ति'इत्युक्तरीत्येत्यर्थः। तत्त्वप्रदीपिकोक्तरीत्येति। 'स्वप्ने मनस एव विविधसंस्कारविशिष्टस्य स्वप्नप्रपञ्चाकारेण परिणामित्वम्, न त्वविद्यायाः, तस्याः संस्काराश्रयत्वाभावेन विचित्रपदार्थपरिणामित्वायोगाद्'इत्याद्युक्तरीत्येत्यर्थः। कर्मतयेति। विषयत्वेनैवोपक्षीणस्य विषयित्वरूपप्रकाशकत्वाभावादित्यर्थः। तदानीमित्यनेन 'अस्तु वा जागरणे ज्ञानकरणत्वम्, तथाऽपि स्वप्ने तन्नोपेयते, तस्य विषयत्वेनैवावस्थितत्वाद्'इति सूचितम्। अनुपपत्तिरिति। संस्काराभावादिति भावः। ननु सुषुप्तावप्यविद्यावृत्तिर्न कल्पनीया। सुषुप्त्यादिसाक्षिचैतन्यस्य नित्यत्वेऽपि साक्षिभास्यायास्सुषुप्त्यवस्थाया विनाशित्वेन विषयभूतसुषुप्त्यवस्थाविशिष्टत्वरूपेण तत्साक्षिणो नाशलक्षणसंस्कारसम्भवात् सुषुप्तिसुखादीनामनुसन्धानोपपत्तिरिति चेत्, तर्हि स्वप्नसाक्षिणोऽपि प्रातिभासिकविषयविशिष्टत्ववेषेण नाशलक्षणसंस्कारसम्भवाद स्वप्नदृष्टगजाद्यनुसन्धानोपपत्तिरित्याह—सुषुप्ताविति। तत्पदं सुषुप्तिपरम्। अज्ञानसुखादिप्रकाश इति। अज्ञानासुखाद्यनुभव इत्यर्थः। इहापीति। स्व-

दिभासकचैतन्योपाधिभूतस्वप्नावस्थाविनाशजन्यसंस्कारादनुसन्धानोपपत्तेश्च ।

अथवा "तदेतत् सत्त्वं येन स्वप्नं पश्यति" इत्यादिश्रुतेरस्तु स्वप्नेऽपि कल्पतरूक्तरीत्या स्वाप्नगजादिगोचरान्तःकरणवृत्तिः। न च तावता परिशेषासिद्धिः। अन्तःकरणस्य 'अहम्' इतिगृह्यमाणस्य सर्वात्मना जीवैक्येनाध्यस्ततया लोकदृष्ट्या तस्य तद्व्यतिरेकाप्रसिद्धेः परिशेषार्थं चक्षुरादिव्यापाराभावमात्रस्यैवापेक्षितत्वात् । 'प्रसिद्धदृश्यमात्रं दृगवभासयोग्यम्' इति निश्चयसत्त्वेन परिशेषार्थमन्यानपेक्षणात् ।

(वे०सू०भं०) अत्राहुरत एवात्र चाक्षुषत्वादिधीर्भ्रमः ॥

तस्मात् सर्वथाऽपि स्वप्ने चक्षुरादिव्यापारासम्भवात् स्वा-

स्नावस्थायामपीत्यर्थः । उपाधिभूतेति । विषयतया उपाधिभूतेत्यर्थः ।

जागर इव स्वप्नेऽपि गजादिगोचरान्तःकरणवृत्तिरत्रोपेयते, अतो न संस्काराभावशङ्काऽवकाशः। न च तदा अन्तःकरणवृत्तिसत्त्वे परिशेषासिद्धिरिति वाच्यम् । परिशेषस्यापि लोकदृष्ट्या उपपत्तेरिति मतान्तरमाह—अथवेति । 'सत्त्वशब्दितान्तःकरणस्य तृतीयाश्रुत्या स्वाप्नगजादिगोचरज्ञानकरणत्वं भाति। तथा च श्रुतिप्रामाण्यात् स्वप्ने चक्षुरादिजन्यवृत्त्यभावेऽपि मानसवृत्तिरस्ति। अतो न संस्कारानुपपत्तिः' इति कल्पतरूक्तरीत्येत्यर्थः । अन्तःकरणस्य सर्वात्मना जीवचैतन्यैक्येनाध्यस्ततया 'अहं पश्यामि' इत्यादिरूपेण द्रष्टृतया गृह्यमाणस्याज्ञदृष्ट्या तस्माच्चिदात्मनस्सकाशादन्तःकरणस्य भेदाप्रसिद्ध्या परिशेषार्थं लोकप्रसिद्धद्रष्टृव्यतिरिक्तकरणादिव्यापाराभावस्यैवापेक्षितत्वात् तावता परिशेषासिद्धिर्न चेत्यर्थः । तावतेत्यस्यान्तःकरणवृत्तिसद्भावमात्रेणेत्यर्थः । एतदुक्तं भवति—'अन्तःकरणवृत्तिलक्षणो व्यापारो वस्तुतः करणव्यापारोऽपि प्रतीतितो द्रष्टृव्यापारो भवति । अन्तःकरणस्य द्रष्टृत्वेन गृहीतत्वाल्लोकैः' इति । स्वयंज्योतिष्ट्वनिर्णयप्रकारं दर्शयति—प्रसिद्धेति । पूर्वम् 'उच्यते' इत्यनेन सूचितां स्वाप्नपदार्थेषु चाक्षुषत्वाद्यनुभवस्य गतिमिदानीं प्रपञ्चयति— तस्मादिति । पञ्चमीं व्याचष्टे—सर्वथेति । पूर्वोक्त-

मृगजादौ चाक्षुषत्वाद्यनुभवो भ्रम एव।

(वे॰सू॰मं॰) अन्वयव्यतिरेकादिकल्पनाऽप्यक्षिकल्पना ॥ ३८ ॥

असंभावितसाहस्रदर्शनात्स्वप्नदर्शने ॥

इत्थमेव हि शुक्त्यादौ रूप्याद्यध्यक्षधीगतिः ॥३९॥

ननु स्वप्नेऽपि चक्षुरुन्मीलने गजाद्यनुभवः, तन्निमीलने नेति जागर इव गजाद्यनुभवस्य चक्षुरुन्मीलनाद्यनुविधानं प्रतीयते इति चेत्। 'चक्षुषा रजतादिकं पश्यामि' इत्यनुभववद्यमपि कश्चित् स्वप्नभ्रमो भविष्यति यत् केवलसाक्षिरूपे स्वाप्नगजाद्यनुभवे चक्षुराद्यनुविधानं तदनुविधायिनी वृत्तिर्वाऽध्यस्यते। किमिव हि दुर्घटमपि भ्रमं माया न करोति विशेषतो निद्रारूपेण परिणता, यस्या माहात्म्यात् स्वप्ने रथः प्रतीतः क्षणेन मनुष्यः प्रतीयते, स च क्षणेन मार्जारः। स्वप्नद्रष्टुश्च न पूर्वापरविरो-

---

सर्वप्रकारैरपीत्यर्थः।

स्वप्नानुभवस्य साक्षिरूपत्वे चक्षुराद्यनुविधानविरोधमाशङ्क्य दृष्टान्तेन समाधत्ते—ननु स्वप्नेऽपीत्यादिना। तदनुविधायिनीति। 'जागरे चक्षुराद्यनुविधायिनी या प्रसिद्धा वृत्तिः, सा स्वप्नसाक्षिण्यध्यस्ता' इति यथाश्रुतार्थो न ग्राह्यः। अन्यथाख्यातिप्रसङ्गात्। किंतु "तदेतत्सत्त्वं येन स्वप्नं पश्यति" इति श्रुत्यनुसारेण कल्पतरुकारैर्या गजादिगोचरमानसवृत्तिरुक्ता, तस्यां तदनुविधायित्वं वाऽध्यस्यते इत्यर्थः। तथा च केवलसाक्षिरूपे स्वाप्नगजाद्यनुभवे चक्षुराद्यनुविधानमध्यस्यते, तदनुविधायिनी वृत्तिर्वा तत्राध्यस्यत इति यत्, तच्च भ्रममात्रमित्यर्थः। नन्वेतावान् भ्रमो दुर्घट इत्याशङ्क्याह—किमिव हीति। दुर्घटमपि भ्रमं माया किमिव न करोतीति सम्बन्धः। किमिव केन दृष्टान्तेन न करोति। दुर्घटाकरणे मायाया दृष्टान्तो नास्तीत्यर्थः। प्रत्युत तस्यास्तत्कारित्वमैन्द्रजालिकमायादौ प्रसिद्धमिति हिशब्दार्थः। वियदादिप्रपञ्चभ्रमहेतुभूता माया दुर्घटमपि प्रपञ्चभ्रमं व्यवस्थितरूपं घटयति, निद्रारूपेण परिणता तु सा ततो विलक्षणमेव भ्रमं कारयतीति मत्वा विशेषत इत्युक्तम्। यस्या इति। निद्रारूपेण परिणताया

धानुसन्धानम् । तस्मादन्वयाद्यनुविधानप्रतीतितौल्येऽपि जाग्रद्गजाद्यनुभव एव चक्षुरादिजन्यः, न स्वाप्नगजाद्यनुभवः ॥

(वे०सू०मं०) दृष्टसृष्टिविदस्त्वाहुर्गतिं जाग्रद्धियोऽप्यमूम् ॥
अर्थसृष्टेः पुराऽर्थेषु सन्निकर्षाद्यसम्भवात् ॥ ४० ॥

दृष्टिसृष्टिवादिनस्तु कल्पितस्याज्ञातसत्त्वमनुपपन्नमिति कृत्स्नस्य जाग्रत्प्रपञ्चस्य दृष्टिसमसमयां सृष्टिमुपेत्य घटादिदृष्टेश्चक्षुःसन्निकर्षानुविधानप्रतीतिं दृष्टेः पूर्वं घटाद्यभावेनासङ्गच्छमानां स्वप्नवदेव समर्थयमानाः जाग्रद्गजाद्यनुभवोऽपि न चाक्षुष इत्याहुः॥

(वे०सू०मं०) निरुपाधिरथान्यो वा कल्पकः प्रथमे भवेत् ॥
मुक्तस्य संसृतिः को वा द्वितीये मोहकल्पकः॥४१॥

(७)ननु, दृष्टिसृष्टिमवलम्ब्य कृत्स्नस्य जाग्रत्प्रपञ्चस्य कल्पितत्वोपगमे कस्तस्य कल्पकः—निरुपाधिरात्मा वा, अ-

---

इत्यर्थः । स्वप्ने चाक्षुषत्वाद्यनुभवस्य गतिनिरूपणमुपसंहरति—तस्मादिति । स्वप्ने चक्षुरादिव्यापारासम्भवादित्यर्थः ॥

ये त्वधिकारिणो बहुविधज्ञानकर्मानुष्ठानसाधितनिरतिशयपरमेश्वरप्रसादमहिम्ना नितान्तनिर्मलीकृतान्तःकरणास्सन्तो जागरेऽपि स्वप्नाद्विशेषं न पश्यन्ति, तान् ब्रह्मविद्याकामानधिकृत्य प्रवृत्तां कृत्स्नस्य जगतः प्रबोधस्वापावस्थयोः प्रभवप्रलयप्रतिपादिकां श्रुतिमनुसृत्य दृष्टिसृष्टिवादः पूर्वाचार्यैर्निरूपितः । तं स्वप्नविचारेण बुद्धिमागतं दर्शयति—दृष्टिसृष्टिवादिनस्त्विति । दृष्ट्या सह समस्समयो यस्यास्सा, तां सृष्टिं कृत्स्नस्य जाग्रत्प्रपञ्चस्योपेत्येत्यत्र पूर्ववाक्येन हेतुमाह—कल्पितस्येति । स्वाप्नप्रपञ्चस्येवेत्यर्थः । घटादिदृष्टेर्या अनुविधानप्रतीतिः, तामसङ्गच्छमानां स्वप्नवदेव भ्रममात्ररूपां समर्थयमाना इति सम्बन्धः । असङ्गच्छमानत्वे हेतुः—दृष्टेः पूर्वं घटाद्यभावेनेति । तत्र च हेतुः—दृष्टिसमया सृष्टिः । न चाक्षुष इति । किं तु स्वप्नानुभववदेव केवलसाक्षिरूप इत्यर्थः ॥

कल्पितत्वोपगमे इति । प्रातिभासिकत्वोपगमे इत्यर्थः । किंशब्दसूचितं विकल्पं दर्शयति—निरुपाधिरिति । निरपेक्षश्चिदात्मैव

विद्योपहितो वा ?। नाद्यः। मोक्षेऽपि साधनान्तरनिरपेक्षस्य कल्पकस्य सत्त्वेन प्रपञ्चानुवृत्त्या संसाराविशेषप्रसङ्गात्। न द्वितीयः। अविद्याया अपि कल्पनीयत्वेन तत्कल्पनात्प्रागेव कल्पकसिद्धेर्वक्तव्यत्वात्।

(वे०सू०मं०) अत्राहुः पूर्वसंक्लृप्तमोहयुक्तोऽन्यकल्पकः॥

अत्र केचिदाहुः—पूर्वपूर्वकल्पिताविद्योपहित उत्तरोत्तराविद्याकल्पकः। अनिदंप्रथमत्वाच्च कल्पककल्पनाप्रवाहस्य नानवस्थादोषः। न चाविद्याया अनादित्वोपगमाच्छुक्तिरजतवत् कल्पितत्वं न युज्यते, अन्यथा साधनादिविभागानुपपत्तेरिति वा-

संसारकल्पक इति प्रथमं कल्पं दूषयति—मोक्षेऽपीति। अनुवृत्त्येति। अनुवृत्त्यापत्त्येत्यर्थः। अविद्याया अपीति। तस्या अपि कादाचित्कत्वाभ्युपगमे 'अविद्यासृष्टेः पूर्वमेवाविद्योपहितस्य चिदात्मनोऽविद्यादिकल्पकस्य वक्तव्यत्वात्तदभावादविद्यादिसृष्टिर्न सम्भवति। तथा च सदा संसारानुपलम्भप्रसङ्ग इति भावः।

नन्वेवमपि प्रथमाविद्यायाः कः कल्पकः, तत्राह—अनिदमिति। इदंप्रथमत्वाभावात् प्रथमाविद्यैव काचिन्नास्ति, अतो न चोद्यावकाश इति भावः। तर्ह्यनवस्थेत्याशङ्क्य सा न दोषाय। अविद्योपहितात्मनः प्रपञ्चकल्पकत्वेन श्रुतिसिद्धस्य पूर्वपूर्वाविद्यां विना तत्कल्पकत्वनिर्वाहाभावादित्याशयेनाह—नानवस्थादोष इति। ननु—

'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्यातच्चितोर्योगष्षडस्माकमनादयः' ॥ इति—

सिद्धान्तविरुद्धमविद्यायाः प्रवाहानादित्वकल्पनम्। तस्याः स्वरूपानादित्वस्यैव सिद्धान्तसङ्ग्रहश्लोके चैतन्यवत् प्रतीतेरिति शङ्कते—न चेति। सिद्धान्तमुल्लङ्घ्य प्रवृत्तावपि दोषमाह—अन्यथेति। अविद्यादीनां स्वरूपानादित्वानुपगमे इत्यर्थः। अनुपपत्तेरिति। उक्तविभागस्य लोकशास्त्रसिद्धत्वादिति भावः। श्रुत्येकसमधिगम्यविशुद्धचैतन्यव्यतिरिक्तमात्रे दृष्टिसृष्टिमुपेत्यैव साधनादिविभागबोधकलौकिकवैदिकप्रमाणानां सिद्धान्तप्रवादस्य चावलम्बनत्वेन भ्रमविशेषं सदृष्टान्तमाह—

च्यम् । यथा स्वप्ने कल्प्यमानं गोपुरादि किञ्चित् पूर्वसिद्धत्वेन कल्प्यते, किञ्चित्तदानीमुत्पाद्यमानत्वेन, एवं जागरेऽपि किञ्चित् कल्प्यमानं सादित्वेन कल्प्यते, किञ्चिदन्यथेति तावता साधना-दिविभागोपपत्तेः । एतेन कार्यकारणविभागोऽपि व्याख्यात इति ॥

(वे०सू०मं०) अविद्याव्यतिरिक्ते वा दृष्टिसृष्टिरितीतरे ॥ ४२ ॥

अन्ये तु वस्तुतोऽनाद्येवाविद्याऽऽदि । तत्र दृष्टिसृष्टिर्नोपेयते, किं तु ततोऽन्यत्र प्रपञ्चमात्रे इत्याहुः ॥

(वे०सू०मं०) नन्वेवं श्रौतसर्गस्य कल्पकः को न कश्चन ॥
अध्यारोप्यापवादो हि निष्प्रपञ्चत्वसिद्धये ॥ ४३ ॥

---

यथेत्यादिना । किञ्चिदन्यथेति । किञ्चिदविद्यादिकम् । अन्यथा अ-नादित्वेन । कल्प्यते पूर्वपूर्वाविद्योपहितेनात्मनेत्यर्थः । तावता—कल्पनामा-त्रेणेत्यर्थः । ननु प्रत्यक्षे विषयस्य कारणतया घटादिदृष्टेः पूर्वमज्ञातो घ-टादिर्वाच्यः । अन्यथा कार्यकारणविभागो न स्यात् । तथा अविद्योपहि-तस्य चिदात्मन एकस्यैव स्वस्मिन् संसारकल्पकत्वे संसारवतो जीवस्यै-कत्वेन गुरुशिष्यविभागो देवतिर्यङ्मनुष्यादिविभागश्च न स्यादित्यत आह—एतेनेति । साधनादिविभागोपपत्तिकथनेनेत्यर्थः । व्याख्यात इति । वस्तुतः प्रत्यक्षे विषयस्याकारणत्वेऽपि स तत्कारणत्वेन कल्प्यते । तथा अन्यदपि स्वप्नभ्रमवदेव सर्वमूह्यमित्यर्थः ॥

कल्पकस्याविद्योपहितस्यानन्यपरिहाराय साधनादिविभागाञ्जस्या-य च दृष्टिसृष्टेस्संकोचमाह—अन्ये त्विति । वस्तुत इति । स्वरूपत इ-त्यर्थः । तर्हि दृष्टिसृष्टिः कुत्रापि नोपेया, मानाभावादिति शङ्कते—किं त्विति । स्वापप्रबोधयोः कार्यप्रपञ्चमात्रस्य प्रलयप्रभवप्रतिपादकब-हुश्रुतिसिद्धत्वाद् नैवमिति परिहरति—ततोऽन्यत्रेति । अविद्यादेस्स-काशादिति शेषः । मात्रपदं कात्स्न्यार्थकम् ॥

ननु 'दृष्टिसमये एव प्रपञ्चसृष्टिः' इति मतेऽपि दृष्टिशब्देन प्रत्यक्षप्रती-तिरेव विवक्षिता, न परोक्षप्रतीतिः । अपरोक्षप्रतीतेरेव विषयाविनाभूत-त्वेन प्रातिभासिकविषयसाधकत्वात् परोक्षप्रतीतेश्चातथात्वात्, तथा स्थिते

नन्वेवमपि श्रुतिमात्रप्रतीतस्य वियदादिसर्गतत्क्रमादेः कः कल्पकः ?। न कोऽपि। किमालम्बना तर्हि "आत्मन आकाशः सम्भूतः" इत्यादिश्रुतिः ?। निष्प्रपञ्चब्रह्मात्मैक्यावलम्बनेत्यवेहि। अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिर्भवतीति तत्प्रतिपत्त्युपायतया श्रुतिषु सृष्टिप्रलयोपन्यासः, न तात्पर्येणेति भाष्याद्युद्घो-

---

सति बाधकमाशङ्कते—नन्वेवमपीति। अविद्योपहितस्यात्मनः प्रत्यक्षवस्तुकल्पकत्वेऽपीत्यर्थः। 'यदि वियदादिसर्गश्श्रुत्या प्रत्यक्षेण च प्रतीतो भवेत् तदा प्रत्यक्षबलाद् घटादेरिव तस्यापि प्रातिभासिकस्य सिद्धिस्सम्भवेद्, न त्वेतदस्ति'इत्याशयेन मात्रपदं दत्तम्। वाय्वादिसङ्ग्रहार्थं प्रथममादिपदम्। वियदादिप्रलयतत्क्रमसङ्ग्रहार्थं द्वितीयमादिपदम्। क इति। कल्पको न सम्भवत्येवेत्यर्थः। कल्पकाभावे इष्टापत्तिमाह दृष्टिसृष्टिवादी—न कोऽपीति। तर्हि सृष्ट्यादिश्रुतिप्रतिपाद्यस्य वियदादिसृष्टितत्क्रमादेः शशशृङ्गायमाणतया श्रुतेरालम्बनाभावादप्रामाण्यं स्यादिति शङ्कते—किमिति। तात्पर्यविषयीभूतार्थस्य सत्त्वाद् नाप्रामाण्यापत्तिरिति परिहरति—निष्प्रपञ्चेति। ननु सृष्ट्यादिवाक्यानां श्रुतार्थपरित्यागेनाश्रुतार्थे तात्पर्यकल्पनमयुक्तम्। किं तु श्रुत्यनुसारेण वियदादिसर्गस्य, तत्कल्पकस्य च कल्पनमेव युक्तमित्यत आह—अध्यारोपेति।

यथा लोके गगनतत्त्वबोधनाय प्रवृत्तः कश्चित् प्रथमं नैल्यवैशाल्याद्यध्यारोपोपेतं गगनं ग्राहयित्वा पश्चाद् 'नेदं वस्तुतो नैल्यादियुक्तम्' इति तदपवादेन 'नीरूपं व्यापकमुदासीनं गगनतत्त्वम्'इति बोधयति, तथा वेदान्ता अपि प्रथमं 'यद् वियदादिसर्गप्रलयादिकारणं सृष्ट्यादिवाक्यैः प्रतीयते, तद् ब्रह्म'इत्यध्यारोपितसर्गादियुक्ततया ब्रह्म ग्राहयित्वा पश्चान्निषेधवाक्यैरध्यारोपितसर्गाद्यपवादेन निष्प्रपञ्चब्रह्मात्मैक्यं प्रतिपादयन्ति। तथा च सृष्ट्यादिवाक्यानां निषेधवाक्यापेक्षितनिषेध्यसमर्पकतया तदेकवाक्यताऽऽपन्नानां निष्प्रपञ्चब्रह्मप्रतिपत्तिप्रयोजनकत्वमेव, न तु स्वार्थसृष्ट्यादिप्रतिपादनमात्रेण चारितार्थ्यम्। अर्थवादादीनामिव तेषां स्वार्थप्रतिपादने फलाभावात्। निष्फलेऽर्थे वेदतात्पर्यायोगात्। अतो युक्तमे-

---

(१) "स्वाध्यायोऽध्येतव्यः" इति श्रुत्या सर्वस्य वेदस्य प्रयोजनवदर्थपर्यवसायित्वबोधनादिति भावः।

 

षः । व्यर्थस्तर्हि तात्पर्याभावे वियत्प्राणपादयोर्वियदादिसर्गतत्क्रमादिविषयश्रुतीनां परस्परविरोधपरिहाराय यत्नः ? । न व्यर्थः । न्यायव्युत्पत्त्यर्थमभ्युपेत्य तात्पर्यं तत्प्रवृत्तेः ।

(वे०सू०सं०) सूत्रेषु सृष्टिचिन्ता तु कृत्वाचिन्ताप्रदर्शनम् ॥
स्वाम्रवत्फलसंवादः शुद्धिर्वा कर्मणां फलम् ॥४४॥

उक्तं हि शास्त्रदर्पणे—
'श्रुतीनां सृष्टितात्पर्यं स्वीकृत्येदमिहेरितम् ।
ब्रह्मात्मैक्यपरत्वात्तु तासां तन्नैव विद्यते ॥' इति ।

---

व स्वार्थत्यागेन निष्प्रपञ्चब्रह्मात्मैक्ये तात्पर्यकल्पनम् । तज्ज्ञानस्य मुक्तिफलकतायाश्श्रुतिसिद्धत्वात् । एवं च प्रथममध्यारोपेण सप्रपञ्चब्रह्मप्रतिपत्तिर्भवति । पश्चात् प्रपञ्चापवादेन तस्यैव ब्रह्मणो निष्प्रपञ्चत्वप्रतिपत्तिर्भवति । पूर्वप्रतिपत्तिश्चोत्तरप्रतिपत्तेश्शेष एव, न स्वतन्त्रेति निष्कर्षः । प्रपञ्चस्तु भाष्यादिष्वेव द्रष्टव्य इत्यर्थः ।

शङ्कते—व्यर्थ इति । तर्हीत्यस्य व्याख्या—तात्पर्याभावे इति । वियदादिसर्गतत्क्रमादाविति शेषः । यत्नो व्यर्थः । सूत्रकारभाष्यकारयोरिति शेषः । तात्पर्याविषये विद्यमानस्यापि श्रुतिविरोधस्याकिञ्चित्करत्वादिति भावः । परिहरति—न व्यर्थ इति । न्यायेति । वियत्प्राणपादद्वयगताधिकरणेषु निरूपिता ये सिद्धान्तन्यायाः, तेषां बोधार्थमित्यर्थः । तेषां न्यायानां सृष्ट्यादिवाक्यार्थाविरोधनिर्णयायानपेक्षितानामपि श्रुतितात्पर्यविषये क्वचिद् एव विरोधप्रसक्तौ तत्समाधानायोपयोगस्तेषां भविष्यतीत्याशयेन प्रवृत्तसूत्रकारादियत्नोऽर्थवानित्यर्थः । तत्प्रवृत्तेरिति । वियत्प्राणपादयोः प्रवृत्तेरित्यर्थः ।

सृष्ट्यादिश्रुतीनां स्वार्थे तात्पर्यमभ्युपेत्यैव वियत्पादादिप्रवृत्तिरित्यत्र कल्पतरुकारसम्मतिमाह—उक्तं हीति । इदमिति । विरोधसमाधानमित्यर्थः । इहेति । वियत्प्राणपादयोरित्यर्थः । तुशब्दोऽवधारणे । तासां सृष्ट्यादिश्रुतीनां ब्रह्मात्मैक्यपरत्वादेव तत् तात्पर्यं नास्त्येव । तासां स्वार्थेऽपि तात्पर्ये वाक्यभेदप्रसङ्गात्, स्वार्थे फलाभावाच्च इत्यर्थः ।

एवं दृष्टिसृष्टिवादे सृष्ट्यादिश्रुतीनां निरालम्बनत्वं परिहृत्य

ज्योतिष्टोमादिश्रुतिबोधितानुष्ठानात् फलसिद्धिः स्वाप्न-श्रुतिबोधितानुष्ठानप्रयुक्तफलसंवादतुल्या । ज्योतिष्टोमादिश्रुतीनां च सत्त्वशुद्धिद्वारा ब्रह्मणि तात्पर्यान्नाप्रामाण्यमित्यादिदृष्टिसृष्टि-व्युत्पादनप्रक्रियाप्रपञ्चस्त्वाकरग्रन्थेषु द्रष्टव्यः । अयमेको दृष्टि-समसमया विश्वसृष्टिरिति दृष्टिसृष्टिवादः ।

(वे०सू०मं०) दृष्टिरेव हि विश्वस्य सृष्टिरित्यपरा विधा ॥
ज्ञानस्वरूपमेवाहुरित्येतस्मृतियानिकाः ॥ ४५ ॥

अन्यस्तु दृष्टिरेव विश्वसृष्टिः । दृश्यस्य दृष्टिभेदे प्रमाणा-भावात् ।

---

कर्मोपासनावाक्यानामपि निरालम्बनत्वं परिहरति—ज्योतिष्टोमादीत्या-दिना । ज्योतिष्टोमादिश्रुत्या स्वर्गादिसाधनत्वेन बोधितस्य यागादेर-नुष्ठानात् स्वर्गादिफलसिद्धिरित्यर्थः । स्वाप्नेति । स्वप्ने हि कश्चित् कदाचिज्ज्योतिष्टोमादिश्रुतिं कल्पयित्वा ततः साधनविशेषमुपलभ्य तदनुष्ठा-नात् फलं लभते, तत्तुल्यं जागरणेऽपि स्वर्गादिफललम्भनमित्यर्थः । व-स्तुतस्तु श्रुतिमात्रप्रतीतवियदादिसर्गतत्क्रमादेरिव श्रुतिमात्रप्रतीतस्वर्गा-दिफलस्याप्यसत्त्वमेवात्राभिप्रेतम् । कल्पकाभावस्य तुल्यत्वादिति बोध्यम् । तर्हि तासामप्रामाण्यं स्यादिति, नेत्याह—ज्योतिष्टोमादिश्रुतीनां चेति । कर्मवाक्यैरुपासनावाक्यैश्च विहितानि कर्मोपासनान्यनुतिष्ठत-स्सत्त्वशुद्धिर्भवति । शुद्धसत्त्वस्य चाधिकारिणो वेदान्तशास्त्रं ब्रह्मप्रमितिं जनयति । तथा च कर्मोपासनाकाण्डयोरधिकारिसम्पादनद्वारा ब्रह्मप्रमि-तिशेषत्वात् तयोस्तत्रैव तात्पर्यम्, न स्वार्थे स्वर्गसाधनत्वादाविति नाप्रा-माण्यप्रसङ्ग इति भावः । न च वेदानामशेषतो ब्रह्मप्रतिपत्तिपरत्वे नास्ति मानमिति वाच्यम् । "सर्वे वेदा यत्पदमामनन्ति" । "तमेतं वेदानुवचनेन ब्रा-ह्मणा विविदिषन्ति" इत्यादिश्रुतिसहस्रस्य तत्र मानत्वादित्यादिकमभिप्रे-त्याह—इत्यादिदृष्टिसृष्टिव्युत्पादनप्रक्रियाप्रपञ्चस्त्विति । अयमेको दृष्टिसृष्टिवाद इति सम्बन्धः । अन्यस्तु सिद्धान्तमुक्तावल्यादिदर्शितो दृष्टि-सृष्टिवाद इति सम्बन्धः ॥

द्वितीयं निरूपयति—दृष्टिरेवेति । दृष्टिर्दर्शनं स्वप्रकाशज्ञानस्वरूपमित्य-

'ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः ॥' इति—
स्मृतेश्चेति सिद्धान्तमुक्तावल्यादिदर्शिनो दृष्टिसृष्टिवादः ।

(वे०सू०मं०) सृष्टदृष्टिं परे प्राहुः संस्काराद्यनपेक्षणात् ॥
तथाऽपि विश्वं मिथ्यैव बाधत्वाच्छ्रुतिमाननः ॥४६॥

द्विविधेऽपि दृष्टिसृष्टिवादे मनःप्रत्ययमलभमानाः के चिदाचार्याः सृष्टदृष्टिवादं रोचयन्ते । श्रुतिदर्शितेन क्रमेण परमेश्वरसृष्टमज्ञातसत्तायुक्तमेव विश्वं तत्तद्विषयप्रमाणावतरणे तस्य तस्य दृष्टिसिद्धिरिति ।

न चैवं प्रपञ्चस्य कल्पितत्वाभावे श्रुत्यादिप्रतिपन्नस्य सृष्टिप्रलयादिमतः प्रत्यक्षादिप्रतिपन्नार्थक्रियाकारिणश्च तस्य

---

र्थः । एतदुक्तं भवति—'दृश्यप्रपञ्चतादात्म्यापन्नं ज्ञानस्वरूपमेव प्रपञ्चस्याध्यक्षणावच्छिन्नं सत् तस्य सृष्टिरित्युच्यते' इति । ननु दृग्दृश्ययोर्भिन्नयोरभिन्नसत्ताकत्वरूपं तादात्म्यमसिद्धमित्याशङ्क्याह—दृश्यस्येति । दृष्टिर्ज्ञानं तस्माद् भेदे भिन्नसत्ताकत्वे इत्यर्थः । अन्यथा 'सन् घटः' इत्यादिरूपेण सद्रूपस्य ज्ञानस्य घटादेश्च सामानाधिकरण्यप्रत्ययो न स्यादिति भावः । स्मृतौ—एतदिति । प्रत्यक्षसिद्धमित्यर्थः । अर्थस्वरूपमिति । अर्थपदं स्वतन्त्रपरम् । कुदृष्टय इति । कुतर्कदूषितज्ञाना इत्यर्थः । तथा च एतद् जगद् अन्ये कुदृष्टयो भ्रान्ताः ज्ञानस्वरूपसत्ताऽपेक्षया भिन्नसत्ताकं पश्यन्तीत्युत्तरार्धेन भेददृष्ट्यपवादाच्च तयोरभिन्नसत्ताकत्वसिद्धिरित्यर्थः । स्मृतेश्चेति । चकाराच्छ्रुतेश्चेत्यर्थः । "चिद्धीदं सर्वम्" इत्यादिश्रुतिरुदाहर्तव्या ॥

मनःप्रत्ययो मनसो विश्वासः प्रामाणिकत्वनिश्चयः, तमलभमाना इत्यर्थः । तदलाभे च हेतुर्जाग्रत्प्रपञ्चस्यापि प्रातिभासिकत्वाभ्युपगमः, वियदादिसर्गाद्यपलापः, कर्मोपासनाकाण्डार्थानुष्ठानाधीनस्वर्गलोकब्रह्मलोकाद्यपलापः, जाग्रति चक्षुराद्यनुविधानप्रतीतेर्भ्रममात्रत्वाभ्युपगम इत्यादिरिति द्रष्टव्यम् । दृष्टिसृष्टिपदं व्याचष्टे—श्रुतिदर्शितेनेत्यादिना । अपसिद्धान्तं शङ्कते—न चैवमिति । उक्तरीत्या प्रामाणिकत्वे प्रपञ्चस्य स्वीकृते सतीत्यर्थः । कल्पितत्वाभावे सत्यत्वमेवाभ्युपगतं स्यादिति सम्बन्धः ।

सत्यत्वमेवाभ्युपगतं स्यादिति वाच्यम् । शुक्तिरजतादिवत् सम्प्रयोगसंस्कारदोषरूपेण, अधिष्ठानज्ञानसंस्कारदोषरूपेण वा कारणत्रयेणाजन्यतया कल्पनासमसमयत्वाभावेऽपि ज्ञानैक-निवर्त्यत्वरूपस्य, सदसद्विलक्षणत्वरूपस्य, प्रतिपन्नोपाधिगतत्रैका-लिकनिषेधप्रतियोगित्वरूपस्य वा मिथ्यात्वस्याभ्युपगमात् ।

---

प्रपञ्चस्सत्यः, श्रुतिसिद्धत्वाद्, ब्रह्मवत् । न च तस्य प्रत्यक्षसिद्धस्य श्रु-तिसिद्धत्वमसिद्धमिति वाच्यम् । तस्य स्वरूपेण प्रत्यक्षसिद्धत्वेऽपि सृष्टि-प्रलयादिविशिष्टतया श्रुतिस्मृत्यादिसिद्धत्वात् । तथा—प्रपञ्चः सत्यः, अ-र्थक्रियाकारित्वात्, सृष्ट्याद्यर्थक्रियाकारिब्रह्मवत् । न च हेत्वसिद्धिः । पृथिवीजलादौ तस्य प्रत्यक्षादिसिद्धत्वादिति भावः । प्रपञ्चस्य ब्रह्मवत् परमार्थसत्यत्वे हेतुद्वयमप्रयोजकम् । अतो नापसिद्धान्तापत्तिरित्याशयेन परिहरति—शुक्तिरजतादिवदिति । वियदादिप्रपञ्चे शुक्तिरजतादाविव कल्पनासमसमयत्वस्य दृष्टिसृष्टिवाद्यभिमतस्याभावेऽपि पारमार्थिकसत्यत्ववि-रुद्धस्य मिथ्यात्वस्याभ्युपगमादिति सम्बन्धः । वियदादिप्रपञ्चे कल्पनास-मसमयत्वाभावे कारणत्रयाजन्यत्वं हेतुः । सम्प्रयोगस्य सर्वभ्रमव्यापित्वा-भावात् सम्प्रयोगस्थाने अधिष्ठानसामान्यज्ञानं निक्षिपति—अधिष्ठानज्ञा-नेति । मिथ्यात्वनिर्वचनं त्रेधा दर्शयति—ज्ञानैकेत्यादिना । अधिष्ठा-नतत्त्वज्ञानमात्रनिवर्त्यत्वरूपस्येत्यर्थः । सद्विलक्षणत्वमात्रम् असति अतिव्याप्त-म् । असद्विलक्षणत्वमात्रं सति ब्रह्मण्यतिव्याप्तम् । अत उभयोपादान-म् । प्रपञ्चस्य तूभयविलक्षणत्वं प्रमाणसिद्धमिति भावः । प्रतिप-न्नेति । ब्रह्मणि प्रतिपन्नस्य प्रतीतस्यारोपितस्येति यावत् । ब्रह्मोपाधिर-धिष्ठानम्, तत्र ब्रह्मणि तस्य त्रैकालिको निषेधः श्रुतिगम्योऽत्यन्ताभावोऽस्ति, तत्प्रतियोगित्वं तस्याक्षतमिति भावः । तत्राद्यलक्षणे घटादेस्सत्यत्वपक्षेऽपि 'घटादिकं नाशयामि' इत्यादिज्ञाननिवर्त्यत्वसत्त्वादेकपदं दत्तम् । ज्ञानमात्रनि-वर्त्यत्वस्य च सत्यत्ववादिभिरनङ्गीकाराद् न सत्यत्वपक्षाविशेषः । तथा प्रपञ्चे परैस्सद्रूपत्वाङ्गीकारेण सद्विलक्षणत्वानङ्गीकाराद् द्वितीयलक्षणेऽपि न सत्यत्वपक्षाविशेषः । प्रपञ्चस्य तदुपादाने ब्रह्मणि सिद्धान्त इव घटा-द्युपादाने वस्तुनि घटादेस्त्रैकालिकनिषेधस्य परैरनङ्गीकाराद् न तृतीयल-

सत्यत्वपक्षे प्रपञ्चे उक्तरूपमिथ्यात्वाभावेन ततो भेदात् ॥

(वे०सू०मं०) अहङ्कारादिमिथ्यात्वं नन्वेवं सम्प्रसिध्यति ॥
तदध्यासाय टीकादौ व्यर्था कारणकल्पना ॥ ४७ ॥

नन्वेवमहङ्कारतद्धर्माणामपि उक्तरूपमिथ्यात्वं वियदादिवत् कल्पितत्वाभावेऽपि सिध्यतीति भाष्यटीकाविवरणेषु तदध्यासे कारणत्रितयसम्पादनादियत्नो व्यर्थ इति चेद्,

(वे०सू०मं०) अत्राहुः साक्षिवेद्यत्वादहङ्कारस्पृहादिकम् ॥
प्रातिभासिकमेवेति चित्सुखाचार्ययोगिनः ॥ ४८ ॥

अहङ्कारादीनामपि केवलसाक्षिवेद्यतया शुक्तिरजतवत् प्रातिभासिकत्वमभिमतमिति चित्सुखाचार्याः ॥

(वे०सू०मं०) चैतन्यस्याप्रमाणस्य प्रमाणत्वेन कीर्तनात् ॥
तं तु रामाद्वयाचार्याः प्रौढिवादं प्रचक्षते ॥ ४९ ॥

अभ्युपेत्यवादमात्रं तत् । 'अद्वितीयाधिष्ठानब्रह्मात्मप्रमाणस्य चैतन्यस्य' इत्यादितत्त्रयकारणत्रितयसम्पादनग्रन्थस्य चैतन्यस्य

---

क्षणेऽपि परमताविशेष इत्याशयेनाह—सत्यत्वपक्षे इति ।

दृष्टिसृष्टिवाद्येव शङ्कते—नन्वेवमिति । ज्ञानैकनिवर्त्यत्वादेर्मिथ्यात्वस्वरूपत्वे सतीत्यर्थः । अहङ्कारतद्धर्माणामप्युक्तरूपमिथ्यात्वं वियदादिवत् सिध्यतीति सम्बन्धः । कल्पितत्वाभावेऽपीति । प्रातिभासिकत्वाभावेऽपीत्यर्थः । तत्पदमहङ्कारादिपरम् । चिदात्मनोऽधिष्ठानत्वादिसमर्थनमादिपदार्थः । अभिमतमिति । भाष्यकारादीनामिति शेषः । तथा च तत्सम्पादनादियत्नस्सफल इति भावः ।

अहङ्कारतद्धर्माणां केवलसाक्षिवेद्यत्वेऽपि शुक्तिरजतादिवत् प्रातिभासिकत्वं वक्तुमयुक्तम् । व्यवहारकाले बाधानुपलम्भात् । अतो वस्तुगत्या तेषां प्रातिभासिकत्वाभावेऽपि तदभ्युपेत्य कारणत्रयसम्पादनादियत्नस्तैः कृत इति परिहारान्तरमाह—अभ्युपेत्येति । तत्—भाष्यादि । प्रातिभासिकत्वमभ्युपेत्य वचनमेव, न वस्तुगतिमनुरुध्येत्यर्थः । 'अद्वितीयाधिष्ठानब्रह्मात्मनि प्रमाणं चैतन्यम्' इति प्रतिपादयतष्टीकाविवरणादिगतस्य ग्रन्थस्य प्रौढिवादत्वस्य स्पष्टत्वादिति सम्बन्धः । प्रौढिवादत्वे उपपत्तिमाह—चैतन्यस्य प्रमाकरणत्वे इति । ब्रह्मप्रमाकरणत्वे इत्यर्थः । औ-

प्रमाकरणत्वे वेदान्तकरणत्वादिकल्पनाभङ्गप्रसङ्गेन प्रौढिवादत्वस्य स्फुटत्वादिति रामाद्वयाचार्याः ॥ ७ ॥

(वे०सू०मं०) ननु प्रपञ्चो मिथ्यात्वात्कथमर्थक्रियाक्षमः ॥

(८)ननु दृष्टिसृष्टिवादे, सृष्टिदृष्टिवादे च मिथ्यात्वसम्प्रतिपत्तेः कथं मिथ्याभूतस्यार्थक्रियाकारित्वम् ? ।

(वे०सू०मं०) केचित्स्वप्नवदत्राहुः समसत्ताकृतक्रियाम् ॥ ५० ॥

स्वप्नवदिति ब्रूमः । ननु स्वाप्नजलादिसाध्यावगाहनादिरूपाऽर्थक्रिया असत्यैव, किं तु जाग्रज्जलादिसाध्या सा सत्या ? अविशिष्टमुभयत्रापि स्वसमानसत्ताकार्थक्रियाकारित्वमिति केचित् ॥

---

पनिषदात्मश्रुत्यनुसारेण वेदान्तानामेव ब्रह्मप्रमाकरणत्वकल्पनेत्यर्थः । वेदान्तवाक्यजन्यब्रह्मप्रमाया अपरोक्षत्वकल्पनमादिपदार्थः ॥

प्रपञ्चस्य परमार्थत्वे पूर्वमर्थक्रियाकारित्वमप्रयोजकमिति सूचितम्, तदयुक्तम् । मिथ्याभूतस्य शुक्तिरूप्यादेः कटकाद्यर्थक्रियाकारित्वादर्शनादिति मत्वा शङ्कते—नन्विति । अर्थक्रियाकारित्वं सत्त्वव्यभिचारीति परिहरति—स्वप्नवदिति । 'स्वाप्नजलादाववगाहनादिरूपार्थक्रियाकारित्वमस्ति तत्र सत्यत्वं नास्ति' इति व्यभिचार इत्यर्थः । नन्वर्थक्रियाकारित्वमात्रं न हेतुः, किं तु सत्यार्थक्रियाकारित्वम् । तच्च स्वाप्नजलादौ नास्तीति न व्यभिचार इति शङ्कते—नन्विति । असत्येव न तु सतीत्यर्थः । असत्यैवेति पाठे असत्या, न तु सत्येत्यर्थः । तर्हि 'प्रपञ्चस्सत्यः, सत्यार्थक्रियाकारित्वाद्' इत्यत्र हेत्वसिद्धिमाह सिद्धान्ती—किं त्विति । जाग्रज्जलादिसाध्या साऽर्थक्रिया सत्या किमिति सम्बन्धः । तुशब्दोऽवधारणे । किंशब्द आक्षेपार्थः । सा सत्या न भवत्येवेत्यर्थः । अतो हेत्वसम्प्रतिपत्तिपरिहारायार्थक्रियाकारित्वमात्रं सत्यत्वप्रयोजकं वाच्यम् । तच्च स्वाप्नजलादावस्त्येवेति व्यभिचारतादवस्थ्यमिति भावः । ननु स्वाप्नजलादौ सत्यार्थक्रियाकारित्वाभावेऽपि स्वसमानसत्ताकार्थक्रियाकारित्वमस्त्येव, तर्हि जाग्रत्प्रपञ्चस्यापि तदस्तु, नैतावता त्वदभिमतपरमार्थसत्यत्वं सिध्यतीत्याशयेन परिहरति—अविशिष्टमिति । उभयत्रापीति । जाग्रत्स्वप्नावस्थाद्वयेऽपीत्यर्थः । स्वपदमर्थक्रियाहेतुभूतवस्तुपरम् ॥

(वे०सू०मं०) स्वप्नोत्थभयकम्पादेर्जागरेऽप्यनुवर्तनात् ॥
अद्वैतविद्याचार्याणां समसत्ता न संमता ॥ ५१ ॥

अद्वैतविद्याचार्यास्त्वाहुः—स्वाप्नपदार्थानां न केवलं प्रबोधबाध्यार्थक्रियामात्रकारित्वम् । स्वाप्नाङ्गनाभुजङ्गमादीनां तदबाध्यसुखभयादिजनकत्वस्यापि दर्शनात् । स्वाप्नविषयजन्यस्यापि हि सुखभयादेः प्रबोधानन्तरं न बाधोऽनुभूयते, प्रत्युत प्रबोधानन्तरमपि मनःप्रसादशरीरकम्पनादिना सह तदनुवृत्तिदर्शनात् प्रागपि सत्त्वमेवावसीयते । अत एव प्राणिनां पुनरपि

---

'स्वप्नवदिति ब्रूमः' इति समाधाने 'स्वप्ने तावदर्थक्रिया सत्या न भवति, जागरे तु सा सत्या' इति वैषम्यशङ्कायां प्रतिबन्द्या केषाञ्चित् समाधानं दर्शितम् । इदानीं स्वाप्नादिपदार्थानामपि सत्यार्थक्रियाकारित्वदर्शनाद् न दृष्टान्तवैषम्यमिति परिहारान्तरमाह—अद्वैतेति । प्रबोधबाध्याऽर्थक्रिया प्रातिभासिकी, प्रबोधाबाध्याऽर्थक्रिया स्वप्नकालीनाऽपि व्यावहारिकसत्यैवेति विभागः । तथा च स्वाप्नपदार्थानां प्रातिभासिकार्थक्रियाकारित्वमात्रं केवलं न भवति, किंतु व्यावहारिकार्थक्रियाकारित्वमप्यस्ति । स्वप्नाङ्गनादीनां प्रबोधाबाध्यसुखजनकत्वस्य, स्वप्नभुजङ्गमादीनां प्रबोधाबाध्यभयकम्पादिजनकत्वस्य च दर्शनात् । एवं च व्यावहारिकजाग्रत्पदार्थानां व्यावहारिकार्थक्रियाकारित्वं कैमुतिकन्यायसिद्धमिति मिथ्यात्वपक्षे नार्थक्रियाकारित्वानुपपत्तिरिति भावः । ननु स्वाप्नभुजङ्गमाङ्गनादिरूपविषयाणां प्रबोधबाध्यत्वदर्शनात्तत्कार्यभयसुखादीनां कथं प्रबोधाबाध्यत्वमित्याशङ्क्याह—स्वाप्नविषयेति । न हि प्रबोधानन्तरं 'स्वप्नकाले सुखभयादिकं मम नाभूद्' इति सुखभयादेर्बाधोऽनुभूयते इत्यर्थः । प्रत्युतेति । वर्तमानसुखानुभवकार्यमनःप्रसादः, वर्तमानभयदुःखानुभवकार्यगात्रकम्पादिः । ततश्च प्रबोधानन्तरमनुवर्तमानत्वे गमकं मनःप्रसादादि । तथा च तदनन्तरमनुवर्तमानस्य भयादेस्सत्यत्वाव प्रबोधात्प्रागपि तस्य सत्यत्वं निश्चीयते इत्यर्थः । स्वप्नकालीनमपि सुखभयादिकं जाग्रत्सुखादिवद्व्यावहारिकसत्यमेव, न प्रातिभासिकम् । प्रबोधानन्तरं बाधाभावात्, तदनन्तरमप्यनुवर्तमानत्वाच्चेति निष्कर्षः । स्वाप्नसुखभयादेस्सत्यत्वे गमकान्तरमाह—अत एवेति । स्वाप्नभयादेरप्रातिभासिकत्वादेवेत्यर्थः । रागद्वेषयोः सत्यसुखदुःखगोचरत्वनियमादिति

सुखजनकविषयगोचरस्वप्ने वाञ्छा, अतादृशे च स्वप्ने प्रद्वेषः। सम्भवति च स्वप्नेऽपि ज्ञानवद् अन्तःकरणवृत्तिरूपस्य सुखभयादेरुदयः। न च स्वाप्नाङ्गनादिज्ञानमेव सुखादिजनकम्, तच्च सदेवेति वाच्यम्। तस्यापि दर्शनस्पर्शनादिवृत्तिरूपस्य स्वप्नप्रपञ्चसाक्षिण्यध्यस्तस्य कल्पनामात्रसिद्धत्वात्। न ह्युपरतेन्द्रियस्य चक्षुरादिवृत्तयः सत्याः सम्भवन्ति। न च तद्विषयापरोक्ष्यमात्रं सुखजनकम्, तच्च साक्षिरूपं सदेवेति वाच्यम्। दर्शनात् स्पर्शने कामिन्याः, पदा स्पर्शनात्पाणिना स्पर्शने; भुजङ्गस्यामर्मस्थले स्पर्शनाद् मर्मस्थले स्पर्शने सुखविशेषस्य भयवि-

---

भावः। ननु स्वप्ने सर्वस्य वासनामात्रत्वात् कथं सत्यस्य भयादेः सम्भव इत्यत आह—सम्भवति चेति। "तदेतत्सत्त्वं येन स्वप्नं पश्यति" इति श्रुत्यनुसारेण कल्पतरुकारैर्मानसवृत्तिरूपज्ञानस्य स्वीकाराव तद्वदन्तःकरणपरिणामरूपभयादेर्व्यावहारिकस्य सम्भवः। तद्व्यतिरिक्तपदार्थानामेव वासनापरिणामत्वेन प्रातिभासिकत्वाभ्युपगमादिति भावः। ननु स्वाप्नभयादिकं न भुजङ्गमाङ्गनादिपदार्थजन्यम्, किं तु तद्गोचरज्ञानजन्यम्। तथा च ज्ञानस्य सत्त्वादसत्यात् सत्यस्यापि कार्यस्य जन्म स्वप्ने दृष्टमित्यनुपपन्नमिति शङ्कते—न चेति। तच्च सदेवेति वदता वक्तव्यम्—किं तद् मनोमात्रजन्यवृत्तिरूपम्, किं वा चक्षुरादिजन्यवृत्तिरूपम्, केवलसाक्षिरूपं वा?। आद्येऽपि किं वृत्तिमात्रं भयादिहेतुः, उत स्वाप्नभुजङ्गमादिरूपविषयविशेषितम्?। नाद्यः। यत्किञ्चिद्गोचरवृत्तिज्ञानादपि भयादिप्रसङ्गात्। न द्वितीयः। वृत्तिमात्रस्य सत्यत्वेऽपि विषयस्यासत्यतया तद्विशिष्टस्यापि प्रातिभासिकत्वात्। तथा च प्रातिभासिकज्ञानाद् व्यावहारिकार्थक्रियोत्पत्तौ तदुदाहरणं भवत्येवेति मत्वा प्रथमविकल्पत्रयमध्ये द्वितीयं दूषयति—तस्यापीति। ज्ञानस्यापीत्यर्थः। ननु चक्षुरादिजन्यमेव दर्शनस्पर्शनादिवृत्तिरूपं सत्यज्ञानं कुतो नोपेयते तत्राह—न हीति। तृतीयं शङ्कते—न च तदिति। दूषयति—दर्शनादित्यादिना। कामिन्याः दर्शनात्तस्याः स्पर्शने, तस्या एव पदा स्पर्शनाव पाणिना स्पर्शने सुखविशेषस्यानुभवसिद्धत्वेनेति सम्बन्धः। भुजङ्ग-

शेषस्य चानुभवसिद्धत्वेन स्वप्नेऽपि तत्तत्सुखभयादिविशेषस्य कल्पितदर्शनस्पर्शनादिवृत्तिविशेषजन्यत्वस्य वक्तव्यत्वादिति ।

(वे०सू०मं०) अन्तर्बाह्यपुमध्यस्ततमसोऽर्थक्रियेक्षणात् ॥
दीपादिनाऽस्यतादृष्ट्येर्युक्तमेतदितीतरे ॥ ५२ ॥

तथा जागरे घटादिप्रकाशनक्षमतत्रत्यपुरुषान्तरनिरीक्ष्यमाणालोकवत्यपवरके सद्यः प्रविष्टेन पुंसा कल्पितस्य सन्तमसस्य प्रसिद्धसन्तमसोचितार्थक्रियाकारित्वं दृष्टम्। तेन तं प्रति घटाद्यावरणम्, दीपाद्यानयने तदपसरणम्, तन्नयने पुनरावरणमित्यादेर्दर्शनादित्यपि केचित् ॥

(वे०सू०मं०) अन्ये तु हेतुसत्यत्वापेक्षा नार्थक्रियां प्रति ॥
मरीचितोये तोयत्वजात्यभावान्न तत्क्रिया ॥ ५३ ॥

अन्ये तु पानावगाहनाद्यर्थक्रियायां जलादिस्वरूपमात्रमु-

---

मस्यामर्मस्थले पुच्छादौ स्पर्शनाद् मर्मस्थले शिरसि स्पर्शने च भयविशेषस्यानुभवसिद्धत्वेनेति सम्बन्धः । स्वप्नेऽपीति । यथा जागरे सुखविशेषभयविशेषादेर्दर्शनस्पर्शनादिरूपवृत्तिविशेषविशिष्टविषयापरोक्ष्यजन्यत्वं न तु विषयापरोक्ष्यमात्रजन्यत्वम्, तन्मात्रस्यैकरूपत्वेन कार्यविशेषाप्रयोजकत्वात्, तथा स्वप्नेऽपि । तथा च तत्तद्विषयापरोक्ष्यमात्रस्य साक्षिरूपस्य सत्यत्वेऽपि सुखभयादिजनकस्य प्रातिभासिकदर्शनस्पर्शनादिवृत्तिविशेषविशिष्टस्य तत्तद्विषयापरोक्ष्यस्य प्रातिभासिकत्वात् प्रातिभासिकाद्व्यावहारिकसुखभयादिसम्भव इत्यर्थः ।

एवं स्वप्नावस्थायामसत्यात् सत्यार्थक्रियामुदाहृत्य जागरेऽपि तामुदाहरति——तथेति । प्रकाशनक्षमो यः तत्रत्यैरपवरकस्थैः पुरुषान्तरैर्निरीक्ष्यमाणालोकः, तद्वत्यपीत्यर्थः । अपवरकं स्वल्पगृहम् । तत्रत्यालोकासत्त्वशङ्काव्यावृत्तये पुरुषान्तरनिरीक्ष्यमाणत्वविशेषणम् । दृष्टमित्येतत् प्रपञ्चयति—तेनेति । सन्तमसेनेत्यर्थः । अपिशब्दस्य तथा जागरेऽपीति सम्बन्धः ॥

अन्ये त्विति । जगत्सत्यत्ववादिभिरपि हि 'अर्थक्रियाकारित्वमेव सत्त्वम्' इति वक्तुं न शक्यते । अर्थक्रियानुत्पत्तिदशायां घटादेरस-

पयोगि, न तद्गतं सत्यत्वम् । तस्य कारणत्वतदवच्छेदकत्वयोरभावादिति किं तेन । न चैवंसति मरुमरीचिकोदकशुक्तिरजतादेरपि प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वप्रसङ्गः । 'मरीचिकोदकादावुदकत्वादिजातिर्नास्तीति तद्विषयकभ्रमस्य उदकशब्दोल्लेखित्वं तदुल्लेखिपूर्वानुभवसंस्कारजन्यत्वप्रयुक्तम्' इति तत्त्वशुद्धिकारादिमते तत्तदर्थक्रियाप्रयोजकोदकत्वादिजात्यभावादेव तदप्रसङ्गात् ।

---

त्यत्वप्रसङ्गात् । किं तु 'सत्त्वमर्थक्रियाप्रयोजकम्' इति वक्तव्यम् । तथा च किं सत्त्वमर्थक्रियाकारणमभिप्रेतम्, किं वा कारणताऽवच्छेदकम् ? । नोभयथाऽपीत्याह—पानेत्यादिना । जलादिपदं जलत्वादेरपि सङ्ग्राहकं बोध्यम् । उपयोगीति । जलादिस्वरूपं कारणतया, जलत्वादिस्वरूपं कारणताऽवच्छेदकतयेति विभागः । मात्रपदव्यवच्छेद्यमाह—न तद्गतमिति । सत्यत्वस्य जलादिस्वरूपातिरिक्ततया कारणत्वाभावाद्, अतिप्रसक्ततया कारणताऽवच्छेदकत्वाभावाच्चेत्यर्थः । किं तेनेति । सत्यत्वेनेत्यर्थः । तथा च सत्यत्वाभावेऽपि प्रपञ्चस्यार्थक्रियाकारित्वसम्भवाद् न मिथ्यात्वविरोध इति भावः । ननु सत्यत्वस्य तत्तदर्थक्रियाकारितायामतिप्रसक्तत्वेऽप्यर्थक्रियाकारित्वसामान्ये सत्त्वमनतिप्रसक्तत्वादवच्छेदकमेव । अन्यथा बाधकमाशङ्क्ते—न चैवंसतीति । सत्त्वस्य कारणतासामान्यानवच्छेदकत्वे सतीत्यर्थः । 'एवं सति प्रसङ्ग इति न च'इत्यत्र हेतुमाह—मरीचिकोदकादाविति । मरुभूमिसंसृष्टासु मरीचिकासु समारोपितं तोयं मरीचिकोदकम्, तस्य तोयाभासत्वात् तत्र तोयत्वं नास्ति । कथं 'तोयमिदम्' 'उदकमिदम्'इतिशब्दोल्लेखिप्रत्यय इत्याशङ्क्य तस्यान्यथासिद्धिमाह—तद्विषयकभ्रमस्येति । मरीचिकोदकविषयकभ्रमस्येत्यर्थः । उदकशब्दोल्लेखी यः पूर्वानुभवस्सत्योदकविषयकः, तज्जन्यसंस्कारजन्यत्वान्मरीचिकोदकस्य तत्प्रयुक्तं तच्छब्दोल्लेखित्वमित्यर्थः । प्रयोजकेति । प्रसिद्धोदकस्य उचिता अर्थक्रिया पानादिरूपा । तस्यामुदकत्वजातिः प्रयोजिका । उदकादन्यत्र पानादेरदर्शनात् । तथा प्रसिद्धरजतादेरुचिताऽर्थक्रिया कटकादिलक्षणा । तत्र च रजतत्वादिकं प्रयोजकम् । मृदादौ कटकाद्यर्थक्रियाऽदर्शनादिति भावः । तदप्रसङ्गादिति ।

(वे०सू०मं०) अन्ये तु जातिरस्त्यत्र काचिदर्थक्रियाऽपि च ॥
हेतूच्छेदेन बाधेनानध्यासेन च नाखिला ॥ ५४ ॥

तत्राप्युदकत्वादिजातिरस्ति । अन्यथा तद्वैशिष्ट्योल्लेखिभ्रमाविरोधाद्, उदकाद्यर्थिनस्तत्र प्रवृत्त्यभावप्रसङ्गाच्चेति प्रातिभासिके पूर्वदृष्टसजातीयत्वव्यवहारानुरोधिनां मते क्वचिदधिष्ठानविशेषज्ञानेन समूलाध्यासनाशात्, क्वचिदधिष्ठानसामान्यज्ञानोपरमेण केवलाध्यासनाशात्, क्वचित् गुञ्जापुञ्जादौ चक्षुषा वह्न्याद्यध्यासस्थले दाहपाकादिप्रयोजकस्योष्णस्पर्शादेरनध्यासाच्च तत्र तत्रार्थक्रियाभावोपपत्तेः । क्वचित् कासां चिदर्थक्रियाणामिष्यमाणत्वाच्च । मरीचिकोदकादिव्यावर्तकस्यार्थक्रियोपयोगिरूपस्य वक्त-

---

प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वप्रसङ्गाभावादित्यर्थः । मरीचिकोदकादावर्थक्रियाकारित्वप्रयोजकजातिमभ्युपगम्याप्युक्तातिप्रसङ्गं परिहरति—तत्रापीत्यादिना । मरीचिकोदकादावपीत्यर्थः । अन्यथेति । तत्र जलत्वादिजात्यभावे सतीत्यर्थः । तत्रेति । मरीचिकोदकादाविष्टताऽवच्छेदकजलत्वादिवैशिष्ट्यभानं विना तदर्थिनस्तत्र प्रवृत्तिर्न सम्भवतीति भावः । किं च शुक्तिरजतादौ, सत्यरजतादौ च रजतत्वादिजातेरेकस्या अभावे प्रातिभासिकाध्यासेषु पूर्वदृष्टसाजात्यव्यवहारो भाष्यादिगतो न स्यात् । तदनुरोधेनापि तत्र जातिरङ्गीकर्तव्येत्याशयेनाह—प्रातिभासिक इति । क्वचिदिति । दूरे मरीचिकोदकभ्रमानन्तरं स्नानाद्यर्थं समीपं गतस्य 'नेदं जलम्, मरीचिमात्रमिदम्' इति विशेषदर्शने सति जलाध्यासस्य स्वमूलाज्ञानेन सहैव नाशान्न ततोऽर्थक्रियोत्पत्तिरापादयितुं शक्येत्यर्थः । क्वचिदधिष्ठानेति । शुक्त्यादौ रजताद्यध्यासानन्तरं यत्र विशेषदर्शनमस्ति, तत्र पूर्वोक्ता रीतिः, यत्र तन्नास्ति, तत्र तदधिष्ठानसामान्यज्ञानरूपकारणनाशेन रजताद्यध्यासमात्रनाशसम्भवात्, तत्रापि नार्थक्रियोत्पत्तिरापादयितुं शक्येत्यर्थः । 'स्वप्नवदिति ब्रूमः' इत्यादिपूर्वग्रन्थे प्रातिभासिकपदार्थानामप्यर्थक्रियाकारित्वस्य दर्शितत्वादुक्तातिप्रसङ्गे इष्टापत्तिरपीत्याह—क्वचित्कासां चिदिति । इदानीं प्रातिभासिकेष्वर्थक्रियाकारित्वराहित्यमुपेत्यापि सत्यत्वं कारणताऽवच्छेदकं न वक्तव्यमित्याह—मरीचि-

व्यत्वं च श्रुतिविरुद्धं प्रत्यक्षादिना दुर्ग्रहं त्रिकालाबाध्यत्वं विहाय दोषविशेषाजन्यरजतत्वादेरेव रजताद्युचितार्थक्रियोपयोगिरूपस्य वक्तुं शक्यत्वाच्च । तस्मान्मिथ्यात्वेऽप्यर्थक्रियाकारित्वसम्भवान्मिथ्यैव प्रपञ्चः, न सत्य इति ॥ ८ ॥

(वे॰सु॰म॰) ननु मिथ्यात्वसत्यत्वे ब्रह्मैक्यश्रुतिपीडनम् ॥
तन्मिथ्यात्वे तु विश्वस्य सत्यत्वं केन वार्यते ॥५९॥

(९)ननु मिथ्यात्वस्य प्रपञ्चधर्मस्य सत्यत्वे ब्रह्माद्वैतक्षतेस्तदपि मिथ्यैव वक्तव्यमिति कुतः प्रपञ्चस्य सत्यत्वक्षतिः ? । मिथ्याभूतं ब्रह्मणः सप्रपञ्चत्वं न निष्प्रपञ्चत्वविरोधीति त्वदुक्तरीत्या मिथ्याभूतमिथ्यात्वस्य सत्यत्वाविरोधात् ॥

---

कोदकादीति । चशब्दोऽप्यर्थकः । श्रुतीति । मिथ्यात्वश्रुतीत्यर्थः । 'सद्रूपाद्रजतात् कटकादिकार्यं भवति, तद्विलक्षणाच्छुक्तिरजतात्तन्न भवति' इत्यन्वयव्यतिरेकसहकृतप्रत्यक्षेण हि त्वया सत्त्वमर्थक्रियाकारितायामवच्छेदकतया ग्राह्यम् । तादृशं च सत्त्वं मिथ्यात्वविरुद्धकालत्रयाबाध्यत्वरूपं न भवति । तस्य प्रत्यक्षायोग्यत्वात् । अतः अन्यदेव किंचित्तदवच्छेदकं वाच्यमित्याशयेनाह—प्रत्यक्षादिनेति । अत्रादिपदमनुमानादिसङ्ग्रहार्थम् । प्रत्यक्षश्रुतिविरोधेनानुमानादेरपि प्रपञ्चे कालत्रयाबाध्यत्वरूपसत्त्वबाधकस्यानुदयादेव तस्यानुमानादिनाऽपि दुर्ग्रहत्वमुक्तमिति बोध्यम् । रजतत्वादेरिति । व्यवहारकालीनबाधरहितरजतत्वादिकमादिपदार्थः । तस्मादिति । सत्यत्वस्यार्थक्रियां प्रत्यप्रयोजकत्वादित्यर्थः ॥

प्रकारान्तरेण प्रपञ्चस्य सत्यत्वं शङ्कते—नन्विति । वक्तव्यमिति । सिद्धान्तिनेति शेषः । ननु मिथ्याभूतस्यापि मिथ्यात्वस्य स्वाश्रये प्रपञ्चे स्वविरोधिसत्यत्वप्रतिक्षेपकत्वात्तस्य सत्यत्वक्षतिरपरिहार्येत्याशङ्कां सिद्धान्तिसम्मतदृष्टान्तेन परिहरति—मिथ्याभूतमिति । सप्रपञ्चत्वं प्रपञ्चतादात्म्यम्, निष्प्रपञ्चत्वं च प्रपञ्चात्यन्ताभाववत्त्वम् । तच्च वास्तवम् । व्यावहारिकप्रपञ्चात्यन्ताभावस्य ब्रह्मणि परमार्थत्वाभ्युपगमात् । अतस्सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्यथा एकत्राविरोधः, तथा मिथ्यात्वसत्यत्वयो-

(वे०सू०मं०) सत्यमत्रोक्तमद्वैतदीपिकायां विरोधिनीम् ॥
स्वधर्म्यन्यूनसत्ताकं मिथ्यात्वं सत्यतां हरेद् ॥५६॥

अत्रोक्तमद्वैतदीपिकायाम्—वियदादिप्रपञ्चसमानस्वभावं मिथ्यात्वम्। तच्च धर्मिणः सत्यत्वप्रतिक्षेपकम् । धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि उभयत्रादिसिद्धं धर्मिसमसत्त्वं तन्त्रम्, न पारमार्थिकत्वम् । अघटत्वादिप्रतिक्षेपके पटत्वादावस्माकं पारमार्थिकत्वासम्प्रतिपत्तेः । ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकमिति न निष्प्रपञ्चत्वप्रतिक्षेपकम् ।

---

रुप्यविरोध इति भावः ॥

'मिथ्यात्वधर्मो मिथ्याभूतः' इति पक्षमेव परिगृह्य समाधत्ते—अत्रोक्तमिति । समानस्वभावमिति । समानसत्ताकमित्यर्थः । वियदादिप्रपञ्चश्च व्यावहारिकसत्ताक इति भावः । नन्वारोपितघटत्वादेरारोपाधिष्ठानभूते स्वाश्रये स्वविरुद्धाघटत्वादिप्रतिक्षेपकत्वादर्शनात् सत्यमेव घटत्वादि स्वाश्रये स्वविरुद्धधर्मप्रतिक्षेपकत्वेन कल्पनीयमिति कथं मिथ्याभूतं मिथ्यात्वं स्वधर्मिणि प्रपञ्चे सत्यत्वप्रतिक्षेपकं भवेदित्याशङ्क्याह—धर्मस्येति । घटत्वादौ परमतरीत्या पारमार्थिकत्वरूपं सत्यत्वमस्ति । तथा धर्मिसमानसत्ताकत्वं मतद्वयसम्मतमस्ति । तथा च घटत्वादिधर्मस्य स्वाभाविकाश्रये स्वविरुद्धधर्मप्रतिक्षेपकत्वे प्रयोजकाकाङ्क्षायां सम्प्रतिपन्नमेव प्रयोजकं कल्पनीयम्, न विप्रतिपन्नमित्यर्थः । दृष्टान्तं विघटयति—ब्रह्मण इति । न धर्मीति । ब्रह्मणः पारमार्थिकत्वात् सप्रपञ्चस्य च व्यावहारिकत्वादिति भावः ।

ननु प्रपञ्चगतमिथ्यात्वस्य मिथ्यात्वपक्षे तद् व्यावहारिकमेव वाच्यम् । ब्रह्मज्ञानैकनिवर्त्यस्य मिथ्यात्वधर्मस्य प्रातिभासिकत्वपारमार्थिकत्वयोरयोगात् । तस्य व्यावहारिकत्वे तु प्रपञ्चगतं सत्यत्वं पारमार्थिकं सिध्यति । तस्यापि 'सन् घटः' इत्यादिप्रत्यक्षसिद्धस्य यावत्तत्त्वज्ञानमनुवर्तमानस्य प्रातिभासिकत्वायोगाद् व्यावहारिकमिथ्यात्वधर्मवति प्रपञ्चे तत्सत्यत्वस्य व्यावहारिकत्वस्यायोगाच्च । तथा च प्रपञ्चगतस्य सत्यत्वधर्मस्य पारमार्थिकत्वसिद्धौ धर्मिणः प्रपञ्चस्यापि पारमार्थिकत्वमनिवार्यमिति ब्रह्माद्वैतक्षतिरिति कस्यचिच्चोद्यं वक्ष्यमाणहेतुना निरस्त-

अत एव मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्य प्रपञ्चसत्यत्वस्य पारमार्थिकत्वं स्यादिति निरस्तम्। धर्मिसमसत्ताकस्य मिथ्यात्वस्य व्यावहारिकत्वे धर्मिणोऽपि व्यावहारिकत्वनियमात्।

(वे०सू०मं०) स्वधर्मीक्षाऽक्षतो धर्मः स्वविरुद्धहरोऽथवा॥

अथवा यो यस्य स्वविषयसाक्षात्कारानिवर्त्यो धर्मः, स तत्र स्वविरुद्धधर्मप्रतिक्षेपकः। शुक्तौ शुक्तितादात्म्यं तद्विषयसाक्षात्कारानिवर्त्यम् अशुक्तित्वविरोधि, तत्रैव रजततादात्म्यं

मित्याह—अत एवेति। नियमादिति। मिथ्यात्वधर्मस्य धर्मिसमानसत्ताकत्वप्रयुक्तं व्यावहारिकत्वमुपेत्य मिथ्यात्वधर्मिणि प्रपञ्चे सत्यत्वपर्यवसायिनः प्रपञ्चसत्यत्वे पारमार्थिकत्वापादनस्य विरोधेनासम्भवादित्यर्थः। न च प्रपञ्चे पारमार्थिकस्य सत्यत्वस्याभावे प्रातिभासिकव्यावहारिकसत्यत्वयोरपि प्राङ् निरस्तत्वात्तत्र सत्त्वानुभवविरोध इति वाच्यम्। व्यावहारिकस्यैव सत्त्वस्य प्रपञ्चे स्वीकारेणानुभवविरोधाभावात्। न च मिथ्यात्वसत्यत्वयोर्व्यावहारिकत्वेन समानसत्ताकयोरेकत्र विरोध इति वाच्यम्। मिथ्यात्वाविरुद्धस्य यावत्तत्त्वज्ञानं बाधरहितस्वरूपत्वलक्षणसत्त्वस्य प्रत्यक्षादिविषयस्यासकृदुक्तत्वादिति भावः।

'सर्वत्र ब्रह्मसत्तैव प्रतीयते, न तदतिरेकेण व्यावहारिकं प्रातिभासिकं वा सत्त्वमस्ति' इति मते 'धर्मिसमसत्त्वं तन्त्रम्' इति समाधानं न न सम्भवतीति मत्वा समाधानान्तरमाह—अथ वेति। धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि 'स्वाश्रयसाक्षात्कारानिवर्त्यत्वम्' प्रयोजकं कल्प्यते, सम्प्रतिपन्नत्वात्, न तु पारमार्थिकत्वम्। तस्यास्माकमसम्प्रतिपत्तेरिति भावः। यो धर्मो यस्य धर्मिणो धर्मिगोचरसाक्षात्कारानिवर्त्यः, स धर्मस्तत्र धर्मिणीत्यक्षरार्थः। उक्तप्रयोजके हेत्वन्तरमाह—शुक्ताविति। तत्पदं शुक्तिपरम्। अशुक्तित्वविरोधीति। अशुक्तित्वस्य प्रतिक्षेपकमित्यर्थः। तत्रैवेति। शुक्तावेव रजततादात्म्यरूपो धर्मो वर्तते। स च स्वविरुद्धस्यारजतत्वस्य रजतभिन्नत्वस्य शुक्तिगतस्य विरोधी प्रतिक्षेपको न भवतीत्यत्र हेतुगर्भं विशेषणम्—

तन्निवर्त्यमरज(१)तत्वाविरोधीति व्यवस्थादर्शनात्। एवं च प्रपञ्च-मिथ्यात्वं कल्पितमपि प्रपञ्चसाक्षात्कारानिवर्त्यमिति सत्यत्व-प्रतिक्षेपकमेव। ब्रह्मणः सप्रपञ्चत्वं तु ब्रह्मसाक्षात्कारनिवर्त्य-मिति न निष्प्रपञ्चत्वप्रतिक्षेपकमिति।

(वे०सू०मं०) शाब्दप्रामाण्ययोग्यत्वसत्त्वं लौकिकमप्यलम्॥८७॥

एतेन शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दयोग्यतायाः, शा-ब्दधीप्रामाण्यस्य च सत्यत्वं वक्तव्यम्। प्रातिभासिकयोग्यता-वताऽनाप्तवाक्येन व्यावहारिकार्थस्य व्यावहारिकयोग्यतावताऽग्नि-होत्रादिवाक्येन तात्त्विकार्थस्य वा सिद्ध्यभावेन योग्यतासमा-नसत्ताकस्यैव शब्दार्थस्य सिद्धिनियमात्। अर्थाबाधरूपप्रा-

---

तन्निवर्त्यमिति। शुक्तिसाक्षात्कारनिवर्त्यमित्यर्थः। एवं चेति। स्वाश्रयसाक्षात्कारानिवर्त्यधर्मस्य स्वाश्रये स्वविरुद्धधर्मस्थितिविरोधित्वे प्र-माणेन निश्चिते सतीत्यर्थः। अनिवर्त्यमिति। यथा शुक्तिसाक्षात्कारे सति शुक्तितादात्म्यं न निवर्तते, तथा घटादिरूपप्रपञ्चसाक्षात्कारे सति श्रुति-न्यायसिद्धं मिथ्यात्वं न निवर्तते इत्यर्थः।

चोद्यान्तरमपि वक्ष्यमाणहेतुना निरस्तमित्याह—एतेनेति। शा-ब्दगम्यस्य ब्रह्मणस्सत्यत्वे शब्दनिष्ठयोग्यतायास्सत्यत्वं वक्तव्यमित्यत्र हे-तुमाह—योग्यतासमानसत्ताकस्यैवेति। वाक्यार्थवाक्यनिष्ठयोग्यत-योस्समानसत्ताकत्वनियमं साधयति—प्रातिभासिकयोग्यतावतेति। व्यावहारिकार्थस्य सिद्ध्यभावेनेति सम्बन्धः। शब्दगम्यस्य ब्रह्मणः स-त्यत्वे ब्रह्मगोचरशाब्दज्ञाननिष्ठस्य प्रामाण्यस्य सत्यत्वं वक्तव्यमित्यत्र हेतुमाह—अर्थाबाधरूपेति। तथा च वेदान्तार्थस्य ब्रह्मणस्सत्यत्व-संरक्षणाय तद्धीप्रामाण्यस्य सत्यत्वं वक्तव्यमिति भावः। ननु ब्रह्म-व्यतिरिक्तस्य निरुक्तयोग्यतादेस्सत्यत्वसिद्धावपि पूर्ववाद्यभिमतं निखिल-

---

(१) रजतभेदेतिपाठः पुस्तकान्तरे, निस्सन्देहश्च स यद्यपि, तथाऽपि टीकाकारेण 'अरजतत्व-' इत्यस्यैव रजतभिन्नत्वेन विवरणात्तदनुमत्या स एवात्रावस्थापितः।

माण्यस्यासत्यत्वे अर्थस्य सत्यत्वायोगाच्च । तथा च ब्रह्मातिरिक्तसत्यवस्तुसत्त्वेन द्वैतावश्यम्भाव इति वियदादिप्रपञ्चोऽपि सत्योऽस्त्विति निरस्तम् ।

व्यावहारिकस्यार्थक्रियाकारित्वस्य व्यवस्थापितत्वेन व्यावहारिकयोग्यताया अपि सत्यब्रह्मसिद्धिसम्भवात् । ब्रह्मपरे वेदान्ते सत्यादिपदसत्त्वाद् ब्रह्मसत्यत्वसिद्धेः । अग्निहोत्रादिवाक्ये तादृशपदाभावात्, तत्सत्त्वेऽपि प्रबलब्रह्माद्वैतश्रुतिविरोधात् तदसिद्धिरित्येव वैषम्योपपत्तेः । शब्दार्थयोग्यतयोः समानसत्ताकत्वनियमस्य निष्प्रमाणकत्वात् । घटज्ञानप्रा-

---

द्वैतसत्यत्वं कथं सिध्यति, तत्राह—तथा चेति । द्वैतावश्यम्भाव इति । अद्वैतभङ्गावश्यम्भाव इत्यर्थः ।

वेदान्तशब्दनिष्ठयोग्यतायास्सत्यत्वं किं तस्याश्शाब्दबोधरूपार्थक्रियाकारित्वसिद्ध्यर्थमपेक्ष्यते, किं वा ब्रह्मणस्सत्यत्वसिद्ध्यर्थम् ? । नाद्य इत्याह—व्यावहारिकस्येति । प्रपञ्चस्येति शेषः । योग्यताया इति । पञ्चमी । सत्यस्य ब्रह्मणस्सिद्धिश्शाब्दबोधः । द्वितीये योग्यतायास्सत्यत्वाभावेऽपि ब्रह्मणस्तत् सिध्यतीत्याह—ब्रह्मपरे इति । अत्रादिपदं चित्पदादिसङ्ग्रहार्थम् । तर्ह्यग्निहोत्रादिधर्मस्यापि सत्यादिपदात् सत्यत्वसिद्धिस्स्यादिति, नेत्याह—अग्निहोत्रादीति । ननु "यो वै स धर्मस्सत्त्वं चैतद्" इति धर्मेऽपि सत्यपदं श्रुतौ प्रयुक्तमस्ति, तत्राह—तत्सत्त्वेऽपीति । तदसिद्धिरिति । 'यो वै स धर्मः' इति वाक्यस्याग्निहोत्रादौ परमार्थत्वप्रतिपादने तात्पर्यलिङ्गानामभावेनातत्परस्य तस्य तत्परत्वेन प्रबलया अद्वैतश्रुत्या बाधाद्धर्मस्य न ब्रह्मवत् परमार्थत्वसिद्धिरित्यर्थः । श्रुताग्निहोत्रादेरवगत्यवस्थत्वेन सत्यत्वम्, अनुष्ठीयमानावस्थत्वेन धर्मत्वं च विवक्षित्वा, "यो वै स धर्मः सत्यं चैतद्" इति सत्यधर्मयोरभेद उक्त इति मन्तव्यम् । व्यावहारिकयोग्यतावता वेदान्तवाक्येन सत्यस्य ब्रह्मणः सिद्धौ फलितमाह—शब्दार्थयोग्यतयोरिति । ब्रह्मणः सत्यत्वेऽपि तज्ज्ञाननिष्ठप्रामाण्यस्य न सत्यत्वं सिध्यति । तस्य ब्रह्म-

माण्यस्याघटत्ववत् सत्यभूतब्रह्मज्ञानप्रामाण्यस्यापि तदतिरिक्तघटितत्वेन मिथ्यात्वोपपत्तेश्च । तस्माद् (उ० मी० अ० २ पा० १ अधि० ६ ) आरम्भणाधिकरणोक्तन्यायेन कृत्स्नस्य वियदादिप्रपञ्चस्य मिथ्यात्वं वज्रलेपायते ॥ ९ ॥

(वे०सू०मं०) न जीवैः सद्वितीयत्वं ब्रह्मणस्तदभेदतः ॥
तेषां च भोगसाङ्कर्यं वारणीयमुपाधिभिः ॥ ५८ ॥

(१०) ननु आरम्भणशब्दादिभिरचेतनस्य वियदादिप्रपञ्चस्य मिथ्यात्वसिद्धावपि चेतनानामपवर्गभाजां मिथ्यात्वायोगाद् अद्वितीये ब्रह्मणि समन्वयो न युक्तः । न च तेषां ब्रह्माभेदः प्रागुक्तो युक्तः । परस्परभिन्नानां तेषाम् एकेन ब्रह्मणा ऽभेदासम्भवा-

---

मात्रत्वाभावादित्याह—घटज्ञानेति । तदतिरिक्तेति । ब्रह्मत्ववति ब्रह्मत्वप्रकारकानुभवत्वरूपतत्प्रामाण्यस्यापि ब्रह्मातिरिक्तब्रह्मत्ववैशिष्ट्यघटितत्वेनेत्यर्थः । यदि च ब्रह्मज्ञानगतं प्रामाण्यमबाधितार्थानुभवत्वरूपम् । तच्च विवक्षितविवेकेन बाधायोग्यविषयस्वरूपमात्रं पर्यवस्यति । तन्मात्रपर्यवसितप्रामाण्यस्य चाखण्डार्थपरवेदान्तेषु ब्रह्ममात्रत्वमेव, न तदतिरिक्तघटितत्वमिति ब्रह्मज्ञानप्रामाण्यस्य सत्यत्वं सम्भवतीत्युच्यते, तर्हि ब्रह्मगोचरशाब्दधीप्रामाण्यस्य सत्यत्वेऽपि न तवेष्टसिद्धिः । तस्य ब्रह्ममात्रत्वेन ब्रह्मातिरिक्तसत्यवस्त्वसिद्धेरिति भावः । तस्मादिति । विरोधाभावादित्यर्थः । प्रपञ्चस्य मिथ्यात्वपक्षे प्रत्यक्षादिविरोधाभावो निरूपितः ।

इदानीं सर्वेषु शरीरेष्वात्मन एकत्वपक्षे सुखदुःखादिव्यवस्थाविरोधमाशङ्क्य तां निरूपयितुं प्रसङ्गमाह—नन्वित्यादिना । अपवर्गेति । जीवानां स्वरूपेण मिथ्यात्वे तत्त्वज्ञानेन निवृत्त्यापत्त्या तेषां मुक्तिभाक्त्वं न स्यादित्यर्थः । ननु जीवानां ब्रह्माभेदस्य वेदान्तप्रमाणकस्य प्रथमपरिच्छेदावसाने उक्तत्वाद् ब्रह्मणो नाद्वितीयत्वानुपपत्तिरित्याशङ्क्य निराकरोति—न च तेषामिति । जीवानां परस्परभेदासिद्धिमाशङ्क्याह—न च तदिति । एकस्य यदा दुःखं भवति, तदा जीवान्तरस्य सुखं भवतीति सुखदुःखव्यवस्था, एवं रागद्वेषादिव्यवस्थाऽप्यनुभवसि-

त्। न च तद्भेदासिद्धिः। सुखदुःखादिव्यवस्थया तत्सिद्धेरिति चेद्, न। तेषामभेदेऽपि उपाधिभेदादेव तद्व्यवस्थोपपत्तेः॥ १०॥
(वे०सू०मं०) नन्वन्यभेदादन्यस्य कथं साङ्कर्यवारणम्॥

(११)ननु उपाधिभेदेऽपि तदभेदानपायात् कथं व्यवस्था। न ह्याश्रयभेदेनोपपादनीयो विरुद्धधर्मासङ्करस्तदतिरिक्तस्य कस्यचिद्भेदोपगमेन सिध्यति।
(वे०सू०मं०) अत्राहुर्नान्यताऽसङ्गे भोक्तृतादात्म्यकल्पनात्॥५९॥

अत्र केचिदाहुः—सिध्यत्येवान्तःकरणोपाधिभेदेन सुखदुःखादिव्यवस्था। "कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतिभिस्तस्यैव निखिलानर्थाश्रयत्वप्रतिपादनात्। "असङ्गो ह्ययं पुरुषः" "असङ्गो न हि सज्जते" इत्यादिश्रुतिभिः चेतनस्य सर्वात्मनौदासीन्यप्रतिपादनाच्च।

---

द्धा द्रष्टव्या। तथा तेषां परस्परभेदः सिध्यतीत्याह—सुखेति। नन्वारम्भणेत्यादिना प्राप्तं प्रतिशरीरमात्मभेदपक्षं प्रतिक्षिपति—नेति। उपपत्तेरिति। नात्मभेदः प्रामाणिक इत्यर्थः॥

तदभेदेति। आत्माभेदेत्यर्थः। कथंशब्दसूचितामनुपपत्तिमाह—नहीति। तदतिरिक्तस्येति। विरुद्धसुखदुःखाद्याश्रयातिरिक्तस्य कस्य चिदहमनुभवागोचरस्येत्यर्थः।

अन्तःकरणमेव बन्धाश्रयः, अहमनुभवगोचरश्च, न त्वात्मा। तस्य कूटस्थत्वात्। तथाचाश्रयभेदादेव धर्मव्यवस्थेति समाधत्ते—अत्र केचिदाहुरिति। मन एवेति। मनोऽन्तःकरणम्। कामसंकल्पादीनां तत्परिणामत्वात् सामानाधिकरण्यम्। विज्ञानम् अन्तःकरणं तनुते करोति यज्ञं शास्त्रीयं कर्म। आदिपदेन "कामा येऽस्य हृदि श्रिताः" इत्यादिश्रुतिर्ग्राह्या। चिदात्मनः कूटस्थत्वे प्रमाणमाह—असङ्ग इति। 'असङ्गो न हि सज्जते" इति। सङ्गायोग्यत्वादित्यर्थः। आदिपदेन "साक्षी चेता केवलो निर्गुणश्च" "अनश्नन्नन्यो अभिचाकशीति" इत्यादिश्रुतिसङ्ग्रहः।

न चैवं सति कर्तृत्वादिबन्धस्य चैतन्यसामानाधिकरण्यानुभवविरोधः । अन्तःकरणस्य चेतनतादात्म्येनाध्यस्ततया तद्धर्माणां चैतन्यसामानाधिकरण्यानुभवोपपत्तेः । न चान्तःकरणस्य कर्तृत्वादिबन्धाश्रयत्वे चेतनः संसारी न स्यादिति वाच्यम् । 'कर्तृत्वादिबन्धाश्रयाहङ्कारग्रन्थितादात्म्याध्यासाधिष्ठानभाव एव तस्य संसारः' इत्युपगमात् । तावतैव भीषणत्वाश्रयसर्पतादात्म्याध्यासाधिष्ठाने रज्ज्वादौ "अयं भीषणः" इत्यभिमानवद् आत्मनोऽनर्थाश्रयत्वाभिमानोपपत्तेः । एतदभिप्रायेणैव "ध्यायतीव

---

न चैवंसतीति । अन्तःकरणस्यैव बन्धाश्रयत्वे सतीत्यर्थः । 'अहं करोमि,' 'अहं सुखी,' अहं दुःखी, 'अहमुपलभे' इत्यादिरूपेणोपलब्धिरूपचैतन्यस्य कर्तृत्वसुखदुःखाद्यात्मकबन्धसामानाधिकरण्यमनुभूयते । तद्विरोध इत्यर्थः । यथा इदमंशतादात्म्येनाध्यस्ते रजते रजतत्वस्य इदंत्वसामानाधिकरण्यानुभवः, तद्वदिति समाधत्ते—अन्तःकरणस्येति । तद्धर्माणामित्यत्र तत्पदमन्तःकरणपरम् ।

एतदुक्तं भवति—आत्मनश्चैतन्यस्वरूपत्वेऽपि भेदकल्पनया चैतन्यमस्यधर्मः । तथा च आत्मान्तःकरणयोरैक्याध्यासे सति तयोर्धर्माणां चैतन्यकर्तृत्वादीनां सामानाधिकरण्यं सम्पद्यते इति न तदनुभवविरोध इति ।

चेतन इति । चैतन्याश्रय आत्मा संसारी कर्तृत्वादिधर्मवान्न स्यादित्यर्थः । चेतनस्य स्वतः संसाराश्रयत्वाभावेऽपि बुद्धिनिष्ठस्य संसाराश्रयत्वस्य साक्षिणाऽनुभूयमानस्यात्मन्यारोपोपपत्तेः । आरोपितसंसाराश्रयत्वमस्तीति परिहरति कर्तृत्वादीति । अहङ्कारस्य चेतनेन तुल्यो यस्तादात्म्यरूपोऽध्यासस्तदधिष्ठानत्वमेवेत्यर्थः । संसारइति । संसाराश्रयत्वभ्रान्तिप्रयोजक इत्युपगमादित्यर्थः । तावतैवेति । उपाधेः संसाराश्रयत्वमात्रेणेत्यर्थः । भीषणत्वं भयहेतुत्वं तच्च सर्पधर्मः । अभिमानो भ्रान्तिः । न चान्यनिष्ठसंसाराश्रयत्वस्यात्मन्यारोपेऽन्यथाख्यातिप्रसङ्ग इति वाच्यम् । अनुभूयमानारोपस्थले आरोप्याधिष्ठानयोः संसर्गस्यानिर्वचनीयस्योत्पत्त्युपगमेन तदप्रसङ्गादिति भावः । एतदिति । बुद्धिनिष्ठसंसारस्यात्मन्यारोपाभिप्रायेणैवेत्यर्थः । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव भाति, तस्यामेव लेला-

लेलायतीव'' "अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते" इत्यादि-श्रुतिस्मृतिदर्शनाच्च ।

न चैकस्मिन्नेवात्मनि विचित्रसुखदुःखाश्रयतत्तदन्तःकरणानामध्यासाद् आत्मन्याभिमानिकसुखदुःखादिव्यवस्थैवमपि न सिध्यतीति वाच्यम् । आध्यासिकतादात्म्यापन्नान्तःकरणगतानर्थजातस्येव तद्गतपरस्परभेदस्यापि अभिमानत आत्मीयतया आत्मनो यादृशमनर्थभाक्त्वम्, तादृशेन भेदेन तद्व्यवस्थोपपत्तेः ।

एतेन सुखदुःखादीनामन्तःकरणधर्मत्वेऽपि तदनुभवः साक्षिरूप इति तस्यैकत्वात् सुखदुःखानुभवरूपभोगव्यवस्था न

---

यन्त्यां चलन्त्यामात्मा चलतीव, न तु वस्तुतो ध्यानाद्याश्रय इतीवशब्दार्थः । ध्यानादिग्रहणमशेषबुद्धिधर्मोपलक्षणार्थम् । अहङ्कारेण कर्तृत्वाश्रयेण सह विमोहं तादात्म्याध्यासमापन्नः सन्नात्मा स्वात्मानम् 'अहं कर्ता' इति मन्यते । कर्तृत्वमननमशेषसंस्कारमननोपलक्षणार्थम् ।

ननु बुद्धेस्वतः संसाराश्रयत्वम, चिदात्मनस्तु भ्रान्तिसिद्धं संसाराश्रयत्वमिति विभागाभ्युपगमे प्रतिशरीरं बुद्धिभेदात्तद्धर्मव्यवस्थासिद्धावपि प्रतिशरीरमात्मभेदाभावात्तद्गतस्य बन्धस्य व्यवस्था न सिध्यतीति शङ्कते—न चैकस्मिन्नेवेति । विचित्राणां सुखदुःखानामाश्रयभूतानि तत्तदन्तःकरणानि, तेषामेकस्मिन्नेवात्मन्यध्यासाद्धेतोर्यं आत्मन्याभिमानिकः सुखदुःखादिः, तस्य व्यवस्था न सिध्यतीत्यर्थः । एवमपीति । बुद्धिधर्मव्यवस्थासिद्धावपीत्यर्थः । बन्धाश्रयत्वस्येव बुद्धिगतस्य परस्परभेदाश्रयत्वस्याप्यात्मन्यारोपाभ्युपगमान्नाव्यवस्थेति परिहरति—आध्यासिकेति । नन्वारोपितेन भेदेन कथं व्यवस्थेत्याशङ्क्य व्यवस्थापनीयस्याप्यात्मन्यारोपितत्वान्नाव्यवस्थापकत्वं तादृशभेदस्येत्याह—यादृशमिति । आत्मसाक्षिचैतन्ययोरभेदेऽपि भेदं कल्पयित्वा कल्पितबन्धाश्रयस्यात्मन एकत्वप्रयुक्तो दोषो निरस्तः । इदानीं साक्षिचैतन्यस्य सर्वशरीरेष्वेकत्वप्रयुक्तं दोषमाशङ्क्य निराकरोति—एतेनेति । वक्ष्यमाणहेतुनेत्यर्थः । तदनुभव इति । सुखाद्यनुभव इत्यर्थः । सुखेति । देवदत्तस्य यः सुखानुभवः, स एव चेद्यज्ञदत्तस्यापि, तदा देवदत्तस्य सुखानुभवकाले तमेव सुखानु-

सिध्यतीति निरस्तम् ।

तत्तदन्तःकरणतादात्म्यापत्त्या तत्तदन्तःकरणभेदेन भेदवत एव साक्षिणस्तत्तदन्तःकरणसुखदुःखाद्यनुभवरूपत्वेन तद्व्यवस्थाया अप्युपपत्तेरिति ॥

(वे०सू०मं०) अन्ये भोक्ताचिदाभासः कूटस्थैक्येन कल्पितः ॥
अतो न भिन्नगामित्वमित्याहुर्बन्धमोक्षयोः ॥६०॥

अन्ये तु जडस्य कर्तृत्वादिबन्धाश्रयत्वानुपपत्तेः "कर्ता शास्त्रार्थवत्त्वाद्"इति चेतनस्यैव तदाश्रयत्वप्रतिपादकसूत्रेणान्तःकरणे चिदाभासो बन्धाश्रयः । तस्य चासत्यस्य बिम्बाद्भिन्नस्य

---

भवमादाय यज्ञदत्तस्यापि 'अहं सुखी'इति भोगप्रसङ्ग इत्यर्थः । यथा अन्तःकरणगतभेदस्यात्मन्यारोपः, तथा साक्षिचैतन्यरूपे सुखाद्यनुभवेऽपि तद्गतभेदारोपाभ्युपगमान्न भोगाव्यवस्थेति परिहरति—तत्तदिति । भेदेनेति । तत्तदन्तःकरणभेदेन साक्षिण्यारोपितेन भेदविशिष्टस्यैवेत्यर्थः । 'धान्येन धनवान्'इत्यत्रेव तृतीया । साक्षिण्यन्तःकरणभेदारोपे हेतुस्तादात्म्यापत्त्येति ॥

'सर्वशरीरेष्वात्मन एकत्वे सुखादिव्यवस्था न स्याद्'इति पूर्ववाद्याक्षेपेऽन्यद समाधानमाह—अन्ये त्विति । पूर्वोक्तं बुद्धेर्बन्धाश्रयत्वं प्रथमं दूषयति—जडस्येति । अनुपपत्तेरिति । बन्धस्य चेतनधर्मत्वप्रसिद्धिविरोधादिति भावः । 'बुद्धेरेव कर्तृत्वम्, न चेतनस्य तस्य कूटस्थत्वाद्'इति साङ्ख्यमतनिराकरणपूर्वकं चेतनस्यैव कर्तृत्वव्यवस्थापकसूत्रानुसाराच्चेत्याह—कर्तेति । चेतनः कर्ता भवितुमर्हति । तथासत्येव चेतनस्य कर्तृत्वप्रतिपादकं "कर्ता विज्ञानात्मा पुरुषः" इति शास्त्रमर्थवद्भवति । अन्यथा तद् अनर्थकं स्याद् इति सूत्रार्थः । चिदाभास इति । न तु साक्षाच्चिदात्मैव । तस्य कूटस्थत्वेन बन्धपरिणामित्वायोगादिति भावः । चिदाभासस्य बन्धाश्रयत्वेऽपि कथं व्यवस्थासिद्धिः, तत्राह—तस्य चेति । बिम्बप्रतिबिम्बयोरभेदेऽपि प्रत्यन्तःकरणं प्रतिबिम्बभेदो लभ्यते—उपाधिभेदेन तन्निरूपितप्रतिबिम्बानामपि कल्पितभेदाभ्युपगमात् । तथाऽपि प्रतिबिम्बमिथ्यात्वम् ।

प्रत्यन्तःकरणभेदाद्विद्वदविद्वत्सुखिदुःखिकर्त्रकर्त्रादिव्यवस्था । न चैवमध्यस्तस्य बन्धाश्रयत्वे बन्धमोक्षयोर्वैयधिकरण्यापत्तिः । अस्य चिदाभासस्यान्तःकरणावच्छिन्ने स्वरूपतस्सत्यतया मुक्त्यन्वयिनि परमार्थजीवेऽध्यस्ततया कर्तृत्वाश्रयचिदाभासतादात्म्याध्यासाधिष्ठानभावस्तस्य बन्ध इत्यभ्युपगमादित्याहुः ॥

अपरे तु—

(वे०सू०मं०) अन्ये विशिष्टो भोक्ताऽत्र संशुद्धो मुक्तिसङ्गतः ॥
आत्मेन्द्रियमनोयुक्तमित्यादिश्रुतिदर्शनात् ॥ ६१ ॥

'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' ।

---

अत एव तस्य बन्धाश्रयत्वं स्वाभाविकं सम्भवतीति तन्मिथ्यात्वमतमाश्रितम् । न चैवमिति । विम्बप्रतिविम्बयोर्भेदाङ्गीकारे इत्यर्थः । सत्यस्य विम्बचैतन्यस्य ब्रह्मभावलक्षणमोक्षाश्रयत्वे च सतीति शेषः । मुक्त्यन्वयिनो विम्बभूतावच्छिन्नचैतन्यस्य स्वतस्संसाराश्रयत्वाभावेऽपि भ्रान्तिसिद्धस्य तदाश्रयत्वस्य सम्भवान्न वैयधिकरण्यदोष इत्याह—अस्येति । चिदाभासगतबन्धस्य चिदात्मन्यध्यासे चिदात्मचिदाभासयोस्तादात्म्याध्यासं हेतुमाह—अध्यस्ततयेति । अस्य चिदाभासस्य परमार्थजीवेऽध्यस्ततयेति सम्बन्धः । तस्य बन्ध इति । बन्धः बन्धारोपहेतुरित्युपगमादित्यर्थः । यथाश्रुतस्याध्यासाधिष्ठानत्वस्य बन्धरूपत्वाभावात्, सुखादेरेव बन्धरूपत्वाच्चेति बोध्यम् ॥

सर्वशरीरेषु चिदात्मन एकत्वेऽपि तस्य केवलस्य बन्धाश्रयत्वं नोपेयते, किं तु बुद्धिविशिष्टस्य चिदात्मनः । तथा च बन्धाश्रयस्य विशिष्टस्य प्रतिशरीरं भेदाद् न सुखदुःखादिसाङ्कर्यमिति मतान्तरमाह—अपरे त्विति । विशिष्टस्य भोक्तृत्वे मानमाह—आत्मेति । आत्मशब्दो देहपरः । श्रुतावात्मानमित्यध्याहारः । इतिशब्दो द्वितीयासमानार्थकः । ततश्च देहेन्द्रियान्तःकरणयुक्तमात्मानं भोक्तारमाहुर्विद्वांस इत्यर्थः । ननु देहस्य विशेषणतया भोक्तृकोटौ निवेशो न सम्भवति । तस्यात्मनि भोगं प्रत्यवच्छेदकतया उपकरणत्वात् । इन्द्रियाणामपि भोक्तृकोटौ निवेशो न सम्भवति । तेषामुपकरणमात्र-

इति सहकारित्वेन देहेन्द्रियैस्तादात्म्येन मनसा च युक्तस्य चेतनस्य भोक्तृत्वश्रवणादन्तःकरणभेदेन तद्विशिष्टभेदाद्व्यवस्था । न चैवं विशिष्टस्य बन्धः, शुद्धस्य मोक्ष इति वैयधिकरण्यम् । विशिष्टगतस्य बन्धस्य विशेष्येऽनन्वयाभावाद् विशिष्टस्यानतिरेकादित्याहुः ॥

(वे०सू०मं०) परे कर्तृमनःसङ्गाद्भोक्तृताऽन्या प्रकल्प्यते ॥
स्फटिकेष्विव लौहित्यं श्रोत्रवत्तद्व्यवस्थितिः ॥६२॥

इतरे तु अस्तु केवलश्चेतनः कर्तृत्वादिबन्धाश्रयः । स्फाटिकलौहित्यन्यायेनान्तःकरणस्य, तद्विशिष्टस्य वा कर्तृत्वाद्याश्रयस्य सन्निधानाच्चेतनेऽपि कर्तृत्वाद्यन्तरस्याध्यासोपगमात् ।

---

त्वात्, स्वप्ने तेषामभावेऽपि भोगदर्शनाच्च । तस्माद्देहेन्द्रियैर्युक्तस्यात्मनो भोक्तृत्वश्रुतिरनुपपन्नेत्याशङ्क्य युक्तपदोदितं योगं यथायोग्यं दर्शयति—सहकारित्वेनेति । आत्मनि तावत् कामसङ्कल्पादयोऽनुभूयन्ते । ते च मनोधर्मत्वेन श्रुतिसिद्धाः । तथा च कामादिमन्मनस्तादात्म्यं विनाऽऽत्मनः कामाद्याश्रयत्वानुपपत्तेस्तत्तादात्म्येन तद्विशिष्टस्य भोक्तृत्वं युक्तमित्याशयेनाह—तादात्म्येनेति । ननु बुद्धिविशिष्टात्मा केवलात्मनस्सकाशाद्भिन्नः । विशिष्टे केवलं न भवतीति प्रतीतेः । विशिष्टवृत्तिकेवलप्रतियोगिकभेदस्य विशेष्यवृत्तित्वनियमात् । तथा च विशिष्टात्मगतबन्धस्य विशेष्यान्वयित्वेऽपि मुक्त्यन्वयिकेवलचैतन्ये बन्धानन्वयाद्वैयधिकरण्यतादवस्थ्यमिति, नेत्याह—विशिष्टस्येति । विशिष्टान्तर्गतविशेष्यस्य केवलादनतिरेकादित्यर्थः ।

अयं भावः—लोके दण्डविशिष्टपुरुषे केवलपुरुषाभेदस्य प्रत्यभिज्ञायमानत्वात् तत्प्रत्यभिज्ञाया बाधकाभावाच्च विशिष्टान्तर्गतविशेष्यस्य केवलस्य च स्वाभाविकमेकत्वं विशिष्टत्वाविशिष्टत्वरूपभेदेन काल्पनिको भेदश्च कल्प्यते । तथा च विशिष्टगतबन्धस्य विशेष्यान्वयिनः केवलात्मन्यप्यन्वयसिद्ध इति ॥

अञ्जसा बन्धमोक्षयोस्सामानाधिकरण्यमाह—इतरे त्विति । स्फाटिकेति ।

न च तस्यैकत्वाद्यवस्थाऽनुपपत्तिः । उपाधिभेदादेव तदुपपत्तेः । नचान्यभेदादन्यत्र विरुद्धधर्मव्यवस्था न युज्यते इति वाच्यम् । मूलाग्ररूपोपाधिभेदमात्रेण वृक्षे संयोगतदभावव्यवस्थादर्शनात् । तत्तत्पुरुषकर्णपुटोपाधिभेदेन श्रोत्रभावमुपगतस्याकाशस्य तत्र तत्र शब्दोपलम्भकत्वानुपलम्भकत्वतारमन्द्रेष्टानिष्टशब्दोपलम्भकत्वादिवैचित्र्यदर्शनाच्चेत्याहुः ॥

(वे०सू०मं०) एके त्वनाश्रितोपाधिभेदभेदप्रकल्पनम् ॥
प्रतिबिम्बेष्विवोपाधिधर्माध्यासव्यवस्थितिः ॥६२॥

एके तु यद्याश्रयभेदादेव विरुद्धधर्मव्यवस्थोपपादननियमः, तदा चेतने निष्कृष्टे एवोपाधिवशाद् भेदकल्पनाऽस्तु ।

यथा लौहित्याश्रयस्य जपाकुसुमादेस्सन्निधानात् स्फटिके उपाधिगतलौहित्यापेक्षया तत्प्रतिबिम्बभूतस्य लौहित्यान्तरस्योत्पत्तिः, तथा चिदात्मनि बुद्ध्यादिगतबन्धापेक्षया अन्यस्य कर्तृत्वादिबन्धस्याध्यासात्मकस्योपगमादित्यर्थः । न च बुद्ध्यादौ साक्षिणाऽनुभूयमानस्य बन्धस्य चिदात्मनि संसर्गमात्राध्यासोपगमेन वैयधिकरण्यशङ्कापरिहारसम्भवात्, तत्र च बुद्ध्यादिनिष्ठकर्तृत्वादिसदृशकर्तृत्वप्रमुखबन्धोत्पत्तिकल्पनं न प्रामाणिकमिति वाच्यम् । "बुद्धेर्गुणेनाराग्रमात्रो ह्यवरः" इति श्रुतावरशब्दितजीवस्याराग्रमात्रशब्दितमल्पपरिमाणं बुद्धिगुणशब्दितबुद्धिपरिमाणहेतुकमिति प्रतिपादनेन तुल्यन्यायतया 'कर्तृत्वादिकमपि बुद्धिधर्मसदृशमात्मन्युत्पद्यते' इत्यस्यार्थस्य श्रुतिसम्मतत्वेन प्रामाणिकत्वात् ।

न च तस्येति । कर्तृत्वाद्यध्यासाधिष्ठानस्यात्मन इत्यर्थः । मूलेति । परमतेनेदं दृष्टान्तद्वयम् । सिद्धान्ते मूलावच्छिन्नवृक्षस्याग्रावच्छिन्नवृक्षस्य च काल्पनिकभेदाभ्युपगमेनैव संयोगतदभावव्यवस्थोपगमाच्छ्रोत्रेन्द्रियस्य दिगारभ्यत्वोपगमाच्चेति बोध्यम् । तारेति । तारशब्दोपलम्भकत्वमन्द्रशब्दोपलम्भकत्वेष्टशब्दोपलम्भकत्वानिष्टशब्दोपलम्भकत्वादिलक्षणस्य वैचित्र्यस्य दर्शनादित्यर्थः ॥

यदि दृष्टान्तयोरुपाधिभेदेन तदुपहितवृक्षादिभेदं परो ब्रूयात्, तदा प्रकृतेऽपि तथाऽस्त्वित्याशयेनाह—एके त्विति । निष्कृष्टे इति ।

अकल्पिताश्रयभेद एव व्यवस्थाप्रयोजक इति क्काप्यसम्प्रतिपत्तेः । मणिमुकुरकृपाणाद्युपाधिकल्पितेन भेदेन मुखे श्यामावदातवर्तुलदीर्घभावादिधर्माणामङ्गुल्युपष्टम्भोपाधिकल्पितेन भेदेन दीपे पाश्चात्त्यपौरस्त्यादिधर्माणां च व्यवस्थासम्प्रतिपत्तेरित्याहुः ॥ ११ ॥

(वे०सू०मं०) क उपाधिरिह—

(१२) एवमुपाधिवशाद्व्यवस्थोपपादने सम्भाविते जीवानां परस्परसुखाद्यननुसन्धानप्रयोजक उपाधिः क इति निरूपणीयम् ॥

---

अन्तःकरणविशिष्टत्वेषान्निष्कृष्टे तदुपहिते चिदात्मनीत्यर्थः । ननु सत्यभेद एव व्यवस्थाप्रयोजक इति नेत्याह—अकल्पितेति । घटादिभेदस्यापि सत्यत्वस्यास्माकमसम्मतत्वादित्यर्थः । ननु स्वाभाविकभेद एव व्यवस्थाप्रयोजकः, न त्वौपाधिकभेद इत्याशङ्क्याह—मणीति । मुखे हि मलिनमणिदर्पणकृतेन भेदेन श्यामत्वावदातत्वव्यवस्थासम्प्रतिपत्तेः कृपाणमणिमयस्तम्भादिकृतेन भेदेन वर्तुलत्वदीर्घभावादिव्यवस्थासम्प्रतिपत्तेरित्यर्थः । न च बिम्बप्रतिबिम्बयोरभेदे स्वाभाविके खलु 'भेद औपाधिकः' इति सिध्यति, तद्वशाद् व्यवस्थाऽपि सिध्यति, तयोरभेद एव कथं सिद्ध इति वाच्यम् । तस्य प्रागेव साधितत्वादिति भावः । अवच्छेदपक्षे औपाधिकभेदस्य व्यवस्थापकत्वसम्प्रतिपत्तिं दर्शयति—अङ्गुलीति । जीवानामुपाधिभेदाद्वा औपाधिकभेदाद्वा सुखदुःखादिव्यवस्थासिद्धौ तेषां वस्तुतः परस्परं भेदे प्रमाणाभावादेकब्रह्माभेदस्सिध्यति । तत्सिद्धौ च जीवाभिन्ने निष्प्रपञ्चे ब्रह्मणि वेदान्तसमन्वयस्सिद्ध इति प्रतिपादितम् ॥

सम्प्रति विचारान्तरमारभते—एवमिति । उक्तप्रकारेणेत्यर्थः । क इति । अनुसन्धानाननुसन्धानयोः किं भोगायतनाभेदतद्भेदौ प्रयोजकौ, किं वा विश्लिष्टभोगायतनाभेदतद्भेदौ, अथवा शरीराभेदतद्भेदौ, अन्तःकरणाभेदतद्भेदौ वा, अज्ञानाभेदतद्भेदौ वेति प्रश्ने प्रतिवचनं निरूपणीयमित्यर्थः ॥

(वे०सू०मं०) प्राहुर्भोगायतनभिन्नताम्।

अत्र केचिदाहुः—भोगायतनाभेदतद्भेदावनुसन्धानाननुसन्धानप्रयोजकोपाधी। शरीरावच्छिन्नवेदनायास्तदवच्छिन्नेनानुसन्धानात् चरणावच्छिन्नवेदनाया हस्तावच्छिन्नेनाननुसन्धानाच्च। 'हस्तावच्छिन्नोऽहं पादावच्छिन्नवेदनामनुभवामि' इत्यप्रत्ययात्। कथं तर्हि चरणलग्नकण्टकोद्धाराय हस्तव्यापारः। नायं हस्तव्यापारः हस्तावच्छिन्नानुसन्धानात्, किं त्ववयवावयविनोश्चरणशरीरयोर्भेदासत्त्वेन चरणावच्छिन्नवेदना शरीरावच्छिन्नेन 'अहं चरणे वेदानावान्' इत्यनुसन्धीयते इति तदनुसन्धानात्। एवं चैत्रमैत्रशरी-

तत्राद्यं पक्षमादाय प्रतिवचनं निरूपयति—अत्र केचिदाहुरिति। तत्रान्वयव्यतिरेकौ प्रमाणयति—शरीरावच्छिन्नेति। भोगायतनं ह्यवच्छेदकतासम्बन्धेन भोगाश्रयः। स च देहः, तदवयवहस्तादिश्च भवतीत्याशयेनाह—चरणेति। अननुसन्धानमेव दर्शयति—हस्तावच्छिन्न इति। हस्तावच्छिन्नात्मनः पादावच्छिन्नात्मगतदुःखानुसन्धातृत्वाभावे बाधकं शङ्कते—कथं तर्हीति। अयं हस्तव्यापारो हस्तावच्छिन्नस्यानुसन्धानाद् न भवति, किं तु तदनुसन्धानादिति सम्बन्धः। तस्य शरीरावच्छिन्नस्य यच्चरणावच्छिन्नगतवेदनानुसन्धानम्, तस्मादित्यर्थः। ननु चरणावच्छिन्नगता वेदना कथं शरीरावच्छिन्नेनानुसन्धीयते। अवयवावयविनोर्भेदाद्, भेदेऽप्यनुसन्धानोपगमे चैत्रशरीरावच्छिन्ना वेदना मैत्रशरीरावच्छिन्नेनाप्यनुसन्धीयेत, भेदाविशेषात्। तथा च चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरस्य स्वारसिको व्यापारः प्रसज्येत, अत आह—अवयवावयविनोरिति। अवयवानां परस्परं भेदेऽपि शरीरतदवयवयोस्तादात्म्योपगमादित्यर्थः। एवं चेति। शरीरावच्छिन्नस्य चरणावच्छिन्नवेदनानुसन्धानं प्रति शरीरचरणयोस्तादात्म्यस्य नियामकत्वे सतीत्यर्थः। ननु हस्तावच्छिन्नस्य चरणावच्छिन्नगतवेदनानुसन्धातृत्वाभावेऽपि चरणलग्नकण्टकोद्धाराय हस्तव्यापारवद् मैत्रशरीरावच्छिन्नस्य चैत्रशरीरावच्छिन्नगतवेदनानुसन्धातृत्वाभावेऽपि चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरव्यापारप्रसङ्गः परिहर्तुं न शक्यते, तत्राह—

रयोरभेदाभावात् चैत्रशरीरावच्छिन्नवेदना न मैत्रशरीरावच्छिन्नेनानुसन्धीयते । नाप्युभयशरीरानुस्यूतावयव्यन्तरावच्छिन्नेनानुसन्धीयते । उभयानुस्यूतस्यावयविनो भोगायतनस्यैवाभावादिति न चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरव्यापारप्रसङ्ग इति ॥

(वे०सू०मं०) अन्ये विश्लिष्टतद्भेदं भोगासाङ्कर्यकारणम् ॥ ६४ ॥

अन्ये तु विश्लिष्टोपाधिभेदोऽननुसन्धानप्रयोजकः । तथा च हस्तावच्छिन्नस्य चरणावच्छिन्नवेदनानुसन्धानाभ्युपगमेऽपि न दोषः । न चैवं सति गर्भस्थस्य मातृसुखानुसन्धानप्रसङ्गः । एकस्मिन्नवयविन्यवयवभावेनाननुप्रविष्टयोर्विश्लिष्टशब्देन विवक्षितत्वाद् मातृगर्भशरीरयोस्तथात्वादित्याहुः ॥

न च—

---

नापीति । चैत्रमैत्रशरीरद्वयानुस्यूनेत्यर्थः । चैत्रशरीरावच्छिन्नवेदना उभयानुस्यूतावयव्यन्तरावच्छिन्नेनापि नानुसन्धीयत इति सम्बन्धः । अतो न दृष्टान्तसाम्यमिति भावः ॥

चरणलग्नकण्टकोद्धाराय हस्तव्यापारानुरोधेन हस्तावच्छिन्नस्यैव चरणावच्छिन्नवेदनाऽनुसन्धातृत्वमुपेयते । न च तथा सति भोगायतनभेदस्याननुसन्धानप्रयोजकत्वं न स्यात्, चरणहस्तभेदे व्यभिचारादिति वाच्यम् । तद्वारणाय विशेषणदानोपपत्तेरिति मत्वा द्वितीयमुपाधिं निरूपयति—अन्ये त्विति । उपाधिपदं भोगायतनपरम् । न दोष इति । भोगायतनयोर्हस्तचरणयोर्भेदे सत्यपि तयोर्विश्लिष्टत्वाभावेन विश्लिष्टभोगायतनभेदस्याननुसन्धानप्रयोजकस्याभावान्न तत्र व्यभिचारदोष इत्यर्थः । न चैवंसतीति । विश्लिष्टत्वविशेषणदाने सतीत्यर्थः । गर्भस्थजीवस्य यद् भोगायतनम्, तस्य मातृशरीरस्य च विश्लेषाभावादिति भावः । विश्लिष्टपदार्थानभिज्ञस्येदं चोद्यमिति परिहरति—एकस्मिन्निति । तथात्वादिति । एकस्मिन्नवयविन्यवयवभावेनाननुप्रविष्टत्वादित्यर्थः । तथा च विश्लिष्टोपाधिभेदसत्त्वान्न गर्भस्थजीवस्य मातृसुखानुसन्धानप्रसङ्ग इति भावः ।

'उद्यतायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः।
पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीनिह ॥' इति—

भारतोक्त्या विश्लेषेऽप्यनुसन्धानमवगतमिति वाच्यम्। तत्रापि शिरःकबन्धयोरेकस्मिन् अवयविन्यवयवभावेनानुप्रविष्टचरत्वात् शिरश्छेदनानन्तरं मूर्छामरणयोरन्यतरावश्यंभावेन दृष्टविरुद्धार्थस्य तादृशवचनस्य कैमुत्यन्यायेन योधोत्साहातिशयप्रशंसापरत्वात्। तादृक्प्रभावयुक्तपुरुषविशेषविषयत्वेन भूतार्थवादत्वेऽपि निरुक्तस्योत्सर्गतोऽननुसन्धानतन्त्रत्वाविघाताच्च। अत एवोक्तवक्ष्यमाणपक्षेषु योगिनां जातिस्मराणां च शरीरान्तरवृत्तान्तानुसन्धाने न दोषप्रसक्तिः।

---

निरुक्ताननुसन्धानप्रयोजकस्य व्यभिचारं शङ्कते—न चेति। दोर्दण्डाः—बाहुदण्डाः। कबन्धाः—छिन्नशिरस्कदेहाः। इह—युद्धे भूमौ वा। अत्र वचने चैत्रमैत्रशरीरयोरिव विश्लिष्टयोः कबन्धशिरसोर्भेदे सत्यपि शिरोऽवच्छिन्नस्य कबन्धावच्छिन्नगतयोद्धृत्वानुसन्धातृत्वमवगम्यत इति व्यभिचार इत्यर्थः। तत्रानुसन्धानमुपेत्य चैत्रमैत्रशरीरवैलक्षण्येन समाधत्ते—तत्रापीति। चरत्वादिति। पूर्वमनुप्रविष्टत्वादित्यर्थः। अस्य वचनस्य स्वार्थे मानत्वाभावाद् व्यभिचारशङ्कैवायुक्तेत्याशयेनाभ्युपगमं परित्यजति—शिरश्छेदानन्तरमिति। कबन्धा अपि पातयन्ति, किमुतान्ये इति योधानामुत्साहातिशयं प्रशंसत्येतद्वचनमित्यर्थः। ननु शिरश्छेदानन्तरमपि युद्धानुसन्धानादिकं योगमहिम्ना वा वरदानमहिम्ना वा केषांचित् सम्भवति। ततो विद्यमानार्थकमेवेदं वचनमित्याशङ्कायां पुनरनुसन्धानमुपेत्य व्यभिचारं परिहरति—तादृगिति। 'विश्लिष्टभोगायतनभेदोऽननुसन्धानप्रयोजकः' इत्युत्सर्ग इत्युपगमाद् उदाहृतानुसन्धानस्थलस्य तदपवादस्थलत्वाभ्युगमात् तत्र व्यभिचारो न दोषायेति भावः। अत एवेति। उत्सर्गरूपत्वाभ्युपगमादेवेत्यर्थः। न दोषप्रसक्तिरिति। भोगायतनभेदादेरननुसन्धानप्रयोजकत्वनियमाभ्युपगमे हि योगिषु जातिस्मरेषु च भोगायतनभेदादिप्रयोजकचतुष्टयस्य सत्त्वेऽप्यननुसन्धानाभा-

(वे०सू०मं०) देहभेदं परे प्राहुर्बाल्यादिषु न तद्भिदा ॥
माययाऽपचयौ देहो दीपवन्नैव चाणुभिः ॥ ६५ ॥

अपरे तु शरीरैक्यभेदावनुसन्धानतदभावप्रयोजकोपाधी । बाल्यभवान्तरानुभूतयोरनुसन्धानतदभावदृष्टेः । न च बाल्ययौवनयोरपि शरीरभेदः शङ्कनीयः । प्रत्यभिज्ञानात् । न च परिमाणभेदेन तद्भेदावगमः । एकस्मिन् वृक्षे मूलाग्रभेदेनेव कालभेदेनैकस्मिन्ननेकपरिमाणान्वयोपपत्तेः ।

नन्ववयवोपचयमन्तरेण न परिमाणभेदः । अवयवाश्च पश्चादापतन्तो न पूर्वसिद्धं शरीरं परियुज्यन्ते इति परिमाणभेदे शरीरभेद आवश्यक इति चेत्, न । प्रदीपारोपणसमसमयसौधोदरव्यापिप्रभामण्डलविकासतत्पिधानसमसमयतत्सङ्कोचाद्यन-

---

वेन व्यभिचाररूपदोषप्रसक्तिर्न भवेदित्यर्थः । अदृष्टविशेषासहकृतस्य भोगायतनभेदादेरननुसन्धानप्रयोजकत्वस्य विवक्षितत्वाद् न योग्यादिषु व्यभिचार इति तात्पर्यम् ॥

तृतीयपक्षमादाय प्रतिवचनं निरूपयति—अपरे त्विति । तत्र मानमाह—बाल्येति । बाल्येऽनुभूतस्य वार्धकेऽनुसन्धानं दृश्यते । बाल्यवार्धकयोः शरीराभेदात् । तत्तद्भेदादेव भवान्तरानुभूतस्यास्मिन् जन्मन्यनुसन्धानं न दृश्यते इत्यर्थः । शङ्कनीय इति । परिमाणभेदादिति भावः । बाल्याद्यवस्थाभेदेऽपि 'तदेवेदं शरीरम्' इति प्रत्यभिज्ञादर्शनाद् न शरीरभेद इति परिहरति—प्रत्यभिज्ञानादिति । शङ्काबीजमनूद्यान्यथासिद्धिमाह—न चेत्यादिना ।

आरम्भवादमाश्रित्य शङ्कते—नन्विति । न पूर्वसिद्धमिति । पूर्वसिद्धे शरीरे उपादानत्वायोगात् पूर्वसिद्धशरीरनाशपूर्वकं तदवयवैरुपचितावयवैश्च मिलित्वा शरीरान्तरं द्व्यणुकत्र्यणुकादिक्रमेणारब्धव्यमिति परिमाणभेदे शरीरभेद आवश्यकः । प्रत्यभिज्ञा च शरीरत्वसामान्यविषया भविष्यतीत्यर्थः । समसमयत्वं विकासविशेषणम् । समयश्च क्षणरूपो बोध्यः । तत्पदं दीपदीप्तिपरम् । उपादानोपादेययोः सामानाधिकरण्यानुभवादिरादिपदार्थः । अननुरोधिन इति । द्व्यणुकादिक्रमेण स्थूलावयव्युत्प-

नुरोधिनः परमाणुप्रक्रिययोरसम्भवादस्यानभ्युपगमात्। विवर्तवादे चैन्द्रजालिकदर्शितशरीरवद् विनैवावयवोपचयं मायया शरीरस्य वृद्ध्युपपत्तिरित्याहुः ॥

(वे०सू०मं०) लिङ्गभेदं परे—

इतरे त्वन्तःकरणभेदतद्भेदाभ्यामनुसन्धानाननुसन्धानव्यवस्थामाहुः ॥

अयं च पक्षः प्रागुपपादितः ॥

(वे०सू०मं०) अविद्याभेदमन्ये प्रचक्षते।

केचित्तु 'अज्ञानानि जीवभेदोपाधिभूतानि नाना' इति स्वीकृत्य तद्भेदाभेदाभ्याम् अनुसन्धानाननुसन्धानव्यवस्थामाहुः ॥ १२॥

(वे०सू०मं०) अदृष्टानियमादिभ्यः कारणादेर्व्यवस्थितिः ॥ ६६॥

(१३)अत्र केचिद् (उ० मी० अ० २ पा० ३ सू० ४३) "अंशो नानाव्यपदेशाद्' इत्यधिकरणे "अदृष्टानियमात्" (उ० मी० अ० २ पा० ३ सू० ५१ ) "अभिसन्ध्यादिष्वपि चै-

---

त्तिपक्षे विलम्बापत्तेः समसमयत्वानुभवविरोधात् परमाणुसंयोगनाशक्रमेण प्रभादिनाशेऽपि विलम्बापत्तेरारम्भवादे उपादानोपादेययोरत्यन्तभेदाभ्युपगमेन सामानाधिकरण्यानुभवविरोधाच्च तद्वादस्य हेयत्वमेवेत्यर्थः। अवयवोपचयक्रमेण शरीरान्तरारम्भानुपगमे कथमेकस्मिन् शरीरे विरुद्धपरिमाणयोग इत्यत आह—विवर्तवादे चेति ॥

चतुर्थं पक्षमादाय प्रतिवचनं ददाति—इतरे त्विति। प्रागिति। सुखदुःखादिव्यवस्थोपपादनग्रन्थे इत्यर्थः ॥

पञ्चमं पक्षमाह—केचित्त्विति। प्रतिजीवमज्ञानभेदे प्रमाणं ब्रह्मलक्षणविचारावसरे दर्शितम्।

एवमैकात्म्यवादे व्यवस्थामुपपाद्य तन्नानात्ववादे व्यवस्थानुपपत्तिमाह—अत्रेति। अंशो ब्रह्मणो जीवः। श्रुतिषु जीवब्रह्मणोर्नानात्वव्यपदेशात्। न च ब्रह्मणो निरंशस्य कथं जीवोंऽश इति वाच्यम्। अवच्छिन्नाकाशो महाकाशस्य यथा अंशः, तथा अव-

वम् (उ॰मी॰अ॰२पा॰३सू॰ ५२)" "प्रदेशादिति चेन्नान्तर्भावाद्" (उ॰ मी॰ अ॰ २ पा॰ ३ सू॰ ५३) इति-सूत्रतद्गतभाष्यरीतिमनुसृत्य एकस्मिन्नात्मन्युपाधिभेदेन व्यवस्थानुपगमे कणभुगादिरीत्याऽऽत्मभेदवादेऽपि व्यवस्थाऽनुपपत्तितौल्यमाहुः।

तथा हि—चैत्रचरणलग्नकण्टकेन चैत्रस्य वेदनोत्पादनसमये अन्येषामप्यात्मनां कुतो वेदना न जायते। सर्वात्मना सर्वगतत्वेन चैत्रशरीरान्तर्भावाविशेषात्। न च 'यस्य शरीरे कण्टकवेधादि, तस्यैव वेदना, नान्येषाम्' इति व्यवस्था। सर्वात्मसन्निधावुत्पद्यमानं शरीरं कस्यचिदेव, नान्येषामिति नियन्तुमशक्यत्वात्।

न च 'यददृष्टोत्पादितं यच्छरीरं, तत्तदीयम्' इति नियमः। अदृष्टस्यापि नियमासिद्धेः। यदा हि तददृष्टोत्पादनाय केन चिदा-

---

च्छिन्नचैतन्यमनवच्छिन्नचैतन्यरूपस्य ब्रह्मणोंऽश इत्युपगमादिति सूत्रभागार्थः। "अदृष्टानियमाद्"इत्यादिसूत्रत्रयस्य व्याख्यानं भविष्यति। कणभुगादिभिर्हि प्रतिशरीरमात्मभेदाभावे व्यवस्था न सम्भवतीत्यात्मभेद आश्रितः। न चात्मन एकत्वेऽप्युपाधिकृता व्यवस्था सम्भवतीति तद्भेदाश्रयणं तेषां व्यर्थमिति वाच्यम्। उपाधिकृतव्यवस्थायाः क्लिष्टत्वात्। अतोऽञ्जसा व्यवस्थासिद्धये आत्मभेदस्तैराश्रितः। तदेतन्मतं दूषयति—कणभुगादिरीत्येति। व्यवस्थेति। व्यवस्थाऽऽऽस्याभावस्य तुल्यत्वमाहुरित्यर्थः। यथा चैत्रस्य, तथाऽन्येषामपीत्यर्थः। कण्टकवेधादीत्यादिपदं खड्गघातादिसङ्ग्रहार्थम्। शरीरस्यात्माविशेषं प्रत्यसाधारण्यं न सिद्धमिति दूषयति—सर्वात्मसन्निधाविति।

"अदृष्टानियमाद्"इति सूत्रमवतारयति—यददृष्टेति। सूत्रं व्याचष्टे—अदृष्टस्यापीति। अनियमं साधयति—यदा हीति। तदा

त्मना संयुज्यते मनः, संयुज्यत एव तदाऽन्यैरपि । कथं कारणसाधारण्ये क्वचिदेव तददृष्टमुत्पद्येत । ननु मनस्संयोगमात्रसाधारण्येऽपि 'अहमिदं फलं प्राप्नवानि' इति अभिसन्धिरदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादि व्यवस्थितमिति तत एवादृष्टनियमो भविष्यतीति चेत्, न । अभिसन्ध्यादीनामपि साधारणमनस्संयोगादिनिष्पाद्यतया व्यवस्थित्यसिद्धेः । ननु स्वकीयमनस्संयोगोऽभिसन्ध्यादिकारणमिति मनस्संयोग एवासाधारणो भविष्यतीति, न । नित्यं सर्वात्मसंयुक्तं मनः कस्यचिदेव स्वमिति नियन्तुमशक्यत्वात् । न चादृष्टविशेषादात्मविशेषाणां मनसस्स्वस्वामिभावसिद्धिः । तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः ।

नन्वात्मनां विभुत्वेऽपि तेषां प्रदेशविशेषा एव बन्धभाज इति आत्माऽन्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात् सुखदुःखादिव्यवस्था भविष्यतीति, न । यस्मिन् प्रदेशे चैत्रः सुखा-

---

अन्यैरप्यात्मभिस्संयुज्यते इत्यर्थः । ततः किम्, तत्राह—कथमिति । आत्ममनःसंयोगरूपासमवायिकारणस्य समवायिकारणरूपात्मनश्च साधारणत्वादित्यर्थः । संयोगमात्रेति । मात्रपदमभिसन्ध्यादिसाधारण्यव्यवच्छेदार्थम्, न तु समवायिकारणस्य तद्व्यवच्छेदार्थमिति बोध्यम् । अभिसन्धिः फलेच्छा । आदिपदेन कृतिजनककार्यताज्ञानचिकीर्षयोः संग्रहः । "अभिसन्ध्यादिष्वपि चैवम्" इति सूत्रं योजयन्नुत्तरमाह—नेत्यादिना । मनसोऽसाधारण्यमाशङ्क्य निराकरोति—ननु स्वकीयेति । तथा च तत्संयोगासमवायिकारणकं सर्वमसाधारणं भविष्यतीति भावः ।

"प्रदेशादिति चेन्नान्तर्भावाद्" इति सूत्रं व्याचक्षाण एव प्रदेशकृतां व्यवस्थामाशङ्क्य निराकरोति—नन्वात्मनामिति । बन्धस्सुखदुःखादिः । तत्तदात्मासाधारणाद् प्रदेशविशेषाद् व्यवस्थेति चेदिति सौत्रशङ्काभागाक्षरार्थः । एकस्मिन् शरीरे एकस्यैवात्मनः प्रदेशः, नात्मान्तराणामिति नियमोऽसिद्ध इति दूषयति—न यस्मिन्निति । अदृष्टसुखादेरव्याप्यवृत्तित्वादात्मनो यः प्रदेशोऽदृष्टाद्याश्रयस्स एवात्र प्रदेशशब्दार्थः ।

ह्यनुभूय तस्मात् प्रदेशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते तस्यापि तत्र सुखदुःखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेशविशेषस्याप्यन्तर्भावात् । तस्मादात्मभेदेऽपि व्यवस्था दुरुपपादैव । कथंचित्तदुपपादने च श्रुत्यनुरोधाल्लाघवाच्चैकात्म्यमङ्गीकृत्य तत्रैव तदुपपादनं कर्तुं युक्तमिति ॥ १३ ॥

(वे०सू०मं०) एवमण्वात्मवादेऽपि भोगश्लेषो प्रसज्यते ॥
तथाऽन्ये बहवो दोषा विद्वद्भिः संप्रदर्शिताः ॥६७॥

(१४)सन्तु तर्ह्यणव एवात्मानः । यदि विभुत्वे व्यवस्था न सुवचा । मैवम् । आत्मनामणुत्वे कदाचित् सर्वाङ्गीणसुखोदयस्य करशिरश्चरणाधिष्ठानस्य चानुपपत्तेः ।

यदत्रार्वाचीनकल्पनम्—उत्क्रान्तिगत्यागतिश्रवणान्यथानुपप-

---

तथा च यस्मिन्नासनादिप्रदेशे चैत्रशरीरं स्थितं सत् चैत्रस्य सुखाद्यायतनं भवति, तस्मिन्नेव प्रदेशे चैत्रशरीरापक्रमणानन्तरं मैत्रशरीरमागत्य स्थितं सद् मैत्रस्य सुखाद्यायतनं दृश्यते । ततस्तत्र पश्चादागतमैत्रशरीरे चैत्रमैत्रात्मप्रदेशयोरदृष्टाश्रययोः प्रवेशात्तच्छरीरे चैत्रमैत्रयोरुभयोरपि भोगप्रसङ्गः । न च पूर्वशरीरापक्रमणसमये तच्छरीरगतस्य चैत्रात्मप्रदेशस्याप्यपक्रमणमेवास्त्विति वाच्यम् । प्रदेशवत आत्मनः स्थिरत्वेन प्रदेशस्य चलनानुपपत्तेः । एवमन्येषामप्यात्मनां प्रदेशान्तर्भावप्रयुक्तं भोगसाङ्कर्यमूह्यम् ।

तस्मादिति । आत्मनां व्यापकत्वाभ्युपगमादित्यर्थः । नन्वात्मैक्यमत इव तन्नानात्वमतेऽपि कथञ्चिद् व्यवस्था स्वीक्रियत इत्याशङ्क्याह— श्रुतीति । आत्मैक्यश्रुतीत्यर्थः । तत्रैवेति । एकस्मिन्नेवात्मनीत्यर्थः । जीवाणुत्वगमकश्रुतियुक्त्यवष्टम्भेन पुनर्जीवब्रह्माभेदमाक्षिपति—सन्त्विति । निराकरोति—मैवमिति । अधिष्ठानस्य चेति । युगपत् करादिप्रेरणस्येत्यर्थः ।

जीवस्याणुत्वेऽपि सर्वशरीरव्यापिसुखादिकं सम्भवतीति शङ्कते— यदत्रेति । कल्पनाप्रकारः 'तेषामणुत्वेऽपि'इत्यादिना भविष्यति । आदौ तस्याणुत्वे मानमाह—उत्क्रान्तीति । "तमुत्क्रामन्तम्"इत्यादिश्रुतिपूत्क्रान्त्यादिकं श्रूयते इति भावः । नन्वमध्यमपरिमाणस्य जीवस्योत्क्रान्त्याद्यन्यथा-

स्या "अणुर्ह्येवैष आत्मा यं वा एते सिनीतः पुण्यं च पापं च" "वालाग्रशतभागस्य" इत्यादिश्रुतिषु साक्षादणुत्वश्रवणेन च अणव एव जीवाः । तेषामणुत्वेऽपि ज्ञानसुखादीनां प्रदीपप्रभान्यायेन आश्रयातिरिक्तप्रदेशविशेषव्यापिगुणतया न सर्वाङ्गीणसुखानुपलब्धिः । "द्रोणं बृहस्पतेर्भागम्" इत्यादिस्मृत्यनुरोधेन जीवानामंशसत्त्वात् । करशिरश्चरणाद्यनुगतेषु सुखदुःखादियौगपद्यं कायव्यूहगतेषु योगिनां भोगवैचित्र्यं चेति न काचिदनुपपत्तिः । एवं च जीवानामणुत्वेनासङ्करात् सुखदुःखादिव्यवस्था विभोरीश्वराद् भेदश्चेति ।

---

नुपपत्त्या चेदणुत्वं कल्प्यते, तर्हि जीवस्य ब्रह्मभावश्रवणानुपपत्त्या तस्य विभुत्वं कल्प्येत । श्रुतार्थापत्तेरविशेषादित्याशङ्क्य श्रुतिमप्याह—अणुर्हीति । यमात्मानमेते सिनीतः बध्नीतः । के ते तत्राह पुण्यं च पापं चेति । एष आत्मा अणुर्हीत्यर्थः । वालः केशः । "शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इति वाक्यमादिपदेन गृह्यते । वालाग्रस्य यः शततमो भागः, तस्यापि शतधा विभक्तस्य यो भागः, तत्तुल्यपरिमाणो जीव इत्यर्थः । जीवस्याणुत्वसाधकप्रमाणानुसारिणमर्वाचीनकल्पनाप्रकारं दर्शयति—तेषामणुत्वेऽपीति । यथा प्रभायाः स्वाश्रयं प्रदीपं विहाय प्रदेशान्तरव्यापित्वम्, तथा ज्ञानादीनां स्वाश्रयमणुमात्मानं विहाय कदाचिच्छरीरव्यापित्वं कल्प्यत इत्यर्थः । नन्वात्मनः शरीरव्यापित्वे सति युगपत् सुखदुःखप्रयत्नादय उत्पद्यमानास्तास्मिन्नवयवभेदेन सम्भवन्ति । तस्याणुत्वे तु कथं तेषां यौगपद्यनिर्वाहः, तत्राह—द्रोणमिति । अनुगतेष्वित्यनन्तरं जीवांशेष्विति शेषः । व्यूहः—समूहः । कायव्यूहगतेष्वित्यनन्तरमपि जीवांशेष्विति शेषः । भोगानां भुज्यमानसुखादीनां वैचित्र्यं युगपन्नानाविधत्वं युगपदनेकशरीराधिष्ठानं च योगिनां स्वांशैः सम्भवतीत्यर्थः । जीवाणुत्वपक्षे न केवलमनुपपत्तिसामान्याभावः, किं तु लाभोऽप्यस्तीत्याह—एवं चेति जीवस्याणुत्वे सतीत्यर्थः । असङ्करादिति । एकस्मिन् शरीरे सर्वेषां जीवानां प्रवेशाभावादित्यर्थः । विभोरिति । जीवस्यापि विभुत्वे लक्षणभेदाभावादीशाद् भेदो न सिध्येद्, अ-

अत्रोक्तमद्वैतदीपिकायाम्—एवमपि कथं व्यवस्थासिद्धिः । चैत्रस्य 'पादे वेदना. शिरसि सुखम्'इति स्वांशभेदगतसुखदुःखानुसन्धानवद् मैत्रगतसुखदुःखानुसन्धानस्यापि दुर्वारत्वात् । अविशेषो हि चैत्रजीवात्तदंशयोः मैत्रस्य च भेदः । कायव्यूहस्थले वियुज्यान्यत्र प्रसरणसमर्थानामंशानां जीवाद्भेदावश्यंभावाद् अंशांशिनोस्त्वया भेदाभेदाभ्युपगमाच्च । न च शुद्धभेदोऽननुसन्धानप्रयोजक इति वाच्यम् । शुद्धत्वं हि भेदस्यांशांशिभावासहचरितत्वं वा अभेदासहचरितत्वं वा स्यात् ? । नाद्यः । "अंशो ह्येष परमस्य" "ममैवांशो जीवलोके" "अंशो नानाव्यप-

---

णुत्वे त्वत्यन्तवैलक्षण्याद् भेदस्सुगम इति भावः ।

अर्वाचीनकल्पनं दूषयति—अत्रोक्तमिति । एवमपीति । जीवस्याणुत्वसांशत्वकल्पनेऽपीत्यर्थः ।

जीवस्य स्वांशगतसुखाद्यनुसन्धानं जीवान्तरगतसुखाद्यननुसन्धानं चाभ्युपगच्छता त्वया भेदोऽननुसन्धानप्रयोजकः, अभेदश्च तदनुसन्धानप्रयोजक इति वक्तव्यम् । तत्राननुसन्धानप्रयोजकभेदो भेदमात्रं वा शुद्धभेदो वा ?। आद्ये चैत्रः स्वांशगतं सुखादिकं नानुसन्दध्यात् । अननुसन्धानप्रयोजकभेदस्य सत्त्वात् । यदि सत्यपि भेदे स्वांशगतमनुसन्दध्यात्, तदा चैत्रो मैत्रगतसुखादिकमप्यनुसन्दध्यादित्याह—चैत्रस्येति । अंशांशिनोरननुसन्धानप्रयोजकभेदासिद्धिमाशङ्क्य तं साधयति—कायव्यूहेति । वियुज्येति । अंशिनस्सकाशाद्विभागं प्राप्येत्यर्थः । अन्यत्रेति । योगिनो निजशरीरादन्यत्र कायव्यूह इत्यर्थः । तयोर्भेदो नास्माभिस्साधनीय इत्याशयेनाह—अंशांशिनोरिति । ननु भेदमात्रमननुसन्धानप्रयोजकतया नेष्यते, येन जीवः स्वांशगतमपि सुखादिकं नानुसन्दध्यात्, यद्यनुसन्दध्यात् तदा जीवान्तरगतमपि तदनुसन्दध्यादिति दोषः प्रसज्यते । किं तु विशेषतो भेद इति द्वितीयं शङ्कते—न चेति । आद्ये कल्पे जीवेश्वरभेदस्यांशांशिभावसहचरितत्वेन शुद्धभेदत्वाभावात्तयोः परस्परं सुखाद्यनुसन्धानं स्यादित्याह—नाद्य इति । जीवेश्वरयोरंशांशिभावे मानमाह—अंशोऽहीति ।

देशात्'' इति श्रुतिस्मृतिसूत्रैर्जीवस्य ब्रह्मांशत्वप्रतिपादनेन ब्रह्मजीवयोर्भोगसांकर्यप्रसङ्गात्।

ननु जीवांशानां जीवं प्रतीव जीवस्य ब्रह्म प्रति नांशत्वम्, किं तु 'चन्द्रबिम्बस्य गुरुबिम्बः शतांशः' इतिवत् 'सदृशत्वे सति ततो न्यूनत्वमात्रम्' औपचारिकांशत्वमिति चेत्। किंतदतिरेकेण मुख्यमंशत्वं जीवांशानां जीवं प्रति, यदत्राननुसन्धानप्रयोजकशरीरे निवेश्यते ?। न तावत् पटं प्रति तन्तूनामिवारम्भकत्वम्। जीवस्यानादित्वात्। नापि महाकाशं प्रति घटाकाशादीनामिव प्रदेशत्वम्, टङ्कच्छिन्नपाषाणशकलादीनामिव खण्डत्वं वा। अणुत्वेन निष्प्रदेशत्वादच्छेद्यत्वाच्च। भिन्नाभिन्नद्र-

---

परमस्य परमात्मनः जीवलक्षणो लोको जीवलोकः।

ननु भेदस्यांशांशिभावमात्रासहचरितत्वं शुद्धत्वं न भवति, किं तु मुख्यांशांशिभावासहचरितत्वम्। जीवेश्वरयोरंशांशित्वं तु न मुख्यम्। अतस्तयोर्भेदे मुख्यांशांशिभावासहचरितत्वरूपशुद्धत्वस्य सत्त्वान्नोक्तदोष इति शङ्कते—नन्विति। जीवं प्रतीति। तथा च जीवतदंशयोर्भेदे मुख्यांशांशिभावसहचरितत्वस्यैव सत्त्वेन तदसहचरितत्वरूपशुद्धत्वाभावादनुसन्धानोपपत्तिरिति भावः। नांशत्वमित्यनन्तरं मुख्यमिति शेषः। कान्तिमत्त्वं सादृश्यम्। मुख्यांशांशिभावासहचरितभेदोऽननुसन्धानप्रयोजक इत्यत्र मुख्यांशांशिभावो दुर्निरूप इत्याह—किं तदिति। यन्मुख्यमंशत्वमत्र प्रयोजकशरीरे निवेश्यते, तदेतदतिरेकेण किमिति योजना। मुख्यमंशत्वमारम्भकावयवत्वं वा, प्रदेशत्वं वा, खण्डत्वं वा, भिन्नाभिन्नद्रव्यत्वं वेति किंशब्दार्थः। तत्राद्यं निराकरोति—न तावदिति। द्वितीयतृतीयौ क्रमेणानूद्य दूषयति—नापीत्यादिना। जीवस्याणुत्वेन प्रदेशासम्भवादणुत्वेनैव द्वैधीभावायोग्यत्वाच्चेत्यर्थः। चतुर्थं शङ्कते—भिन्नाभिन्नेति। जीवांशानां जीवेन सह भिन्नत्वे सत्यभिन्नद्रव्यत्वं मुख्यमंशत्वमभिमतम्। तदेव चाननुसन्धानप्रयोजकशरीरे निवेश्यते। तथा च भिन्नाभिन्नद्रव्यत्वासहचरितभेद एवाशुद्धभेदः। स चाननुसन्धानप्रयोजक इति निष्कर्षः। तत्र

ण्यत्वमंशत्वमाभिमतमिति चेद्, न । तथा सति जीवेश्वरयोर्जीवानां च भोगसाङ्कर्यप्रसङ्गात् । स्वतो भिन्नानां तेषां चेतनत्वादिना अभेदस्यापि त्वयाऽङ्गीकारात्, समूहसमूहिनोर्भेदाभेदवादिनस्तत्र मते एकसमूहान्तर्गतजीवानां परस्परमप्यभेदसत्त्वाच्च स्वाभिन्नसमूहाभिन्नेन स्वस्याप्यभेदस्य दुर्वारत्वात् । यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात्, तदा गुणगुण्यादेरभेदाद् घटाभिन्नसंयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येतेत्यादि वदता त्व-

---

दूषणमाह—तथासतीति । जीवेश्वरयोस्त्वया भिन्नाभिन्नद्रव्यत्वाभ्युपगमात् तयोर्भेदश्शुद्धभेदो न भवति । तथा जीवांशानां परस्परं भिन्नाभिन्नद्रव्यत्वस्य त्वया स्वीकारात्तेषां भेदोऽपि शुद्धभेदो न भवति । तथा च अननुसन्धानप्रयोजकाभावाज्जीवेश्वरयोर्जीवांशानां च भोगसाङ्कर्यप्रसङ्ग इत्यर्थः । चेतनत्वादिनेति । सत्त्वद्रव्यत्वसङ्ग्रहार्थमादिपदम् । दूषणान्तरमाह—समूहेति । समूहस्य, समूहिनां च परस्परं भिन्नत्वे सत्यभिन्नत्वमङ्गीकुर्वतस्तत्र मते समूहिनामपि परस्परमभिन्नत्वमावश्यकम् ।

तथा च उत्सवादावेकत्र मिलितानां जीवानां भिन्नानां परस्परमभिन्नद्रव्यत्वस्यापि सत्त्वात्तेषां परस्परं भेदश्शुद्धभेदो न भवति । भिन्नाभिन्नद्रव्यत्वसहचरितत्वात् । तथा च परस्परं तेषां सुखाद्यनुसन्धानप्रसङ्ग इत्यर्थः ।

ननु समूहिनां समूहाभिन्नत्वेऽपि न तेषां परस्परमभिन्नत्वमस्मन्मतेऽस्ति, अतो नोक्तदोष इत्याशङ्क्याह—स्वाभिन्नेति । स्वमेकस्समूही देवदत्तः, तदभिन्नः समूहः, तदभिन्नो यज्ञदत्तः, तेन सह स्वस्यापि देवदत्तस्याप्यभेदस्य तत्र मते दुर्वारत्वात् । त्वया तदभिन्नाभिन्नस्य तदभिन्नत्वनियमाभ्युपगमादित्यर्थः । परं प्रत्युक्तनियमाभ्युपगमं साधयति—यदीत्यादिना । गुणगुणिनोर्जातिव्यक्त्योश्चाभेदवादिनं प्रति दूषणपरोऽयं जीवाणुत्ववादिग्रन्थो यदीत्यादिः । गुणगुणिनोरभेदमङ्गीकृत्य यदि गुणस्य संयोगविभागद्वित्वादेरनेकाश्रितत्वमभ्युपगम्येत, तथा जातिव्यक्त्योरभेदमुपेत्य यदि जातेरनेकाश्रितत्वमभ्युपगम्येत, तदा पटादेरपि घटाभेदप्रसङ्ग इत्यत्र हेतुगर्भं विशेषणमाह—घटाभिन्नेति । घटाभिन्नः संयोगः, तदभिन्नत्वात् पटादेरित्यर्थः ।

या तदभिन्नाभिन्नस्य तदभेदनियमाभ्युपगमात् ।

न च जीवान्तरसाधारणचेतनत्वादिधर्मैकरूप्यैकसमूहान्तर्गतत्वादिप्रयुक्ताभेदविलक्षणमभेदान्तरमंशांशिनोरस्ति भेदेऽप्यनुसन्धानप्रयोजकम्, यदत्रानतिप्रसङ्गाय विवक्ष्येत । तथा सति तस्यैव विशिष्य निर्वक्तव्यत्वापत्तेः । धर्मैकरूप्याद्यप्रयुक्तत्वमंशांशिनोरभेदे विशेष इति चेत्, न । जीवतदंशयोश्चेतनत्वादिधर्मैकरूप्यसत्त्वेन एकशरीरावच्छेदे कायव्यूहमेलने च समूहत्वेन च

---

ननु जीवेश्वरयोर्जीवांशानां समूहाभिन्नजीवानां च योऽयं चेतनत्वादिधर्मप्रयुक्ताभेद एकसमूहाभेदप्रयुक्ताभेदश्च, तदपेक्षयाऽन्य एवाभेदो जीवतदंशयोरस्ति । अतस्तयोर्भेदे सत्यपि परस्परमनुसन्धानं जीवेश्वरयोर्जीवांशानां समूहिजीवानां च तादृशाभेदाभावाच्चेतनत्वादिप्रयुक्ताभेदे सत्यपि न परस्परमनुसन्धानमिति व्यवस्था । तथा च 'भिन्नाभिन्नद्रव्यत्वासहचरितभेदश्शुद्धभेदः, स च अननुसन्धानप्रयोजकः' इत्यत्र जीवतदंशयोः परस्परानुसन्धानप्रयोजकत्वाभिमतो विलक्षणाभेद एव प्रविष्ट इति जीवेश्वरादौ तादृशाभेदघटितभिन्नाभिन्नद्रव्यत्वासहचरितभेदसत्त्वान्नोक्तातिप्रसङ्ग इति शङ्कां निराकरोति—न चेति । जीवतदंशयोरिव जीवान्तराणामपि साधारणो यश्चेतनत्वादिधर्मैकरूप्यप्रयुक्त एकसमूहान्तर्गतत्वादिप्रयुक्तश्चाभेदः, तद्विलक्षणमित्यर्थः । जीवेश्वरगतस्यामुख्यांशांशिभावस्य सङ्ग्रहार्थमादिपदम् । अंशांशिनोर्भेदे सत्यपि तयोरनुसन्धानप्रयोजकमभेदान्तरं न चास्ति, यदभेदान्तरं जीवेश्वरादावतिप्रसङ्गपरिहाराय भिन्नाभिन्नद्रव्यत्वशरीरप्रविष्टतया विवक्ष्येतेति योजना । नन्वभेदान्तरं कुतो नास्तीत्याशङ्क्याह—तथा सतीति । विलक्षणाभेदस्यांशांशिनोस्सत्त्व इत्यर्थः । जीवेश्वराद्यभेदापेक्षया जीवतदंशयोरभेदस्य विशेषं विशेषतो निर्वक्ति—धर्मैकरूप्याद्यप्रयुक्तत्वमिति । उक्तविशेषासिद्धिमाह—न जीवेति । जीवस्य तदंशानां च चेतनत्वसत्त्वद्रव्यत्वादिधर्मैरैकरूप्यमस्ति । तथा जीवस्य तदवयवानां चैकशरीरानुप्रवेशकाले तच्छरीरावच्छेदेन समूहोऽप्यस्ति तथा योगिजीवावयवानां कायव्यूहशब्दितानेकशरीरेषु प्रविष्टानां कदाचित्तेषां शरीराणां मेलने सति योगिजीवेनांशिना सह समूहोऽस्ति । तथा च जीवतदं-

तयोरभेदे धर्मैकरूप्यादिप्रयुक्तत्वस्यापि सद्भावात् । धर्मैकरूप्यादिप्रयुक्ताभेदान्तरसत्त्वेऽपि जीवतदंशयोरंशांशिभावप्रयोजकाभेदो न तत्प्रयुक्त इति चेद्, न । तयोरभेदद्वयाभावात् त्वन्मतेऽधिकरणैक्ये सति भेदस्याभेदस्य वा प्रतियोगिभेदेन तदाकारभेदेन वा अनेकत्वानभ्युपगमात् । तस्मादाद्यपक्षे सुस्थोऽतिप्रसङ्गः ।

एतेनैव द्वितीयपक्षोऽपि निरस्तः । अभेदासहचरितभेदस्याननुसन्धानप्रयोजकत्वे उक्तरीत्या त्वन्मते जीवब्रह्मणोर्जीवानां चाभेदस्यापि सत्त्वेनातिप्रसङ्गस्य दुर्वारत्वात् ।

ननु 'अभेदप्रत्यक्षमनुसन्धाने प्रयोजकम्'इति तदभावे-

---

शयोर्भेदे धर्मैकरूप्यादिप्रयुक्तत्वसम्भवात्तदप्रयुक्तत्वमसिद्धमित्यर्थः । ननु जीवानां चेतनत्वादिधर्मैकरूप्यादिप्रयुक्ताभेदसत्त्वेऽपि तेषामंशांशिभावाभावादंशांशिभावप्रयोजकाभेदोऽन्य एव । स च न धर्मैकरूप्यादिप्रयुक्त इति शङ्कते—धर्मैकरूप्यादीति । जीवान्तरसाधारणाभेदस्य धर्मैकरूप्यादिप्रयुक्तस्याप्यपरिहार्यत्वात्तस्याप्यभ्युपगमे सति जीवतदंशयोरभेदद्वयमभ्युपगतं परस्य मते प्रसज्यते । ओमिति वदन्तं परं प्रत्याह—न तयोरिति । अंशांशिनोरित्यर्थः । तदाकारेति । प्रतियोग्याकारेत्यर्थः । प्रतियोगितावच्छेदकेति यावत् । भेदस्यानेकत्वानभ्युपगमोपन्यासो दृष्टान्तार्थः । तस्मादिति । जीवेश्वरयोर्यः पूर्वमंशांशिभावो निरूपितः, तदतिरेकेण जीवतदंशयोर्मुख्यस्यांशांशिभावस्य दुर्निरूपत्वादित्यर्थः ।

तथा च जीवेश्वरयोर्भेदस्य निरूपितांशांशिभावसहचरितत्वेन तदसहचरितत्वरूपशुद्धत्वाभावे सत्यननुसन्धानप्रयोजकशुद्धभेदाभावाज्जीवेश्वरयोः परस्परं भोगसाङ्कर्यप्रसङ्गरूपो दोषः स्थिर इत्यर्थः ।

आद्यपक्ष इति । 'अंशांशिभावासहचरितत्वं शुद्धत्वम्'इति पक्ष इत्यर्थः ।

'अभेदासहचरितत्वं शुद्धत्वं भेदस्य'इति पक्षं वक्ष्यमाणहेतुना निराकरोति-एतेनैवेति । उक्तरीत्येति । चेतनत्वादिधर्मैकरूप्यप्रयुक्ता रीतिः ।

जीवतदंशयोरिव जीवब्रह्मणोर्जीवानां चाभेदमुपेत्यापि पूर्वोक्तातिप्रसङ्गपरिहारं शङ्कते—नन्विति । स्वस्येति । अंशिनो जीव-

ऽननुसन्धानम्। स्वस्य स्वाभेदः स्वांशाभेदश्च प्रत्यक्ष इति तद्द्रष्टुर्दुःखाद्यनुसन्धानम्, जीवान्तरेणाभेदसत्त्वेऽपि तस्याप्रत्यक्षत्वान्न तद्दुःखाद्यनुसन्धानम्। जातिस्मरस्य प्राग्भवीयात्मनाऽपि अभेदस्य प्रत्यक्षसत्त्वात् तद्वृत्तान्तानुसन्धानम्, अन्येषां तदभावाद् नेत्यादि सर्वं सङ्गच्छते इति चेत्, तर्ह्यैकात्म्यवादेऽपि सर्वात्मतावारकाज्ञानावरणाच्चैत्रस्य न मैत्रात्माद्यभेदप्रत्यक्षमिति तत एव सर्वव्यवस्थोपपत्तेर्व्यर्थः श्रुतिविरुद्ध आत्मभेदाभ्युपगमः।

न चेत्थमपि प्रपञ्चतत्त्ववादिनस्तव व्यवस्थानिर्वाहः। सर्वज्ञस्येश्वरस्य वस्तुसज्जीवान्तराभेदप्रत्यक्षावश्यंभावेन जीवेषु दुःखवत्सु 'अहं दुःखी'इत्यनुभवापत्तेः। अस्मन्मते त्वीश्वरः स्वाभिन्ने जीवे संसारं प्रतिबिम्बमुखे मालिन्यमिव पश्यन्नपि मिथ्यात्वनिश्चयान्न शोचतीति नैष प्रसङ्गः।

---

स्येत्यर्थः। जीवान्तरेणेति। स्वस्येत्यनुषङ्गः। जातिस्मरस्येति। पूर्वजन्मस्मरणवत इत्यर्थः। सर्वेति। सर्वात्मताऽऽवारकं यदज्ञानम्, तत्प्रयुक्तावरणादित्यर्थः। तत एवेति। चैत्रमैत्रादीनां सर्वेषां परस्परमभेदप्रत्यक्षाभावादेव व्यवस्थिततया सुखाद्यननुसन्धानोपपत्तेरित्यर्थः।

अभेदप्रत्यक्षस्यानुसन्धानप्रयोजकत्वमुपेत्य परमते आत्मभेदकल्पनागौरवं श्रुतिविरोधं च दर्शयित्वा परमते तस्य प्रयोजकत्वमपि न सम्भवति, अतिप्रसङ्गादित्याह—न चेत्थमपीति। 'अभेदप्रत्यक्षमनुसन्धानप्रयोजकम्' इति कल्पनयाऽपीत्यर्थः। वस्तुसन् परमार्थो यो जीवान्तराभेदः, तत्प्रत्यक्षमीश्वरस्यावश्यकम्। अन्यथा सर्वज्ञत्वभङ्गप्रसङ्गः स्यादित्यर्थः। ननु सिद्धान्तेऽपि ब्रह्मणस्सर्वज्ञत्वजीवाभिन्नत्वयोस्सत्त्वादुक्तदोषप्रसङ्ग इति, नेत्याह—अस्मन्मत इति।

यत्तु जीवानां सांशत्वात् करशिरश्चरणानुगतेषु जीवांशेषु सुखदुःखादियौगपद्यं सम्भवति, योगिनां कायव्यूहगतेषु योगिजीवावयवेषु युगपत् सुखदुःखादिभोगवैचित्र्यं च सम्भवतीति न काचिदनुपपत्ति-

स्यादेतत्—मा भूदंशभेदः करशिरश्चरणादीनां कायव्यूहस्य चाधिष्ठानम्, आत्मदीपस्यानपायिनी ज्ञानप्रभाऽस्ति व्यापिनीति सैव सर्वाधिष्ठानं भविष्यतीति चेद्, न । ज्ञानवद् आत्मधर्मस्य सुखदुःखभोगस्य ज्ञानमाश्रित्य उत्पत्त्यसम्भवेन करचरणाद्यवयवभेदेनावयविनः, कायव्यूहवतः कायभेदेन च भोगवैचि-

रिति, तन्न । जीवं प्रति जीवांशानां मुख्यांशत्वस्यापि निरस्तत्वात् । जीवं प्रति तदंशानां जीवसदृशत्वे सति जीवापेक्षया न्यूनपरिमाणत्वरूपौपचारिकांशत्वस्यापि जीवाणुत्वपक्षे बाधितत्वाच्च । अणुपरिमाणस्यैव सर्वपरिमाणापेक्षया न्यूनपरिमाणत्वेन ततोऽपि न्यूनपरिमाणाभावात् । सदृशत्वे सति ततो न्यूनत्वरूपांशत्वस्य चन्द्रबिम्बांशगुरुबिम्बवज्जीवांशानां जीवापेक्षयाऽत्यन्तभेदप्रयोजकत्वेन जीवस्य स्वांशगतसुखाद्यनुसन्धातृत्वासम्भवाच्च । तथा योगिजीवांशानां कायव्यूहाधिष्ठातृत्वेऽपि तेभ्योऽत्यन्तभिन्नस्य योगिजीवस्य कायव्यूहाधिष्ठातृत्वाभावप्रसङ्गाव, तथा शरीराधिष्ठातुर्जीवस्य शरीरावयवकरशिरश्चरणाद्यधिष्ठातॄणां जीवांशानां चात्यन्तभिन्नत्वेन एकस्मिन् शरीरे भोक्तृनानात्वप्रसङ्गाद्, जीवस्य सांशत्वे मानाभावाच्च 'द्रोणं बृहस्पतेर्भागम्' इत्यादिवचनस्य वर्णितरीत्या उक्तांशपरत्वासम्भवेन बृहस्पत्यादेर्योगप्रभावेन भूभारहरणादिदेवकार्यार्थं शरीरान्तरपरिग्रहमात्रपरत्वात् । एतेन श्रीरामकृष्णादेर्विष्ण्वंशत्वव्यवहारोऽपि व्याख्यातः ।

तस्माज्जीवांशविशेषस्य करशिरश्चरणाद्यधिष्ठातृत्वं कायव्यूहाद्यधिष्ठातृत्वं च न सम्भवतीति पूर्वग्रन्थाशये स्थिते शङ्कते—स्यादेतदिति । अधिष्ठानमिति । प्रेरक इत्यर्थः । भविष्यतीति । जीवः स्वयमणुतया शरीरैकदेशस्थोऽपि स्वसमवेतेन व्यापिज्ञानेन करशिरश्चरणादीन् कायव्यूहं चाधितिष्ठतीति निरंशस्याप्यणोर्जीवस्य कृत्स्नशरीराधिष्ठातृत्वादिकं नानुपपन्नमिति भावः । ज्ञानमाश्रित्येति । ज्ञानधर्मत्वे हि सुखादेर्ज्ञाने उत्पत्तिस्सम्भवेत् । ततश्च ज्ञानस्य व्यापकत्वात्तदाश्रितसुखादिरूपभोगस्यापि करशिरश्चरणादौ कायव्यूहे च युगपदुदयस्सम्भवेद्, न तु त्वया सुखादेर्ज्ञानधर्मत्वमिष्यते । तस्य ज्ञानवदेवात्मधर्मत्वाभ्युपगमात् । अतो ज्ञानस्य व्यापित्वेऽपि न करशिरश्चरणादौ कायव्यूहे च युगपद् भोगवैचित्र्यं सम्भवतीत्यर्थः । कायव्यूहवत इति । यो-

न्यायाभावप्रसङ्गात्। 'सुखदुःखभोगादि ज्ञानधर्म एव, नात्मधर्मः' इत्यभ्युपगमे तद्वैचित्र्येण आत्मगुणस्य ज्ञानस्य भेदसिद्धावप्यात्मनो भेदासिद्ध्या भोगवैचित्र्यादिनाऽऽत्माभेदप्रतिक्षेपायोगात्। 'भोगाद्याश्रयस्यात्मनोऽणुत्वेन प्रतिशरीरं विच्छिन्नतया तद्व्यापित्ववाद इव तदभेदवाद इव च न सर्वधर्मसङ्करापत्तिः' इति मतहानेश्च। तस्माज्जीवस्याणुत्वोपगमेन व्यवस्थोपपादनं न युक्तमिति।

नापि तेन तस्येश्वराद् भेदसाधनं युक्तम्। उत्क्रान्त्यादिश्रवणात्, साक्षादणुत्वश्रवणाच्च 'अणुर्जीवः' इति वदतः तव मते "तत् सृष्ट्वा तदेवानुप्राविशत्" "अन्तः प्रविष्टश्शास्ता जनानाम्"

---

गिन इति शेषः।

तस्य च भोगवैचित्र्यं स्मर्यते—

'आत्मनां च सहस्राणि बहूनि भरतर्षभ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वां महीं चरेत्॥
प्राप्नुयाद्विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत्।
सङ्क्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव॥' इति।

आत्मनां शरीराणाम्, बलं योगजनितं सामर्थ्यम्। तर्हि ज्ञानधर्मत्वमेव सुखादेरस्तु, यदि तद्धर्मत्वे भोगवैचित्र्यं सम्भवेत्, तत्राह— सुखदुःखभोगादीति। असिद्ध्येति। आत्मगुणज्ञाननिष्ठस्य भोगवैचित्र्यस्य व्यधिकरणतया आत्मभेदसाधकत्वासम्भवादित्यर्थः। सुखादेर्व्यापिज्ञानधर्मत्वं स्वमतविरुद्धं चेत्याह—भोगाद्याश्रयस्येति। नैयायिकादिमते इवाद्वैतिमते इव चेत्यर्थः। तस्मादिति। आत्मगुणस्य ज्ञानसुखादेर्व्यापित्वकल्पनायोगादित्यर्थः।

जीवाणुत्वाभ्युपगमस्य पराभिमतं प्रयोजनान्तरं दूषयति— नापि तेन तस्येति। जीवस्याणुत्वेनेत्यर्थः। श्रुतितदर्थापत्तिभ्यां जीवस्याणुत्वं वदतस्तव मते ताभ्यामेवेश्वराणुत्वस्यापि दुर्वारत्वान्नेश्वरस्य विभुत्वसिद्धिः। तदसिद्धौ च न तवेष्टसिद्धिरिति दूषयति— उत्क्रान्त्यादीति। वदतस्तव पक्षे परोऽप्यणुरेव सिध्येदिति सम्बन्धः। "तत्सृष्ट्वा" इत्यत्र तत्पदद्वयं जगत्परम्। प्रकृतः परमात्मा सृष्ट्यादिकर्ता। अन्तरिति। शरीरेष्विति शेषः। शास्ता नियन्ता। परस्यार्थं

"गुहां प्रविष्टौ परमे परार्द्धे" इत्यादिश्रुतिषु प्रवेशादिश्रवणात्, "स एषोऽणिमा एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा" इति श्रुतौ साक्षादणुत्वश्रवणाच्च परोऽप्यणुरेव सिद्ध्येदिति कुतः परजीवयोर्विभुत्वाणुत्वाभ्यां भेदसिद्धिः ।

ननु "आकाशवत् सर्वगतश्च नित्यः" "ज्यायान् दिवो ज्यायानन्तरिक्षाद्" इत्यादिश्रवणात्, सर्वप्रपञ्चोपादानत्वाच्च परस्य सर्वगतत्वसिद्धेः तदणुत्वश्रुतयः उपासनार्थाः, दुर्ग्रहत्वाभिप्राया वा उन्नेयाः । प्रवेशश्रुतयश्च शरीराद्युपाधिना निर्वाह्याः । न च जीवोत्क्रान्त्यादिश्रुतयोऽपि बुद्ध्या उपाधिना निर्वोढुं श-

---

स्थानमर्हतीति परार्ध्यं परममुत्कृष्टं हार्दाकाशम्, तस्मिन् या बुद्धिलक्षणा गुहा, तां प्रविष्टौ जीवेश्वरावित्यर्थः । प्रवेशादीति । शरीरान्तस्स्थत्वादिकमादिपदार्थः । स उपक्रमे प्रकृतः, एषः सन्निहितः, अणिमा अणुः । भावप्रत्ययो न विवक्षितः । मे हृदयेऽन्तः' एष प्रकृतो भारूपत्वादिगुणक आत्मा वर्तते । स च व्रीह्याद्यपेक्षयाऽणुतर इत्यर्थः ।

अनन्यथासिद्धश्रुत्यादिवचनेन विभुत्वमीश्वरस्य शङ्कते—नन्विति । ज्यायान् महत्तरः । परस्य विभुत्वे लिङ्गमाह—सर्वेति । पराणुत्वश्रुतीनामन्यथासिद्धिमाह—तदणुत्वेति । उपासनार्था इति । "अणीयान् व्रीहेर्वा" इत्यादिश्रुतय इत्यर्थः । दुर्ग्रहत्वेति । "स एषोऽणिमा" इत्यादिश्रुतय इत्यर्थः । आसामुपासनाप्रकरणगतत्वाभावादिति भावः । व्यवस्थितविकल्पवाची वाकारः । प्रवेशादिश्रवणस्यान्यथासिद्धिमाह—प्रवेशश्रुतयश्चेति । परमेश्वरस्य स्वेच्छापरिगृहीतशरीरेन्द्रियप्रवेशोपाधिकश्शरीरेष्वन्तःप्रवेश इत्यर्थः । ननु 'जीवाणुत्वश्रुतिलिङ्गानामपि अन्यथानयनसम्भवाज्जीवस्यापि स्वाभाविकं विभुत्वं किं न स्यात् । तथा च न तस्याणुत्वसिद्धिः' इति सिद्धान्तिनश्शङ्कामनूद्य निराकरोति जीवाणुत्ववादी—न चेत्यादिना । तमुत्क्रामन्तमिति । न चात्र श्रुतौ प्राणोत्क्रान्तेः प्रागेव जीवस्योत्क्रान्तिश्रवणेऽपि न केवलस्य तस्योत्क्रान्तिसिद्धिः, बुद्धिविशिष्टस्य तस्योत्क्रान्तिसम्भवादिति वाच्यम् । बुद्धिप्राणयोर्भेदासिद्धेः, तयोरभेदस्यैव श्रुतिसिद्धत्वाच्च । तथा च

क्या इति शङ्क्यम् । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति'इति प्राणाख्यबुद्ध्युत्क्रान्तेः प्रागेव जीवोत्क्रान्तिवचनात् । तथा "विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"इति नामरूपविमोक्षानन्तरमपि गतिश्रवणाच्च । "तद्यथाऽनस्सुसमाहितमुत्सर्जन् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति" इति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेश्चेति चेद्, नैतत्सारम् । "स वा एष महानज आत्मा योऽयं विज्ञानमयः ।"

'घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः' ॥

---

श्रुतिः—"यो वै प्राणस्सा प्रज्ञा या वा प्रज्ञा स प्राणः" इति । प्रज्ञा बुद्धिरित्याशयेनाह—प्राणाख्यबुद्ध्युत्क्रान्तेरिति । नामरूपशब्दितोपाधिनिवृत्त्यनन्तरमपि जीवस्य ब्रह्म प्रति गतिः श्रूयते । तथा च यथा उत्क्रान्तेरौपाधिकत्वं न सम्भवति, तथा गतेरप्यौपाधिकत्वं न सम्भवतीत्यमध्यमपरिमाणस्य जीवस्य स्वाभाविकमणुत्वं स्वीकर्तव्यमित्याशयेनाह—तथा विद्वानिति । पराद्धिरण्यगर्भाद् जीवस्य स्वाभाविके गत्याश्रयत्वे सत्येव दृष्टान्तविशेषस्सङ्गच्छते, अन्यथा तद्वैरूप्यं स्यादित्याशयेनाह—तद्यथेति । तद् तत्र, जीवस्य परलोकं प्रति गमने दृष्टान्त उच्यते । अनश्शकटम् । सुसमाहितं गृहोपकरणैः पूर्णम् । उत्सर्जन् शब्दं कुर्वन् यायाद् गच्छेद् यथा, एवं जीव ईश्वरेणान्वारूढः प्रेरितो गच्छति परलोकमित्यर्थः । तथा च जीवस्याणुत्वे स्वाभाविके सिद्धे स्वसणुत्वविभुत्वाभ्यां जीवेश्वरयोर्भेदसिद्धिरिति भावः । सिद्धान्ती दूषयति—नैतत्सारमिति । यथा परमात्मप्रकरणे श्रुतं परस्य विभुत्वमन्यथा नेतुमयुक्तम्, तथा जीवप्रकरणे श्रुतं जीवस्य विभुत्वमप्यन्यथा नेतुमयुक्तमित्याशयेन "कतम आत्मा"इत्यादिजीवप्रकरणगतं वाक्यजातमुदाहरति—स वा इत्यादिना । विज्ञानमयो जीवो महान् व्यापक आत्मेति जीवस्य व्यापकत्वश्रवणादित्यर्थः । "नभोपमः" इत्यनेन स्वतो जीवस्य विभुत्वमुच्यते इत्यर्थः । इयं श्रुतिः प्रागेव व्याख्याता । विभुत्वेऽनन्यथासिद्धश्रुतिसाम्यमुक्त्वा परोक्तं विभुत्वलिङ्गं

इत्यादिश्रुतिषु जीवस्यापि विभुत्वश्रवणात् । त्वन्मते प्रकृतेरेव जगदुपादानत्वेन ब्रह्मणो जगदुपादानत्वाभावाज्जीवस्य कायव्यूहगतविचित्रसुखदुःखोपादानत्ववदणुत्वेऽपि जगदुपादानत्वसम्भवाच्च, ततस्तस्य सर्वगतत्वासिद्धेः । तत्प्रवेशश्रुतीनां शरीरोपाधिकत्वकल्पने जीवोत्क्रान्त्यादिश्रुतीनामपि बुद्ध्युपाधिकत्वोपगमसम्भवात् । 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' ( उ० मी० अ० २ पा० ४ सू० १२ ) इतिसूत्रभाष्ये बुद्धिप्राणयोः कार्यभेदाद्भेदस्य प्रतिपादितत्वेन बुद्ध्युपाधिके जीवे प्रथममुत्क्रामति प्राणस्यानूत्क्रमणोपपत्तेः । नामरूपविमोक्षानन्तरं ब्रह्मप्राप्तिश्रवणस्य प्राप्तरि जीव इव प्राप्तव्ये ब्रह्मण्यपि

---

विघटयति—त्वन्मते इति । प्रकृतिः माया । परस्य ब्रह्मणस्सर्वप्रपञ्चोपादानत्वमुपेत्यापि न तद्विभुत्वसाधकमित्याह—जीवस्येति । अणोरिति शेषः । जीवाणुत्वश्रुतिलिङ्गानामन्यथानयनमपि तुल्यमेवेत्याह—तत्प्रवेशश्रुतीति । ब्रह्मप्रवेशेत्यर्थः । पञ्च प्राणापानादिलक्षणा वृत्तयो यस्य मुख्यप्राणस्य, स पञ्चवृत्तिः प्राणः श्रुतिषु व्यपदिश्यते । बहुवृत्तिमत्त्वमात्रे च दृष्टान्तो–मनोवदिति । प्राणापानादिवृत्तीनां चोच्छ्वासादिकं प्रत्येकं कार्यमिति द्रष्टव्यम् । तथा च दृष्टान्तदार्ष्टान्तिकभावेन सूत्रे मनश्शब्दितबुद्धेः प्राणस्य च भेदो निर्दिष्टः । स च बुद्धीन्द्रियकार्यविषयालोचनापेक्षया विलक्षणस्योच्छ्वासादिक्रियारूपकार्यस्य प्राणे दर्शनात् प्राणो बुद्ध्यादिभ्यो भिन्न इत्यादिप्रकारेण भाष्ये साधित इत्यर्थः । "यो वै प्राणस्सा प्रज्ञा"इति श्रुतौ प्रज्ञाप्राणयोर्भेदे सत्यपि प्रज्ञाप्राणोपहितस्य प्रत्यगात्मन एकत्वादुपहितात्मप्राधान्येन तयोरेकीकरणमविरुद्धमिति प्रतर्दनाधिकरण( उ०मी०अ० १ पा० १ अधि०११)भाष्ये प्रतिपादितत्वाद् न श्रुतिविरोधोऽपीति भावः । यत्तु नामरूपोपाधिनिवृत्त्यनन्तरं जीवस्य ब्रह्म प्रति गतिश्रवणं जीवस्य विभुत्वविरोधीति, तदयुक्तम् । तस्य ब्रह्मण्यपि विभुत्वविरोधित्वेन ब्रह्मणोऽपि तदसिद्धिप्रसङ्गात् । लोके परिच्छिन्नस्यैव गन्तव्यत्वनियमदर्शनादित्याह—नामरूपेति । ननु परमते ब्रह्मणो व्यापकस्वरूपेण न मुक्तप्राप्यत्वम्, किं तु लोकविशे-

विभुत्वविरोधित्वात् । प्राकृतनामरूपविमोक्षानन्तरमपि अप्राकृत-लोकविग्रहाद्युपधानेन ब्रह्मणः प्राप्तव्यत्ववादिमते प्राप्तुर्जीवस्याप्यप्राकृतदेहेन्द्रियादिसत्त्वेन तदुपधानेन ब्रह्मप्राप्तिश्रवणाविरोधात् स्वाभाविकगत्याश्रयशकटदृष्टान्तश्रवणमात्राद् जीवस्य स्वाभाविकगतिसिद्धौ "गुहां प्रविष्टौ" इति स्वाभाविकप्रवेशाश्रयजीवसमभिव्याहारेण ब्रह्मणोऽपि स्वाभाविकप्रवेशसिद्धिसम्भवाद् । ब्रह्मजीवोभयान्वयिन एकस्य प्रविष्टपदस्य एकरूपप्रवेशपरत्वस्य वक्तव्यत्वात् । तस्मात् परमते ब्रह्मजीवयोर्विभुत्वाणुत्वव्यवस्थित्यसिद्धेर्न ततो भेदसिद्धिं प्रत्याशा ।

---

षाद्युपहितत्वेन, उपहितरूपेण प्राप्तव्यत्वं च न ब्रह्मणः स्वरूपेण व्यापकत्वविरोधीत्याशङ्क्य तुल्यमेतत् तव मते जीवस्यापीत्याह—प्राकृतेति । "विद्वान्नामरूपाद्विमुक्तः" इति श्रुतौ प्राकृतनामरूपाद्विमुक्त इत्यर्थं कल्पयता त्वया विदुषो जीवस्याप्यप्राकृतनामरूपस्वीकारेण स्वतो विभोरपि जीवस्याप्राकृतनामरूपोपाधिपरिच्छिन्नस्य ब्रह्म प्रति गन्तृत्वसम्भवाद् न विभुत्वश्रुतयो जीवविषया बाधनीया इत्यर्थः । प्रविष्टाविसत्र प्रविष्टपदं जीवे स्वाभाविकप्रवेशार्थकम्, ब्रह्मणि तु शरीराद्युपाधिकृतप्रवेशार्थकमित्याशङ्क्य तथा सति सकृच्छ्रुतस्य प्रविष्टपदस्यार्थवैरूप्यं प्रसज्येतेति मत्वाह—ब्रह्मजीवोभयेति । यदि च ब्रह्मणो विभुत्वश्रुत्याद्यनुरोधेन प्रवेशसामान्यपरत्वमेव प्रविष्टपदस्य कल्प्यते, न तु तद्गतविशेषपरत्वमपि, तर्हि जीवस्यापि विभुत्वश्रुत्यनुरोधेन शकटदृष्टान्ते गमनादिसाम्यमात्रं विवक्षितं, न तु स्वाभाविकगत्याश्रयत्वादिकमपीति न जीवस्य स्वाभाविकाणुत्वसिद्धिः । तस्य तत्सिद्धौ वा ब्रह्मणोऽप्यणुत्वं दुर्वारम् । विनिगमनाविरहादिति भावः । तत इति । उक्तव्यवस्थितेरित्यर्थः । ननु परमते जीवेश्वरयोरुभयोरपि विभुत्वाणुत्वश्रुतिलिङ्गानामविशेषादुभयाणुत्वश्रुतिलिङ्गानामन्यथासिद्ध्यविशेषाच्च तयोरणुत्वं विभुत्वं वा समानतयैव सिध्येद्, न तु 'एकस्य विभुत्वम्, अपरस्याणुत्वम्'' इति व्यवस्था सिध्येदिति यथा दोषः प्रसज्यते, तथा सिद्धान्तेऽपि जीवस्य परिच्छिन्नत्वविभुत्वश्रुतिलिङ्गानामविशेषाद् 'तस्य स्वाभाविकं विभुत्वम्, परिच्छिन्नत्वमौपाधिकम्' इति

अस्मन्मते ब्रह्मात्मैक्यपरमहावाक्यानुरोधेनावान्तरवाक्यानां नेयत्वात्स्वरूपेण जीवस्य विभुत्वम्, औपाधिकरूपेण परिच्छेद इत्यादिप्रकारेण जीवब्रह्मभेदप्रापकश्रुतीनामुपपादनं भाष्यादिषु व्यक्तम् ।

(वे०सू०म०) तस्मात्प्रपञ्चमिथ्यात्वात्पराभेदाच्च देहिनः ॥
मानन्तराविरोधेन सिद्धोऽद्वैते समन्वयः ॥ ६८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वती-
पूज्यपादशिष्येण गङ्गाधरसरस्वत्याख्यभिक्षुणा
विरचितायां वेदान्तसूक्तिमञ्जर्यां
द्वितीयः परिच्छेदः ।

तस्मादचेतनस्य प्रपञ्चस्य मिथ्यात्वात् चेतनप्रपञ्चस्य ब्रह्माभेदाच्च न वेदान्तानामद्वितीये ब्रह्मणि विधैकप्राप्ये समन्वयस्य कश्चिद्विरोध इति ॥

इति शास्त्रसिद्धान्तलेशसङ्ग्रहे द्वितीयः परिच्छेदः ।

---

व्यवस्था न सिध्येदिति दोषः प्रसज्यते एवेति, नेत्याह—अस्मन्मत इति । ब्रह्मात्मैक्यज्ञानस्य मुक्तिसाधनत्वात् तज्ज्ञानजनकानि तत्त्वमस्यादिवाक्यानि महावाक्यानि वाक्यार्थज्ञानकारणीभूतत्वंपदार्थज्ञानं प्रति साधनभूतानि जीवस्वरूपप्रतिपादकवाक्यानीश्वररूपप्रतिपादकवाक्यानि चावान्तरवाक्यानि महावाक्यशेषत्वात् पदार्थप्रतिपादकवाक्यानामिति प्रधानवाक्यानुरोधेन गुणभूतवाक्यानां नेयत्वादित्यर्थः । स्वरूपेणेति । जीवस्य स्वरूपेणाणुत्वे महावाक्यप्रतिपाद्यब्रह्माभेदानुपपत्तेर्ब्रह्मणश्च स्वरूपेण पूर्णत्वाभावे बहुश्रुत्यादिविरोधादिति भावः । अद्वितीये ब्रह्मणि वेदान्तसमन्वयाविरोधसमर्थनरूपं परिच्छेदार्थमुपसंहरति—तस्मादिति । पञ्चम्यन्तम् । पञ्चमीभ्यां विवृणोति—अचेतनस्येति ।

श्रीकृष्णं मनसा ध्यात्वा श्रीकृष्णं संप्रणम्य च ।
व्याख्यातोऽयं परिच्छेदः श्रीकृष्णपरितुष्टये ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वतीदिव्यश्रीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ शास्त्रसिद्धान्तलेशसङ्ग्रहव्याख्यायां कृष्णालङ्काराख्यायां द्वितीयः परिच्छेदः समाप्तः ॥२॥

---

# तृतीयः परिच्छेदः ।

(वे०सू०मं०) ज्ञानेनैव कथं मुक्तिः कर्मभिश्चापि तत्स्मृतेः ॥
नाविद्यकत्वाद्बन्धस्य नान्यः पन्था इति श्रुतेः ॥१॥

(१)ननु कथं विद्ययैव ब्रह्मप्राप्तिः । यावता कर्मणामपि तत्प्राप्तिहेतुत्वं स्मर्यते—

'तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने' इति ।

सत्यम् । "नान्यः पन्था विद्यतेऽयनाय" इतिश्रुतेः, नित्यसिद्धब्रह्मावाप्तौ कण्ठगतविस्मृतकनकमालाऽवाप्तितुल्यायां विद्याऽतिरिक्तस्य साधनत्वासम्भवाच्च । ब्रह्मावाप्तौ परम्परया कर्मापे-

---

आपन्ना यं समाश्रित्य रक्षां प्राप सुदुर्लभाम् ॥
कृष्णा कृष्णस्य महिषी तं कृष्णं संश्रये ऽन्वहम् ॥ १ ॥

पूर्वपरिच्छेदान्ते ब्रह्मप्राप्तिरूपमोक्षस्य विद्यैकप्राप्यत्वमुक्तम् । तत्र विद्याप्राप्यत्वमुपेत्य मोक्षस्यैकपदलभ्यं साधनान्तरव्यवच्छेदमसहमानः समुच्चयवादी प्रत्यवतिष्ठते—ननु कथमिति । यावतेति । यस्मादित्यर्थः । स्मृतौ तत्पदं ब्रह्मपरम् । उक्तमिति । "तेनैति ब्रह्मवित् पुण्यकृद्"इत्यादिश्रुत्येति शेषः । तेन ब्रह्मवेदनपुण्ययोस्समुच्चयेन एति ब्रह्म प्राप्नोतीति श्रुत्यर्थः । ज्ञानकर्मणोस्समुच्चयस्य ब्रह्मप्राप्तिहेतुत्वश्रवणमनुमोदते—सत्यमिति । ब्रह्मप्राप्तेर्विद्यामात्रसाध्यत्वप्रतिपादकश्रुत्यन्तरेणोपपत्तिसहितेन विरोधात् समुच्चयश्रवणम् तन्मूलकस्मृतिवचनं च क्रमसमुच्चयपरतया नेतव्यमित्याशयेनाह—नान्यः पन्था इति । ब्रह्मज्ञानापेक्षया अन्यो ज्ञानकर्मसमुच्चयरूपः केवलकर्मरूपो वा पन्थाः उपायो मोक्षं प्रति नास्तीति श्रुत्यर्थः । नित्यमात्मस्वरूपतया सिद्धस्य ब्रह्मणोऽवाप्तिरप्राप्तत्वभ्रमादिनिवृत्तिरूपा । भ्रमादिनिवृत्तिश्च ज्ञानमात्रसाध्यत्वेन लोके दृष्टा । यथा कण्ठगतायामेव कनकमालायां विस्मृतायां सत्यां तस्यामप्राप्तत्वभ्रमेण बहुविधविक्षेपं प्राप्तस्याप्तोपदेशज-

क्षामात्रपरा तादृशी स्मृतिः । क्व तर्हि कर्मणामुपयोगः ? ।

(वे० सू० मं०) कर्मणामुपयोगस्तु भामतीकृन्मते स्थितः ॥
तमेतमिति वाक्येन मुख्ये विविदिषोद्भवे ॥ २ ॥

अत्र भामतीमतानुवर्तिन आहुः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेर्विद्यासम्पादनद्वारा ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोगः । ननु इष्यमाणविद्यायामेवोपयोगः किं न स्यात् ? । न स्याद् । प्रत्यया-

---

न्यज्ञानमात्रेणाप्राप्तत्वभ्रमनिवृत्तिरूपा पूर्वसिद्धकनकमालाऽवाप्तिः । तत्तुल्यायां नित्यसिद्धब्रह्मावाप्तौ विद्यातिरिक्तसाधनापेक्षाभावात् तदतिरिक्तस्य भ्रमादिनिवृत्तौ सामर्थ्याभावाच्चेत्यर्थः । परम्परया मुक्तावुक्तं कर्मणामुपयोगं प्रपञ्चयितुं पृच्छति—क्व तर्हीति । तर्हि ज्ञानवत् साक्षान्मुक्तिहेतुत्वाभावे सति क्व विविदिषायां विद्यायां वा साधनत्वं तेषामित्यर्थः ।

तमेतमिति तच्छब्दः प्रकृतपरमात्मपरः । एतच्छब्दः नित्यापरोक्षजीवपरः । तथा च जीवाभिन्नं परमात्मानं वेदानुवचनादिभिर्वेदितुमिच्छन्तीत्यर्थः । अनशनादिलक्षणतपोव्यावृत्तये तपसो विशेषणमनाशकेनेति । तथा च हितमितमेध्याशनादिरूपं तप इह विवक्षितमिति लभ्यते । ननु विविदिषायामपुमर्थभूतायां कथं विनियोगः, तत्राह—विद्यासम्पादनद्वारेति । ततश्च गौणपुरुषार्थत्वं तस्यास्सम्भवतीत्यर्थः । ननु मुक्तिं प्रति प्रत्यासन्नत्वाद्विद्यायास्तस्यामेव विनियोगः कुतो न कल्प्यते । श्रुतत्वाविशेषाच्च कामनाविषयत्वेन श्रुतस्वर्गादेरेव कर्मफलतयाऽन्यत्र स्वीकाराच्चेति मत्वा शङ्कते—नन्विति । स्वर्गकामादिवाक्येषु यागादेर्विधिप्रत्ययेनेष्टसाधनत्वे बोधिते 'किं तदिष्टम्' इति विशेषाकाङ्क्षायां सत्यां पुरुषविशेषणत्वेन श्रुतयोः कामनास्वर्गयोरन्यतरस्यापि शब्दतः प्राधान्याभावेन तत्रार्थतः प्राधान्यस्यैवाश्रयणीयत्वे स्वतः पुरुषार्थतया स्वर्गस्यैव फलत्वेनान्वयः स्वीकृतः—'यागः स्वर्गसाधनम्' इति, न तु कामनायाः । इह तु वेदनकामनाया एव फलत्वेनान्वय उचितः । शब्दतः प्रधानत्वात् । अतः फलप्रत्यासत्त्यादिकमप्यकिञ्चित्करमिति मत्वा समाधत्ते—न स्यादिति । सन्प्रत्ययः प्रत्ययशब्दार्थः । 'विविदिषायामेव विनियोगः' इत्यत्र भाष्यसम्म-

र्थस्य प्राधान्यात्। "विद्यासंप्रयोगात् प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनि" इति सर्वापेक्षाधिकरणभाष्याच्च(उ०मी०अ०३पा०४अधि०६सू०२७)। ननु विविदिषार्थं यज्ञाद्यनुष्ठातुर्वेदनगोचरेच्छावत्त्वे विविदिषायाः सिद्धत्वेन तदभावे वेदनोपायविविदिषायां कामनाऽसम्भवेन च विविदिषार्थं यज्ञाद्यनुष्ठानायोगाद् न यज्ञादीनां विविदिषायां

---

तिमाह—विद्यासंप्रयोगादिति । विद्यासाधनत्वादित्यर्थः । प्रत्यासन्नानीति । यावद्विद्योदयमनुष्ठेयानीत्यर्थः । शमादिवैषम्यं कर्मसु दर्शयति—विविदिषासंयोगात्त्विति । तत्साधनत्वादेवेत्यर्थः । बाह्यतराणीति । विविदिषोदयपर्यन्तमेवानुष्ठेयानीति यावत् । 'विद्योत्पत्तौ सर्वाणि कर्माण्यपेक्षितव्यानि' इति प्रतिपादकाधिकरणेत्यर्थः । विविदिषाविनियोगं प्रकारान्तरेणाक्षिपति—नन्विति । वेदनेच्छाया यज्ञादिफलत्वे वेदनेच्छागोचरेच्छया यज्ञाद्यनुष्ठानं वाच्यम् । वेदनेच्छायाश्च स्वतः फलत्वाभावाद्वेदनद्वारा मुक्तिफलकत्वं वाच्यम् ।

तथा चायं क्रमः—प्रथमं मुक्तौ स्वतः पुरुषार्थत्वज्ञानादिच्छा, ततो वेदने मुक्तिसाधनत्वज्ञानादिच्छा, ततो वेदनेच्छायां वेदने साधनत्वज्ञानादिच्छा, तथा च यज्ञाद्यनुष्ठानमिति ।

तथा च वेदनेच्छारूपविविदिषोद्देशेन यज्ञाद्यनुष्ठाने प्रवर्तमानस्य ब्रह्मवेदने विविदिषाफले किमिच्छाऽस्ति, न वा ?। आद्ये यज्ञाद्यनुष्ठानवैयर्थ्यमभिप्रेत्याह—वेदनगोचरेति । वेदनगोचरेच्छाया एव विविदिषात्वादिति भावः । सिद्धत्वेन विविदिषार्थं यज्ञाद्यनुष्ठानायोगादिति सम्बन्धः । न द्वितीयः । विविदिषाफले वेदने कामनाया असत्त्वे विविदिषायामपि कामनाया अभावाद्विविदिषोद्देशेन यज्ञाद्यनुष्ठानायोग इत्याह—तदभावे इति । वेदनगोचरेच्छाया अभावे इत्यर्थः । विविदिषार्थं यज्ञाद्यनुष्ठातुरस्त्येव वेदनगोचरेच्छा । न चैतावता तदनुष्ठानवैयर्थ्यम् । विविदिषाया द्वैविध्योपपत्तेः ।

तथा हि—वेदनेच्छा द्विविधा—विद्यायामौन्मुख्यलक्षणा, रुचिलक्षणा च । तत्राद्या यज्ञाद्यनुष्ठानात्प्रागपि वेदने वर्तते इति तामादाय वेदनसाधनभूतायां विविदिषायां कामना सम्भवतीति विविदि-

विनियोगो युक्त इति चेद्, न । अन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्नविषयौत्कण्ठ्यलक्षणायामिच्छायां सत्यामप्युत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायते इति तद्रोचकौषधविधिवद् निरातिशयानन्दरूपं ब्रह्म तत्प्राप्तौ विद्या साधनमित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहितफलकनित्यनैमित्तिककर्मोपसञ्जातचित्तप्रसादमहिम्ना सम्पन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ विद्यायां च तदौन्मुख्य(१)लक्षणायामिच्छायां सत्यामप्यनादिभवसञ्चितानेकदुरितदोषेणास्तिक्कामुकस्य हेयकर्मणीव

---

पार्थं यज्ञाद्यनुष्ठानमुपपन्नम् । द्वितीया तु यज्ञादिफलभूता तदनुष्ठानानन्तरभाविनीति युक्त एव विविदिषायां यज्ञादिविनियोग इति समाधानमभिप्रेत्याह—नेति । वेदनेच्छाया द्वैविध्ये, यज्ञाद्यनुष्ठानादौ च दृष्टान्तमाह—अन्नद्वेषेणेति । तत्परिहारायेति । कार्श्यपरिहारायान्नभक्षणविषयकोत्कटेच्छायां सत्यामपीत्यर्थः । उत्क(२)टेति । अधिकेत्यर्थः । धातुवैषम्यप्रयोजकात्यन्तानशनादिसङ्ग्रहार्थमादिपदम् । तत्रेति । अन्नभक्षणे इत्यर्थः । जायते इति । एतच्चानुभवसिद्धमिति भावः । अधीतसाङ्गस्वाध्यायः पुरुषो वेदान्तैर्ब्रह्मणो निरतिशयानन्दरूपत्वम्, विद्यायां तत्प्राप्तिसाधनत्वं च ज्ञात्वा तस्मिन्नर्थे सम्पन्नविश्वासो भवतीत्ययुक्तम्, तथाविधानामपि पुरुषाणां बहूनां तस्मिन्नर्थे विश्वाससम्पत्तेरदर्शनादित्याशङ्क्याह—प्राचीनेति । प्राचीनेषु बहुषु जन्मस्वनुष्ठितानि फलाभिसन्धिरहितानि च यानि नित्यनैमित्तिककर्माणि, तैरुपसञ्जातो यश्चित्तप्रसादश्शुद्धिविशेषः, तस्य महिम्नेत्यर्थः । तथा च स्मृतिः—'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।' इति । कश्चिदिति । उक्तचित्तप्रसादवानित्यर्थः । सिद्धये विद्यालाभाय । न सर्व इति भावः । ननु ब्रह्मप्राप्तितत्साधनविद्यागोचरोत्कटेच्छायां सत्यां तत्साधनश्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्भवेदेवेति कृतं तस्य यज्ञाद्यनुष्ठानेन, तत्राह—अनादीति । दुरि-

---

(१) केवलमूलपुस्तके औत्कण्ठ्यमित्युपलभ्यते परन्तु अर्थभेदाट्टीकाऽनुरोधाच्चौन्मुख्येति पाठ एवात्रावस्थापितः । (२) उत्सुकेति पाठः ।

विषयभोगे प्रावण्यं सम्पादयता प्रतिबन्धाद्विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धनिरासपूर्वं तत्सम्पादकयज्ञादिविधानोपपत्तेरिति ॥

(वे०सू०मं०) स्वर्गवत्काम्यमाने तं ज्ञाने विवरणानुगाः ।
जिज्ञासितव्यं श्रुतिभिर्ब्रह्मेत्यत्र श्रुतेरिव ॥ ३ ॥

विवरणानुसारिणस्त्वाहुः—"प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य

तदोषेण प्रतिबन्धाद् रुचिर्न जायते इति सम्बन्धः । ननु पूर्वोक्तचित्तप्रसादमहिम्ना ब्रह्मविद्यादौ सम्पन्नविश्वासस्यास्तिकतमस्यानर्थबहुले विषयभोगे प्रावण्यं कथं सम्भवतीत्याशङ्क्यानुभवसिद्धदृष्टान्तेन तत् सम्भावयति—आस्तिककामुकस्येति । 'विहितानुष्ठानादवश्यं श्रेयो भवति, निषिद्धकरणादितश्चावश्यं महाननर्थो भवति शास्त्रप्रामाण्याद्'इति निश्चयवानास्तिकः । तस्यापि कस्यचित् कामोद्रेको, निन्दितागम्यागमनादौ प्रावण्यं च यथा पापविशेषात् सम्भवति, तथा यथोक्तमुमुक्षोरपीत्यर्थः । प्रतिबन्धेति । अनादिभवसञ्चितानेकदुरितदोषकृतप्रतिबन्धैरित्यर्थः । तत्सम्पादकेति । विविदिषाशब्दिता या श्रवणादौ प्रवृत्तिपर्यन्ता रुचिः, तत्सम्पादकेत्यर्थः ।

'क्व तर्हि कर्मणामुपयोगः' इत्यत्र प्रश्ने 'विद्यायां विनियोगः' इति प्रतिवचनान्तरमवतारयति—विवरणेति । पूर्वत्र 'यज्ञादीनां तृतीयाश्रुत्या साधनत्वेनावगतानां साध्याकाङ्क्षायां विविदिषैव साध्यत्वेनान्वेति, तस्याः शब्दतः प्रधानत्वात् । शब्दतः प्रधानस्यैव पदार्थस्य 'राजपुरुषमानय'इत्यादौ सर्वत्र समभिव्याहृतपदार्थान्तरेणान्वयस्य व्युत्पत्तिसिद्धत्वाद्'इत्याशयेन यज्ञादीनां विविदिषायां विनियोग उक्तः । तत्रास्वरसं दर्शयन् विद्यायां तेषां विनियोगमुपपादयति—प्रकृतीति । प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोर्मध्ये प्रत्ययार्थस्य विविदिषालक्षणस्य प्रत्ययार्थत्वाच्छब्दतः प्राधान्यात् । ततश्च 'विविदिषाया एव यज्ञादिफलत्वेनान्वयः' इत्यत्र हेतुभूतो यस्सामान्यन्यायो 'राजपुरुषमानय' इत्यादौ प्रसिद्धः—'शब्दतः प्रधानस्यैव समभिव्याहृतक्रियाकारकान्वयः' इत्येवंरूपः, तस्मादित्यर्थः । विधिप्रत्ययेनेष्टसाधनत्वेनावगतयागादेरिष्टविशेषाकाङ्क्षायां सत्यां शब्दतः प्राधान्याभावेऽपि स्वर्गस्य फलत्वेनान्वयः क्लृप्त इ-

प्राधान्यम्''इति सामान्यन्यायाद् 'इच्छाविषयतया शब्दबोध्ये एव शाब्दसाधनतान्वयः'इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलवत्त्वात् । 'अश्वेन जिगमिषति' 'असिना जिघांसति'इत्यादि-लौकिकप्रयोगे अश्वादिरूपसाधनस्य, 'तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं' मन्तव्यो निदिध्यासितव्य इत्यादिवैदिकप्रयोगे तव्यार्थभूतविधेश्च सन्प्रत्ययाभिहितेच्छाविषये एव गमनादावन्वयस्य व्युत्पन्नत्वाच्च प्रकृत्यभिहितायां विद्यायां यज्ञादीनां विनियोगः ।

ननु तथा सति यावद्विद्योदयं कर्मानुष्ठानापत्त्या "त्यजतै-

---

त्यर्थः । शाब्दप्राधान्याभावाविशेषे कामनाया एव यागादिफलत्वेनान्वयः कुतो न कल्पितः, तत्राह—इच्छाविषयतयेति । इच्छाविषयत्वस्य फलत्वव्यञ्जकत्वात् पुरुषार्थत्वेन प्रतीतस्य स्वर्गस्यैव फलत्वम्, न कामनाया इत्यर्थः । ननु कामनाविषयत्वस्य मुक्तिसाधारणत्वात् सैव यागादिफलं कस्मान्न कल्प्यते । तत्राह—शब्दबोध्ये इति । 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायान्नातिप्रसङ्गः । तथा च 'इच्छेष्यमाणसमभिव्याहारे इष्यमाणस्यैव प्राधान्यम्, न त्विच्छायाः' इति विशेषन्यायेन उक्तसामान्यन्यायबाधस्य कामोपबन्धवाक्येषु क्लृप्तत्वाद् 'विविदिषन्ति'इत्यत्रापि प्रत्ययार्थत्वप्रयुक्तं विविदिषायाःशाब्दप्राधान्यं त्यक्त्वा वेदनप्राधान्यमेवादरणीयमित्यर्थः । इच्छावाचिसन्प्रत्ययसमभिव्याहृतेष्वेव लौकिकवैदिकप्रयोगेषु प्रत्ययार्थतया प्रधानभूतामपीच्छामुल्लङ्घ्य तद्विषयेष्वेव समभिव्याहृतपदार्थान्तरान्वयदर्शनाच्चेत्याह—अश्वेनेति । तदन्वेष्टव्यमिति । तद् दहराकाशाख्यं ब्रह्म विचार्यमित्यर्थः । विजिज्ञासितव्यमिति । तदेव ब्रह्म ध्यातव्यमित्यर्थः । निदिध्यासितव्य इति । आत्मा ध्यातव्य इत्यर्थः ।

ननूदाहृतप्रयोगेषु इच्छाया अश्वादिसाधनाद्यन्वयायोग्यत्वात्तस्याः परित्याग इति चेत्, तर्हि प्रकृतेऽपि वेदनेच्छायास्तदयोग्यत्वाद् ब्रह्मवेदनस्य च ब्रह्मानन्दसाक्षात्काररूपतया फलत्वेनान्वेतुं योग्यत्वाद् वेदने एव यज्ञाद्यन्वयः, न विविदिषायामिति भावः ।

विद्याविनियोगपक्षे विध्यन्तरविरोधं शङ्कते—नन्विति । क-

व हि तज्ज्ञेयम्" इत्यादिश्रुतिप्रसिद्धं कर्मत्यागरूपस्य सन्न्यासस्य विद्यार्थत्वं पीड्येतेति चेद्, न । प्राग् बीजावापात् कर्षणम्, तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिवद्—

'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥'

इत्यादिवचनानुसारेण चेतसः शुद्धौ विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानम्, ततः सन्न्यास इति कर्मतत्सन्न्यासाभ्यां विद्यानिष्पत्त्यभ्युपगमात् ।

उक्तं हि नैष्कर्म्यसिद्धौ—

'प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥' इति ॥

कर्मणां विद्यार्थत्वपक्षेऽपि विविदिषापर्यन्तमेव कर्मानुष्ठाने विविदिषा—

र्माणि त्यजतैव मुमुक्षुणा सक्तुः स्वस्य प्रसगात्मस्वरूपं पदं ब्रह्म साक्षात्कर्तव्यम्, न त्वत्यजतेति श्रुत्यर्थः । "अथ परिव्राड्"इत्युपक्रम्य "ब्रह्मभूयाय कल्पते" इत्यन्तेन श्रुत्यन्तरेणापि परिव्राट्छब्दोपात्तसन्न्यासस्य ब्रह्मभूयशब्दितब्रह्मसाक्षात्कारहेतुत्वमुक्तम् । एवं श्रुत्यन्तरेष्वपीत्यभिप्रेत्यादिपदं द्रष्टव्यम् । विविदिषात्वाक्यसन्न्यासविध्योरविरोधं सदृष्टान्तं सप्रमाणं च दर्शयति—न प्रागिति । वचने कारणपदद्वयं कर्तव्यार्थकम् । शमस्सन्न्यासः । चेतश्शुद्धिविविदिषादिरूपप्रत्यक्प्रावण्येत्येतद् गीतावचनगतयोगपदव्याख्यानमिति बोध्यम् ।

रागादिराहित्यरूपचित्तशुद्धिविविदिषावैराग्यगुरुदेवतादिभक्तिलक्षणप्रत्यक्प्रावण्यजन्मपर्यन्तं कर्मानुष्ठानमित्यत्र सुरेश्वराचार्यसम्मतिमाह—उक्तं हीति । शुद्धित इति । शुद्धिद्वारेत्यर्थः । अस्तमायान्तीति । त्यागमायान्ति, त्यक्तव्यान्येव भवन्ति कृतप्रयोजनत्वादित्यर्थः । कृतप्रयोजनानां निवृत्तौ दृष्टान्तमाह—प्रावृडन्त इति । वर्षाकालावसान इत्यर्थः । विविदिषायां विनियोगपक्षे विविदिषोदयपर्यन्तमेव यज्ञाद्यनुष्ठानमित्यविवादम् । विद्यायां विनियोगपक्षेऽप्येवं चेत्, कस्तयोर्भेद इति शङ्कते—कर्मणामिति । अनुष्ठाने विशेषाभावेऽपि फ-

दिषार्थत्वपक्षात् को भेद इति चेद्, अयं भेदः—कर्मणा विद्यार्थत्वपक्षे द्वारभूतविविदिषासिद्ध्यनन्तरमुपरतावपि फलपर्यन्तानि विशिष्टगुरुलाभान्निर्विघ्नश्रवणमननादिसाधनानि निवृत्तिप्रमुखानि सम्पाद्य विद्योत्पादकत्वनियमोऽस्ति । विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्तिजननसमर्थोत्कटेच्छासम्पादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वनियमः । 'यस्यैते चत्वारिंशत् संस्काराः' इति स्मृतिमूले कर्मणामात्मज्ञानयोग्यतापादकमलापकर्षणगुणाधानलक्षणसंस्कारार्थत्वपक्षे इवेति वदन्ति ॥ १ ॥

---

त्तो विशेषोऽस्तीत्याह—अयं भेद इति । वक्ष्यमाण इत्यर्थः । उपरताविति । त्यागेऽपीत्यर्थः । अदृष्टद्वारेति शेषः । विविदिषाविनियोगपक्षे हि यज्ञादिकर्मजनितादृष्टं श्रवणादिषु प्रवृत्तिपर्यन्तां विविदिषाशब्दितां रुचिमुत्पाद्य नश्यति । फलैकनाश्यत्वाददृष्टस्य । विविदिषोत्पत्त्यनन्तरं च श्रवणादिप्रतिबन्धकदुरिताभावे सति विविदिषाबलादेव श्रवणादिकं सम्पाद्य विद्यां लभते । श्रवणादिप्रतिबन्धकदुरितसत्त्वे तु तत्सत्त्वम् यत्ने कृतेऽपि श्रवणाद्यलाभेन निश्चित्य तन्निवृत्त्युपायमनुतिष्ठति, प्रायेण तन्निवर्तकोपायाननुष्ठाने वा तदनुष्ठानस्यापि विघ्नबाहुल्ये वा श्रवणाद्यसम्भवाद् न ज्ञानोदयः । यथा औषधवीर्येणान्नभक्षणे रुच्युत्पत्तौ सत्यामप्यप्रतिबन्धेनान्नलाभे तद्भक्षणेन कार्श्यनिवृत्तिं लभते । तदलाभे तु तल्लाभाय यतते । यत्ने कृतेऽपि यद्यन्नं न लभते, तदा न कार्श्यनिवृत्तिं लभते, एवमिहापीत्यभिप्रेत्याह—नावश्यमिति । विविदिषाविनियोगपक्षस्य संस्कारे कर्मणां विनियोगपक्षं दृष्टान्तयति—यस्यैत इति । यस्य पुरुषस्य एते श्रौतस्मार्ता धर्माश्चत्वारिंशत्सङ्ख्याकाः संस्कारास्सन्ति, शमादिसम्पत्तिश्च वर्तते, तस्य कर्मभिस्संस्कृतस्य विद्याधिकारिणश्श्रवणादिसम्पत्तौ सत्यां तत्त्वज्ञानद्वारा परब्रह्मप्राप्तिर्भवति, तदसम्पत्तौ च पुण्यलोकावाप्तिरिति कर्मणां संस्कारकत्वपक्षे यथा ज्ञानोत्पादकत्वनियमो नास्ति । संस्कारजननमात्रेण चरितार्थानां कर्मणां विद्योत्पत्तिपर्यन्तव्यापाराभावात्, तथा तेषां विविदिषार्थत्वपक्षेऽपीत्यर्थः । आत्मज्ञानयोग्यता कार्यकार-

(वे०सू०मं०) तत्रोपयोगः कथितः कैश्चिदाश्रमकर्मणाम् ॥

ननु केषां कर्मणामुदाहृतश्रुत्या विनियोगो बोध्यते ?। अत्र कैश्चिदुक्तम्—'वेदानुवचनेन' इति ब्रह्मचारिधर्माणाम्, 'यज्ञेन दानेन' इति गृहस्थधर्माणाम्, 'तपसाऽनाशकेन' इति वानप्रस्थधर्माणां च उपलक्षणमित्याश्रमधर्माणामेव विद्योपयोगः। अत एव "विहितत्वाच्चाश्रमकर्मापि" (उ० मी० अ० ३ पा० ४ सू० ३२) इति शारीरकसूत्रे विद्यार्थकर्मस्वाश्रमकर्मपदप्रयोग इति ॥

---

णसङ्घातनिष्ठा, तदापादकौ यौ मलापकर्षणगुणाधानलक्षणौ संस्कारौ, तदर्थत्वपक्षे इत्यर्थः। कर्मणां विविदिषार्थत्वपक्षे संस्कारार्थत्वपक्षे च ज्ञानोत्पत्त्यनियमे समानेऽपि विविदिषार्थत्वपक्षे प्रायिकी ज्ञानोत्पत्तिः। तीव्रबुभुक्षाया इव दृढविविदिषायास्सर्वप्रयत्नेन विद्यासम्पादनसमर्थत्वात्। संस्कारार्थत्वपक्षे तु ब्रह्मज्ञानयोग्यतामात्रसिद्धावपि विविदिषाया अप्यनियतत्वेन विद्योत्पत्तिः प्रायिक्यपि न भवतीति विविदिषासंस्कारार्थत्वपक्षयोरपि भेद ऊहनीय इति भावः ॥

केषामिति। किमाश्रमकर्मणामेव, किं वाऽन्येषामपीत्यर्थः। नन्वाश्रमधर्माणामपि सर्वेषां विविदिषावाक्ये श्रवणाभावात्तेषामपि न सर्वेषां विनियोगो लभ्यते, तत्राह—वेदानुवचनेनेति। वेदस्य गुरुवचनमनु शिष्यस्य वचनं वेदानुवचनं वेदाध्ययनम्। तच्च ब्रह्मचारिधर्माणां मध्ये प्रधानम्। तेन तद्धर्मास्सर्वे गृह्यन्ते इत्यर्थः। एवमुत्तरत्रापि प्राधान्यं द्रष्टव्यम्। तपः कृच्छ्रचान्द्रायणादिरूपं वानप्रस्थासाधारणमिह तपश्शब्दरूढ्या भातीति भावः। 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इत्यादिस्मृतिषु नित्यमाश्रमिणां कार्यं कर्तव्यं यद्यत् कर्मास्ति, तत् सर्वं फलाभिसन्धिं त्यक्त्वा यः करोति, स योगपदोदितं पूर्वोक्तचेतश्शुद्धिविविदिषादिरूपं प्रत्यक्प्रावण्यं लभते इति प्रतिपादनाद् तन्मूलभूते विविदिषावाक्येऽपि सर्वेषामाश्रमकर्मणामुपलक्षणं युक्तमिति मन्तव्यम्। 'आश्रमकर्मणामेव विनियोगः' इत्यत्र सौत्रं लिङ्गमाह—अत एवेति। आश्रमकर्मणामेव विनियोगाभ्युपगमादेवेत्यर्थः। 'आश्रमकर्मणां विविदिषावाक्येन विद्यादौ विनियुक्तत्वात्

(वे०सू०मं०) परैस्तु वैधुरादीनामपि कल्पतरूक्तितः ॥ ४ ॥

कल्पतरौ तु नाश्रमधर्माणामेव विद्योपयोगः । "अन्तराचापि तु तद्दृष्टेः" ( उ० मी० अ० ३ पा० ४ सू० ३६ )

---

तत्कामनारहितेनाश्रमिणा स्वाश्रमविहितं कर्मानुष्ठेयम्' इति शङ्कायामुत्तरं सूत्रम् । तेनापि तत् कर्तव्यमेव । तं प्रति विहितत्वात् । अन्यथा प्रत्यवायप्रसङ्गादिति सूत्रार्थो बोध्यः ॥

'अन्येषामपि विनियोगः' इति पक्षं नित्यकर्ममात्रविषयतया प्रथमं दर्शयति—कल्पतरौ त्विति । कल्पतरौ तूक्तमिति सम्बन्धः । 'आश्रमधर्मव्यतिरिक्तानामप्यस्ति विद्योपयोगः' इति कल्पतरुकारमतमयुक्तम् । सूत्रे विद्यार्थकर्मस्वाश्रमकर्मपदप्रयोगविरोधात् । न च सौत्राश्रमकर्मपदस्य वर्णधर्मेष्वप्यजहल्लक्षणोपपत्तेर्न तद्विरोध इति वाच्यम् । लक्षणायामेव प्रमाणाभावादित्याशङ्क्य तत्र नियामकं दर्शयति—नाश्रमधर्माणामेव विद्योपयोग इति । 'आश्रमधर्मव्यतिरिक्तानां वर्णधर्माणामप्यस्ति विद्योपयोगः' इत्येवकारार्थे हेतुमाह—अन्तरा चापि त्विति ।

'विद्यां प्रति बहिरङ्गसाधनेषु कर्मस्वन्तरङ्गसाधनेषु श्रवणादिषु चानाश्रमिणामधिकारोऽस्ति, न वा' इति सन्देहे सति नास्त्यधिकार इति पूर्वपक्षः । आश्रमकर्मणामेव विद्यायां विनियुक्तत्वात् तेषामाश्रमकर्माभावात् साधनचतुष्टयसम्पन्नस्यैव श्रवणादिष्वधिकाराच्च अनाश्रमिणां च साधनचतुष्टयान्तर्गतस्योपरतिशब्दितसन्न्यासाभावेन तत्सम्पत्त्यभावादिति ।

सिद्धान्तस्तु—सूत्रे तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अन्तराशब्दः आश्रमान्तरालमनाश्रमित्वमाह । तथा चानाश्रमित्वे वर्तमानोऽपि पुरुषः श्रवणादिषु विद्यार्थकर्मसु चाधिक्रियते । कुतः । श्रुतिस्मृतिषु रैक्ववाचक्नवीप्रभृतीनामनाश्रमिणामपि विद्यावत्त्वोपलब्धेः । परिव्राजकस्य श्रवणादिषु मुख्याधिकारेऽपि गृहस्थादीनामिवानाश्रमिणामपि गौणाधिकारोपपत्तेः ।

तथा च तदधिकरणे भाष्ये—"दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणार्थिनमधिकरोति श्रवणादिषु" इति ।

इत्यधिकरणे आश्रमरहितविधुराद्यनुष्ठितकर्मणामपि विद्योपयोगनिरूपणात् । न च विधुरादीनामनाश्रमिणा प्राग्जन्मानुष्ठितयज्ञाद्युत्पादितविविदिषाणां विद्यासाधनश्रवणादावधिकारनिरूपणमात्रपरं तदधिकरणम्, न तु तदनुष्ठितकर्मणां विद्योपयोगनिरूपणपरमिति शङ्क्यम् । "विशेषानुग्रहश्च" इति ( उ० मी० अ० ३ पा० ४ सू० ३० ) तदधिकर-

---

अविद्यानिवृत्तिर्विद्याया दृष्टं फलम् । अर्थिनमविद्यानिवर्तकसाक्षात्कारार्थिनमधिकारित्वेन स्वीकरोति । शूद्रस्येव वेदान्तश्रवणादिष्वनाश्रमिणां प्रतिषेधाभावाद् गौणाधिकारे सन्न्यासापेक्षा नास्तीति मत्वा मात्रपदमिति भाष्यार्थः ।

"अन्तरा चापि" इत्यधिकरणमनाश्रमिणां श्रवणाद्यधिकारमात्रनिरूपणपरम्, न त्वनाश्रमिकर्मणामपि विद्योपयोगनिरूपणपरम् । तथा च सौत्राश्रमकर्मपदस्य वर्णधर्मोपलक्षकत्वं न सिध्यतीति मत्वा शङ्कते—न च विधुरादीनामिति । ननु तेषां विद्यार्थकर्माभावे विविदिषोदयासम्भवादनाश्रमिणां श्रवणाधिकारनिरूपणमयुक्तमित्याशङ्क्याह—प्राग्जन्मेति । अनाश्रमिणोऽपि ये जन्मान्तरीयाश्रमकर्मानुष्ठानजनितविविदिषावन्तः सन्न्यासहेतुतीव्रवैराग्याभावान्मुख्याधिकारात्प्रच्युताश्च, तेषां श्रवणाधिकारनिरूपणपरं तदधिकरणम्, न त्वनाश्रमिमात्रविषयम् । अविविदिषूणां श्रवणादौ प्रवृत्त्यसम्भवादेवेत्यर्थः । इति न च शङ्क्यमिति सम्बन्धः । ननु "अन्तरा चापि तु"इति सूत्रे विद्यार्थकर्मसु विधुरादीनामधिकारे श्रुत्यादिष्वनाश्रमिणां रैक्वाचक्नवीप्रभृतीनां विद्यावत्त्वदर्शनं हेतुत्वेनोक्तम्, तदयुक्तम् । रैक्वाचक्नवीविदुरप्रभृतीनां जन्मान्तरीयविद्यासाधनानुष्ठानबलादेव विद्या जातेति शङ्कासम्भवात् । अतः 'अनाश्रमिकर्मणां विद्योपयोगः'इत्यत्र तेषां विद्यावत्त्वदर्शनमनन्यथासिद्धं लिङ्गं न भवतीत्यस्वरसादनन्यथासिद्धं हेतुमन्यमभिप्रेत्योक्तम्—विशेषानुग्रहश्चेति । विशेषैर्धर्मविशेषैर्जपादिलक्षणैर्ब्राह्मणत्वादिवर्णमात्रसम्बन्धिभिरपि चित्तशुद्धिविविदिषाद्वारा आश्रमधर्मैरिव विद्याया अनुग्रह उपकारस्सम्भवत्येव । कुतः ।

'जपेनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।'

'गङ्गायां स्नानमात्रेण मुच्यते नात्र संशयः ।'

णसूत्रतद्भाष्ययोस्तदनुष्ठितानां जपादिरूपवर्णमात्रधर्माणामपि विद्योपयोगस्य कण्ठत उक्तेः । "विहितत्वाच्चाश्रमकर्मापि" इति सूत्रे आश्रमकर्मपदस्य वर्णधर्माणामप्युपलक्षणत्वादित्यभिप्रायेणोक्तम् । (वे०सू०सं०) तत्र क्लृप्तफलत्वेन नित्यानामेव कैश्चन ॥

आश्रमधर्मव्यतिरिक्तानामप्यस्ति विद्योपयोगः किंतु नित्यानामेव । तेषां हि फलं दुरितक्षयं विद्याऽपेक्षते, न काम्यानां

---

'यस्य स्मरणमात्रेण' इत्यादिवचनैर्जपतीर्थस्नानदेवताध्यानादिधर्माणां शुद्ध्यादिद्वारा विद्यादिसाधनत्वस्य प्रतिपादनादिति सूत्रार्थः । तदनुष्ठितानामिति । अनाश्रमिणस्तच्छब्दार्थः । एवमनाश्रमिधर्माणामपि सूत्रकारेणैव स्पष्टं विद्योपयोगस्य साधितत्वात्तदविरोधाय सौत्रमाश्रमकर्मपदं वर्णधर्माणामप्युपलक्षकं वाच्यमित्याशयेनाह—सूत्र इति । एवं कल्पतरुकाराणामभिप्रायमुपवर्ण्य तन्मतमुपपादयति—आश्रमधर्मेत्यादिना । ननु यज्ञादीनां विनियोगः कल्प्यमानः किं काम्यसाधारणः कल्प्यते, किं वा नित्यानामेव ? । नाद्यः । काम्यकर्मफलस्य स्वर्गादेर्विद्ययाऽनपेक्षितत्वेन तेषां विद्योपकारकत्वासम्भवात् । न द्वितीयः । नित्यकर्मफलस्य दुरितक्षयस्यापि प्रमाणसाध्यविद्याऽपेक्षितत्वे मानाभावेन तेषामपि विद्याविनियोगानुपपत्तेरिति शङ्कते—किं त्विति । समाधत्ते—नित्यानामेवेति ।

'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः' ।

इत्यादिवचनानि नित्यकर्मफलस्य दुरितक्षयस्य विद्ययाऽपेक्षितत्वे प्रमाणत्वेन सूचयति—हीति । प्रमाणजन्यायामपि विद्यायां दुरितस्य प्रतिबन्धकत्वसम्भवाद् दुरितक्षयापेक्षा युक्तेति भावः । काम्यकर्मणां विद्याऽनुपकारकत्वमङ्गीकरोति—नेति । न च काम्यानां नित्यानामिव दुरितक्षयफलकत्वमप्यस्तु । तथा च तेषामपि विद्याऽपेक्षितदुरितक्षयलक्षणोपकारजनकत्वं सम्भवतीति वाच्यम् । तेषां दुरितक्षयफलकत्वे मानाभावेन विद्योपकारकत्वस्याक्लृप्तत्वादिति भावः । कर्मणां विद्यायां विनियोगविधेः क्लृप्तोपकारैर्नित्यकर्मभिरेव चारितार्थ्ये दृष्टान्तमाह—तत्र यथेति । यद्वा काम्यानां पापक्षयफलकत्वस्यान्यतः प्राप्त्यभावेऽपि यज्ञादीनां विनियोगबलादेव तेषां तत्र कल्प्यमिति नेत्याह

फलं स्वर्गादि । तत्र यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे सति न प्राकृतोपकारातिरिक्तोपकारकल्पनम्, एवं ज्ञाने विनियुक्तानां यज्ञादीनां क्लृप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यसाधारणविद्योपयोग्युपकारकल्पनमिति ॥

(वे०सू०मं०) काम्यानामपि सङ्क्षेपशारीरककृतां नये ॥ ५ ॥
नचोपकारसंक्लृप्तिकालं वाक्यं प्रतीक्षते ॥
प्राप्तैर्वचनवैयर्थ्यं द्वारभेदेऽविशिष्टता ॥ ६ ॥

संक्षेपशारीरके तु नित्यानां काम्याना च कर्मणां विनियोग उक्तः, यज्ञादिशब्दाविशेषात् । प्रकृतौ क्लृप्तोपकाराणां पदार्थानां क्लृप्तप्राकृतोपकारातिदेशमुखेनैव विकृतिष्वतिदेशेन सम्बन्धः, न तु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न त-

---

—तत्रेति । काम्यकर्मणां विद्यापेक्षितोपकारहेतुत्वाक्लृप्तौ सत्यामित्यर्थः । न नित्येति । गौरवादिति भावः ॥

'आश्रमकर्मव्यतिरिक्तानामपि विनियोगः' इति पक्षं काम्यसाधारणं दर्शयति—संक्षेपेति । अविशेषादिति । यज्ञादिशब्दानां नित्ययज्ञादिष्विव काम्ययज्ञादिष्वपि रूढत्वाविशेषान्नित्यानामिव काम्यानामपि विनियोगः श्रुत्या भातीति तत्साधारण एव कर्मणामुपकारः कल्प्यते इत्यर्थः । 'काम्यसाधारण्येन विद्योपयोग्युपकारकल्पनं न सम्भवति, तत्कल्पने पूर्वतन्त्रन्यायविरोधाद्' इति मत्वा विकृतिष्वतिदिष्टान्यङ्गानि दृष्टान्तत्वेन कल्पतरावुदाहृतानि । न तानि यज्ञादीनां दृष्टान्तत्वेनोदाहरणयोग्यानीत्याह—प्रकृताविति । दर्शपूर्णमासादिषु प्रकृतियागादिषु यः पदार्थानां क्लृप्त उपकारः, तस्य प्रथममतिदेशः तत्पृष्ठभावेन पदार्थानां विकृतिषु सौर्यपशुयागादिष्वतिदेशः, न तु प्राकृतपदार्थानामतिदेशेन विकृतिषु विनियोगानन्तरं पदार्थानामुपकारकल्पनमिति न तत्र क्लृप्तोपकारपरित्यागेनोपकारान्तरप्रसक्तिरस्तीत्यर्थः ।

एतदुक्तं भवति—'प्रकृते यज्ञादीनां विनियोगानन्तरमुपकारकल्पनम् । अतिदेशस्थले तु प्रकृतावुपकारकल्पनानन्तरं प्राकृतपदार्थानां विकृतिषु विनियोगः, ततो दृष्टान्तो विषमः' इति ।

त्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः । इह तु प्रत्यक्ष- श्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टानामङ्गानामिव पश्चात् कल्पनीय उपकारः प्रथमावगतविनियोगनिर्वाहाय क्लृप्तोऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्यः । अध्वरेषु अध्वरमीमांसकैरपि हि 'उपकारमुखेन पदार्थान्वये एव क्लृप्तोपकारनियमः । पदार्थान्वयानन्तरम् उपकारकल्पने त्वक्लृप्तोऽपि विनियुक्तपदार्थानुगुण एव उपकारः कल्पनीयः' इति सम्प्रतिपद्यैव बाधलक्षणारम्भसिद्ध्यर्थमुपकारमुखेन विकृतिषु प्राकृतान्वयो दशमाद्ये समर्थितः । किं च

---

इहत्विति । दार्ष्टान्तिके इत्यर्थः । प्रकृतानुगुणं दृष्टान्तमाह—उपदिष्टानामिति । दर्शपूर्णमासादिप्रकरणेष्वन्यत्र वा श्रुतानां पदार्थानां श्रुतिलिङ्गादिभिर्दर्शपूर्णमासादिषु विनियुक्तानां प्रथमावगतविनियोगनिर्वाहाय यथायोग्यं दृष्टादृष्टलक्षण उपकारः कल्प्यते यथा, तथा उपकारोऽत्रापि कल्प्य एव, न तु प्रथमावगतविनियोगपरित्याग उचितः । यज्ञाद्यविशेषश्रुतिबाधप्रसङ्गादित्यर्थः । सामान्यशब्देति । नित्यकाम्यसाधारणयज्ञादिशब्देत्यर्थः । यथा क्लृप्तोपकारातिरिक्तोपकाराकल्पनं कल्पतरुकारोक्तं मीमांसकसम्मतम्, तथा प्रथमावगतविनियोगानुसारेणाक्लृप्तोपकारकल्पनमपि मीमांसकसम्मतमेवेत्याह—अध्वरेति । कर्ममीमांसकैरपीत्यर्थः । अध्वरमीमांसकैरपि सम्प्रतिपद्यैव प्रकृतान्वयस्समर्थित इति सम्बन्धः । पदार्थान्वय एवेति । पदार्थान्वयस्थले एवेत्यर्थः । क्लृप्तोपकारनियमः—क्लृप्तोपकारातिरिक्तोपकाराकल्पनमित्यर्थः । एवकारव्यावर्त्यमाह—पदार्थान्वयानन्तरमिति । उपकारकल्पनस्थले त्वित्यर्थः । सम्प्रतिपद्यैवेति । स्वीकृत्यैवेत्यर्थः । बाधलक्षणेति । बाधाध्यायारम्भसिद्ध्यर्थमित्यर्थः । प्राकृतान्वय इति । प्रकृतियागादौ शेषभूता ये पदार्थाः, तेषां विकृतियागादिष्वतिदेशेन प्राप्तिरित्यर्थः ।

एतदुक्तं भवति—पूर्वतन्त्रे दशमाध्याये विकृतावतिदिष्टानामङ्गानां प्रकृतौ क्लृप्तस्योपकारस्यासम्भवे बाधो निरूप्यते । तच्च बाधनिरूपणं

'क्लृप्तोपकारालाभान्नित्यानामेवायं विनियोगः' इत्यभ्युपगमे नित्येभ्यो दुरितक्षयस्य तस्माच्च ज्ञानोत्पत्तेरन्यतः सिद्धौ व्यर्थोऽयं विनियोगः। अन्यतस्तदसिद्धौ ज्ञानापेक्षितोपकारजनकत्वं तेष्वक्लृप्तमित्यविशेषाद् नित्यकाम्यसाधारणो विनियोगो

---

विकृतिष्वतिदेशेन पदार्थप्राप्त्यनन्तरमुपकारकल्पनपक्षे न सिध्यति। प्रकृतौ श्रुत्यादिभिर्विनियुक्तपदार्थानां दृष्टोपकारासम्भवे अदृष्टोपकारकल्पनवद्विकृतिष्वप्यतिदेशेन विनियुक्तानां पदार्थानां दृष्टोपकारासम्भवे अदृष्टोपकारकल्पनया तत्सिद्ध्यर्थं सर्वेषामेवाङ्गानामनुष्ठानावश्यंभावेन केषाञ्चिदङ्गानामननुष्ठानतदंशातिदेशप्रामाण्यरूपबाधासम्भवात्। अतो बाधनिरूपणसिद्ध्यर्थं प्रकृतिक्लृप्तोपकारमुखेनैव प्राकृतानामन्वयो विकृतिष्विति दशमाध्यायप्रथमाधिकरणे साधितम्। तथा च यत्र पदार्थानां विनियोगानन्तरमुपकारकल्पनम्, तत्र तत्पदार्थसामर्थ्यानुसारेण प्रथमावगतविनियोगनिर्वाहायाक्लृप्तोपकारकल्पनं मीमांसकसम्मतमिति प्रतीयते। यदि विनियोगानन्तरम् उपकारकल्पनास्थलेऽपि क्लृप्तोपकारासम्भवे विनियुक्तपदार्थपरित्याग एव, न त्वक्लृप्तोपकारकल्पनं तत्सम्मतं भवेत्, तदा 'उपकारमुखेनैव पदार्थानामतिदेशः' इति निरूपणपरमधिकरणं व्यर्थं स्यात्। पदार्थानामेव श्रपणावघातादीनामतिदेशेन विनियोगेऽपि विकृतिगतकृष्णलादिषु श्रपणादेर्विक्लित्तितुषविमोकरूपदृष्टोपकारस्य लोकसिद्धस्याभावादक्लृप्तोपकारकल्पनानङ्गीकाराच्च श्रपणादेरननुष्ठानादिलक्षणबाधस्य दशमाध्याये निरूपणीयस्य सम्भवेन तदर्थम् 'उपकारमुखेनैव पदार्थानामतिदेशः' इति निरूपणस्यानपेक्षितत्वात्। तस्माद्विविदिषावाक्येनाविशेषेण नित्यकाम्यसाधारणे विनियोगे प्रथममवगते सति तन्निर्वाहायाक्लृप्तोपकारकल्पनं युक्तमेवेति।

वस्तुतस्तु नित्यकर्मस्वपि विद्याऽपेक्षितोपकारजनकत्वक्लृप्तिरसिद्धेत्याह—किञ्चेत्यादिना। अलाभादिति। काम्येष्विति शेषः। नित्यानां विद्याऽपेक्षितदुरितक्षयलक्षणोपकारद्वारा विद्याहेतुत्वं विविदिषावाक्यादन्यतस्सिद्धम्, असिद्धं वा?। तत्र नाद्यः। विविदिषावाक्यवैयर्थ्यप्रसङ्गादित्याह—नित्येभ्य इति। विनियोग इति। शेषत्वरूपविनियोगबोधकशब्द इत्यर्थः। द्वितीये नित्येष्वपि विद्योपकार-

दुर्वारः । ननु नित्यानां दुरितक्षयमात्रहेतुत्वस्यान्यतः सिद्धावपि विशिष्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिर्वाहकत्वं न सिद्धम्, किंतु अस्मिन् विनियोगे सति ज्ञानोद्देशेन नित्यान्यनुतिष्ठतोऽवश्यं ज्ञानं भवति । इतरथा शुद्धिमात्रम्, न नियता ज्ञानोत्पत्तिरिति सार्थकोऽयं विनियोग इति चेत्, तर्हि नित्याना-

कत्वमक्लृप्तमेव कल्पनीयमिति नित्यकाम्यसाधारणोपकारकल्पनं युक्तमेवेत्याह—अन्यतस्तदसिद्धाविति । नित्यानां विद्योपकारकत्वासिद्धावित्यर्थः । अन्यतःसिद्धिपक्षमवलम्ब्य विनियोगार्थवत्त्वं शङ्कते—नन्विति । दुरितं तावद्द्विविधम्—ज्ञानोत्पत्तिप्रतिबन्धकम्, ज्ञानोत्पत्तिं प्रत्युदासीनं सद् नरकादिप्रदं च । तथा च नित्यानां ज्ञाने विनियोगाभावे 'नित्यकर्मभिर्ज्ञानप्रतिबन्धकदुरितस्यैव क्षयः' इत्यत्र नास्ति मानम् । 'धर्मेण पापमपनुदति' 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'इत्यादिश्रुतिस्मृतिवचनानां नित्यानां दुरितसामान्यक्षयहेतुत्वबोधनमात्रपरत्वात् । अतो नियमेन ज्ञानप्रतिबन्धकदुरितक्षयहेतुत्वं नित्यकर्मणामन्यतो न प्राप्तमिति तत्प्राप्त्यर्थोऽयं विनियोग इत्यर्थः । 'नित्यैरेव यज्ञादिभिर्दुरितक्षयद्वारा ज्ञानं सम्पादयेद्'इति प्रकारेण विविदिषावाक्यीये नित्यानां ज्ञाने विनियोगे सति वा कथं ज्ञानप्रतिबन्धकदुरितस्यैव क्षयो नित्यानुष्ठानतो लभ्यते इति पृच्छति—किं त्विति । तल्लाभप्रकारमाह—अस्मिन्निति । अवश्यमिति । नित्यानुष्ठानाद् ज्ञानप्रतिबन्धकदुरितक्षये सति प्रतिबन्धकरहितमहावाक्यादवश्यं ज्ञानं भवतीत्यर्थः । इतरथेति । एतद्विनियोगाभावादित्यर्थः । दुरितसामान्यक्षयरूपा शुद्धिर्भवति, न तु नियमेन ज्ञानप्रतिबन्धकदुरितक्षयरूपशुद्धिविशेषो भवति । ज्ञानोद्देशेन नित्यानामननुष्ठानात् । तथा च बहुजन्मसु नित्यकर्मानुष्ठानशीलस्यापि नियमेन ज्ञानं न जायते, किं तु दैवयोगात् कदाचिद् ज्ञानप्रतिबन्धकदुरितसङ्घस्य निःशेषं क्षयसम्भवाद् ज्ञानमपि कदाचिद् भवतीत्यनियता ज्ञानोत्पत्तिरित्यर्थः । 'ज्ञानापेक्षितोपकारो नित्येषु क्लृप्तः' इति मतं निरालम्बनमित्यभिप्रेत्य काम्येष्विव नित्येष्वप्यक्लृप्तोपकारकल्पनं तुल्यमिति दूषयति—तर्हीति । नित्येषु ज्ञानोपकारकत्वनियमासिद्धावित्यर्थः । नन्वेवमपि नित्यानामेव विनियोगपक्षे विधेर्लाघवमस्ति । तेषां पक्षे ज्ञानप्र-

मपि अक्लृप्तमेव ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिबर्हणत्वम् । ज्ञान-साधनविशिष्टगुरुलाभश्रवणमननादिसम्पादकापूर्वं च द्वारं कल्पनीयमित्यक्लृप्तोपकारकल्पनाऽविशेषान्न सामान्यश्रुत्यागादितो नित्यकाम्यसाधारणो विनियोगो भञ्जनीय इति ॥ २ ॥

(वे०सू०मं०) ब्राह्मणग्रहणं चात्र त्रैवर्णिकनिदर्शनम् ॥
वार्त्तिकोक्तेस्तथोद्देश्यगतत्वेनाविवक्षणात् ॥ ७ ॥

(३) नन्वेवमपि कथम्—

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।'

---

तिबन्धकदुरितनिवर्हकत्वस्य वचनान्तरात् प्राप्तत्वेन नियममात्रस्य विधिलभ्यत्वात् । काम्येषु तु ज्ञानप्रतिबन्धकदुरितनिवर्हकत्वं सर्वथा न प्राप्तमिति काम्यानामपि विनियोगपक्षे विधेस्तात्पर्यगौरवमपरिहार्यमिति चेत्, सत्यम् । तथाऽपि यज्ञादिश्रुतीनां सङ्कोचलक्षणबाधपरिहाराय काम्यानामपि विनियोग आवश्यक इत्यत्रैव तात्पर्यं बोध्यम् । नित्येभ्यो ज्ञानप्रतिबन्धकदुरितस्यैव क्षयरूपशुद्धिविशेषलाभेऽपि तावन्मात्राद् न ज्ञानोत्पत्तिरस्ति । प्रमाणप्रमेयासम्भावनादिरूपदृष्टप्रतिबन्धकसत्त्वात् । अतस्तन्निरासोपयोगिनामुत्कृष्टगुरुतदधीनश्रवणमननध्यानादीनां सम्पादकादृष्टजनकत्वं नित्यानामक्लृप्तमेव विविदिषावाक्यीयविनियोगबलात् कल्पनीयमित्याह—ज्ञानसाधनेति ।

एवं विविदिषाद्वारा विद्यायां कर्मणां विनियोगं निरूप्य तेषु त्रैवर्णिकानामधिकार इति निरूपणार्थमाक्षेपव्याजेन प्रसङ्गं दर्शयति—नन्वित्यादिना । एवमपीति । 'तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने' इति ज्ञानकर्मसमुच्चयप्रतिपादकस्मरणस्य विविदिषावाक्याविरोधेन 'ज्ञानं साक्षाद् ब्रह्मप्राप्तिसाधनम्, कर्म च विद्याद्वारा तत्प्राप्तिसाधनम्'इति क्रमसमुच्चयपरतया निर्वाहेऽपीत्यर्थः । अत्रावधारणेन संसिद्धिशब्दितमुक्तिं प्रति कर्मातिरिक्तोपायनिषेधाज्जनकाद्यनुष्ठितकर्मणो मुक्तिं प्रति साक्षादेवोपयोगः प्रतीयते । स च विविदिषावाक्यविरुद्ध इति समुच्चयस्मरणवदस्य स्मरणस्य निर्वाहो न सिध्यतीत्यर्थः । अस्यापि विविदिषावाक्याविरुद्धं सिद्धान्त्यभिमतमर्थमाशङ्क्य निषेधति—

इत्यादिस्मरणनिर्वाहः ? । न च तस्य विद्यार्थकर्मानुष्ठानपरत्वम् । विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मणानामेव विद्यार्थकर्मण्यधिकारप्रतीतेः । अतो जनकाद्यनुष्ठितकर्मणां साक्षादेव मुक्त्युपयोगो वक्तव्यः । मैवम् । विविदिषावाक्ये ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणत्वात् ।

यथाऽऽहुरत्रभवन्तो वार्तिककाराः—

'ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् ।
अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने ॥' इति ।

---

न च तस्येति । विद्यार्थेति । अस्मिन् स्मरणे संसिद्धिपदं विद्यापरम् । तथा च 'शुद्धिद्वारा कर्मणैव विद्यां प्राप्ताः' इति स्मरणार्थ इति भावः । 'तस्य स्मरणस्य विद्यार्थकर्मानुष्ठानपरत्वं न च' इत्यत्र हेतुमाह—विविदिषावाक्ये इति । अत इति । विविदिषावाक्यबोध्ये विद्यासाधनकर्मणि त्रैवर्णिकानामनधिकारादित्यर्थः । उपलक्षणत्वादिति । तथा च विद्यार्थकर्मसु जनकादीनामप्यधिकारसत्त्वात् 'कर्मणैव हि' इति स्मरणं विद्यार्थकर्मानुष्ठानपरमेवेति न तद्बलात् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः" इत्यादिश्रुतिविरुद्धस्साक्षादेव कर्मणां मुक्त्युपयोगो वक्तव्य इति भावः । अत्रभवन्त इति । पूज्या इत्यर्थः । आत्मबोधने इति । आत्मबोधनसाधनयज्ञादिकर्मणीत्यर्थः । विद्यार्थकर्माधिकारस्यैव प्रकृतत्वादिति मन्तव्यम् ।

ननु विविदिषावाक्ये ब्राह्मणपदस्य त्रैवर्णिकोपलक्षणत्वे सिद्धे त्रयाणां वर्णानामविशेषेण विद्यार्थकर्मस्वधिकारस्सिध्यति । तत्र सर्वेषामविशिष्टाधिकारत्वे सिद्धे तदनुरोधेन ब्राह्मणग्रहणस्योपलक्षणत्वं सिध्यतीति परस्पराश्रयत्वप्रसङ्ग इति चेद्, न । ब्राह्मणग्रहणस्य द्विजोपलक्षणत्वमनुपजीव्यैव सर्वेषां द्विजानां विद्यार्थकर्मस्वधिकारसिद्धेर्वार्तिकवचने विवक्षितत्वात् ।

ननु विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मणस्यैव विद्यार्थकर्मस्वधिकारे प्रतीयमाने कथं वर्णत्रयसाधारणाधिकारस्सिध्येदिति चेत्, तत्र वक्तव्यम्—किं ब्राह्मणपदस्य यज्ञादिविधावुद्देश्यविशेषणसमर्पकतया

न हि 'विद्याकामो यज्ञादीननुतिष्ठेद्' इति विपरिणमिते विद्याकामाधिकारविधौ ब्राह्मणपदस्याधिकारिविशेषसमर्पकत्वं युज्यते । उद्देश्ये विशेषणायोगात् ।

नापि "राजा स्वाराज्यकामो राजसूयेन यजेत" इति स्वाराज्यकामाधिकारे राजसूयविधौ 'स्वाराज्यकामो राजकर्तृकेण राजसूयेन यजेत' इति कर्तृतया यागविशेषणत्वेन विधेयस्य राज्ञो राजकर्तृकराजसूयस्याराज्ञा सम्पादयितुमशक्यत्वाद् अर्थादधिकारिकोटिनिवेशवद्, इह यज्ञादिकर्तृतया विधेयस्य ब्राह्मणस्यार्थादधिकारिकोटिनिवेश इति

---

ब्राह्मणमात्राधिकारप्रापकत्वम्, किं वा विधेयकर्तृसमर्पकतया, तदुभयसमर्पकत्वाभावेऽपि स्वसन्निधिमात्रेण तन्मात्राधिकारप्रापकत्वं वा गत्यन्तराभावात् ?। तत्र नाद्य इत्याह—न हीति । यज्ञादीनां विद्यालक्षणफले विनियोगपरे विधौ विद्याकामस्याधिकारस्सिद्ध एव ।

तथा च 'ब्राह्मण्यविशिष्टस्य विद्याकामस्याधिकारो विवक्षितः' इति स्वीकृत्य ब्राह्मणपदस्याधिकारिविशेषणसमर्पकत्वं वक्तुं न शक्यते । विधेययज्ञादिनिरूपितोद्देश्यताया विद्याकाममात्रे पर्यवसानसम्भवेन ब्राह्मण्यरूपविशेषणस्यानाकाङ्क्षिततया विद्याकामं प्रति विशेषणत्वेनान्वयायोगाद्, विशिष्टस्योद्देश्यत्वकल्पने गौरवाच्च । विद्याकामब्राह्मण्ययोः प्रत्येकमुद्देश्यत्वे च वाक्यभेदप्रसङ्गाद् 'विद्याकामो यज्ञादीननुतिष्ठेत्' 'ब्राह्मणो यज्ञादीननुतिष्ठेद्'इति भावः ।

द्वितीयं सदृष्टान्तमाशङ्क्य निराकरोति—नापीति । स्वाराज्यकामवाक्ये राजपदस्य पूर्वोक्तरीत्या स्वाराज्यकामं प्रति विशेषणत्वायोगाद् कर्तृविधायकत्वं स्वीकृत्य राजसूये राज्ञः सतः स्वाराज्यकामस्याधिकारः साधित इत्यर्थः । राज्ञोऽर्थादधिकारिकोटिनिवेशवदिति सम्बन्धः । अर्थादितिपदोक्तामर्थापत्तिं स्फुटयति—राजकर्तृकेति । इहेति । विविदिषावाक्ये इत्यर्थः । विधेयस्येति । 'विद्याकामो ब्राह्मणकर्तृकयज्ञादीननुतिष्ठेद्'इत्येवं विधेयस्येत्यर्थः । अर्थादिति । ब्राह्मणकर्तृकयज्ञादेरब्राह्मणेन सम्पादयितुमशक्यत्वादित्यर्थः । 'अर्थादधिकारिकोटिनिवेश इत्यपि न यु-

युज्यते । "सर्वथाऽपि त एवोभयलिङ्गाद्" इति सूत्रे ( उ० मी० अ० ३ पा० ४ सू० ३४ ) 'अन्यत्र विहितानामेव यज्ञादीनां विविदिषावाक्ये फलविशेषसम्बन्धविधिः, नापूर्वयज्ञादिविधिः' इति व्यवस्थापितत्वेन प्राप्तयज्ञाद्यनुवादेन एकस्मिन् वाक्ये 'कर्तृरूपगुणविधिः, फलसम्बन्धविधिश्च' इत्युभयविधानाद्वाक्यभेदापत्तेः ।

नापि राजसूयवाक्ये राज्ञः कर्तृतया विधेयत्वाभावपक्षे राजपदसमभिव्याहारमात्राद्विशिष्टकर्तृत्वलाभवद् इह वाक्यभेदाय कर्तृतया ब्राह्मणाविधानेऽपि ब्राह्मणपदसमभिव्याहारमात्रेण ब्राह्मणकर्तृकत्वालाभात् तदधिकार-

---

ज्यते,' इत्यत्र दृष्टान्तवैषम्यमभिप्रेत्य हेतुमाह—सर्वथाऽपीत्यादिना ।

यज्ञादीनामाश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च यावज्जीवादिवाक्येषु येऽग्निहोत्रादयो धर्मा विहिताः, त एवानुष्ठेयाः । कुतः । श्रुतिस्मृतिरूपोभयलिङ्गात् । श्रुतिस्तावद्विविदिषावाक्यगतयज्ञादिश्रुतिरेव । तया प्रसिद्धयज्ञादीनां प्रसिद्धदानादीनां च प्रत्यभिज्ञायमानत्वात् । अपूर्वयज्ञादिविधायकत्वे प्रत्यभिज्ञाविरोधात्, प्रसिद्धयज्ञाद्यनुवादेन फलसम्बन्धमात्रबोधने लाघवाच्च यज्ञादीनां सुबन्तयज्ञादिपदोपात्तत्वेनात्र विधेयत्वाप्रतीतेश्च । स्मृतिश्च 'अनाश्रितः कर्मफलम्' इत्याद्या प्रसिद्धयज्ञादीनामेव फलाभिसन्धिं विना अनुष्ठितानां विद्याहेतुत्वं दर्शयतीति सूत्रार्थः ।

अन्यत्रेति । विविदिषावाक्यादन्यत्र कर्मकाण्डे इत्यर्थः । उभयविधानादिति । राजसूयवाक्ये तु कर्त्रादिगुणविशिष्टस्यापूर्वकर्मण एव विध्युपगमाद् न वाक्यभेदप्रसक्तिरिति । तत्र राजपदस्य कर्तृरूपगुणविधायकत्वं युक्तमिति भावः ।

तृतीयमपि सदृष्टान्तमाशङ्क्य निराकरोति—नापीति । राज्ञ इति । राज्ञः कर्तृतया विधेयत्वाभावेऽपि राज्ञ एव राजसूयाधिकारः सिध्यति । राजपदसन्निधानेन स्वाराज्यकामपदस्य क्षत्रियपरत्वावगमात् । अन्यथा राजपदवैयर्थ्यप्रसङ्गादिति तात्पर्येण येषां मते राज्ञः कर्तृतया विधिर्नाभ्युपगम्यते, तेषां पक्षे इत्यर्थः । 'ब्राह्मणाधिका-

पर्यवसानमित्युपपद्यते । अन्यत्र त्रैवर्णिकाधिकारिकत्वेन क्लृप्तानामिहापि त्रैवर्णिकाधिकारात्मविद्यार्थत्वेन विधीयमानानां यज्ञादीनां त्रैवर्णिकाधिकारित्वस्य युक्ततया विधिसंसर्गहीनब्राह्मणपदसमभिव्याहारमात्राद्दधिकारसंकोचासम्भवेन ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणत्वौचित्यात् ॥ ३ ॥

(वे०सू०मं०) वैदिकत्वात्तु विद्यायाः शूद्रस्यानधिकारिता ॥

(४) ननु विद्याधिकारिमात्रोपलक्षणत्वे शूद्रस्यापि विद्यायामर्थित्वादिसम्भवेन तस्यापि विद्यार्थकर्माधिकारप्रसङ्ग इति चेद, न । 'अध्ययनगृहीतस्वाध्यायजन्यतदर्थज्ञानवत एव वैदि-

---

रपर्यवसानम्' इत्यपि नोपपद्यते इत्यत्र हेतुमाह—अन्यत्रेति । कर्मकाण्डे इत्यर्थः । इहापीति । विविदिषावाक्येऽपीत्यर्थः । त्रैवर्णिकाधिकारात्मविद्येति । ब्राह्मणस्येव क्षत्रियवैश्ययोरपि विद्यायामर्थित्वलक्षणाधिकाराविशेषात् शूद्रस्येव विद्यार्थयज्ञादिषु तयोः प्रतिषेधाभावाच्चेत्यर्थः । युक्ततयेति । अधिकारिणामसङ्कोचस्य विधिगतानुष्ठापकत्वलक्षणप्रामाण्योपपादकत्वादिति भावः । अन्यत्रक्लृप्तत्वाद्युपपत्तित्रयप्राप्तस्यापि क्षत्रियवैश्ययोरधिकारस्य ब्राह्मणपदमपवादकमित्याशङ्क्याह—विधिसंसर्गहीनेति । उद्देश्यसमर्पकतया विधेयसमर्पकतया वा विधिवाक्यार्थान्वयबोधानुपयोगीत्यर्थः । राजसूयवाक्ये तु राजसूयस्यात्रैव विधेयत्वेन त्रैवर्णिकाधिकारत्वेनान्यत्राक्लृप्तत्वाद्युक्तं विधिसंसर्गहीनराजपदसमभिव्याहारमात्राद्राजकर्तृनियम इति भावः । ननूक्तन्यायेन ब्राह्मणपदाभावेऽपि क्षत्रियवैश्ययोरिव ब्राह्मणस्यापि विद्यार्थकर्मस्वधिकारसिद्धेर्ब्राह्मणग्रहणं व्यर्थमेव स्यादिति चेद्, न । विद्यार्थकर्मसु ब्राह्मणस्य मुख्याधिकारज्ञापनार्थतोपपत्तेर्वैयर्थ्यानवकाशादिति भावः ॥

ब्राह्मणग्रहणस्योपलक्षणत्वपक्षेऽतिप्रसङ्गं शङ्कते—नन्विति । अविधेयायां हि विद्यायामधिकारो नाम विद्यार्थित्वमात्रम् । तच्च शूद्रस्यापि सम्भवतीति क्षत्रियादेरिव तस्यापि विद्यार्थकर्मस्वधिकारो दुर्निवार इत्यर्थः ।

शूद्रस्य श्रुत्युक्तसगुणब्रह्मविद्यासु निर्गुणब्रह्मविद्यासाधनवेदान्त-

केष्वधिकारः' इत्यपशूद्राधिकरणे ( उ० मी० अ० ३ पा० ४ सू० ३४ ) अध्ययनवेदवाक्यश्रवणादिविधुरस्य शूद्रस्य विद्याधिकारनिषेधात् । 'न शूद्राय मतिं दद्याद्'इति स्मृतेराघाततोऽपि तस्य विद्यामहिम्नाऽवगत्युपायासम्भवेन तदर्थित्वानुपपत्तेश्च तस्य विद्यायामनधिकारादिति केचित् ॥

(वे०सू०मं०) केचित्पौराणिके ज्ञाने तस्याप्याहुरधिक्रियाम् ॥ ८ ॥

अन्ये त्वाहुः—शूद्रस्याप्यस्त्येव विद्यार्थकर्माधिकारः ।

---

श्रवणादिषु चाधिकारमाशङ्क्य नास्त्यधिकार इति निर्णीतमपशूद्राधिकरणे । तस्याधिकाराभावे च भाष्ये हेतुरुपन्यस्तः—"वेदाध्ययनाभावाद्"इति । 'शूद्रस्य वेदोच्चारणश्रवणधारणानां निषेधेन वेदाध्ययनाभावेऽपि वेदार्थभूतोपासनाद्यनुष्ठानं किं न स्याद्'इत्याशङ्क्य "अध्ययनविधिना वेदजन्यवेदार्थज्ञानस्य वेदार्थानुष्ठानेषु नियमितत्वादध्ययनशून्यस्य तदभावाद् न सगुणनिर्गुणविद्यानुष्ठानेष्वधिकारः"इति उक्तम् । तथा च तुल्यतया विद्यार्थकर्मस्वप्यधिकारो नास्तीत्यर्थः ।

ननु शूद्रस्य वेदोक्तयज्ञादिष्वधिकाराभावेऽपि वक्ष्यमाणरीत्या तस्य विद्यासाधनकर्मणां सम्भवाद्विद्याकामनया शूद्रस्यापि तेषामनुष्ठानं सम्भवतीत्याशङ्क्य तस्य विद्याकामैव न सम्भवतीत्याह—न शूद्रायेति । मतिं शास्त्रार्थज्ञानम्, विद्याया महिमा निरतिशयानन्दरूपब्रह्मप्राप्तिसाधनत्वम् ।

'शूद्रस्यापि विद्यार्थकर्माधिकारप्रसङ्गः' इत्यत्र इष्टापत्तिरित्याह—अन्ये त्विति । कण्ठत उक्तस्सर्ववर्णाधिकारो यस्मिन् तादृशविद्यादिजपे, स तथोक्तः । श्रीमत्पञ्चाक्षरमेव मन्त्रराजविद्या । आदिपदं च आगमिकपौराणिकमन्त्रान्तरसङ्ग्रहार्थम् । तथा च ब्रह्मोत्तरखण्डे—

'किं तस्य बहुभिर्मन्त्रैः किं तीर्थैः किं तपोऽध्वरैः ।
यस्योन्नमश्शिवायेति मन्त्रो हृदयगोचरः ॥
मन्त्राधिराजराजो यस्सर्ववेदान्तशेखरः ।
सर्वज्ञाननिधानं च सोऽयं शैवषडक्षरः ॥

तस्य वेदानुवचनाग्निहोत्राद्यसम्भवेऽपि कण्ठोक्तसर्ववर्णाधिकार-श्रीपञ्चाक्षरमन्त्रराजविद्यादिजपपापक्षयहेतुतपोदानपाकयज्ञादिसम्भवाद् 'वेदानुवचनेन यज्ञेन दानेन' इत्यादिपृथक्कारकविभक्तिश्रुतेः विधुरादीनां विद्यार्थजपदानादिमात्रानुष्ठानानुमतेश्च 'वेदानुवचनादिसमुच्चयानपेक्षणात् । न च शूद्रस्य विद्यायामर्थित्वासम्भवः ।

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' ।

इतीतिहासपुराणश्रवणे चातुर्वर्ण्याधिकारस्मरणेन पुराणाद्यवगतविद्यामाहात्म्यस्य तस्यापि तदर्थित्वसम्भवात् । 'न शूद्राय मतिं दद्याद्'इति स्मृतेश्च तदनुष्ठानानुपयोग्यग्निहोत्रादिकर्मज्ञानदाननिषेधपरत्वात् । अन्यथा तस्य स्ववर्णधर्मस्याप्यव-

---

प्रणवेन विना मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः ।
स्त्रीभिश्शूद्रैश्च सङ्कीर्णैर्ध्यायते मुक्तिकाङ्क्षिभिः ॥'इति ।

पाकयज्ञादीत्यादिपदं द्विजशुश्रूषानामकीर्तनतीर्थस्नानादिसङ्ग्रहार्थम् । ननु विविदिषावाक्ये शूद्रसाधारणवर्णधर्माणामुपलक्षणेऽपि यज्ञादीनामेकवाक्योपादानात्तेषां समुच्चयस्य विद्यासाधनत्वं भाति । यज्ञादिसमुच्चयश्च शूद्रे बाधित इति कथं तस्य विद्यार्थकर्माधिकार इत्याशङ्क्य हेत्वसिद्ध्या दूषयति–वेदानुवचनेनेति । "वेदानुवचनेन विविदिषन्ति" "यज्ञेन विविदिषन्ति" इत्यादिरूपेण प्रत्येकं साधनत्वप्रतीतेर्न समुच्चयापेक्षा । तद्विवक्षायां हि 'वेदानुवचनयज्ञदानतपोभिर्विविदिषन्ति'इति वाक्यं स्यात् । पृथक्करणविभक्तिश्रवणेऽपि 'वेदानुवचनेन च यज्ञेन च दानेन च तपसा च' इति प्रतिपदार्थं चकारयुक्तं वा वाक्यं स्यात् । "यदग्नये च प्रजापतये च" इत्यादिवदिति भावः । यत्त्वापाततोऽपि विद्यामहिमावगत्युपायासम्भवेन विद्यायामर्थित्वलक्षणाधिकारानुपपत्तिरिति, तदनूद्य निराकरोति–न च शूद्रस्येति । श्रावयेदिति । ब्राह्मण इति शेषः । यदा क्षत्रियादीन् श्रावयेत्, तदा विशेषमाह–कृत्वेति । पुराणादिभिस्साधनभूतैरवगतं विद्यामाहात्म्यं येन शूद्रेण, स तथा, तस्येत्यर्थः । मतिनिषेधवचनस्य सङ्कोचं दर्शयति–न शूद्रायेति । अन्यथेति । शास्त्रार्थज्ञा-

गत्युपायासम्भवेन 'शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधश्शौचमाचमनार्थे पाणिपादक्षालनमेवैके श्राद्धकर्म भृत्यभरणं स्वदारतुष्टिः परिचर्या चोत्तरेषाम्' इत्यादितद्धर्मविभाजकवचनानामननुष्ठानलक्षणाप्रामाण्यापत्तेः । नचैवं सत्यपशूद्राधिकरणस्य निर्विषयत्वम् । तस्य—

'न शूद्रे पातकं किंचित् न च संस्कारमर्हति ।

---

नमात्रदाननिषेधपरत्वे इत्यर्थः । शूद्रस्य स्वतः पुराणादिपठननिषेधादन्येभ्योऽपि पुराणादिश्रवणाभावे स्वधर्मावगतिर्न सम्भवतीत्यर्थः । इष्टापत्तिमाशङ्क्याह—शूद्रश्चतुर्थो वर्ण इत्यादिना । जातिर्जन्म उपनयनाख्यद्वितीयजन्मशून्य इत्यर्थः । प्रक्षालनमेवेति । न त्वपां प्राशनम्, अङ्गस्पर्शनादिकं चेत्येवकारार्थः । उत्तरेषामिति । द्विजानामित्यर्थः । 'न शूद्राय मतिं दद्याद्' इतिस्मृतेश्शास्त्रार्थज्ञानमात्रदाननिषेधपरत्वेऽपि—

वृद्धौ च मातापितरौ भार्या साध्वी सुतश्शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

इत्यादिवचनदर्शनेन ये ब्राह्मणा उक्तलक्षणमात्रादिसंरक्षणोपयोग्यर्थलाभाय शूद्रान् प्रति पुराणादिपठने प्रवर्तन्ते तेभ्यो विद्यामाहात्म्यस्वधर्मयोरवगतिसम्भवाद् न काऽप्यनुपपत्तिरिति मन्तव्यम् । न चैवमिति । शूद्रस्यापि विद्यार्थकर्माधिकारस्वीकारे इत्यर्थः । निर्विषयत्वमिति । तदधिकरणस्य शूद्राधिकारनिषेधपरत्वादिति भावः । सत्यं तदधिकरणं शूद्राधिकारनिषेधपरम्, किं तु विद्यार्थकर्माधिकारनिषेधपरं न भवति, वेदान्तश्रवणाद्यधिकारनिषेधपरत्वात्तस्येति परिहरति—तस्य न शूद्र इत्यादिना । वेदान्तश्रवणसगुणोपासनेषु अधिकाराभावे हेतुगर्भं विशेषणमाह—गुरूपसदनाख्येति । शूद्रस्य संस्कारशून्यत्वे मानमाह—न शूद्र इति । पातकमिति । अभक्ष्यभक्षणादिकृतमित्यर्थः । संस्कारो द्विविधः—अध्ययनाङ्गोपनयनलक्षणः, विद्याङ्गोपनयनलक्षणश्च । द्विविधमपि संस्कारं निषेधति—न च संस्कारमर्हतीति । शिष्यत्वेन स्वीकृत्य समीपे स्थापनरूपं विद्याङ्गोपनयनमाचार्यकर्तृकम्, तच्च शिष्यकर्तृकगुरूपसदनपूर्वकत्वाद् गुरूपसदनाख्यमित्युक्तम् । गुरूपसदनं च

इत्यादिस्मृतेर्गुरूपसदनाख्यविद्याङ्गोपनयनसंस्कारविधुरस्य शूद्रस्य सगुणविद्यासु निर्गुणविद्यासाधनवेदान्तश्रवणादिषु चाधिकारनिषेधपरत्वाद् **निर्गुणविद्यायां** शूद्रस्यापि विषयसौन्दर्यप्रयुक्तार्थित्वस्य निषेद्धुमशक्यत्वात् । **अविधेयायां** च तस्यां तदतिरिक्ताधिकाराप्रसक्त्या तन्निषेधायोगाच्च । न च तस्य वेदान्तश्रवणासम्भवे विद्यार्थकर्मानुष्ठानसम्भवेऽपि विद्यानुत्पत्तेस्तस्य तदर्थकर्मानुष्ठानं व्यर्थमिति वाच्यम् । तस्य वेदान्तश्रवणाधिकाराभावेऽपि भगवत्पादैः—"श्रावयेच्चतुरो वर्णान्"इति चेतिहा-

---

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेद्"इत्यादिना विद्याऽङ्गत्वेन विहितम् । तथा "तं ह्योपनिन्ये"इत्यादिश्रुत्या विद्याङ्गत्वेनोपनयनं च प्रतीयते इति भावः । तं विद्यार्थिनं गुरुरुपनीतवानिति श्रुत्यर्थः । ननु श्रुत्युक्तसगुणोपासनेष्विव, निर्गुणविद्यासाधनवेदान्तश्रवणादिष्विव च निर्गुणविद्यायामप्यधिकारनिषेधपरमपशूद्राधिकरणं किं न स्यात् । विनिगमकाभावात् । तथा च निर्गुणविद्यायामधिकाराभावे तत्साधनकर्मसु शूद्रस्याधिकारो न सिध्येदित्यत आह—निर्गुणविद्यायामिति । ब्रह्मविद्यालक्षणस्य विषयस्य सौन्दर्यं मुक्तिसाधनत्वम् । तज्ज्ञानप्रयुक्तस्य विद्यायामर्थित्वलक्षणाधिकारस्य तदधिकरणन्यायेन निषेद्धुमशक्यत्वादित्यर्थः । ननु शूद्रस्य विद्यायामर्थित्वलक्षणाधिकारसत्त्वेऽपि तदतिरिक्तस्याधीतवेदत्वादिरूपविशेषणान्तरस्याभावात् कथं तस्याधिकारो विद्यायामित्यत आह—अविधेयायामिति । चशब्दः शङ्कानिरासार्थः । तदतिरिक्तेति । अर्थित्वातिरिक्तेत्यर्थः । स्वर्गानुभववद् ब्रह्मानन्दानुभवरूपाया निर्गुणविद्यायाः फलरूपत्वादविधेयत्वम्, फलस्याविधेयत्वात् । तथा च यथा स्वर्गानुभवादौ फले तदर्थित्वमात्रमधिकारः, तथा निर्गुणविद्यायामपि तदर्थित्वमात्रमेवाधिकारः । स च निषेद्धुमशक्यः । विधेयेष्वेवोपासनादिषु पूर्वोक्ताधिकारिविशेषणान्तरापेक्षा शास्त्रे निरूपितेति विषमो दृष्टान्त इति भावः । असम्भवे इति । अपशूद्राधिकरणन्यायेन तदसम्भवे सतीत्यर्थः । तस्य वेदान्तश्रवणाभावेऽपि ब्रह्मात्मैक्यपरपुराणादिश्रवणे अधिकारस्य भाष्ये दर्शितत्वाच्छूद्रस्यापि

सपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणाद् वेदपूर्वस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्'' इति अपशूद्राधिकरणोपसंहारभाष्ये ब्रह्मात्मैक्यपरपुराणादिश्रवणे विद्यासाधनेऽधिकारस्य दर्शि-

---

सम्भवति विद्योत्पत्तिरित्यर्थः। भाष्ये तुशब्दोऽवधारणार्थः। 'श्रावयेच्चतुरो वर्णान्', इतिवचनेन शूद्रस्य पुराणादिश्रवणाभ्यनुज्ञानेऽपि मनननिदिध्यासनयोरभ्यनुज्ञानाभावाद् न मननाद्यनुष्ठानं तस्य सिध्यति। न च मननादेः श्रवणाङ्गत्वाद् न पृथगभ्यनुज्ञानापेक्षेति वाच्यम्। प्रयाजदर्शपूर्णमासादेरिव प्रकृते शेषशेषिभावबोधकप्रमाणाभावेन श्रवणादिष्वङ्गाङ्गिभावव्यवहारस्य गौणत्वात्। तथा च शूद्रस्याद्वैतपरपुराणादिभागश्रवणे कृतेऽपि विद्योदयासम्भवाद्विद्यार्थकर्मानुष्ठानवैयर्थ्यं तदवस्थमेवेत्यस्वरसादाह—विद्योत्पत्तियोग्येति। यद्वा "इतिहासपुराणाभ्यां वेदं समुपबृंहयेद्" इतिवचनादितिहासादिगतब्रह्मात्मैक्यपरभागस्य वेदान्तश्रवणजनितवेदान्तार्थज्ञानोपकारकत्वमात्रमेव, न तु वेदान्तश्रवणमनपेक्ष्य स्वातन्त्र्येण ब्रह्मात्मैक्यज्ञानजनकत्वमिति निश्चीयते। तथा सत्येव तद्वचनपूर्वार्धे सङ्गच्छते—"बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेद्" इति।

अयमर्थः—अल्पं वेदमात्रं श्रुतं विचारितं येन पुरुषेण, सोऽल्पश्रुतः। तस्मात् पुरुषाद् तेन श्रुतो वेदो बिभेति। कथं बिभेति, तत्राह—मामिति। अयमल्पश्रुतो मां श्रुतं वेदं प्रतरेद् मद्विचाररूपायां मीमांसायां न्यायाभासत्वादिशङ्कया मामप्यर्थान्तरपरं सम्भावयेद्। इतिशब्दो हेत्वर्थः। एवं प्रतारणसम्भवाद्धेतोः, इतिहासपुराणाभ्यां वेदं समुपबृंहयेद् इतिहासपुराणवचनैर्मीमांसानुसारिभिस्तस्या दृढन्यायत्वनिश्चयसंपादनद्वारा मीमांसानिर्णीतार्थे एव मां वेदं स्थापयेदिति।

तथा च शूद्रस्य वेदान्तश्रवणरहितस्य वेदान्तार्थोपबृंहणरूपब्रह्मात्मैक्यपरेतिहासादिश्रवणे प्रवृत्तावपि नास्ति विद्योदयः। "श्रावयेच्चतुरो वर्णान्" इति वचनमपि शूद्रस्याद्वैतपरपुराणादिश्रवणांशे अदृष्टार्थमभ्यनुज्ञापरम्। अपशूद्राधिकरणभाष्येऽपि शूद्रस्य अद्वैतपुराणादिश्रवणाधिकारवर्णनम् "बिभेत्यल्पश्रुताद्" इतिवचनं नास्तीतिकृत्वा कृतमिति न भाष्यविरोधोऽपि। तथा च वेदान्तश्रवणैकसाध्या विद्या तदभावे शूद्रस्य न सिध्येदेवेत्यस्वरसा-

तत्वाद् । विद्योत्पत्तियोग्यविमलदेवशरीरनिष्पादनद्वारा मुक्त्यर्थत्वं भविष्यतीति त्रैवर्णिकानां क्रममुक्तिफलकसगुणविद्यार्थकर्मानुष्ठानवद् वेदान्तश्रवणयोग्यत्रैवर्णिकशरीरनिष्पादनद्वारा विद्योत्पत्त्यर्थत्वं भविष्यतीति शूद्रस्य विद्यार्थकर्मानुष्ठानाविरोधाच्च । तस्माद्विविदिषावाक्ये ब्राह्मणपदस्य यथाप्राप्तविद्याऽधिकारिमात्रविषयत्वेन शूद्रस्यापि विद्यार्थकर्माधिकारः सिध्यत्येवेति ॥ ४ ॥

(वे० सू० मं०) सन्न्यासस्यात्र किन्द्वारेणोपयोगः—

(५)नन्वस्तु कर्मणां चित्तशुद्धिद्वारा विद्योपयोगः । सन्न्यासस्य किंद्वारा तदुपयोगः ? ।

(वे० सू० मं०) अत्र केचन ॥

कर्माविनाश्यदुरितनाशद्वारेति चक्षते ॥ ७ ॥

केचिदाहुः—विद्योत्पत्तिप्रतिबन्धकदुरितानामनन्तत्वात् कि-

---

दाह—विद्योत्पत्तियोग्येति । मुक्त्यर्थत्वमिति । सगुणब्रह्मोपासनमिति शेषः । विद्योत्पत्त्यर्थत्वमिति । शूद्रस्य 'मदनुष्ठितधर्माणां विद्योत्पत्त्यर्थत्वं भविष्यति'इति निश्चयेन तदनुष्ठानसम्भवादित्यर्थः । तस्मादिति । शूद्रस्य विद्यार्थकर्मानुष्ठाने बाधकाभावादित्यर्थः । विद्याधिकारिमात्रेति । न तु ब्राह्मणपदस्य ब्राह्मणमात्रपरत्वम्, न वा त्रैवर्णिकमात्रपरत्वमिति मात्रशब्दार्थः । ब्राह्मणपदस्य द्विजोपलक्षणत्वे वार्तिकवचने यो हेतुरुक्तः—त्रयाणामात्मबोधनसाधनकर्मस्वधिकाराविशेषादिति, तस्य हेतोश्शूद्रसाधारणत्वादिति भावः ॥

किंद्वारेति । किमदृष्टद्वारा विद्योपयोगः, किं वा दृष्टद्वारा ? । नाद्यः । विद्योत्पत्तिप्रतिबन्धकदुरितस्य यज्ञाद्यनुष्ठानजनितापूर्वेणैव निवर्तितत्वेन सन्न्यासजनितापूर्वनिवर्त्यदुरितालाभे सति सन्न्यासवैयर्थ्यप्रसङ्गात् । न द्वितीयः । तदनुपलम्भादित्याक्षेपाभिप्रायः ।

तत्राद्यं पक्षं समर्थयते—केचिदाहुरिति । ननु सन्न्यासापूर्वस्य न विद्योदयहेतुत्वम् । असन्न्यासिनामपि केषांचिद्विद्योद्देशेन श्रवणाद्यनुष्ठानदर्शनात्, केषांचित्सन्न्यासं विनैव विद्योदय-

श्चिद् यज्ञाद्यनुष्ठाननिवर्त्यम्, किञ्चित् सन्न्यासापूर्वनिवर्त्यमिति कर्मवच्चित्तशुद्धिद्वारैव सन्न्यासस्यापि तदुपयोगः । तथा च गृहस्थादीनां कर्मच्छिद्रेषु श्रवणाद्यनुतिष्ठतां न तस्मिन् जन्मनि विद्यावाप्तिः, किं तु जन्मान्तरे सन्न्यासं लब्ध्वैव । येषां तु गृहस्थानामेव सतां जनकादीनां विद्या विद्यते, तेषां पूर्वजन्मनि सन्न्यासाद्विद्याऽवाप्तिः । अतो न विद्यायां सन्न्यासापूर्वव्यभिचारशङ्काऽपीति ॥

(वे० सू० मं०) अन्ये त्वदृष्टद्वारेण श्रवणेऽस्याङ्गतां जगुः ॥

अन्ये तु "शान्तो दान्त उपरतः"इत्यादिश्रुतौ उपरत-

---

स्य प्रमाणसिद्धत्वाच्चेत्यत आह—तथा चेति । सन्न्यासस्य विद्यां प्रति दृष्टद्वारानुपलम्भेनादृष्टद्वारैव विद्याऽवाप्तिहेतुत्वे सन्न्यासविधिना सिद्धे सतीत्यर्थः । न च दृष्टद्वारानुपलम्भोऽसिद्धः, लौकिकवैदिकव्यापारविक्षिप्तचित्तस्य विद्योदयासम्भवेन सर्वकर्मसन्न्यासस्य विक्षेपनिवृत्तिरूपदृष्टद्वारा विद्याहेतुत्वसम्भवादिति वाच्यम् । लौकिकवैदिककर्मवतामपि केषां चित् पुरुषधौरेयाणां दैन्यहर्षक्रोधभयादिलक्षणविक्षेपनिवृत्तेरनुभवसिद्धत्वेन तदर्थं सन्न्यासस्यानपेक्षणादिति भावः ॥

सन्न्यासस्यादृष्टद्वारकत्वपक्षमेवालम्ब्य सन्न्यासापूर्वस्य श्रवणाद्यधिकारिविशेषणत्वेन विद्योपयोगं सप्रमाणमाह—अन्ये त्विति । शान्त इति । "तितिक्षुः, समाहितः, श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येद्"इति श्रुतिशेषः । शमः, अन्तरिन्द्रियनिग्रहः । दमः, बाह्येन्द्रियनिग्रहः । उपरतिः, नित्यकर्मत्यागः । ननु शान्तदान्तपदाभ्यामेव कर्ममात्रस्य वारितत्वादुपरतिश्रुतिर्व्यर्थेति चेद्, न । शमदमविधिशास्त्रस्य सामान्यशास्त्रत्वात् तस्य नित्यकर्मविधिना विशेषशास्त्रेण नित्यनैमित्तिककर्मव्यतिरिक्तबाह्यान्तःकरणव्यापारनिवृत्तिमात्रपरतया संकोचे सति नित्यकर्मत्यागालाभात् पुनरुपरतश्रुत्या नित्यकर्मत्यागो बोध्यते इति न तस्या वैयर्थ्यम् । तितिक्षुः, शीतोष्णादिद्वन्द्वसहिष्णुः । समाहितः, श्रवणाद्यपेक्षितचित्तसमाधानवान् । देवतागुरुवेदान्तेषु श्रद्धैव वित्तं यस्य, स श्रद्धावित्तः । भूत्वेत्यस्य प्रत्येकमन्वयः । आत्मन्येव, कार्यकारणसङ्घाते एव । कार्यकारणसङ्घातसाक्षिणमात्मानम् 'अहं

शब्दगृहीततया सन्न्यासस्य साधनचतुष्टयान्तर्गतत्वात्, "सह-कार्यन्तरविधिः"इति ( उ० मी० अ० ३ पा० ४ सू० ४७ ) सूत्रभाष्ये "तद्वतो विद्यावतः सन्न्यासिनो बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते । "तस्मात् ब्राह्मणः पाण्डित्यम्"इत्यादिश्रुतौ ततः प्राग् "भिक्षाचर्यं चरन्ति"इति सन्न्यासाधिकाराद्" इति प्रतिपादनात्,

'त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥'इति—

वार्तिकोक्तेश्च सन्न्यासापूर्वस्य ज्ञानसाधनवेदान्तश्रवणाद्यधिकारिविशेषणत्वमिति तस्य विद्योपयोगमाहुः ॥

ब्रह्मास्मि'इति पश्येदिति श्रुत्यर्थः । साधनचतुष्टयेति । नित्यानित्यविवेकः, ऐहिकामुष्मिकभोगविरागः, शमदमादिषट्कम्, मुमुक्षा चेति साधनचतुष्टयम् । तच्च श्रवणाद्यधिकारिविशेषणमिति व्यवस्थापितं प्रथमसूत्रे इति भावः । सन्न्यासापूर्वस्याधिकारिविशेषणत्वे हेत्वन्तरमाह—सहकार्यन्तरेत्यादिना प्रतिपादनादित्यन्तेन । सहकार्यन्तरस्य विद्यां प्रति साधनान्तरस्य मौनस्य विधिः 'अथ मुनिरिति शब्द' इति सूत्रभागार्थः । सौत्रपदं तद्वत इति । तस्य व्याख्यानम्—विद्यावत इति । श्रवणाद्यनुष्ठानोपयोग्यापातज्ञानवत इत्यर्थः । "तद्वतः सहकार्यन्तरविधिः"इति सूत्रे सन्न्यासिन इत्यनुक्तत्वात् कथं सन्न्यासिन इति लभ्यते, तत्राह—तस्मादिति । तस्मादित्यपि श्रुतिपदमेव । यस्मादतीता ब्राह्मणा आपाततो ब्रह्मात्मानं विदित्वा तत्त्वसाक्षात्कारार्थं व्युत्थानशब्दितं सन्न्यासं कुर्वन्तः, तस्मादिदानीन्तनोऽपि ब्राह्मणो मुमुक्षुः सन्न्यस्य पाण्डित्यादिकं तत्त्वसाक्षात्कारार्थमनुतिष्ठेदिति श्रुत्यर्थः । पाण्डित्यम्—श्रवणम्, मौनम्, ध्यानम् । तत इति । "तस्माद् ब्राह्मणः" इति वाक्यात् पूर्वमित्यर्थः । सन्न्यासापूर्वस्याधिकारिविशेषणत्वे वार्तिकसम्मतिरूपं हेत्वन्तरमाह—त्यक्तेति । वार्तिके प्रथमविशेषणं सन्न्यासपरम् । ततश्च सन्न्यासमुमुक्षाजिज्ञासानां समुच्चयार्थेन चकारेण मुमुक्षुत्वादेरिव सन्न्यासस्यापि वेदान्तश्रवणादिष्वधिकारिविशेषणत्वं भातीति भावः । सन्न्यासापूर्वस्येति । सन्न्या-

(वे० सू० मं०) दृष्टेन निर्विक्षेपेण नियमं त्वितरे बुधाः ॥ १० ॥

अपरे तु 'श्रवणाद्यङ्गतयाऽऽत्मज्ञानफलता सन्न्यासस्य सिद्धा' इति विवरणोक्तेरनन्यव्यापारतया श्रवणादिनिष्पादनं

---

सस्य त्यागलक्षणक्रियारूपतया स्वरूपेणानुवृत्त्ययोगादपूर्वपर्यन्तधावनमिति बोध्यम् ।

"सन्न्यासस्य दृष्टद्वारा विद्योपयोगः" इति द्वितीयपक्षं समर्थयते—अपरेत्विति । ननु 'सन्न्यासस्य विद्याङ्गत्वबोधकश्रुत्यादिवत्तस्य श्रवणाद्यङ्गत्वबोधकप्रमाणाभावाद्विवरणोक्तिरनुपपन्ना' इत्याशङ्क्य तस्यास्तात्पर्यमाह—अनन्यव्यापारतयेति ।

कादाचित्कं श्रवणादिकं विद्योदयद्वारा नामृतत्वसाधनम्, किं तु सार्वकालिकम् । "ब्रह्मसंस्थोऽमृतत्वमेति" "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इत्यादि श्रुतिस्मृतिशतेभ्यः । तथा चानन्यव्यापारतया श्रवणाद्यनुष्ठानं विदधता शास्त्रेण सन्न्यासोऽपेक्ष्यते । ग्रहस्थादेः स्वाश्रमविहितकर्मव्यग्रस्य सदा श्रवणाद्यनुष्ठानासम्भवात् । तथा विद्यासाधनत्वेन सन्न्यासं विदधताऽपि शास्त्रेण द्वारतया निरन्तरश्रवणाद्यनुष्ठानमपेक्ष्यते । सन्न्यासस्य साक्षाद्विद्यासाधनत्वाभावात् । दृष्टद्वारसम्भवे अदृष्टद्वारकल्पनानुपपत्तेश्च । तत्रापि श्रवणादिकं तत्त्वव्यञ्जकत्वादर्थतः प्रधानं भवति, सन्न्यासस्तूक्तहेत्वभावाद् गुणभूततया व्यवतिष्ठते । एवं श्रवणादिविधेः सन्न्यासविधेश्च परस्परापेक्षावलादेकवाक्यभावमापन्नाभ्यां विधिभ्यां सन्न्यासाङ्गकं मननिदिध्यासनसहितं श्रवणं विधीयते इति सिद्धा सन्न्यासस्य श्रवणाद्यङ्गतया आत्मज्ञानफलकतेति भावः ।

यद्वा विवरणोक्तेरयं भावः—श्रवणविधिस्तावच्छ्रवणसाधनतया विक्षेपनिवृत्तिं तद्धेतुसन्न्यासं चापेक्षते । विक्षिप्तचेतसः श्रवणाद्यनुष्ठाने प्रवृत्त्यसम्भवात् । गृहस्थादेश्च स्वाश्रमकर्मकरणकालातिरिक्तकालेऽपि बहुविषयतया विक्षेपावश्यम्भावात् । सन्न्यासविधेरपि विक्षेपनिवृत्तिरूपदृष्टद्वारा श्रवणादिकं घटयित्वा विद्यां सम्पादयतस्सन्न्यासस्य विधानेन चारितार्थ्यसम्भवे अदृष्टद्वारा विद्यासाधनसन्न्यासविधायकत्वासम्भवात् । तथा च पूर्ववत् सन्न्यासस्य श्रवणाद्यङ्गतयैव विद्याफलकत्वम्, न त्वदृष्टद्वारेति सिद्धमिति । अस्मिन्व्याख्याने 'अनन्यव्यापारतया' इत्यस्य 'विक्षेपनिवृत्तिद्वारा' इत्यर्थो विवक्षितः ।

कुर्वतस्तस्य विद्यायामुपयोगः। दृष्टद्वारे सम्भवति अदृष्टकल्पनाऽयोगात्। यदि त्वनलसस्य धीमतः पुरुषधौरेयस्याश्रमान्तरस्थस्यापि कर्मच्छिद्रेषु श्रवणादि सम्पद्यते, तदा 'चतुर्ष्वाश्रमेषु सन्न्यासाश्रमपरिग्रहेणैव श्रवणादि निर्वर्तनीयम्' इति नियमोऽभ्युपेय इति ॥ ५ ॥

**(वे० सू० मं०) क्षत्रियादेरसन्न्यासाच्छ्रवणादि कथं भवेद् ॥**

(६) नन्वस्मिन् पक्षद्वये क्षत्रियवैश्ययोः कथं वेदान्तश्रवणाद्यनुष्ठानम्। सन्न्यासस्य ब्राह्मणाधिकारित्वाद् "ब्राह्मणो निर्वेदमायाद्" "ब्राह्मणो व्युत्थाय" "ब्राह्मणः प्रव्रजेद्" इति सन्न्यासविधिषु ब्राह्मणग्रहणात्।

---

तस्येति। सन्न्यासस्येत्यर्थः। ननु सन्न्यासस्य विक्षेपनिवृत्तिद्वारा श्रवणाद्यङ्गभावमापन्नस्य विद्यासाधनत्वमुक्तमनुपपन्नम्। सन्न्यासं विनाऽपि विक्षेपनिवृत्तेः केषु चित् श्रवणाधिकारिषु सम्भवादिति शङ्कते—यदि त्विति। अनलसस्येति। सत्त्वगुणप्रधानस्येति यावत्। धीमत इति। विषयेषु दोषदर्शनशीलस्येति यावत्। पुरुषधौरेयस्येति। विषयेभ्यस्सकाशादिन्द्रियाणां निग्रहे समर्थस्येत्यर्थः। एतैर्विशेषणैर्विक्षेपहेतूनामभावसूचनाद्विक्षेपनिवृत्तिरुक्ता। सन्न्यासफलस्य विक्षेपाभावस्य सन्न्यासादिव सन्न्यासादन्यतोऽपि प्राप्तौ सन्न्यासस्य विधिरिसतस्य श्रवणाद्यपेक्षितविक्षेपनिवृत्तिं प्रति पक्षे प्राप्तिः, पक्षे चाप्राप्तिरिति लभ्यते। तथा च माभूत् सन्न्यासाश्रमविधिरपूर्वविधिः, नियमविधिस्तु भवेदेवेति समाधत्ते—तदेति। परिग्रहेणैवेति। विक्षेपनिवृत्तिद्वारेति शेषः ॥

नन्वस्मिन्पक्षद्वये इति। सन्न्यासस्याधिकारिविशेषणत्वपक्षे, श्रवणाङ्गत्वपक्षे चेत्यर्थः। कथमिति। सन्न्यासाभावादिति भावः। तयोस्सन्न्यासाभावे हेतुमाह—सन्न्यासस्येति। ब्राह्मणस्यैव सन्न्यासाधिकारे मानमाह—ब्राह्मण इति। निर्वेदं वैराग्यं तत्पूर्वकसन्न्यासं कुर्यादित्यर्थः। निर्वेदशब्दितवैराग्यस्य सन्न्यासं प्रति सामग्रीत्वेन तस्मिन् सति सन्न्यासस्यावश्यकत्वात् सन्न्यासविधिरेवायमिति भावः। व्युत्थायेति। सन्न्यस्येत्यर्थः। यस्माच्छ्रुतावधिकारिविशेषस्य ज्ञानाय ब्राह्मण-

'अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः ।
न सन्न्यासविधिर्यस्माच्छ्रुतौ क्षत्रियवैश्ययोः ॥' इति–
वार्तिकोक्तेश्चेति चेत,

(वे० सू० मं०) तत्र केचन सन्न्यासमाहुः क्षत्रियवैश्ययोः ॥ ११ ॥

अत्र केचित्—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्, गृहाद्वा, वनाद्वा" इत्याद्यविशेषश्रुत्या(१),

ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद् गृहात् ।
त्रयाणामपि वर्णानाममी चत्वार आश्रमाः ॥'

इतिस्मृत्यनुगृहीततया क्षत्रियवैश्ययोरपि सन्न्यासाधिकारसिद्धेः श्रुत्यन्तरेषु ब्राह्मणग्रहणं त्रयाणामुपलक्षणम् । अत एव वार्तिकेऽपि "अधिकारिविशेषस्य"इति श्लोकेन भाष्याभिप्रायमुक्त्वा—

'त्रयाणामविशेषेण सन्न्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्याद् ब्राह्मणग्रहणं तदा ॥'

इत्यनन्तरश्लोकेन स्वमते क्षत्रियवैश्ययोरपि सन्न्यासाधिकारो दर्शित इति तयोः श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्ते ॥

---

ग्रहः, तस्मात् क्षत्रियवैश्ययोस्सन्न्यासविधिर्नास्तीति वार्तिकयोजना । अत्र केचित्तयोश्श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्ते इति सम्बन्धः । 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद् वनी भूत्वा प्रव्रजेद्'इति पूर्वश्रुतौ चतुर्णामप्याश्रमाणां समुच्चयं प्रतिपाद्य तेषां विकल्पं दर्शयति–यदि वेतरथेति । "यदिवा"इत्यस्य ब्रह्मचर्याश्रमे एव वैराग्यमुत्पन्नं चेदित्यर्थः । तत्र तदनुत्पत्तावाह–गृहाद्वेति । गृहाश्रमेऽपि तदनुत्पत्तावाह–वनाद्वेति । अविशेषेति । ब्राह्मणादिविशेषग्रहरहितेत्यर्थः । अत एवेति । वर्णत्रयसाधारणतया सन्न्यासस्य श्रुतिस्मृतिसिद्धत्वादेवेत्यर्थः । यदा "यदि वा"इति श्रुतौ श्रूयते, तदा उपलक्षणार्थं स्यादिति सम्बन्धः ॥

---

(१) ब्राह्मणादीनामधिकारिविशेषणामबोधिकयेत्यर्थः ।

(वे० सू० मं०) अन्ये तु ब्राह्मणस्यैव सन्न्यासो बहुधा श्रुतेः॥
देवादिवदसन्न्यासश्रवणं क्षत्रवैश्ययोः ॥ १२ ॥

अन्ये त्वनेकेषु सन्न्यासविधिवाक्येषु ब्राह्मणग्रहणाद् उदाहृतजाबालश्रुतौ सन्न्यासविधिवाक्ये ब्राह्मणग्रहणाभावेऽपि श्रुत्यन्तरसिद्धं ब्राह्मणाधिकारमेव सिद्धं कृत्वा "सन्न्यासावस्थायामयज्ञोपवीती कथं ब्राह्मणः" इति ब्राह्मणपरामर्शाच्च ब्राह्मणस्यैव सन्न्यासाधिकारः । (१)विरोधाधिकरणन्यायेन

अन्ये त्विति । भाष्यानुवर्तिन इत्यर्थः । श्रुत्यन्तरसिद्धमिति । "ब्राह्मणा व्युत्थाय"इत्यादिश्रुत्यन्तरसिद्धमित्यर्थः । सिद्धं कृत्वेति । विद्योद्देशेन सन्न्यासविधिवाक्यानां सर्वेषामेकवाक्यत्वादिति भावः। कथमिति । तान्त्रयज्ञोपवीतादेर्ब्राह्मणत्वव्यञ्जकत्वात् परमहंससन्न्यासे च तदभावादाक्षेप इत्यर्थः । यद्यत्र क्षत्रियवैश्ययोरपि सन्न्यासो विवक्षितस्स्यात्, तदा 'कथं ब्राह्मणः' इतिवत् 'कथं क्षत्रियः, कथं वैश्यः' इत्यपि श्रूयेत, न तु श्रूयते, तस्मान्न तयोस्सन्न्यासः श्रुत्यभिमत इति भावः । एवं सन्न्यासविधीनामैककण्ठ्ये स्थिते सति "ब्राह्मणः क्षत्रियो वाऽपि"इति स्मृतिवचनं जाबालश्रुतितात्पर्याज्ञानमूलत्वादप्रमाणमित्याह—विरोधाधिकरणन्यायेनेति । प्रत्यक्षश्रुतिविरुद्धं स्मृतिवचनमप्रमाणमिति विरोधाधिकरणन्यायः । "तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य"इत्यादिश्रुतौ सन्न्यासाधिकारानुरोधेन 'ब्राह्मणस्सन्न्यस्य पाण्डित्यादिकमनुतिष्ठेद्'इति वाक्यार्थलाभाद्

(१) अस्मिन्नधिकरणे श्रुतिस्मृत्योर्विरोधे श्रुतेरेव प्रामाण्यं न तु स्मृतेरित्युक्तम् । तथा हि—ज्योतिष्टोमे सदोनामकमण्डपमध्ये काचिदौदुम्बरशाखा निखन्यते तस्याश्च वाससा वेष्टनं स्मर्यते—'औदुम्बरी सर्वा वेष्टयितव्या' इति । श्रुतौ तु—"औदुम्बरीं स्पृष्ट्वोद्गायेद्" इत्यौदुम्बरशाखायाः स्पर्शो विहितः । तत्र युगपदुभयानुष्ठानासम्भवादन्यतरनिषेधावश्यकत्वे सन्देहः—किमत्र स्मृतिप्रामाण्यादौदुम्बर्याः सर्ववेष्टनं कार्यमाहोस्विच्छ्रुत्यनुरोधेन स्पर्शार्थं कश्चन भागः परित्याज्य इति । तत्र पूर्वाधिकरणन्यायेनाष्टकादिस्मृतिवदस्या अपि प्रामाण्येन सर्ववेष्टनं कार्यमिति प्राप्ते सिद्धान्तः-स्मृतेर्मूलभूतवेदानुमानद्वारा प्रामाण्येन यावदियं स्मृतिर्मूलभूतं वेदमनुमापयितुं प्रवर्तते तावदेव विरोधिना प्रत्यक्षेण वेदवचनेन तस्याः कल्पकत्वशक्तेर्व्याघातान्मूलप्रमाणाभावान्न तस्याः स्मृतेः प्रामाण्यमिति । एवं च सर्ववेष्टनस्य स्मृत्यर्थस्य स्पर्शश्रुतिविरुद्धत्वेन नानुष्ठेयतेत्यर्थः ।

(पू॰ मी॰ अ॰ १ पा॰ ३ अ॰ २) श्रुत्यविरुद्धस्यैव स्मृत्यर्थस्य सङ्ग्राह्यत्वात् । यत्तु सन्न्यासस्य सर्वाधिकारित्वेन वार्तिकवचनं तद् विद्वत्सन्न्यासविषयम्, न तु आतुरविविदिषासन्न्यासे भाष्याभिप्रायविरुद्धसर्वाधिकारप्रतिपादनपरम् ।

'सर्वाधिकारविच्छेदि विज्ञानं चेदुपेयते ॥
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥'

इत्यनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तिकाले विद्वत्सन्न्यास एवाधिकारनियमनिराकरणात् । एवं च ब्राह्मणानामेव श्रवणाद्यनुष्ठाने सन्न्यासोऽङ्गम् । क्षत्रियवैश्ययोस्तन्निरपेक्षः श्रवणाद्यधिकार इति तयोः श्रवणाद्यनुष्ठाननिर्वाहः ।

---

'विद्यार्थसन्न्यासे विविदिषुणा क्रियमाणे ब्राह्मणस्यैवाधिकारः' इति भगवतो भाष्यकारस्य मतम् । यदि वार्तिकवचनस्य प्रमाणमूलभाष्यकारमताविरुद्धेऽर्थे तात्पर्यं कल्प्येत, तदा सन्न्यासस्य साधारण्यप्रतिपादकस्मृतिवचनवद्वार्तिकवचनमपि हेयमेव स्यात् । अतो भाष्याविरुद्धार्थपरं वार्तिकवचनमित्याह—तद्विद्वत्सन्न्यासविषयमिति । विविदिषासन्न्यासे सर्वाधिकारप्रतिपादनपरं न भवतीत्यत्र हेत्वन्तरमाह—सर्वाधिकारेति । क्षत्रियवैश्ययोस्तत्त्वज्ञानमभ्युपेयते, न वा ? । नान्त्यः । जनकादीनां तत्त्वज्ञानवत्त्वप्रतिपादकशास्त्रविरोधात् । नाद्यः । तत्त्वज्ञानेन कर्माधिकारप्रयोजकवर्णाश्रमाद्यध्यासनिवृत्तौ सकलकर्मनिवृत्तिरूपविद्वत्सन्न्यासस्य क्षत्रियवैश्ययोरपि वारयितुमशक्यतया विविदिषासन्न्यास इव विद्वत्सन्न्यासेऽपि ब्राह्मणस्यैवाधिकार इति नियमासम्भवादिति भावः । कुतो बलान्नियमः क्रियते, तादृशं बलं नास्तीत्यर्थः । एवं चेति । श्रवणाङ्गत्वेनाधिकारिविशेषणत्वेन वा विद्यासाधने विविदिषासन्न्यासे ब्राह्मणस्यैवाधिकार इति सिद्धे सतीत्यर्थः । ननु सन्न्यासस्याधिकारिविशेषणतया अङ्गतया वा श्रवणापेक्षितत्वपक्षे श्रवणमात्रस्य सन्न्यासापेक्षत्वावगमात् क्षत्रियवैश्ययोर्विविदिषासन्न्यासरहितयोश्श्रवणानुष्ठानं नास्तीत्येव पर्यवस्यति, न तु तयोश्श्रवणं सन्न्यासनिरपेक्षमिति । तथा च कथं तयोश्श्रव-

न हि सन्न्यासस्य श्रवणापेक्षितत्वपक्षे श्रवणमात्रस्य तदपेक्षा नियन्तुं शक्यते। क्रममुक्तिफलकसगुणोपासनया देवभावं प्राप्तस्य श्रवणादौ सन्न्यासनैरपेक्ष्यस्यावश्यं वक्तव्यत्वाद् देवानां कर्मानुष्ठानाप्रसक्त्या तत्त्यागरूपस्य सन्न्यासस्य तेष्वसम्भवादित्याहुः॥

(वे० सू० मं०) ब्रह्मसंस्थश्रुतेर्न्यासी मुख्यः श्रवणविध्ययोः।
क्षत्रियादेरनुमतिं जन्मान्तरफलां परे॥ १३॥

अपरे तु "ब्रह्मसंस्थोऽमृतत्वमेति" इतिश्रुत्युदिता यस्य ब्रह्मणि संस्था समाप्तिः, अनन्यव्यापारत्वरूपं तन्निष्ठत्वं तस्य

---

णाद्यनुष्ठाननिर्वाहः, तत्राह—न हीति। देवभावं प्राप्तस्येति। न च 'सगुणोपासकस्य ब्रह्मलोकं गतस्य उपासनया देवभावं प्राप्तस्य निर्गुणब्रह्मसाक्षात्कारायोपासकेन क्रियमाणे श्रवणादौ सन्न्यासस्य व्यभिचारः' इत्ययुक्तम्। तस्य सगुणविद्यासामर्थ्यादेव निर्गुणसाक्षात्कारसम्भवेन श्रवणाद्यनुष्ठानस्यैवाभावादिति वाच्यम्। देवताऽधिकरणे सगुणविद्यया देवभावं प्राप्तमुपासकमेव प्राधान्येन विषयीकृत्य श्रवणादौ देवाद्यधिकारस्य निरूपितत्वेन तस्यापि श्रवणाद्यनुष्ठानं विना विद्याऽनुदयस्य प्रागेव श्रवणविधिविचारावसरे दर्शितत्वात्। तथा च तत्र व्यभिचारात् सन्न्यासो न श्रवणमात्राङ्गम्, किं तु ब्राह्मणकर्तृकश्रवणस्यैवाङ्गमिति क्षत्रियवैश्ययोस्सन्न्यासाभावेऽपि श्रवणाद्यनुष्ठाननिर्वाह इत्यर्थः। ननु देवानामपि कुतस्सन्न्यासाभावः। तत्राह—देवानामिति।

ननु देवकर्तृकश्रवणे सन्न्यासाश्रमस्य यदि व्यभिचारः, तर्हि त्रैवर्णिकमनुष्यकर्तृकश्रवणे सन्न्यासाश्रमस्य हेतुत्वमस्तु, न तु ब्राह्मणमात्रकर्तृके। तथा सङ्कोचे मानाभावात्। उक्तं हि प्रागेव चतुर्ष्वाश्रमेषु सन्न्यासाश्रमपरिग्रहेणैव श्रवणादि निर्वर्तनीयमिति। स चाश्रमविभागो वर्णत्रयसाधारण एव, न ब्राह्मणमात्रगतः। तथा च सन्न्यासिनो ब्राह्मणस्येव सन्न्यासहीनयोः क्षत्रियवैश्ययोश्श्रवणादौ नाधिकारस्संभवतीत्यस्वरसादाह—अपरेत्विति। श्रुत्युदिता ब्रह्मणि संस्था यस्य सम्भवति, तस्य मुख्याधिकार इति सम्बन्धः। संस्थापदव्याख्यानम्—समाप्तिः। तस्या अपि व्याख्यानम्—अनन्येति। अप्र-

श्रवणादिषु मुख्याधिकारः ।

'गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।

इत्यादिस्मृतिषु सर्वदा विचारविधानात् । सा च ब्रह्मणि संस्था विना सन्न्यासमाश्रमान्तरस्थस्य न सम्भवति । स्वस्वाश्रमविहितकर्मानुष्ठानवैयग्र्यादिति सन्न्यासरहितयोः क्षत्रियवैश्ययोर्न मुख्यः श्रवणाद्यधिकारः । किं तु "दृष्टार्था च विद्या

---

तत्त्वकामस्य नैरन्तर्येण विचारकर्तव्यतायां स्मृतिवचनान्यप्युदाहरति—गच्छत इति । स्वपत इति । शयानस्येत्यर्थः । 'स जीवति मनो यस्य मननेनैव जीवति' इत्यादिवचनमङ्गीकृत्यार्थमादिपदम् । मननं तत्त्वचिन्तनम्, तद्रहितो जीवन्नेव मृत इत्यर्थः । अयं च मुख्याधिकारस्सन्न्यासिनामेवेत्याह—सा चेति । वैयग्र्यादिति । व्यग्रत्वादित्यर्थः । सार्वकालिकी विक्षेपनिवृत्तिरसन्न्यासिनां न सम्भवतीति भावः । न मुख्य इति । शास्त्रीयोऽधिकारो नास्तीत्यर्थः ।

अयं भावः—"ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्या पाण्डित्यश्रुत्येव ब्रह्मनिष्ठाधर्मकस्सन्न्यासाश्रमो विधीयते । ब्रह्मसंस्थाशब्दितायाः ब्रह्मनिष्ठायास्सन्न्यासाश्रमे सम्भवादाश्रमान्तरेष्वसम्भवादिति प्रतिपादितं सन्न्यासाधिकरणभाष्यादौ । तथा च ब्रह्मनिष्ठत्वस्य सन्न्यासाश्रमधर्मत्वेन विहितत्वात् सन्न्यासिनो ब्राह्मणस्य ब्रह्मनिष्ठत्वं स्वधर्म इति सन्न्यासिनस्तत्र मुख्योऽधिकारः । तस्य ब्रह्मनिष्ठत्वव्यतिक्रमप्रत्यवायावगमाच्च । तथा च परमहंसोपनिषदि श्रूयते—

'काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरवसंज्ञकान् ॥' इति ।

काष्ठदण्डोपलक्षितस्सन्न्यासाश्रमो धृतः परिगृहीतः, सर्वाशी सर्वं विषयजातमशितुं भोक्तुं शीलमस्यास्तीति सर्वाशी, बाह्यान्तःकरणजयरहित इति यावत् । ज्ञानवर्जितः ज्ञानाभ्यासवर्जित इत्यर्थः । यस्सन्न्यस्य शमदमादिसहितं ब्रह्मनिष्ठत्वं नानुतिष्ठति, स तीव्रां दुर्गतिं गच्छ-

प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु" इति "अन्तरा चापि तु तद्दृष्टेः" इत्यधिकरणभाष्योक्तन्यायेन शूद्रवदप्रतितीत्यर्थः। यथा सन्न्यासिनो ज्ञाननिष्ठाविधायकानि "सन्न्यस्य श्रवणं कुर्यात्" "गच्छतस्तिष्ठतो वाऽपि" "आसुप्तेरामृतेः कालम्" इत्यादीनि स्मृतिवचनानि सहस्रशस्सन्ति, तथा तत्परित्यागे पातित्यबोधकान्यपि स्मृतिवचनानि सहस्रशस्सन्ति—

'त्वंपदार्थविवेकाय सन्न्यासस्सर्वकर्मणाम्।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्॥
नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना।
वर्तमानस्तु सन्न्यासी पतत्येव न संशयः॥'

इत्यादीनि। सर्वाश्रमसाधारण्येनापि स्वधर्मस्य विगुणस्यापि परित्यागे महाननर्थः स्मर्यते—

'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥'

इत्यादौ। सन्न्यासाधिकरणे भाष्यकारैरेतत्सर्वमभिप्रेत्य सन्न्यासिनोऽनन्यव्यापारतया श्रवणादिनिष्पादनमकुर्वतः पातित्यं कण्ठत एवोक्तम्। तथा च भाष्यम्—"ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म, यज्ञादीनि चेतरेषाम्, तद्व्यतिक्रमे चैतस्य प्रत्यवायः" इति। तस्माच्छ्रवणादेर्भिक्षुं प्रति विहितत्वात् तद्व्यतिक्रमे भिक्षोः प्रत्यवायावगमाच्च सन्न्यासिनः श्रवणादौ मुख्योऽधिकारः, सन्न्यासरहितान् प्रति तु श्रवणादेरविहितत्वादकरणे प्रत्यवायानवगमाच्च नास्ति तेषां मुख्योऽधिकार इति।

ननु क्षत्रियादिकं प्रति श्रवणादिविधानाभावे सत्यधिकार एव नास्तीति कुतो नोच्यते इति शङ्कते—किं त्विति। नित्याधिकाररूपमुख्याधिकारासम्भवेऽपि काम्याधिकाररूपगौणाधिकारसम्भवान्नैवमिति भाष्येणोत्तरमाह—दृष्टार्था चेति। किं त्वमुख्याधिकारमात्रेण श्रवणाद्यनुमतिरिति सम्बन्धः। यथा भुजिक्रिया क्षुद्बाधानिवृत्तिरूपदृष्टफला, तथा विद्याऽपि सर्वानर्थमूलाविद्यानिवृत्तिरूपदृष्टफला श्रुतिसिद्धा। तथा च तस्यां विद्यायामनर्थनिवृत्तिकामानां सर्वेषामेवार्थित्वलक्षणाधिकारस्सम्भवति। तथा च विद्याऽधिकारिणां सर्वेषामविशेषेण वेदान्तश्रवणादावधि-

षिद्धयोस्तयोर्विधुरादीनामिव देहान्तरे विद्याप्रापकेणामुख्याधिकारमात्रेण श्रवणाद्यनुमतिः। न हि "अन्तरा चापि तु तद्दृष्टेः" इत्यधिकरणे विधुरादीनामङ्गीकृतश्श्रवणाद्यधिकारो मुख्य इति वक्तुं शक्यते। "अतस्त्वितरज्ज्यायो लिङ्गाच्च" ( उ० मी०

कारमसक्तौ शूद्रस्य वेदश्रवणादिप्रतिषेधान्नाधिकार इत्युक्तमपशूद्राधिकरणे। क्षत्रियादीनां च तथा प्रतिषेधाभावाद्वेदान्तश्रवणाधिकारो भाष्यानुमतो विधुरादेरिवेत्यर्थः।

नन्वमुख्याधिकारिभिरनुष्ठितश्रवणादेरपि विद्योत्पादकत्वमवश्यं वाच्यम्। अन्यथा गौणाधिकारनिरूपणपरभाष्यवैयर्थ्यप्रसङ्गात्। विद्योत्पादकत्वावश्यंभावे च न काम्याधिकारस्य गौणत्वम्। मुख्यगौणाधिकारयोः फलतो विशेषाभावादित्यत आह—देहान्तर इति।

अयं भावः—मुख्याधिकारिणामनन्यव्यापारतया प्रत्यहं निर्वर्त्यमानं श्रवणादिकं निरङ्कुशब्रह्मचर्याहिंसाशमदमादियुक्तमस्मिन्नेव जन्मनि प्रायेण विद्योत्पादकं सम्पद्यते। अमुख्याधिकारिणां तु श्रवणादिकमनन्यव्यापाररूपत्वाभावात् सङ्कुचितब्रह्मचर्यादियुक्तत्वाच्चास्मिन् जन्मनि विद्योत्पादनयोग्यमेव न भवति। किं तु बहुषु जन्मसु किञ्चित् किञ्चिच्छ्रवणादिकं सम्पाद्यमानं सम्भूय देहान्तरे क्वचिज्ज्ञानमुत्पादयेदिति महान् फलभेदो गौणमुख्याधिकारयोः। तथा च स्मृतिः—

'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्'इति।

अनेकेषु जन्मसु कृतश्रवणादितया क्वचिज्जन्मनि संसिद्ध उत्पन्नविद्यस्सन् ततस्सिद्धिबलाद् मुक्तिं गच्छतीति स्मृत्यर्थ इति।

ननु 'क्षत्रियवैश्ययोर्विधुरादीनामिवामुख्याधिकारः' इत्ययुक्तम्। दृष्टान्तासम्प्रतिपत्तेरित्यत आह—न हीति। वक्तुं न हि शक्यते इति सम्बन्धः। यद्यपि 'सन्न्यासिन एव मुख्याधिकारः' इति पूर्वं प्रतिपादितत्वेन विधुरादीनां सन्न्यासाभावादेव गौणाधिकारस्सिद्धः, तथाऽपि तेषां गौणाधिकारे सूत्रसंगृहीतामप्युपपत्तिमाह—अतस्त्वितरादिति। अतोऽनाश्रमिभिरनुष्ठितविद्यासाधनापेक्षया इतरदाश्रमिभिरनुष्ठितं विद्यासाधनं कर्म श्रवणादिकं वा ज्यायः प्रशस्तं विद्यासाधनम्। ज्यायस्त्वावधारणार्थस्तुशब्दः। श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। "तेनैति ब्र-

अ० ३ पा० ३ सू० ३९ ) इतिसूत्रकारेणैव तेषाममुख्याधिकारस्फुटीकरणात् । न च तत्र तेषां श्रवणाद्यधिकार एव नोक्तः, किं तु तदीयकर्मणां विद्याऽनुग्राहकत्वमिति शङ्क्यम् । "दृष्टार्था च विद्या" इत्युदाहृततदधिकरणभाष्यविरोधात् । न च क्षत्रियवैश्ययोः सन्न्यासाभावाद् अमुख्याधिकारे तत एव देवानामपि श्रवणादिष्वमुख्य एवाधिकारः स्यात् । तथा च क्रममुक्तिफलकसगुणविद्यया देवदेहं प्राप्य श्रवणाद्यनुतिष्ठतां विद्याप्राप्त्यर्थं सन्न्यासार्हं पुनर्ब्राह्मणजन्म वक्तव्यमिति "ब्रह्मलोकमभिसम्पद्यते" "न च पुनरावर्तते" "अनावृत्तिश्शब्दाद्" इत्या-

---

ह्मवित्पुण्यकृद्" इतिवाक्यं श्रुतिलिङ्गम् । 'अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः' इत्यादि, स्मृतिवाक्यं स्मृतिलिङ्गम् । तेन पुण्यलब्धेन ब्रह्मवेदनेन ब्रह्म एति प्राप्नोतीति श्रुत्यर्थः । अत्र श्रुतौ पुण्यत्वेन प्रसिद्धानामाश्रमधर्माणामेव विशिष्य ब्रह्मप्राप्तिसाधनत्वप्रतिपादनादनाश्रमिधर्माणां "विशेषानुग्रहश्च" इति सूत्रोक्तन्यायेन विद्योपयोगिनामपि निकर्षो भाति । स च निकर्षो विधुरादीनां विद्यार्थकर्मसु श्रवणादिषु च मुख्याधिकाराभावप्रयुक्त एवेति वक्तव्यम् । हेत्वन्तराभावाद, अनाश्रमित्वस्य निन्दितत्वाच्च । 'न हि कर्मज्ञानयोर्मुख्याधिकारी निन्दार्हः' इति सूत्रभाष्यकारयोरभिप्राय इत्यर्थः । ननु विधुराधिकरणे "विधुराद्यनुष्ठितं कर्म विद्यासाधनम्" इत्येतावदेवोक्तम्, न तु विधुरादेः श्रवणाद्यधिकारोऽपि तत्र प्रतिपादितः । तथा च श्रवणादौ विधुराद्यधिकारस्य गौणमुख्यत्वचिन्ता निरालम्बनेत्याशङ्क्य परिहरति—न च तत्रेति । विधुराधिकरणे इत्यर्थः । तत एवेति । सन्न्यासाभावादेवेत्यर्थः । अस्तु पुनर्ब्राह्मणजन्मेत्यत आह—ब्रह्मलोकमिति । न च पुनरिति । ब्रह्मलोकमभिसम्पद्य पुनरिमं लोकं प्रति नावर्तत इत्यर्थः । एतच्छ्रुतिमूलं सूत्रमुदाहरति—अनावृत्तिरिति । ब्रह्मलोकं गतानामुपासकानामावृत्तिर्नास्ति । उदाहृतश्रुतेरित्यर्थः । "स्मृतेश्च" इत्यादिसूत्रसङ्ग्रहार्थमादिपदम् । तथा च स्मृतिः—

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति ।

दिश्रुतिसूत्रविरोध इति वाच्यम्। देवानामनुष्ठेयकर्मवैयर्थ्याभावात् स्वत एवानन्यव्यापारत्वं सम्भवतीति क्रममुक्तिफलकसगुणवि- द्याभिधायिशास्त्रप्रामाण्याद्विनाऽपि सन्न्यासं तेषां मुख्याधिकारा- भ्युपगमादित्याहुः ॥ ६ ॥

(वे० स्रू० मं०) श्रवणं नन्वसन्न्यासं जन्मान्तरफलं कथम् ॥
दृष्टार्थत्वाददृष्टस्यासाङ्गत्वेनाप्यसंभवात् ॥ १४ ॥

(७)नन्वमुख्याधिकारिणा दृष्टफलभूतवाक्यार्थावगत्यर्थमवि- हितशास्त्रान्तरविचारवत् क्रियमाणो वेदान्तविचारः कथं जन्मा- न्तरविद्याऽवाप्तावुपयुज्यते। न खलु विचारस्य दिनान्तरी- यविचार्यावगतिहेतुत्वमपि युज्यते। दूरे जन्मान्तरीयतद्धे- तुत्वम्। न च वाच्यं मुख्याधिकारिणा परिव्राजकेन क्रिय- माणमपि श्रवणं दृष्टार्थमेव। अवगतेर्दृष्टार्थत्वात्। तस्य यथा प्रारब्धकर्मविशेषरूपप्रतिबन्धादिह जन्मनि फलमजनयतो ज- न्मान्तरे प्रतिबन्धकापगमेन फलजनकत्वम् "ऐहिकमप्यप्रस्तु-

---

ते ब्रह्मलोकवासिनः ब्रह्मोपासकाः प्रतिसञ्चरे महाप्रलये परस्य हि- रण्यगर्भस्य ब्रह्मलोकस्वामिनः आयुषोऽन्ते कृतस्साक्षात्कृत आत्मा येषां ते तथा। नन्वनन्यव्यापारत्वसम्भवेऽपि सन्न्यासो नास्तीत्याशङ्क्याह—क्रम- मुक्तीति। मनुष्येष्वेव सन्न्यासो मुख्याधिकारप्रयोजकः। वर्णाश्रम- विभागस्य मनुष्यविषयत्वादिति भावः।

अविहितेति। न्यायशास्त्रादिविचारवदित्यर्थः। एतज्जन्मीय- वेदान्तविचारस्यागामिजन्मीयां वेदान्तार्थावगतिं प्रति हेतुत्वासम्भवं कैमु- तिकन्यायेन द्रढयति—न खल्विति। मुख्याधिकारिकृतविचारदृष्टान्तेन गौणाधिकारिश्रवणादेरपि जन्मान्तरीयविद्योपयोगं शङ्कते—न च वा- च्यमिति। ततः किम्, तत्राह—तस्येति। यथा तस्य मुख्याधिकारि- कृतश्रवणस्य प्रतिबन्धादिह जन्मनि विद्यालक्षणं फलमजनयतो जन्मान्तरे फलजनकत्वम्, एवममुख्याधिकारिकृतमपि श्रवणं जन्मान्तरे फलजनकं स्यादिति नच वाच्यमिति सम्बन्धः। मुख्याधिकारिकृतश्रवणस्य सति

तत्प्रतिबन्धे तद्दर्शनाद्'' इत्यधिकरणे ( उ० मी० अ० ३ पा० ४ सू० ५१ ) तथा निर्णयाद्, एवममुख्याधिकारिकृतस्यापि स्यादिति । यतश्शास्त्रीयाङ्गयुक्तं श्रवणमपूर्वविधित्वपक्षे फलपर्यन्तमपूर्वम्, नियमविधित्वपक्षे नियमादृष्टं वा जनयति । तच्च जातिस्मरत्वप्रापकादृष्टवत् प्राग्भवीयसंस्कारमुद्बोध्य तन्मूलभूतस्य विचारस्य जन्मान्तरीयविद्योपयोगितां घटयतीति युज्यते । शास्त्रीयाङ्गविधुरं श्रवणं नादृष्टोत्पादकमिति कुतस्तस्य जन्मान्तरीयविद्योपयोगित्वमुपपद्यते । घटकादृष्टं विना जन्मान्तरीयप्रमाणव्यापारस्य जन्मा-

---

प्रतिबन्धके आमुष्मिकं विद्याजन्मेत्यत्र मानमाह—ऐहिकमपीति । प्रस्तुतप्रतिबन्धे असति विद्याजन्म इह जन्मनि भवति । अपिशब्दाद् सति प्रतिबन्धे जन्मान्तरे भवति । कुतः, तद्दर्शनाद, तस्य प्रतिबन्धकत्वशाज्जन्मान्तरे विद्योदयस्य वामदेवादिषु दर्शनादित्यर्थः । दृष्टान्तवैषम्येणोत्तरमाह—शास्त्रीयाङ्गयुक्तमिति । शास्त्रीयाङ्गं सन्न्यासः, तद्युक्तं सन्न्यासिना अनुष्ठीयमानमिति यावत् । तथा च शास्त्रीयाङ्गसहितं श्रवणं 'श्रवणविधिरपूर्वविधिः' इति पक्षे स्वयमेव विद्यालक्षणफलपर्यन्तमदृष्टं जनयति, 'श्रवणविधिर्नियमविधिः' इति पक्षे तु तादृशं श्रवणं नियमविशिष्टं सत् फलपर्यन्तं नियमादृष्टं जनयतीत्यर्थः । तच्चेति । श्रवणजनितादृष्टमित्यर्थः । जातीति । जातिर्जन्म । ततश्च यथा जातिस्मरत्वसम्पादकमदृष्टं पूर्वजन्मतद्वृत्तान्तानुभवजन्यसंस्कारमस्मिन् जन्मन्युद्बोध्य तदुद्बोधनद्वारा पूर्वजन्मतद्वृत्तान्तस्मृतिं घटयति । तथा प्राचि भवे श्रवणादिजनितं संस्कारमुद्बोध्य तत्संस्कारकारणभूतस्य श्रवणस्य भाविजन्मनि विद्योपयोगित्वं घटयतीत्यर्थः । शास्त्रीयाङ्गविधुरमिति । सन्न्यासरहितक्षत्रियादिना क्रियमाणं श्रवणमदृष्टोत्पादकं न भवति । क्षत्रियादिकं प्रत्यविहितत्वाच्छ्रवणादेरिति भावः । नन्वविहितश्रवणस्यादृष्टानुत्पादकत्वेऽपि संस्कारजनकत्वसम्भवाद् तद्बलादेव जन्मान्तरीयविद्याहेतुत्वं कुतो न स्यादित्यत आह—घटकादृष्टं विनेति । अतिप्रसङ्गादिति । जन्मान्तरानु-

न्तरीयावगतिहेतुत्वोपगमे अतिप्रसङ्गात् ॥

(वे०सू०मं०) उच्यते यज्ञजादृष्टजातमेतत्फलावधि ॥
उत्पाद्य तेन निर्वाह्यमिति न द्वारकल्पना ॥ १५ ॥

उच्यते-अमुख्याधिकारिणाऽपि उत्पन्नाविविदिषेण क्रियमाणं श्रवणं द्वारभूतविविदिषोत्पादकप्राचीनविद्यार्थयज्ञाद्यनुष्ठानजन्यापूर्वप्रयुक्तमिति तदेवापूर्वं विद्यारूपफलपर्यन्तं व्याप्रियमाणं जन्मान्तरीयायामपि विद्यायां स्वकारितश्रवणस्य उपकारकतां घटयतीति नानुपपत्तिः । श्रवणादौ विध्यभावपक्षे तु सन्न्यासपूर्वकं कृतस्यापि श्रवणस्यादृष्टानुत्पादकत्वात् सति प्रतिबन्धे तस्य जन्मान्तरीयविद्याहेतुत्वमित्थमेव निर्वाह्यम् ॥

(वे०सू०मं०) आचार्याश्चैवमेवाहुरादोषपरिसङ्ख्यात् ॥
आवृत्तं नियमादृष्टं निष्पाद्य फलदं यतः ॥ १६ ॥

आचार्यास्तु नियमविधिपक्षेऽपि अयमेव निर्वाहः । श्रव-

---

भूतसकलपदार्थस्मृतिप्रसङ्गादित्यर्थः । 'कर्मणां विद्यायां विनियोगः' इति पक्षमाश्रित्य परिहरति—उच्यते इति । यज्ञादिभिर्विद्यायां सम्पादनीयायां द्वारभूता या विविदिषा, तस्या उत्पादकं प्राचीनं च यद् विद्यार्थयज्ञाद्यनुष्ठानम्, तज्जन्येत्यर्थः । स्वपदं यज्ञाद्यनुष्ठानजन्यापूर्वपरम् । वाचस्पतिमते मुख्याधिकारिकृतश्रवणस्यापि यज्ञाद्यपूर्वेणैव निर्वाह इति दृष्टान्ताभिप्रायेणाह—श्रवणादौ विध्यभावपक्षे त्विति ।

विवरणपक्षेऽप्येवमेव निर्वाह इत्याह—आचार्यास्त्विति ।

अयं भावः—प्रमाणासम्भावनानिवृत्तिः श्रवणफलम्, प्रमेयासम्भावनानिवृत्तिर्मननफलम्, विपरीतभावनानिवृत्तिर्निदिध्यासनफलम् । तथा च त्रिविधप्रतिबन्धकनिवृत्तिलक्षणफलपर्यन्तमावृत्तिविशिष्टानि श्रवणादीनि यस्य मुख्याधिकारिणो निष्पन्नानि, तस्य नियमादृष्टमुत्पन्नमेव । एवं सम्पन्नविद्यासाधनस्यापि प्रतिबन्धवशाद्यदि विद्या न जाता, तदा पुनर्जन्मलाभेन प्रतिबन्धक्षये सति पुनर्विचारमनपेक्ष्यैव विद्या जायते । यथा वामदेवहिरण्यगर्भादेः । यस्य तूक्तप्रतिबन्धनिवृत्तिपर्यन्तं श्रवणाद्यावृत्तिर्न जाता, मध्ये मृतिश्च जाता, तस्य मु-

णमभ्यस्यतः फलप्राप्तेरर्वाक् प्रायेण तन्नियमादृष्टानुत्पत्तेः । तस्य फलपर्यन्तावृत्तिगुणकश्रवणानुष्ठाननियमसाध्यत्वात् । न हि नियमादृष्टजनकश्श्रवणनियमः फलपर्यन्तमावर्तनीयस्य श्रवणस्योपक्रममात्रेण निर्वर्तितो भवति । येन तज्जन्यनियमादृष्टस्यापि फलपर्यन्तश्रवणावृत्तेः प्रागेवोत्पत्तिः सम्भाव्येत । अवघातवदावृत्तिगुणकस्यैव श्रवणस्य फलसाधनत्वेन फलसाधनपदार्थनिष्पत्तेः प्राक् तन्नियमनिर्वर्तिवचनस्य निरालम्बनत्वात्, श्र-

---

रूपाधिकारिणोऽपि नियमादृष्टं न जायते । स च पुनर्जन्मान्तरे उक्तप्रतिबन्धकनिवृत्तिपर्यन्तश्रवणादिकमभ्यस्य श्रवणादिनियमादृष्टवशेन विद्याप्रतिबन्धककल्मषक्षये सति विद्यां लभते ।

तदुक्तं भगवता श्रीकृष्णेन—

'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयस्संसिद्धौ कुरुनन्दन ॥'इति ।

तत्र प्राप्ते साधुकुलजन्मनि पूर्वदेहभवमिदानीं संस्कारात्मनाऽनुवर्तमानं बुद्धिसंयोगं श्रवणादिकर्तव्यताबुद्ध्या सम्बन्धं लभते । अस्मिन्नपि जन्मनि प्रतिबन्धनिवृत्तिद्वारा 'विद्योदयाय मया श्रवणादिकमनुष्ठेयम्'इति बुद्ध्या युक्तो भवतीत्यर्थः । ततः पूर्वजन्मीययत्नापेक्षया भूयोऽधिकं यतते संसिद्ध्यर्थमित्यर्थः । तथा च योऽयं फलपर्यन्तावृत्तिगुणकश्रवणादिरहितो योगभ्रष्टः, तस्य नियमादृष्टाभावाद्यज्ञाद्यदृष्टादेव निर्वाहः कर्तव्य इति ।

प्रतिबन्धनिवृत्तिरूपफलप्राप्तेः पूर्वं नियमादृष्टानुत्पत्तौ हेतुमाह—तस्येति । नियमादृष्टस्येत्यर्थः । नियमादृष्टं हि न श्रवणमात्रजन्यम्, किं तु श्रवणनियमजन्यम् । तन्नियमश्च श्रवणादेरेव फलपर्यन्तमावृत्तौ सत्यां निष्पद्यते । तथा च फलोत्पत्तेरर्वाक् श्रवणादिनियमस्यैवाभावाद् न नियमादृष्टोत्पत्तिरित्यर्थः । उक्तं प्रपञ्चयति—न हीत्यादिना । श्रवणनियमः श्रवणस्योपक्रममात्रेण निर्वर्तितो न भवतीत्यत्र हेतुमाह—अवघातवदिति । आवृत्तिविशिष्टस्यैवावहननस्य तण्डुलनिष्पत्तिलक्षणफलसाधनतायाः लोकसिद्धत्वादिति भावः । प्रागिति । फलपर्यन्तं

वणावघाताद्युपक्रममात्रेण नियमनिष्पत्तौ तावतैव नियमशास्त्रानुष्ठानं सिद्धमिति तदनावृत्तावप्यवैकल्यप्रसङ्गाच्चेत्याहुः ॥

(वे०सू०मं०) कृच्छ्राशीतिफलस्मृत्याऽऽधानवत्कर्तृसंस्कृतेः ॥
तद्द्वारा श्रवणं केचिज्जन्मान्तरफलं जगुः ॥ १७ ॥

केचित्तु दृष्टार्थस्यैव वेदान्तश्रवणस्य—

'दिने दिने तु वेदान्तश्रवणाद् भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेद्' ॥

इत्यादिवचनप्रामाण्यात् स्वतन्त्रादृष्टोत्पादकत्वमप्यस्ति । यथा अग्निसंस्कारार्थस्याधानस्य पुरुषसंस्कारेषु परिगणनात् तदर्थत्वमपि, एवं वचनबलादुभयार्थत्वोपपत्तेः । तथा च प्रति-

---

श्रवणस्याप्राप्तांशपरिपूरणलक्षणनियमो निष्पन्नो भवति, न ततः प्रागित्यर्थः । श्रवणस्यारम्भमात्रे वा कतिपयावृत्तिमात्रे वा जाते सति 'श्रवणनियमो निष्पन्नः' इति वचनं विषयाभावाद् निरालम्बनमित्यर्थः । तदनावृत्ताव-पीति । श्रवणावघाताद्यनुष्ठानमुपक्रम्य श्रवणादिकं त्यक्त्वा भाषाप्रबन्धादिविचारे नखविदलनादौ च प्रवृत्तावपि नियमविधिविरोधाभावप्रसङ्गादित्यर्थः ॥

मुख्यामुख्याधिकारिभिरन्वहं क्रियमाणस्य वेदान्तश्रवणस्य प्रतिबन्धकानिवृत्तिरूपदृष्टफलोत्पादकत्ववददृष्टोत्पादकत्वमप्यस्ति । तथा च तद्बलाज्जन्मान्तरे विद्योपयोगित्वं विचारस्य घटते इति परिहारान्तरमाह—केचित्त्विति । फलमिति । पुण्यरूपमित्यर्थः । वचने तुशब्दश्चार्थे । तथा च वेदान्तश्रवणस्य देवतागुरुवेदान्तविषयभक्तिगुरुशुश्रूषाभ्यामुपात्ताभ्यामनुपात्तैश्च शमदमब्रह्मचर्याहिंसादिभिः समुच्चयार्थस्तुशब्द इति भावः । स्वतन्त्रेति । वेदान्तश्रवणस्य स्वतन्त्रतया अदृष्टोत्पादकत्वमस्तीत्यर्थः । स्वातन्त्र्यं चादृष्टजनने श्रवणस्य विद्यायां विनियोगबोधकश्रवणविधिनैरपेक्ष्यमिति बोध्यम् । एकस्योभयार्थत्वे दृष्टान्तमाह—यथाग्नीति । "अग्नीनादधीत" इति वचनादाधानस्याहवनीयाद्यग्निसंस्कारत्वोपगमादिति भावः । पुरुषसंस्कारेष्विति । "अग्न्याधेयमग्निहोत्रम्" इत्यादिपुरुषसंस्कारसङ्ग्राह-

दिनश्रवणजनितादृष्टमहिम्नैवामुष्मिकविद्योपयोगित्वं श्रवणमनना-दिसाधनानामित्याहुः ॥ ७ ॥

(वे०सू०मं०) श्रवणादेरिव ज्ञानसाधनत्वं समर्थितम् ॥
प्रमाणैर्भारतीथैर्निर्गुणोपास्तिकर्मणः ॥ १८ ॥

(८)एवं 'श्रवणमननादिसाधनानुष्ठानप्रणाल्या विद्याऽवाप्तिः' इत्यस्मिन्नर्थे सर्वसम्प्रतिपन्ने स्थिते भारतीतीर्थाः ध्यानदीपे विद्याऽवाप्तौ उपायान्तरमप्याहुः । "तत् कारणं साङ्ख्ययोगाभिपन्नम्", 'यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।' इतिश्रुतिस्मृतिदर्शनाद् यथा साङ्ख्यं नाम वेदान्तविचारः श्रवणशब्दितो मननादिसहकृतो विद्याऽवाप्त्युपायः, एवं योगशब्दितं निर्गुणब्रह्मोपासनमपि । न च निर्गुणस्योपासनमेव ना-

कसूत्रे अग्न्याधानस्यापि पाठादित्यर्थः । अदृष्टमहिम्नैवेति । वेदान्तश्रवणजनितादृष्टस्य योग्यतया विद्यायामेव विनियोगस्य वक्तव्यतया तद्बलाद् जन्मान्तरीयविद्योपयोगित्वमिति भावः ॥

एवमुत्तममध्यमाधिकारिणां साङ्ख्यमार्गं निरूप्य तदशक्तानामत्यन्तमन्दाधिकारिणां योगमार्गं निरूपयितुमुपक्रमते—एवमिति । सर्वसम्प्रतिपन्ने इति । सर्वश्रुतिस्मृतिषु सम्यक् प्रतिपन्ने निश्चिते इत्यर्थः । आहुरिति । सम्यग् निरूपितवन्त इत्यर्थः । न तु नूतनतया कल्पितवन्त इति भ्रमितव्यम् । तस्यापि श्रुत्यादिसिद्धत्वात् । तत् प्रकृतं कारणत्वोपलक्षितं ब्रह्म साङ्ख्ययोगाभ्यां विद्याद्वारा आभिमुख्येन प्रत्यक्त्वेन प्राप्तमिति श्रुत्यर्थः । साङ्ख्यैः श्रवणादिपरैः योगैरुपासकैः यत् स्थानं ब्रह्मस्वरूपं विद्याद्वारा गम्यते प्राप्यते इत्यर्थः । योगैरपीत्यपिशब्दाद्योगमार्गस्यानुकल्पत्वं भातीति बोध्यम् । अपीति । 'विद्याऽवाप्त्युपायः' इत्यनुषङ्गः । निर्गुणब्रह्मोपासनं मानशून्यमित्याशङ्क्य परिहरति—न चेत्यादिना ।

नन्वियं शङ्का न युक्ता । 'तत्कारणम्' 'यत्साङ्ख्यैः'इति श्रुतिस्मृत्योरादावेव तत्र प्रमाणत्वेनोदाहृतत्वात् । न चोदाहृतश्रुतिस्मृतिगतयोगपदस्य सगुणोपासनपरत्वसम्भवादाशङ्का युक्तेति वाच्यम् । भिन्नविषययोरुपा-

स्तीति शङ्क्यम् । प्रश्नोपनिषदि शैव्यप्रश्ने "यः पुनरेतं त्रिमात्रेणोङ्कारेण(१) परं पुरुषमभिध्यायीत" इति निर्गुणस्यैवोपासनप्रतिपादनात् । तदनन्तरम्—"स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति उपासनाफलवाक्ये "ईक्षतिकर्मत्वेन निर्दिष्टं यन्निर्गुणं ब्रह्म, तदेवोपासनावाक्येऽपि ध्यायतिकर्म, नान्यत् । ईक्षतिध्यानयोः कार्यकारणभूतयोरेक-

---

सनसाक्षात्कारयोः कार्यकारणभावासम्भवेन निर्गुणविद्याहेतुभूतस्य योगस्य निर्गुणोपासनरूपत्वावश्यंभावात् । न च 'यत्साङ्ख्यैः' इति वचनगतयोगपदस्य उपास्तिपरत्वमेवासिद्धम्, तस्य गीताभाष्ये कर्मयोगपरत्वेन व्याख्यातत्वादिति वाच्यम् । 'यत्साङ्ख्यैः'इति वचनस्य वस्तुतो निर्गुणोपास्तिपरस्यैव सतो भगवता श्रीकृष्णेन कर्मविषये उदाहृतत्वेन तदनुरोधेन भाष्ये तथाव्याख्यानोपपत्तेः । योगपदस्य ध्याने रूढत्वेन वस्तुतः कर्मपरत्वाभावात् तद्वचनमूलभूतायां "तत्कारणम्" इतिश्रुतौ योगपदस्य ध्यानपरतया शारीरकभाष्ये व्याख्यातत्वाच्च कर्मयोगस्य मुख्ययोगद्वारा ब्रह्मप्राप्तिसाधनत्वम्, न तु साक्षादिति ज्ञापनायास्य वचनस्य कर्मविषयतया भगवतोदाहरणसम्भवाच्च । तस्मान्मानाभावशङ्का न युक्तेति चेद्, न । उदाहृतश्रुतिस्मृतिव्यतिरेकेणान्यत्र क्वापि निर्गुणोपासनं न दृष्टमित्येतावदभिप्रायेण शङ्कोपपत्तेः । अत एव सर्वासु श्रुतिषु निर्गुणोपासनं दृष्टमिति मन्दाधिकारिणामाश्वासनायाह—प्रश्नोपनिषदीत्यादिना । त्रिमात्रेणेति । द्वितीयार्थे तृतीया । तिस्रः, अकारोकारमकाराख्या मात्राः यस्योङ्कारस्य, स त्रिमात्रः । 'ॐङ्कारे निर्गुणमेव ब्रह्म तदभेदेन ध्येयम्'इत्यत्र भाष्यादिसम्मतिमाह—तदनन्तरमिति । ध्यानवाक्यानन्तरमित्यर्थः । जीवरूपः परमात्मनो घनः घटाकाशवदुपाधिपरिच्छिन्नचैतन्यात्मा जीवघनः तस्मात् परः पुरुषः निरुपाधिकः परमात्मा, तं स ध्याता पुरि हार्दाकाशे बुद्धिसाक्षित्वेन शयं वर्तमानमीक्षते साक्षात्करोतीत्यर्थः । उपासनावाक्ये—"परं पुरुषमभिध्यायीत"इति वाक्ये इत्यर्थः । कार्येति । ईक्षणवाक्यस्य ध्यानफलभूतसाक्षात्कारप्रतिपादकत्वेन ध्यानवाक्यैकवाक्यत्वाद् ध्यानेक्षणयोः कार्य-

---

१ ओमित्येतेनैवाक्षरेणेति पाठः ।

विषयत्वनियमाद्'' इत्यस्यार्थस्य ईक्षतिकर्माधिकरणे भाष्यकारादिभिरङ्गीकृतत्वात् । अन्यत्रापि तापनीयकठवल्ल्यादिश्रुत्यन्तरे निर्गुणोपास्तेः प्रपञ्चितत्वात् । सूत्रकृताऽप्युपास्यगुणपरिच्छेदार्थमारब्धे गुणोपसंहारपादे निर्गुणेऽपि "आनन्दादयः प्रधानस्य"-इतिसूत्रेण ( उ० मी० अ० ३ पा० ३ सू० ११ ) भावरूपाणां ज्ञानानन्दादिगुणानाम्, "अक्षरधियां त्ववरोधः'' इत्यादि-

कारणभावोऽवगम्यते इति भावः । नियमादिति । अन्यध्यानादन्यसाक्षात्कारादर्शनादिति भावः ।

ननु कल्पतरौ ध्यातव्यस्य सूर्यान्तःस्थत्वं 'स तेजसि सूर्ये संपन्नः' इति सूर्ये सम्पत्तिवचनानुसारेण विशेषणं दत्तम् । तथा चोङ्कारे ध्यातव्यपुरुषस्य निर्गुणब्रह्मरूपत्वं कल्पतरुकारैर्नाङ्गीकृतमिति प्रतीयते इति चेत्, न । सूर्यसम्पत्तिवचनस्यार्चिरादिमार्गे प्राप्तिपरतायाश्चतुर्थाध्याये व्यवस्थापितत्वेन सूर्यतदन्तःस्थेश्वरप्राप्तिपरत्वाभावात् । कल्पतरुकाराणामपि तदीयवचनान्तरपर्यालोचनया श्रुतेर्मार्गपरतया च सूर्यान्तःस्थत्वविशेषणदाने तात्पर्याभावस्य परिमले प्रतिपादितत्वाच्चेति भावः ।

"देवा ह वै प्रजापतिमब्रुवन् अणोरणीयांसमिममात्मानमोङ्कारं नो व्याचक्ष्व" इत्याद्या तापनीयश्रुतिः । अणोस्सूक्ष्मादपि सूक्ष्मं दुर्विज्ञेयम्, इमं प्रत्यग्रूपं परमात्मानमोङ्कारगम्यमित्यर्थः । "एतद्ध्येवाक्षरं ब्रह्म" इत्याद्या कठवल्लीश्रुतिः, "ओमित्येतदक्षरमिदं सर्वम्' इत्यादिमाण्डूक्यश्रुतिः, "ओमित्येवं ध्यायथ आत्मानम्" इति मुण्डकश्रुतिश्चादिपदार्थः ।

निर्गुणस्योपास्यत्वे सूत्रसम्मतिमाह—सूत्रकृताऽपीति । सूत्रकृता निर्गुणेऽपि गुणानामुपसंहारस्य दर्शितत्वादिति सम्बन्धः । निर्गुणे गुणोपसंहारो निर्गुणब्रह्मप्रमित्यर्थ एव, न निर्गुणब्रह्मोपास्त्यर्थ इति शङ्काव्यवच्छेदाय पादं विशिनष्टि—उपास्यगुणपरिच्छेदार्थमिति । परिच्छेदो निर्णयः । निर्गुणे गुणोपसंहारनिरूपणस्य निर्गुणोपास्तिरपि फलमिति वक्तव्यम् । अन्यथा तन्निरूपणस्य पादासङ्गतिप्रसङ्गादिति भावः । आनन्दादयः क्वचिच्छ्रुता अन्यत्राप्युपसंहर्तव्याः । प्रधानस्य वेद्यब्रह्मणस्सर्वत्रवेदान्तेष्वभेदेन ब्रह्मविद्याया एकत्वादिति सूत्रार्थः । भावरूपाणामिति—विशेषणम् "अक्षरधियाम्" इत्यधिकरणस्य "आनन्दादयः" इत्यधिकरणेन पौनरुक्त्यप-

सूत्रेण (उ० मी० अ० ३ पा० ३ सू० ३३)अभावरूपाणामस्थूलत्वादिगुणानां चोपसंहारस्य दर्शितत्वाच्च । ननु आनन्दादिगुणोपसंहारे उपास्यं निर्गुणमेव न स्यादिति चेद्, न । आनन्दादिभिरस्थूलत्वादिभिश्चोपलक्षितमखण्डैकरसं ब्रह्मास्मीति निर्गुणत्वानुपमर्देन उपासनासम्भवात् । ननु "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इतिश्रुतेः न परं ब्रह्मोपास्यमिति चेत्, "अन्यदेव तद्विदिताद्" इति श्रुतेस्तस्य वेद्यत्वस्याप्यसिद्ध्यापातात् । श्रुत्यन्तरेषु ब्रह्मवेदनप्रसिद्धेरवेद्यत्वश्रुतिर्वास्तवावेद्यत्वपरा चेद्, आथर्वणादौ तदुपासनाप्रसिद्धेस्तदनुपास्यत्वश्रु-

---

रिहारार्थमिति बोध्यम् । अक्षरे ब्रह्मणि धीर्यैरस्थूलादिशब्दवाच्यार्थभूतैरभावैर्भवति, तेऽक्षरधियः । तेषामवरोध उपसंहारः, इतरेषु वेदान्तेषु कर्तव्य एवेति सूत्रभागार्थः । स्थौल्यादिनिषेधानां निष्प्रपञ्चब्रह्मप्रमितिहेतुत्वादिति भावः । व्याघातं शङ्कते—नन्विति । आनन्दादिगुणानामुपास्यकोटौ निवेशो नाङ्गीक्रियते । येनोपास्यं ब्रह्म सगुणं स्यात् । किं तूपास्यनिर्गुणनिर्णयद्वारा निर्गुणोपास्तावुपयोगमात्रं स्वीक्रियत इति समाधत्ते—नेति । आनन्दादिगुणानामस्थूलादिगुणानां चोपसंहारो हि तद्वाचकपदानां सहोच्चारणरूपो विवक्षितः । तथा चोपाधिविशिष्टचैतन्यवाचकैरानन्दादिपदैरस्थौल्याद्यभावविशिष्टचैतन्यवाचकैरस्थूलादिशब्दैश्च सर्वेषु वाच्यार्थेष्वनुगतमखण्डैकरसं यद् ब्रह्म लक्षणया बोध्यते, तदहमस्मीत्युपासनसम्भवादित्यर्थः । उक्तं च ध्यानदीपे—

'आनन्दादिभिरस्थूलादिभिश्चात्माऽत्र लक्षितः ।
योऽखण्डैकरसस्सोऽहमस्मीत्येवमुपासते ॥' इति ।

अत्रेति । वेदान्तेष्वित्यर्थः । एवं श्रुतिसूत्राभ्यां निर्गुणस्योपास्यत्वं निरूप्य निर्गुणोपासनस्य श्रुत्यन्तरविरोधमाशङ्क्य परिहरति—ननु तदेवेत्यादिना । तदेवेति । बुद्ध्यादिसाक्षिचैतन्यमेवेत्यर्थः । उपास्यस्य ब्रह्मत्वनिषेधवद्वेद्यस्यापि ब्रह्मत्वनिषेधात् परब्रह्मवेदनमपि न सिध्येदित्याह—अन्यदेवेति । वेदनविषयादन्यद् ब्रह्मेत्युक्ते अर्थाद् ब्रह्म वेद्यं न भवतीति सिध्यतीत्यर्थः ।

तिरपि वस्तुवृत्तपराऽस्तु । एवं च "श्रवणायापि बहुभिर्यो न लभ्यः" इति श्रवणाद् येषां बुद्धिमान्द्याद्, न्यायव्युत्पादनकुशलविशिष्टगुर्वलाभाद्वा श्रवणादि न सम्भवति, तेषामध्ययनगृहीतैः वेदान्तैरापाततोऽधिगमितब्रह्मात्मभावानां तद्विचारं विनैव प्रश्नोपनिषदाद्युक्तमार्षग्रन्थेषु ब्राह्मवासिष्ठादिकल्पेषु पञ्चीकरणादिषु

---

अस्त्विति । वेद्यत्वमुपास्यत्वं वा ब्रह्मणि परमार्थतो नास्तीति निषेधश्रुतीनां तात्पर्यमिति भावः । निर्गुणोपासनेऽधिकारिणं दर्शयति—एवं चेति । निर्गुणोपासने प्रमाणसिद्धे सतीत्यर्थः । केषां चिद् मुमुक्षूणां श्रवणासम्भवे प्रमाणमाह—श्रवणायापीति । बहुभिर्मुमुक्षुभिर्यः परमात्मा श्रोतुमपि न लभ्यते, तस्य श्रुतस्यापि साक्षात्कारो दूरापास्त इत्यर्थः । बहूनां श्रवणालाभे श्रुत्यभिमतं कारणं दर्शयति—येषामिति । बुद्धीति । उक्तं च ध्यानदीपे—

'अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाऽप्यसम्भवात् ।
यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥' इति ।

तत्र सामग्र्यसम्भवं विवृणोति—न्यायेति । येषामत्यन्तबुद्धिमान्द्याच्छ्रवणादिकं न सम्भवति, येषां च कुशलमतीनामपि सामग्र्यभावाच्छ्रवणादिकं न सम्भवतीत्यर्थः । विशिष्टत्वमसम्भिन्नार्यमर्यादत्वकारुणिकत्वादिलक्षणं बोध्यम् । तेषां ब्रह्मजिज्ञासाहेतुमाह—अध्ययनेति । अधिगमितोऽवगमितो ब्रह्मात्मभावो येषां ते तथोक्ताः, तेषामित्यर्थः । तेषां तद्विचारं विनैव गुरुभ्योऽवधार्य तदनुष्ठानात् साक्षात्कारस्सम्पद्यते इति सम्बन्धः । निर्गुणब्रह्मविचारं विनैव निर्गुणब्रह्मोपासनानुष्ठानादित्यर्थः । ननु प्रश्नोपनिषदादावुपासनमात्रमुक्तम्, न तु तदनुष्ठानप्रकारोऽपीत्याशङ्क्याह—आर्षग्रन्थेष्विति ।

ननु पञ्चीकरणे वेदान्तलक्ष्ये अखण्डैकरसे प्रणवमात्रात्मककृत्स्नप्रपञ्चप्रविलापनोक्तिपूर्वकम् 'अहं ब्रह्मास्मि'इत्यभेदेनावस्थानं समाधिरित्युक्त्या, 'योऽखण्डैकरसस्सोऽहमस्मीत्येवमुपासते' इत्युदाहृतध्यानदीपवचनेन च प्रकृतनिर्गुणोपासनमहंग्रहरूपं विवक्षितम् । प्रश्नोपनिषद्गतशैब्यप्रश्ने तु ओङ्काररूपे प्रतीके निर्गुणब्रह्मदृष्टिर्विवक्षिता । तथा कठवल्ल्यामपि । तथा च कथं प्रश्नादिवाक्यं प्रकृतोपासने प्रमाणत्वेनोदाहृतमिति चेद्,

चानेकशाखाविप्रकीर्णसर्वार्थोपसंहारेण कल्पसूत्रेष्वग्निहोत्रादिव-न्निर्धारितानुष्ठानप्रकारं निर्गुणोपासनं सम्प्रदायमात्रविद्भ्यो गुरु-भ्योऽवधार्य तदनुष्ठानात् क्रमेणोपास्यभूतनिर्गुणब्रह्मसाक्षात्कारः सम्पद्यते । अविसंवादिभ्रमन्यायेन उपास्तेरपि क्वचित् फलका-

---

न । प्रकृतोपासने तापनीयमाण्डूक्यमुण्डकश्रुतीनामेव प्रमाणत्वेन विवक्षित-त्वात् । प्रश्नकठवल्लीश्रुत्युदाहरणं तु निर्गुणस्याप्युपासनमन्यत्रापि दृष्टमित्ये-तावन्मात्रेणेति न विरोध इति भावः ।

पञ्चीकरणादिषु च निर्धारितानुष्ठानप्रकारमिति सम्बन्धः । तत्र दृष्टान्तमाह—अनेकशाखेति । अनेकासु शाखासु विप्रकीर्णत-या विशकलिततया स्थितानां पदार्थानामुपसंहारेण यथा अग्निहोत्रादि-कर्म निर्धारितानुष्ठानप्रकारं भवति, तथेत्यर्थः । उपासनानुष्ठानप्रकार-स्सम्प्रदायः, तन्मात्रविद्भ्योऽपि गुरुभ्यस्सकाशाद् निश्चित्येत्यर्थः । उक्तं च भगवता श्रीकृष्णेन निर्गुणप्रकरणे—"श्रुत्वाऽन्येभ्य उपासते" इति । क्रमेणेति । उपासनापरिपाकक्रमेणेत्यर्थः । ननु निर्गुणोपासनस्य कथं प्रमालक्षणसाक्षात्कारपर्यवसानमित्यत आह—अविसंवादीति ।

अयमर्थः—क्वचिद् गृहविशेषे स्थितस्य श्रीकृष्णरूपविम्वस्य प्रतिविम्वं गृहाद् वहिः पश्यतो दूरस्थितस्य पुरुषस्य प्रतिविम्वे "श्री-कृष्णोऽयम्"इति भ्रमो जायते, तेन भ्रमेण प्रतिविम्वाध्यासोपाधिसमीपं गतस्य पुरुषस्य सत्यश्रीकृष्णगोचरप्रमा जायते इति लोकसिद्धम् । तत्र प्रतिविम्वे विम्वभूतश्रीकृष्णभ्रमोऽविसंवादिभ्रमः । विसंवादः फलाभावः, तद्रहितोऽविसंवादिभ्रमः । फलवद्भ्रम इति यावत् । यथा तेन भ्रमेण प्रवृत्तस्य श्रीकृष्णप्राप्तिलक्षणफलकाले श्रीकृष्णप्रमा जायते, तथा निर्गुणो-पासने प्रवृत्तस्यापि ब्रह्मप्राप्तिलक्षणफलकाले निर्गुणप्रमा जायते इति ।

ननु संवादिभ्रमदृष्टान्तेन निर्गुणोपास्तेः प्रमापर्यवसानमुक्तमनु-पपन्नम् । दृष्टान्तवैषम्यात् । तत्र हि समीपोपसर्पणानन्तरं सत्य-श्रीकृष्णस्य चक्षुस्सन्निकर्षे सति श्रीकृष्णप्रमा जायते, न तु संवादि-भ्रममात्रात् । प्रकृते च निर्गुणोपासनस्य प्रमाजनने सामर्थ्याभावात् सामग्र्यन्तराभावाच्च कथं प्रमापर्यवसानमित्याशङ्क्य निर्गुणोपासनस्यैव स्वसमानविषयकप्रमाजननसामर्थ्यसम्भावनाय तस्य यथार्थत्वं सदृष्टान्त-

ले प्रमापर्यवसानसम्भवात् । पाणौ पञ्च वराटकाः पिधाय केन-
चित् "करे कति वराटकाः ?" इति पृष्टे "पञ्च वराटकाः" इति
तदुत्तरवक्तुर्वाक्यप्रयोगमूलभूतसङ्ख्याविशेषज्ञानस्य मूलप्रमाण-
शून्यस्याहार्यारोपरूपस्यापि यथार्थत्ववन्निर्गुणब्रह्मोपासनस्यार्थत-
थात्वविवेचकनिर्विचिकित्समूलप्रमाणनिरपेक्षस्य दहराद्युपासनव-
दुपासनाशास्त्रमात्रमवलम्ब्य क्रियमाणस्यापि वस्तुतो यथार्थ-
त्वेन दहराद्युपासनेनेव निर्गुणोपासनेन जन्यस्य स्वविषय-
साक्षात्कारस्य श्रवणादिप्रणालीजन्यसाक्षात्कारवदेव तत्त्वार्थ-
विषयत्वावश्यंभावाच्च ।

---

माह—पाणाविति । पिधायेति । तदुत्तरवक्तुरविदितमिति शेषः ।
तदुत्तरेति । दैवयोगात् 'पञ्चैव वराटकास्तव पाणौ सन्ति'इत्युत्तरव-
क्तुरित्यर्थः । निर्गुणोपासनस्यापि वस्तुतो यथार्थत्वेनेति सम्बन्धः ।
"अखण्डैकरसं ब्रह्माहमस्मि"इति प्रत्ययसन्ततिरूपोपास्तेर्विषयबाधाभावाद्यथा-
र्थत्वमिति भावः । ननु प्रकृतोपासनस्य निर्विचिकित्सतत्त्वज्ञानपूर्व-
कत्वादेव श्रवणमननोत्तरकालीननिदिध्यासनस्येव यथार्थत्वासम्भवात् कि-
मिति दैवयोगाद्यथार्थत्वं समर्थ्यते । तत्राह—अर्थतथात्वेति । अर्थ-
स्य ब्रह्मणस्तथात्वं प्रत्यग्रूपत्वनिष्प्रपञ्चत्वादि, तस्य विवेचकं निर्णा-
यकं यद् निर्विचिकित्समन्यपरत्वादिशङ्काशून्यं मूलप्रमाणं श्रुतिरूपम्,
तन्निरपेक्षस्येत्यर्थः । निदिध्यासनस्येव प्रकृतनिर्गुणोपासनस्य विचार-
पूर्वकत्वाभावान्न निर्विचिकित्सतत्त्वनिर्णयपूर्वकत्वप्रयुक्तं यथार्थत्वमिति
भावः । ननु विचारपूर्वकं प्रत्यगभिन्नब्रह्मनिर्णयाभावे कथम् "अहं
ब्रह्मास्मि"इति प्रत्ययसन्ततिरूपोपास्तिरनुष्ठीयते । तत्राह—दहरा-
दीति । यथा सगुणस्येश्वरस्य विचारपूर्वकं जीवाभिन्नत्वनिर्ण-
याभावेऽपि 'स्वस्य सगुणेश्वराभेदचिन्तनं कर्तव्यम्'इत्येवंरूपं सगु-
णोपासनाविधिशास्त्रमवलम्ब्य सगुणोपासनं क्रियते, तथा 'निर्गुणो-
पासनं कर्तव्यम्'इत्येवमात्मकं शास्त्रमात्रमवलम्ब्य निर्गुणोपास्तिरनुष्ठीयत
इत्यर्थः । निर्गुणोपासनस्य साक्षात्कारहेतुत्वे दृष्टान्तमाह—दहराद्यु-
पासनेनेवेति । अवश्यम्भावादिति । समानविषयकध्यानसाम-

इयांस्तु विशेषः—प्रतिबन्धरहितस्य पुंसः श्रवणादिप्रणाड्या ब्रह्मसाक्षात्कारो झटिति सिध्यतीति साङ्ख्यमार्गो मुख्यः कल्पः, उपास्त्या तु विलम्बेनेति योगमार्गोऽनुकल्प इति ॥ ८ ॥

(वे०सू०मं०) ननु किं करणं ब्रह्मसाक्षात्कारे

(९)नन्वस्मिन् पक्षद्वयेऽपि ब्रह्मसाक्षात्कारे किं करणम् ? ।

(वे०सू०मं०)अत्र केचन ॥

प्रत्ययावृत्तिमाचख्युः साङ्ख्ये योगे च सम्भवात् ॥१९॥

केचिदाहुः—प्रत्ययाभ्यासरूपं प्रसङ्ख्यानमेव । योगमार्गे आदित आरभ्योपासनरूपस्य साङ्ख्यमार्गे मननानन्तरनिदिध्यासनरूपस्य च तस्य सत्त्वात् । न च तस्य ब्रह्मसाक्षात्कारकारणत्वे मानाभावः । "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रवणात् । कामातुरस्य व्यवहितकामिनीसाक्षात्कारे प्रसङ्ख्यानस्य

---

ष्टर्यादिविषयाबाधाचेत्यर्थः । साङ्ख्ययोगमार्गयोस्तुल्यकल्पत्वभ्रममपनयति—इयांस्त्विति । बुद्धिमान्द्यादिप्रतिबन्धरहितस्य विशिष्टगुर्वादिलाभे सति साङ्ख्यमार्ग एवानुष्ठेयः । तस्य त्वरया सिद्धिहेतुत्वात् । साङ्ख्यालाभे तु योगोऽनुष्ठेय इति अनुकल्पस्य इत्यर्थः ॥

नन्वस्मिन्निति । साङ्ख्ययोगमार्गद्वयेऽपीत्यर्थः ।

ननु योगमार्गे निर्गुणोपासनस्य सगुणोपासनदृष्टान्तेन साक्षात्कारकरणत्वस्य अनुपदमुक्तत्वात् पक्षद्वयसाधारण्येन प्रश्नानुपपत्तिरिति चेद्, नैष दोषः । उपासनस्य साक्षात्कारकरणत्वे प्रमाणाभिप्रायेण प्रश्नोपपत्तेः । अत एव तत्र प्रमाणं वक्ष्यति—न चेत्यादिना । अथवा पूर्वत्र सगुणोपासनदृष्टान्तेन निर्गुणोपासनस्य हेतुत्वमात्रमुक्तम्, न तु करणत्वम् । तथा च योगमार्गेऽपि किम् 'उपासनमेव करणम्, किं वाऽन्यद्' इति प्रश्नाभिप्रायस्सङ्गच्छते इति भावः ।

मार्गद्वयेऽपि साक्षात्कारोदयकाले प्रसङ्ख्यानस्यानुवृत्तिमाह—योगमार्ग इत्यादिना । निष्कलं निर्विशेषं परमात्मानं ध्यायमानस्ततो ध्यानात्तं पश्यतीत्यर्थः । कामातुरस्येति । कामातुरस्यासन्निकृष्टकामिनीसा-

कारणत्वक्लृप्तेश्च। "आ प्रायणात् तत्रापि हि दृष्टम्" (उ०मी० अ० ४ पा० १ सू० १२) इत्यधिकरणे, "विकल्पोऽविशिष्टफलत्वाद्" (उ०मी०अ० ३ पा० ३ सू० ५९) इत्यधिकरणे च दहराद्यहंग्रहोपासकानां प्रसङ्ख्यानादुपास्यसगुणब्रह्मसाक्षात्काराङ्गीकाराच्च। ननु च प्रसङ्ख्यानस्य प्रमाणपरिगणनेष्वपरिगणनात् तज्जन्यो ब्रह्मसाक्षात्कारः प्रमा न स्यात्। न च काकतालीयसंवादिवराटकसङ्ख्याविशेषाहार्यज्ञानवद् अर्थाबाधेन प्रमात्वोपपत्तिः। प्रमाणामूलकस्य प्रमात्वायोगात्। आहार्यवृत्तेश्च उपासनावृत्तिवज् ज्ञानभिन्नमानसक्रियारूपतया इच्छादिवद् अबाधितार्थविषयत्वेऽपि प्रमाणत्वानभ्युपगमात्। मैवम्। क्लृप्तप्रमाकरणामूलकत्वेऽपीश्वरमायावृत्तिवत् प्रमात्वोपपत्तेः। विषयाबाधतौ-

---

क्षात्कारे इत्यर्थः। तत्र सन्निकर्षाभावेन चक्षुषः करणत्वासम्भवान्मनसो बहिरस्वातन्त्र्याच्च कामिनीगोचरप्रसङ्ख्यानमेव करणमिति भावः। सगुणोपासनं प्रायणपर्यन्तमावर्तनीयम्। कुतः, तत्रापि मरणकालेऽपि योगिनो ब्रह्मचिन्तनस्य श्रुतिस्मृतिसिद्धत्वात्। सदा प्रत्ययाभ्यासं विना मरणकाले तदसम्भवादिति सूत्रार्थः। अहंग्रहोपासनानां विकल्प उपास्यदेवतासाक्षात्कारलक्षणस्य फलस्याविशिष्टत्वादेकार्थानां विकल्पस्य प्रसिद्धत्वादिति सूत्रार्थः। ब्रह्मसाक्षात्कारस्य प्रमाकरणजन्यत्वाभावेऽपि विषयाबाधात् प्रमात्वमाशङ्क्य निषेधति—न च काकतालीयेति। यादृच्छिकेत्यर्थः। क्लृप्तज्ञानकरणाजन्यस्य ज्ञानत्वमेव नास्ति। प्रमात्वं तु दूरापास्तमित्याशयेनाह—प्रमाणामूलकस्येति। अविसंवादिवराटकसङ्ख्याविशेषगोचराहार्यवृत्तेरपि ज्ञानत्वमसिद्धमित्याह—आहार्यवृत्तेश्चेति। अबाधितार्थज्ञानत्वं हि प्रमात्वम्, न त्वबाधितार्थकत्वमात्रम्, अतिप्रसङ्गादिति मत्वाऽऽह—इच्छादिवदिति। "ननु च प्रसङ्ख्यानस्य" इत्यादिना प्राप्तं चोद्यं परिहरति—मैवमिति। मायावृत्तिवदिति। न च मायावृत्तेरपि माऽस्तु ज्ञानत्वमिति वाच्यम्। तथा सतीश्वरीयमायावृत्तेः "यस्सर्वज्ञः" इत्यादिश्रुतिषु ज्ञात्वत्वर्थत्वाभावप्रसङ्गादिति भावः। तौल्यादिति। न चेच्छादाव-

त्वात् । मार्गद्वयेऽपि प्रसङ्ख्यानस्य विचारितादविचारिताद्वा वेदान्ताद्ब्रह्मात्मैक्यावगतिमूलकतया प्रसङ्ख्यानजन्यस्य ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वाच्च । उक्तं च कल्पतरुकारैः—

'वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥
न च प्रामाण्यपरतस्त्वापात्तिस्तु प्रसज्यते ।
अपवादनिरासाय मूलशुद्ध्यनुरोधनाद् ॥ इति ।

(वे॰सू॰मं) अन्ये तु मन एवाहुरेनां तत्सहकारिणीम् ॥

अन्ये तु "एषोऽणुरात्मा चेतसा वेदितव्यः", "दृश्यते

---

तिप्रसङ्ग इति वाच्यम् । तद्भिन्नत्वेन विशेषणोपपत्तेरिति भावः । प्रसङ्ख्यानजन्यसाक्षात्कारस्य प्रमाणमूलकत्वात् प्रमाणत्वमिति समाधानान्तरमाह—मार्गद्वयेऽपीति । अविचारितादिति । योगमार्गाभिप्रायम् । वेदान्ताद् या ब्रह्मावगतिः, तन्मूलकतयेत्यर्थः । न च विचारितादविचारिताद्वा यदि ब्रह्मावगतिर्जाता, तर्हि किमर्थं प्रसङ्ख्यानमिति वाच्यम् । प्रसङ्ख्यानात् पूर्वमविद्यानिवर्तकाप्रतिबन्धब्रह्मावगतेरलाभात्तदर्थं तदावश्यकमिति भावः । प्रमाणाजन्यस्यापि प्रमाणप्रयोज्यत्वमात्रेण प्रमात्वे सम्मतिमाह—उक्तं हीति । ज्ञानभावना ज्ञानाभ्यासरूपं प्रसङ्ख्यानम्, तज्जन्यमपरोक्षज्ञानमित्यर्थः । मूलप्रमाणं वेदान्तवाक्यम्, तज्जन्यप्रमा वा, तस्य दार्ढ्यं नामाविप्रतिपन्नप्रामाण्यकत्वमिति बोध्यम् । प्रसङ्ख्यानजन्यसाक्षात्कारनिष्ठप्रामाण्यज्ञप्तौ मूलप्रमाणज्ञप्त्यपेक्षायामपसिद्धान्तापात इति शङ्के—न चेति । प्रसङ्ख्यानजसाक्षात्कारनिष्ठमपि प्रामाण्यं नियमेन स्वाश्रयग्राहकसाक्षिभास्यमेवेति न तत्प्रामाण्यज्ञप्त्यर्थं मूलप्रमाणानुसरणम्, किं तु प्रसङ्ख्यानजन्यव्यवहितकामिनीसाक्षात्कारस्याप्रमात्वदर्शनात् प्रसङ्ख्यानजन्यब्रह्मसाक्षात्कारेऽपि कदाचिदप्रामाण्यशङ्का सम्भाव्यते । ततस्तन्निरासाय मूलप्रमाणानुसरणमिति नापसिद्धान्त इति भावः । अपवादेति । अप्रामाण्यशङ्का अपवादः ॥

प्रसङ्ख्यानमात्रं न साक्षात्कारे करणम्, किं तु तत्सहकृतं मनस्तत्र करणमिति मतं दर्शयति—अन्ये त्विति । अणुर्दुर्विज्ञेयः । अणुत्वं प्र-

त्वग्र्यया बुद्ध्या'' इत्यादिश्रुतेर्मन एव ब्रह्मसाक्षात्कारे करणम्। तस्य सोपाधिकात्मनि अहंवृत्तिरूपप्रमाकरणत्वक्लृप्तेः। 'स्वप्नप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्य' इत्यादिपञ्चपादिकाविवरणग्रन्थैरपि तथा प्रतिपादनात्। ''अहमेवेदं सर्वं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इतिश्रुत्युक्ते स्वप्ने ब्रह्मसाक्षात्कारे एव मनसः करणत्वसम्प्रतिपत्तेश्च। तदा करणान्तराभावात्। प्रसङ्ख्यानं तु मनस्सहकारिमात्रेनापि उपयुज्यते। 'वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयति'- इति भामतीवचनात्। ''ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं प-

---

सङ्ख्यानसंस्कृतत्वम्। ''मनसैवानुद्रष्टव्यम्''इत्यादिश्रुतिरादिपदार्थः। जीवसाक्षात्कारे मनसः करणत्वे सम्मतिमाह—स्वप्नेति। प्रातिभासिकस्वप्नप्रपञ्चापेक्षया विपरीतो व्यावहारिकः प्रमात्रादिस्तज्ज्ञानसाधनस्येत्यर्थः। आदिपदं प्रमेयादिसङ्ग्रहार्थम्। तथेति। प्रमातृशब्दितसोपाधिकात्मसाक्षात्कारे मनसः करणतयेति तथाशब्दार्थः। निरुपाधिकात्मसाक्षात्कारेऽपि मनसः करणत्वं क्लृप्तमित्याह—अहमेवेति। 'इदं सद्रूपेण सर्ववस्तुष्वनुभूयमानं सर्वात्मकं ब्रह्मैवाहमस्मि, ततस्सर्वोऽस्मि'इति स्वप्ने ब्रह्मविन्मन्यते इत्यर्थः। ननु स्वप्ने ब्रह्मविदो महावाक्यानुसन्धानसम्भवाद्वाक्यमेव करणं किं न स्यादित्यत आह—तदेति। स्वप्ने महावाक्यानुसन्धानस्यानियतत्वाद्वाक्यस्यापरोक्षधीहेतुत्वानुगमाच्चेति भावः। सम्मतिमाह—वाक्यार्थेति। महावाक्यार्थेत्यर्थः। स्थूलसूक्ष्मकारणोपाधीनां 'नेति नेति' इत्यादिवाक्यैर्निषेधद्वारा शोधितो यस्त्वम्पदार्थः स्वप्रकाशचैतन्यात्मकः, तस्य पूर्णतामाविर्भावयति। आविर्भावश्च वृत्तिसाक्षात्कार इत्यर्थः। यत्तु 'निष्कलं ध्यायमानस्ततो ध्यानात्तं पश्यते' इति योजनामभिप्रेत्य ध्यानस्य साक्षात्कारकरणत्वं श्रुतिसिद्धमित्युक्तम्, तद् दूषयति—ज्ञानप्रसादेनेति। करणव्युत्पत्त्या ज्ञानपदं चित्तपरम्। ज्ञानस्य प्रसाद ऐकाग्र्यम्। तथा च 'ध्यायमानो ध्यानाल्लब्धेन ज्ञानप्रसादेन पश्यते' इति योजना विवक्षितेति भावः। एवं योजनायां विनिगमकं पूर्वोदाहृतानि मनसः करणत्व-

भ्यते निष्कलं ध्यायमानः" इति श्रुतावपि ज्ञानप्रसादशब्दितचित्तैकाग्र्यहेतुतयैव ध्यानोपादानात् । न तु प्रसङ्ख्यानं स्वयं करणम् । तस्य क्वचिदपि ज्ञानकरणत्वाक्लृप्तेः । कामातुरकामिनीसाक्षात्कारादावपि प्रसङ्ख्यानसहकृतस्य मनस एव करणत्वोपपत्त्या ऽक्लृप्तज्ञानकरणान्तरकल्पनायोगादित्याहुः ॥

(वे०सू०मं०) महावाक्यं परे प्राहुर्मनसः प्रतिषेधतः ॥ २० ॥

अपरे तु "तद्धास्य विजज्ञौ" "तमसः पारं दर्शयति आचार्यवान् पुरुषो वेद तस्य तावदेव चिरम्" इत्यादिश्रुतिषु आचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणाद् "वेदान्तविज्ञानसुनिश्चितार्थाः" इति ज्ञानान्तरनैराकाङ्क्ष्यश्रवणात् "तं त्वौपनिषदं पुरुषम्"इति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्च औपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणम्, न मनः । "यन्मनसा न मनुते" इति तस्य ब्रह्मसाक्षात्कारकरणत्वनिषेधा-

---

बोधकवचनान्येवेत्यभिप्रेत्य प्रसङ्ख्यानमात्रस्य करणत्वं दूषयति—न त्विति ॥

महावाक्यमेव तत्र करणमिति मतमाह—अपरे त्विति । अस्य पितुरुपदेशात् तद् ब्रह्म विजज्ञौ साक्षात्कृतवान् ह किलेत्यर्थः । पारमधिष्ठानभूतं ब्रह्म तस्य विदुषस्तावानेव विलम्बो विदेहकैवल्यं प्रति यावत् प्रारब्धाद् न विमोक्ष्यते इत्यर्थः । वेदान्तेति । अत्र वेदान्तजन्यज्ञानादेव ब्रह्मात्मैक्यलक्षणस्यार्थस्य सुनिश्चितत्वोक्त्या वाक्यार्थावगमानन्तरं प्रसङ्ख्यानानुष्ठानं नापेक्षितमिति प्रतीयते । इदं च तन्नैरपेक्ष्यं वाक्यादेवापरोक्षज्ञानोत्पत्तिपक्षे सङ्गच्छते । अतो वेदान्तविज्ञानश्रुत्या वाक्यमेवापरोक्षज्ञाने करणमिति निश्चीयते इति भावः । महावाक्यमेवेति । साङ्ख्यमार्गानुष्ठानेन योगमार्गानुष्ठानेन वा दृष्टादृष्टलक्षणसकलप्रतिबन्धक्षये सति प्रतिबन्धरहितं सद् वाक्यमेव साक्षात्कारं जनयतीति वाक्यस्य करणत्वपक्षे न साङ्ख्ययोगमार्गयोर्वैयर्थ्यशङ्केति मन्तव्यम् । 'लोको मनसा यच्चैतन्यं न मनुते तदेव त्वं ब्रह्म विद्धि'इति योजना । "न मनुते"इति वाक्यमशुद्धमनस एव ब्रह्मज्ञानकरणत्वं

त्। न चापक्वमनोविषयमिदम्। "येनाहुर्मनो मतम्" इतिवाक्यशेषे मनोमात्रग्रहणात्। न चैवं "यद्वाचाऽनभ्युदितम्" इति शब्दस्यापि तत्करणत्वं निषिध्यते इति शङ्क्यम्। मनःकरणत्ववादिनामपि शब्दस्य निर्विशेषपरोक्षज्ञानकरणत्वस्याभ्युपगतत्वेन तस्य "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इतिश्रुत्यनुरोधेन शब्दार्थप्राप्तिरूपशक्तिमुखेन शब्दस्य तत्करणत्वनिषेधे तात्पर्य-

---

निषेधतीति नचेत्यत्र हेतुमाह—येनाहुरिति। येन चैतन्येन मतं प्रकाशितं मन इति वाक्यशेषे 'अपक्वमन एव चैतन्यभास्यम्' इति वक्तुमशक्यतया तत्र मनोमात्रग्रहणमावश्यकम्। तदैकरूप्याय "न मनुते" इतिपूर्ववाक्येऽपि मनोमात्रं ग्राह्यमित्यर्थः। न चैवमिति। मनोमात्रस्य ब्रह्मज्ञानकरणत्वनिषेधोपगमे इत्यर्थः। अभ्युदितमिति। अप्रकाशितमित्यर्थः। न च 'वाचा' इत्यस्य वेदान्तातिरिक्तशब्दपरत्वं स्वीक्रियते इति वाच्यम्। अत्रापि "येन वागभ्युद्यते" इतिवाक्यशेषे शब्दमात्रस्य चैतन्यप्रकाश्यत्वप्रतिपादनेन तदैकरूप्याय पूर्ववाक्येऽपि 'वाचा' इत्यस्य शब्दमात्रपरत्वादित्याशयवानाह—शब्दस्यापीति। मनोमात्रस्येव शब्दमात्रस्यापीत्यर्थः। सत्यं शब्दमात्रस्य ब्रह्मज्ञानकरणत्वं निषेधति, तथाऽपि शब्दस्य शक्त्या ब्रह्मज्ञानकरणत्वनिषेधपरं तद् वचनं न तु लक्षणयाऽपि तत्करणनिषेधपरम्, औपनिषदत्वश्रुतेर्निरालम्बनत्वप्रसङ्गादिति समाधानमभिप्रेत्य विपक्षे परेषामपि बाधकं सूचयति—मनःकरणत्ववादिनामपीति। वेदान्तानां लक्षणयाऽपि ब्रह्मबोधकत्वानभ्युपगमे ब्रह्मण एवासिद्ध्यापत्त्या मनःकरणत्ववादिभिरपि तेषां ब्रह्मज्ञानकरणत्वस्याभ्युपगन्तव्यत्वादित्यर्थः। परं तु वाक्यजन्यं परोक्षं भवतां मते, अस्माकं मते तु तदपरोक्षमिति विशेष इत्याशयवानाह—परोक्षेति। 'वेदान्तानां शक्त्या ब्रह्मबोधकत्वनिषेधपरं "यद्वाचाऽनभ्युदितम्" इतिवचनम्' इति व्यवस्थायां श्रुत्यन्तरमनुकूलयति—तस्येति। "यद्वाचाऽनभ्युदितम्" इतिनिषेधवचनस्येत्यर्थः। अप्राप्येति। श्रुत्या ब्रह्मणि विषये शब्दानां प्राप्तिर्निषिध्यते। सा च प्राप्तिः शक्तिरेव। तस्याश्शब्दानामौत्सर्गिकत्वादिति भावः। वक्तव्यतयेति। मनःकरणत्ववादिभिर-

स्य वक्तव्यतया शक्यसम्बन्धरूपलक्षणामुखेन तस्य तत्करणत्वाविरोधात् । न च "मनसैवानुद्रष्टव्यम्" इतिश्रुतिसिद्धं मनसोऽपि तत्करणत्वं न पराकर्तुं शक्यमिति वाच्यम् । शाब्दसाक्षात्कारजननेऽपि तदैकाग्र्यस्यापेक्षितत्वेन हेतुत्वमात्रेण तृतीयोपपत्तेः । "मनसा ह्येष पश्यति मनसा शृणोति" इत्यादौ तथा दर्शनात् । गीताविवरणे भाष्यकारीयमनःकरणत्ववचनस्य मतान्तराभिप्रायेण प्रवृत्तेरित्याहुः ॥ ९ ॥

(१०)ननु तथाऽपि शब्दस्य परोक्षज्ञानजनकत्वस्वभावस्यापरोक्षज्ञानजनकत्वं न सङ्गच्छते इति चेत् ।

(वे०सू०मं०) मानान्तरस्याप्रसरात्परोक्षेत्थ भ्रमाक्षयात् ॥
सहकारिविधानाच्च शब्दादप्यपरोक्षधीः ॥ २१ ॥

अत्र केचित्—स्वतोऽसमर्थोऽपि शब्दः शास्त्रश्रवणमनन-

---

पीति शेषः । तस्येति । शब्दस्येत्यर्थः । तदिति । ब्रह्मसाक्षात्कारेत्यर्थः । ब्रह्मगोचरवृत्तिं प्रति करणत्वं न तृतीयाश्रुत्यर्थः । पूर्वोदाहृतश्रुतिविरोधात् । किं त्वेकाग्रस्य मनसस्तां प्रत्युपादानतया हेतुत्वमात्रं तदर्थ इत्याह—शाब्दसाक्षात्कारजननेऽपीति । तथेति । चाक्षुषज्ञानादौ मनसः करणत्वाभावेन हेतुत्वमात्रेणापि तृतीयादर्शनादित्यर्थः । "शमदमादिसंस्कृतं मन एवात्मदर्शने करणम्"इति गीताभाष्यवचनविरोधं परिहरति—गीतेति । मतान्तरेति । वृत्तिकारमतेत्यर्थः । न तु स्वमताभिप्रायेण । उक्तप्रमाणविरोधादिति भावः ॥

ननु तथाऽपीति । शब्दस्य ब्रह्मसाक्षात्कारकरणत्वपक्षे श्रुतिभाष्यविरोधाभावेऽपि शब्दप्रमाणस्वभावविरोधाद् न महावाक्यं ब्रह्मसाक्षात्कारे करणमित्यर्थः । शब्दस्वभावमनुरुध्यैव तस्यापरोक्षज्ञानकरणत्वं साधयति—अत्र केचिदिति । प्रचयस्समूहः । प्रचयलब्धं यद् ब्रह्मण्यैकाग्र्यम्, तद्वच्चित्तमेव दर्पणम्, तदनुगृहीत इत्यर्थः । यथा चक्षुः स्वतः प्रतिबिम्बानुभवजननासमर्थमपि दर्पणानुगृहीतं सत् तदनुभवं जनयति, त-

पूर्वकप्रत्यगभ्यासजनितसंस्कारप्रचयलब्धब्रह्मैकाग्र्यचित्तदर्पणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरणक इव होमोऽपूर्वमिति कल्प्यते। "तरति शोकमात्मविद्"इति शास्त्रप्रामाण्याद्। अपरोक्षस्य कर्तृत्वाध्यासस्यापरोक्षाधिष्ठानज्ञानं विना निवृत्त्ययोगाद् औपनिषदे ब्रह्मणि मानान्तराप्रवृत्तेः शब्दादप्यपरोक्षज्ञानानुत्पत्तौ अनिर्मोक्षप्रसङ्गादित्याहुः॥

द्वदिति सूचयति—चित्तदर्पणेति। शास्त्रीयेति। यथा आधानादिजनितसंस्काररहिताग्न्यधिकरणको होमस्तावदपूर्वं न जनयति, अग्न्यधिकरणकहोममात्रस्यापूर्वजननस्वभावाभावात्। शास्त्रीयसंस्कारविशिष्टाग्न्याधिकरणकहोमस्त्वपूर्वं जनयति, तद्वदित्यर्थः। ननु दृष्टान्ते शास्त्रबलात्तथा स्वीक्रियते, प्रकृते तथा शास्त्रं नोपलभ्यते इत्यत आह—तरतीति। नन्वनया श्रुत्या चिदात्मन्यध्यस्तस्य शोकोपलक्षितकर्तृत्वाद्यध्यासस्यात्मवेदनान्निवृत्तिरुच्यते, न तु शब्दस्यापरोक्षज्ञानकरणत्वमित्यत आह—अपरोक्षस्येति। यथा दृष्टान्ते होमाधिकरणस्याग्नेराधानादिसंस्कृतत्वश्रवणान्यथाऽनुपपत्त्या 'शास्त्रीयाधानसंस्कारसहकृताग्न्यधिकरणको होमोऽपूर्वं जनयति'इति कल्प्यते, तथा आत्मज्ञानस्यापरोक्षाध्यासनिवर्तकत्वश्रवणान्यथाऽनुपपत्त्या आत्मज्ञानजनकवेदान्तानामेवापरोक्षज्ञानकरणत्वं कल्प्यते इत्यर्थः। अयोगादिति। सत्यपि श्रवणजनितपरोक्षज्ञाने कर्तृत्वाद्यध्यासनिवृत्त्यदर्शनात्, परोक्षज्ञानमात्रेणाध्यासनिवृत्तौ मननादिविधिवैयर्थ्यप्रसङ्गाच्च, अपरोक्षाध्यासरूपदिग्भ्रमादिषु दिग्याथात्म्यादिसाक्षात्कारं विना निवृत्त्यदर्शनाच्चेति भावः। ननु कर्तृत्वाद्यध्यासनिवर्तकमधिष्ठानात्मतत्त्वसाक्षात्काररूपं ज्ञानं मनसैव सम्भवति, किं शब्दस्य तत्करणत्वकल्पनयेति, तत्राह—औपनिषदे इति। अन्तरिन्द्रियस्य मनसः प्रत्यक्षप्रमाणत्वेन ब्रह्मणस्तद्गम्यत्वे उपनिषदेकगम्यत्वप्रतिपादकश्रुतिबाधप्रसङ्ग इति भावः। नन्वौपनिषदत्वश्रुतिविरोधेन ब्रह्मणि मानान्तराप्रवृत्तौ शब्दस्वभावविरोधेन शब्दस्यापि ब्रह्मसाक्षात्कारजनने प्रवृत्तिर्न सम्भवति। तथा च ब्रह्मसाक्षात्कारकरणस्यैवालाभाद् माऽस्तु तत्साक्षात्कार इत्यत आह—शब्दादपीति। तथा च मोक्षशास्त्रप्रामाण्याय शब्दस्यैव साक्षात्कारकरणत्वकल्पनीयमिति भावः॥

(वे०सू०मं०) भावनाऽऽवृत्तिसचिवाद्विधुरस्येव मानसात् ॥
कामिन्या इव शब्दात्तामितरे सम्प्रचक्षते ॥ २२ ॥

अन्ये तु भावनाप्रचयसाहित्ये सति बहिरसमर्थस्यापि मनसो नष्टवनितासाक्षात्कारजनकत्वदर्शनाद् निदिध्यासनसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वं युक्तमिति दृष्टानुरोधेन समर्थयन्ते ॥

(वे०सू०मं०)विज्ञातृचिदभिन्नस्य विषयस्यापरोक्षतः ॥
परोक्ष्यासम्भवादन्ये प्राहुः शब्दापरोक्षताम् ॥२३॥

अपरे तु अपरोक्षार्थविषयत्वं ज्ञानस्यापरोक्षत्वं नाम । अन्यानिरुक्तेः । अर्थापरोक्षत्वं तु नापरोक्षज्ञानविषयत्वम्, येनान्योन्याश्रयो भवेत् । किं तु तत्तत्पुरुषीयचैतन्याभेदः । अन्तः-

---

शास्त्रप्रामाण्यमनुपजीव्यापि शब्दस्यापरोक्षज्ञानकरणत्वं साधयति—अन्ये त्विति ।

इदानीं शब्दस्य परोक्षज्ञानजननस्वाभाव्यमेवासिद्धम् । अतो नित्यापरोक्षे ब्रह्मणि वेदान्तानां साक्षात्कारकरणत्वं निरपवादमिति मतान्तरमाह—अपरे त्विति । ननु इन्द्रियजन्यज्ञानत्वादिकमेव ज्ञानस्यापरोक्षत्वं ब्रह्मगोचरशाब्दज्ञानस्य तु तदभावान्नापरोक्ष्यमित्यत आह—अन्यानिरुक्तेरिति । इन्द्रियजन्यज्ञानत्वादेश्च प्रथमपरिच्छेदावसाने निरस्तत्वादिति भावः । नन्वर्थस्यापरोक्षत्वमपरोक्षज्ञानविषयत्वम् । अन्यस्यानिर्वचनाद । तथाचान्योन्याश्रयः । अर्थस्यापरोक्षत्वज्ञप्तौ ज्ञानस्यापरोक्षत्वज्ञप्तिः, ज्ञानस्यापरोक्षत्वज्ञप्तौ चार्थस्यापरोक्षत्वज्ञप्तिरित्याशङ्क्य अन्यानिर्वचनमसिद्धमित्यभिप्रेत्याह—अर्थापरोक्षत्वं त्विति । तत्तदिति । तत्तत्प्रमातृचैतन्याभिन्नत्वं तस्य तस्य विषयस्य तं तं प्रमातारं प्रति अपरोक्षत्वम्, तत्तत्प्रमातृचैतन्याभिन्नार्थविषयकं ज्ञानं तत्तत्प्रमातुस्तत्तत्प्रमातृचैतन्याभिन्ने विषये अपरोक्षज्ञानमित्यर्थः । न चार्थापरोक्ष्यादावननुगम इति वाच्यम् । ज्ञानगतस्यानुगतापरोक्षत्वस्य जातिरूपस्योपाधिरूपस्य वा प्राग् निरस्तत्वेन तदभावादेवार्थापरोक्ष्यस्याप्यनुगतस्यासम्भवेन तस्यादोषत्वादिति भावः । ननु प्रमातृचैतन्याभिन्नत्वरूपस्यार्थापरोक्ष्यस्य जडरूपापरोक्षार्थे अव्याप्तिः, चैतन्यजडयोरैक्यस्य बाधितत्वादित्यत आह—अन्तःकरणेति ।

करणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वाद्। बाह्यचैतन्ये कल्पितानां घटादीनां बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न काप्यव्याप्तिः। न चान्तःकरणतद्धर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वाविशेषाद् आपरोक्ष्यापत्तिः। तेषामनुद्भूतत्वाद् उद्भूतस्यैव जडस्य चैतन्याभेद आपरोक्ष्यमित्यभ्यु-

तदभेदसत्त्वादिति। साक्षिशब्दितप्रमातृचैतन्याभेदसत्त्वादित्यर्थः। तथा च अर्थापरोक्ष्यनिर्वचने कल्पिताकल्पितसाधारणाभेदस्य विवक्षितत्वेन प्रमातृचैतन्यब्रह्मचैतन्ययोरिव प्रमातृचैतन्यजडयोरकल्पिताभेदाभावेऽपि 'जडं सद्'इति सामानाधिकरण्यानुभवसिद्धकल्पिताभेदसत्त्वान्नाव्याप्तिरिति भावः। आन्तरजडपदार्थेषु प्रमातृचैतन्याभिन्नत्वमुपपाद्य बाह्यापरोक्षार्थेषु तद् उपपादयति—बाह्येति। अन्तःकरणतद्धर्माणां तदभेदसत्त्वाद् घटादीनां तदभेदसत्त्वाच्च न काप्यान्तरार्थे बाह्यार्थे वाऽव्याप्तिरिति सम्बन्धः। घटादीनां तत्तत्पुरुषीयचैतन्याभेदसत्त्वे हेतुमाह—बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्येति। ननु बाह्यचैतन्यस्य तत्तत्पुरुषीयचैतन्यस्य च वस्तुतस्सदा अभेदसत्त्वेऽपि तदभिव्यक्तिः कुत इत्यत आह—वृत्तिकृतेति। बाह्ये विषयावच्छिन्नचैतन्ये चक्षुरादिद्वारा निर्गताया वृत्तेस्संसर्गे सति वृत्तिवृत्तिमतोरभेदाद् वृत्तिमदन्तःकरणस्यापि तत्र संसर्गो लभ्यते। तथा च वृत्तिसंसृष्टबाह्यचैतन्यमेवान्तःकरणसम्बन्धात्तत्तत्पुरुषीयचैतन्यं भवतीत्यनेन प्रकारेण बाह्यचैतन्ये वृत्तिकृता तत्तत्पुरुषीयचैतन्याभेदाभिव्यक्तिर्भवतीत्यर्थः। ननूक्तप्रकारेण बाह्यचैतन्यस्य प्रमातृचैतन्याभिन्नत्वसिद्धावपि घटादीनां प्रमातृचैतन्याभिन्नत्वमसिद्धमेवेत्याशङ्क्याह—बाह्यचैतन्ये कल्पितानामिति। बाह्यचैतन्ये तावद् घटादीनामभेदः प्रागेव सिद्धः। तत्र तेषां कल्पितत्वात्। तथा च बाह्यचैतन्यस्य वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्तिदशायां घटादीनामपि तत्तत्पुरुषीयचैतन्याभिन्नत्वं सिध्यतीति भावः। अर्थापरोक्ष्यलक्षणस्यातिव्याप्तिमाशङ्क्य निराकरोति—न चेत्यादिना। धर्मेति। धर्मादीनामप्यधिष्ठानभूतप्रमातृचैतन्येन सहाभिन्नसत्ताकत्वरूपाभेदसत्त्वादिति भावः। उद्भूतत्वे सति प्रमातृचैतन्याभिन्नत्वमर्थापरोक्ष्यम्।

पगमात् । एवं च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वाद् "यत्साक्षादपरोक्षाद् ब्रह्म"इति श्रुत्या स्वत एवापरोक्षं ब्रह्मेति अपरोक्षार्थविषयत्वात् शाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्ववाचोयुक्तिर्युक्तेत्याहुः ॥

(वे०सू०मं०) अद्वैतविद्याचार्यास्तु स्वसुखज्ञानसङ्ग्रहात् ॥
आपरोक्ष्यं स्फुरच्चित्त्वं तदभेदात्तु तद्युजि ॥ २४ ॥

अद्वैतविद्याचार्यास्तु नापरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यम्। स्वरूपसुखापरोक्षरूपस्वरूपज्ञानाव्यापनात् स्वाविषयत्वलक्षणस्वप्रकाशत्वनिषेधात् । किं तु यथा तत्तदर्थस्य स्वव्यवहारानुकूल-

---

उद्भूतत्वं च फलबलकल्प्यस्वभावविशेषः । स च धर्मादेर्नास्तीति परिहारार्थः । एवं शब्दस्य ब्रह्मसाक्षात्कारे करणत्वसिद्ध्यर्थमुपोद्घातं कृत्वा प्रकृतं दर्शयति—एवं चेति । ज्ञानापरोक्ष्यस्यार्थापरोक्ष्यप्रयुक्तत्वे सतीत्यर्थः । अभिन्नत्वादिति । जीवरूपप्रमातुर्ब्रह्माभेदस्य श्रुतिसिद्धत्वादिति भावः । इदं च ब्रह्मणो जीवाभिन्नत्वं जडस्य प्रमातृचैतन्याभिन्नत्ववत् काल्पनिकं न भवति, किं तु वास्तवैक्यरूपमित्याशयेनाह—स्वत एवेति । ब्रह्मणो नित्यापरोक्षप्रमातृचैतन्याभेदे श्रुतिमाह—यत्साक्षादिति । ब्रह्म जडवत् स्वव्यतिरिक्तप्रमातृचैतन्यमपेक्ष्यापरोक्षं न भवति, किं तु साक्षात्प्रमातृचैतन्यस्वरूपत्वादेवापरोक्षमित्यर्थः ।

ज्ञानापरोक्ष्यमर्थापरोक्ष्यं च प्रकारान्तरेण निरूपयति—अद्वैतविद्याचार्यास्त्विति । पूर्वोक्तं ज्ञानापरोक्ष्यलक्षणमव्याप्त्या दूषयति—नापरोक्षेति । स्वरूपसुखस्यापरोक्ष्यरूपे स्वरूपज्ञाने अव्यापनादित्यर्थः । नन्वात्मस्वरूपसुखानुभवस्य साक्षिचैतन्यरूपस्य स्वप्रकाशत्वाभ्युपगमात् स्वप्रकाशस्य च स्वविषयकत्वरूपत्वात् स्वरूपसुखविषयकत्वं तदपरोक्षरूपं स्वरूपज्ञाने निरपवादमित्यत आह—स्वाविषयत्वलक्षणेति । एकस्मिन् चैतन्ये विषयविषयिभावलक्षणसम्बन्धो न सम्भवति । सम्बन्धस्य द्विनिष्ठत्वात् । स्वविषयत्वं विनाऽपि स्वसत्ताप्रयुक्तसंशयाद्यगोचरत्वादिलक्षणस्य स्वप्रकाशत्वस्याकरेषु निरूपितत्वादिति भावः । किं तर्हि ज्ञानापरोक्ष्यमिति पृच्छति—किं त्विति । ज्ञानापरोक्ष्यनिर्वचनं प्रति दृष्टान्तव्याजेन प्रथममर्थापरोक्ष्यं निर्वक्ति—य-

चैतन्याभेदोऽर्थापरोक्ष्यम्, एवं तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदो ज्ञानापरोक्ष्यम् । तथा च चैतन्यधर्म एवापरोक्ष्यम्, न त्वनुमितित्वादिवद् अन्तःकरणवृत्तिधर्मः । अत एव सुखादिप्रकाशरूपे साक्षिणि, स्वरूपसुखप्रकाशरूपे चैतन्ये चापरोक्ष्यम् । न च घटाद्यैन्द्रियकवृत्तौ तदनुभवविरोधः । अनुभवस्य

---

थेति । अर्थस्य स्वव्यवहारानुकूलचैतन्याभिन्नत्वमपरोक्षत्वम् । अस्ति चान्तःकरणतद्धर्माणां स्वव्यवहारानुकूलेन साक्षिचैतन्येनाभिन्नत्वम् । तत्र तेपामध्यस्तत्वात् । तथा घटादीनामपि स्वव्यवहारानुकूलेन घटादिगोचरवृत्त्युपहितेन घटाद्यधिष्ठानचैतन्येनाभिन्नत्वमस्ति । तथा च ब्रह्मणोऽपि स्वव्यवहारानुकूलेन स्वगोचरवृत्त्युपहितेन साक्षिचैतन्येनाभिन्नत्वमस्तीति न क्वाप्यव्याप्तिः । घटाद्यर्थस्य चैतन्ये कल्पितस्य चैतन्याभिन्नत्वं सदा वर्तते, अपरोक्षत्वं तु सदा नास्तीति स्वव्यवहारानुकूलेत्युक्तम् । घटादिगोचरवृत्तिदशायामेव घटाद्यधिष्ठानचैतन्यं घटादिव्यवहारानुकूलं भवति, न सर्वदेति नातिप्रसङ्गः । ननु तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभिन्नत्वमपरोक्षत्वमस्तु नाम । तथाऽपि ज्ञानापरोक्ष्यं नोक्तमेव । वृत्तिरूपज्ञानस्य चैतन्यापेक्षया भिन्नत्वादित्यत आह—तथा चेति । चैतन्यस्यैव तत्तदर्थव्यवहारानुकूलत्वे विवक्षिते सतीत्यर्थः । तथा च 'ज्ञानापरोक्ष्यम्'इत्यत्र ज्ञानपदं चैतन्यपरमेव, न वृत्तिज्ञानपरमिति नानुक्तिदोष इति भावः । तत्तदर्थव्यवहारानुकूलत्वे सति तत्तदर्थाभिन्नत्वरूपं ज्ञानापरोक्षत्वं चैतन्यधर्म एवेत्यत्र युक्तिमाह—अत एवेति । चैतन्यधर्मत्वाभ्युपगमादेवेत्यर्थः । तस्य वृत्तिधर्मत्वे तु सुखदुःखादिगोचरापरोक्षवृत्त्यनङ्गीकारात् सुखदुःखादिभासकसाक्षिचैतन्ये वृत्तिधर्मस्यापरोक्ष्यस्यासम्भवाच्च सुखदुःखादेरपरोक्षत्वानुभवविरोधः स्यादिति भावः । लक्षणे सत्यन्तं वह्निगोचरानुमितिवृत्त्युपहिते जीवचैतन्ये वह्निव्यवहारानुकूले गतमिति तत्रातिव्याप्तिवारणाय विशेष्यम् । अनुमितिवृत्तेर्विषयदेशे गमनाभावेन तदुपहितचैतन्यस्य न वह्न्यभिन्नत्वमिति नातिव्याप्तिः । घटादिगोचरज्ञप्त्यभावदशायां घटाद्यवच्छिन्नचैतन्ये घटाद्यपरोक्षत्वरहिते घटाद्यर्थाभिन्नत्वमस्तीति तद्वारणाय सत्यन्तम् । तदा तस्य चैतन्यस्यावृतत्वेन घटादिव्यवहारानुकूलत्वाभावान्नातिव्याप्तिरिति मन्तव्यम् । न चेति । ज्ञानापरोक्ष्यस्य चैतन्यधर्मत्वे घटादिगोचरवृत्तौ

वृत्त्यवच्छिन्नचैतन्यगतापरोक्ष्यविषयत्वोपपत्तेः ।

ननूक्तं ज्ञानार्थयोरापरोक्ष्यं हृदयादिगोचरशाब्दवृत्तिशाब्दविषययोरतिप्रसक्तम् । तत्र दैवात् कदाचित् वृत्तिविषयसंसर्गे सति वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्य चाभेदाभिव्यक्तेरवर्जनीयत्वादिति चेद् न । परोक्षवृत्तेर्विषयावच्छिन्नचैतन्यगताज्ञाननिवर्तनाक्षमतया तत्राज्ञानेनावृतस्य विषयचैतन्यस्यानावृतेन वृत्त्यवच्छिन्नसाक्षिचैतन्येनाभेदाभिव्यक्तेरभावादापरोक्ष्याप्रसक्तेः । अत एव जीव-

---

'घटं साक्षात्करोमि' इत्यादिप्रकारेणापरोक्षत्वानुभवविरोध इत्यर्थः । वृत्तिचैतन्ययोस्तादात्म्येन वृत्तिसाक्षात्कारत्वानुभवस्य चैतन्यगतापरोक्ष्यविषयकत्वोपपत्तेरित्यर्थः । ननु हृदयनाडीधर्मादिगोचरशाब्दवृत्तिरन्तःकरणे शरीरव्यापिनी जायमाना दैवयोगाद्धृदयनाड्याद्यवच्छिन्नान्तःकरणप्रदेशे यदि जायेत, तदा हृदयादिरूपविषयावच्छिन्नचैतन्यस्य हृदयादिगोचरशाब्दवृत्त्यवच्छिन्नस्य चाभेदाभिव्यक्तिरपरिहार्या । घटादिस्थले वृत्तेर्विषयसंसर्गे सति वृत्तिविषयावच्छिन्नचैतन्ययोरभेदाभिव्यक्तिस्वीकारात् । तथा च हृदयादिगोचरशाब्दानुमित्यादिवृत्त्यवच्छिन्नचैतन्यरूपे परोक्षज्ञाने हृदयाद्यर्थाभिन्ने हृदयादिव्यवहारानुकूले ज्ञानापरोक्ष्यलक्षणमतिव्याप्तम् । तथा हृदयादिरूपे परोक्षार्थे स्वव्यवहारानुकूलशाब्दादिवृत्त्यवच्छिन्नचैतन्याभिन्ने अर्थापरोक्ष्यलक्षणमतिव्याप्तमिति शङ्कते—ननूक्तमिति । ययोश्चैतन्ययोरभेदाभिव्यक्तिरिष्यते, तयोरुभयोरप्यनावृतत्वमपेक्षितम् । अन्यतरचैतन्यस्यावरणदशायां तयोरभेदस्य प्रत्यक्षत्वलक्षणाभिव्यक्त्ययोगात् । तथा च हृदयादिगोचरशाब्दवृत्तिस्थले नातिव्याप्तिः, तत्र विषयचैतन्यस्यावृतत्वादिति परिहरति—न परोक्षवृत्तेरिति । आपरोक्ष्याप्रसक्तेरिति । परोक्षहृदयादिविषयस्य हृदयादिगोचरशाब्दवृत्त्यवच्छिन्नचैतन्यरूपपरोक्षज्ञानस्य चेति शेषः । तथा च हृदयादिगोचरशाब्दवृत्त्यवच्छिन्नचैतन्यरूपपरोक्षज्ञानस्य हृदयादिव्यवहारानुकूलत्वे सत्यपि हृदयादिविषयेण सहाभिव्यक्ताभेदाभावादभिव्यक्ततत्तदर्थाभिन्नत्वे सति तत्तदर्थव्यवहारानुकूलज्ञानत्वलक्षणं ज्ञानापरोक्ष्यं नास्ति । तथा हृदयाद्यर्थस्यापि स्वव्यवहारानुकूलशाब्द-

वृत्त्यवच्छिन्नसाक्षिचैतन्याभेदसत्त्वेऽपि तदभेदाभिव्यक्त्यभावेन स्वव्यवहारानुकूलचैतन्याभेदाभिव्यक्तिशालित्वरूपगर्थापरोक्ष्यं नास्तीत्यर्थः ।

न च 'अहं सुखी दुःखी'इत्याकारके सुखादिसाक्षिणि दुःखादिरूपविषयाभेदो विद्यमानोऽपि नाभिव्यज्यते सुखादिसाक्षिणो जीवस्य सुखादेश्चाधाराधेयभावप्रतीतेः । तथा च सुखदुःखादिप्रत्यक्षेऽभिव्यक्तविषयाभेदाभावादव्याप्तिरिति वाच्यम् । घटादिप्रत्यक्षरूपे घटादिस्फुरणे 'घटस्स्फुरति', 'पटस्स्फुरति'इत्याकारकानुभवमादाय घटाद्यर्थाभेदाभिव्यक्तिमत्त्वस्येव 'सुखं स्फुरति' 'दुःखं स्फुरति'इत्याद्याकारकानुभवमादायैव सुखदुःखादिप्रत्यक्षे सुखाद्यर्थाभेदाभिव्यक्तिमत्त्वसत्त्वात् । न च 'घटस्स्फुरति'इत्यनुभवे घटस्य स्फुरणाश्रयत्वमेव भाति, न तु स्फुरणाभेद इति वाच्यम् । 'घटस्स्फुरति'इति प्रयोगे 'देवदत्तो गच्छति'इत्यत्र 'गमनकर्त्रभिन्नो देवदत्तः' इति वाक्यार्थवत् 'स्फुरणाश्रयाभिन्नो घटः' इति वाक्यार्थस्य वक्तव्यतया 'घटः स्फुरति'इति प्रयोगमूलभूते 'घटस्स्फुरति'इत्यनुभवेऽपि स्फुरणाश्रयभूतचिदात्माभिन्नतया घटस्य भानावश्यम्भावात् । न च घटस्य स्फुरणाश्रयाभेदाभिव्यक्तावपि स्फुरणाभेदाभिव्यक्तिरद्यापि नोपपादितैवेति वाच्यम् । 'घटस्य स्वरूपम्'इति प्रत्यक्षं हि घटमेव घटस्य स्वरूपतया यथा विषयीकरोति, तथा 'घटस्स्फुरति'इति प्रत्यक्षमपि घटादिवृत्तिदशायां घटाद्यधिष्ठानभूतमनावृतचिदात्मानमेव स्वप्रकाशचिदात्माश्रितस्फुरणस्वरूपेण विषयीकरोतीत्युपगमेन घटे स्फुरणाश्रयाभेदभानस्यैव स्फुरणाभेदभानरूपत्वात् ।

एतदुक्तं भवति—'घटस्य स्वरूपम्'इतिशब्दप्रयोगे एव घटतत्स्वरूपयोर्भेदो भासते, न तु तन्मूलभूते 'घटस्य स्वरूपम्'इतिप्रत्यक्षे । अन्यथा तत्प्रत्यक्षस्य भ्रमत्वप्रसङ्गात् । घटतत्स्वरूपयोर्भेदाभावात् । न च तस्य भ्रमत्वमभ्युपगन्तुं शक्यते । बाधकाभावात् । एवं 'स्फुरति'इतिशब्दप्रयोगे एव स्वप्रकाशात्मनस्स्फुरणतदाश्रयभावेन भेदभानम्, न तु 'स्फुरति'इतिप्रत्यक्षे । तत्र स्फुरणद्वित्वानुपलम्भादिति । न च ब्रह्मगोचरशाब्दवृत्तेर्विषयसंसृष्टाया विषयगताज्ञाननिवर्तनक्षमत्वदर्शनेन हृदयादिगोचरशाब्दवृत्तेरपि विषयसंसर्गाविशेषे कथं तस्यास्स्वविषयचैतन्यगताज्ञाननिवर्तनक्षमत्वं नेति वाच्यम् । हृदयादिगोचरशाब्दवृत्तेस्सत्यपि विषयसंसर्गे तस्यां वृत्तौ अज्ञाननिवर्तकत्वप्रयोजकाभावेनाज्ञानानिवर्तकत्वस्य प्रथमपरिच्छेदावसाने दर्शितत्वादिति भावः ।

स्य संसारदशायां वस्तुतस्सत्यपि ब्रह्माभेदे न तदापरोक्ष्यम् । अज्ञानावरणकृतभेदसत्त्वात् । न चैवं ब्रह्मणो जीवापरोक्ष्यासम्भवादसर्वज्ञत्वापत्तिः । अज्ञानस्य ईश्वरं प्रत्यनावारकतया तं

---

'अर्थस्य स्वव्यवहारानुकूलचैतन्याभेदाभिव्यक्तिमत्त्वमेवापरोक्ष्यम्, न तु तादृशाभेदवत्त्वमात्रम्'इत्यत्र लिङ्गमाह—अत एवेति । अभेदाभिव्यक्तेरेवापरोक्षत्वप्रयोजकत्वस्वीकारादेवेत्यर्थः । संसारेति । तत्त्वसाक्षात्कारात् पूर्वकाले इत्यर्थः । 'जीवस्य ब्रह्माभेदे सत्यपि'इत्यनेन ब्रह्मणस्स्वव्यवहारानुकूलजीवचैतन्याभिन्नत्वे सत्यपीत्यर्थो विवक्षितः । तथा च संसारदशायां स्वव्यवहारानुकूलजीवचैतन्याभिन्नस्यापि ब्रह्मणो जीवं प्रति अपरोक्षत्वाभावस्तयोरभेदाभिव्यक्त्यभावादेवेति वक्तव्यतया अभेदाभिव्यक्तेरापरोक्ष्यप्रयोजकत्वं युक्तमिति भावः । नचैवमिति । अज्ञानकृतभेदस्याभेदाभिव्यक्तिप्रतिबन्धकत्वे इत्यर्थः । असम्भवादिति । 'जीवं साक्षात्करोमि', 'जीवो ममापरोक्षः' इति जीवगोचरव्यवहारानुकूलं ज्ञानं ब्रह्मणो मायावृत्त्युपहितं ब्रह्मचैतन्यमेव । तथा च ब्रह्मकर्तृकव्यवहारविषयस्य जीवस्य ब्रह्मकर्तृकव्यवहारानुकूलतादृशब्रह्मचैतन्याभिन्नत्वसत्त्वेऽप्यभिव्यक्ताभेदशालित्वाभावाद् जीवस्य ब्रह्म प्रति अपरोक्षत्वं न सम्भवति । न च ब्रह्मणो जीवगोचरापरोक्षज्ञानासम्भवेऽपि न सर्वज्ञत्वभङ्गः । जीवगोचरपरोक्षज्ञानमात्रेणापि तत्सम्भवादिति वाच्यम् । ईश्वरस्य परोक्षज्ञानानङ्गीकारादिति भावः । अज्ञानं हि जीवधर्मिकब्रह्मप्रतियोगिकभेदप्रयोजकम् । जीवस्य 'नाहं ब्रह्म'इति ब्रह्मभेदानुभवसत्त्वात् । न तु ब्रह्मधर्मिकजीवप्रतियोगिकभेदप्रयोजकम् । ब्रह्मणो 'नाहं जीवः' इत्यनुभवे मानाभावात् । तथा च ब्रह्म प्रति जीवस्य ब्रह्माभेदाभिव्यक्तिप्रतिबन्धकस्याज्ञानकृतभेदस्याभावान्नोक्तदोष इति परिहरति—अज्ञानस्येति । अनावारकतयेति । ईश्वरस्य 'अहमज्ञः' इत्यनुभवे मानाभावादज्ञानमीश्वरं प्रति जीवावारकं न भवति । न चेश्वरस्यापि लीलाविग्रहपूर्वकव्यवहारकाले तदीयेनैव वचनेन तस्याज्ञत्वानुभवोऽस्तीति गम्यते इति वाच्यम् । तदीयस्य तदीयाज्ञत्वगमकवचनस्यान्यथासिद्धेश्चतुर्थपरिच्छेदे वक्ष्यमाणत्वादिति भावः । तामिति । ईश्वरं प्रति जीवप्रतियोगिकभेदाप्रयोजकत्वादित्यर्थः । तं प्रति जीवानावारकस्यापि

प्रति जीवभेदानापादनात्। यद् अज्ञानं यं प्रत्यावरकम्, तस्य तं प्रत्येव स्वाश्रयभेदापादकत्वात्। अत एव चैत्रज्ञानेन तस्य घटाज्ञाने निवृत्ते अनिवृत्तं मैत्राज्ञानं मैत्रं प्रत्येव विषयचैतन्यस्य भेदापादकमिति न चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरपि। नन्वेवं वृत्तिविषयचैतन्याभेदाभिव्यक्तिलक्षणस्यापरो-

---

जीवभेदापादकत्वं किं न स्यादित्यत आह—यं प्रतीति। यं जीवं प्रति यदज्ञानं विषयचैतन्यावारकम्, तं प्रत्येव तस्याज्ञानस्य स्वाश्रयभूतविषयचैतन्यप्रतियोगिकभेदापादकत्वाभ्युपगमादित्यर्थः। उक्तव्यवस्थायां नियामकमाह—अत एवेति। 'यं प्रति यदज्ञानम्'इतीत्यादिव्यवस्थाभ्युपगमादेव चैत्रस्य घटापरोक्ष्यानुपपत्तिरपि नेति सम्बन्धः।

घटावच्छिन्नचैतन्ये चैत्रं प्रति घटचैतन्यावारकमज्ञानं यथा वर्तते, तथा मैत्रं प्रत्यपि घटचैतन्यावारकमज्ञानं तत्रास्ति। तथा च चैत्रीयघटज्ञानेन चैत्रस्य घटाज्ञाने चैत्रं प्रति स्वाश्रयभूतविषयचैतन्यप्रतियोगिकभेदापादके निवृत्ते सति चैत्रीयघटज्ञानेनानिवृत्तं घटचैतन्यगतं मैत्रं प्रति घटावारकाज्ञानं मैत्रं प्रत्येव स्वाश्रयभूतघटचैतन्यप्रतियोगिकभेदापादकम्, न तु मैत्राज्ञानं चैत्रं प्रति घटचैतन्यानावारकमपि चैत्रं प्रति स्वाश्रयभूतघटचैतन्यप्रतियोगिकभेदापादकम्। तथा सति चैत्रीयघटज्ञानेन चैत्राज्ञाने निवृत्ते सति तत्कृतभेदनिवृत्तावपि चैत्रस्य घटचैतन्यस्य च मैत्राज्ञानकृतभेदसत्त्वेनाभेदाभिव्यक्त्यभावाच्चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरेव स्यात्। अतो 'मैत्राज्ञानं मैत्रं प्रतीव चैत्रं प्रति स्वाश्रयभेदापादकं न भवति, चैत्रं प्रति स्वाश्रयचैतन्यानावारकत्वाद्'इति वक्तव्यम्। तथा चोक्तव्यवस्था सिद्धेत्यर्थः। ननु 'अपरोक्षज्ञानमज्ञाननिवर्तकम्'इतिरीत्या ज्ञानस्याज्ञाननिवर्तकत्वे अपरोक्षत्वं प्रयोजकमिति वक्तुं न शक्यते। ज्ञानगतापरोक्षत्वस्यैवाज्ञाननिवृत्त्यधीनत्वात्। न च माऽस्तु ज्ञानापरोक्ष्यस्याज्ञाननिवृत्तिप्रयोजकत्वमिति वाच्यम्। तथा सति ज्ञानमात्रस्याज्ञाननिवर्तकत्वापत्त्या परोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वप्रसङ्गादित्याशयेन शङ्कते—नन्वेवमिति। एवंशब्दार्थमेवाह—वृत्तीति। वृत्त्यवच्छिन्नचैतन्यरूपे ज्ञाने घटादिरूपविषये च वृत्त्यवच्छिन्नचैतन्यविष-

क्षयस्य स्वविषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यत्वे तस्याज्ञाननिवृत्तिप्रयोजकत्वायोगाद् ज्ञानमात्रमज्ञाननिवर्तकं भवेदिति चेद्, न । "यद् ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते, तदेवाज्ञाननिवर्तकम्" इति विशेषणाद्, ऐन्द्रियकज्ञानानां तथात्वात् । एवं च शब्दादुत्पद्यमानमपि ब्रह्मज्ञानं सर्वोपादानभूतस्वविषयब्रह्मसंसृष्टमेव उत्पद्यत इति तस्याज्ञाननिवर्तकत्वमज्ञाननिवृत्तौ तन्मूलभेदप्रविलयादापरोक्ष्यं चेत्युपपद्यतेतराम् ।

---

यावच्छिन्नचैतन्ययोरभेदाभिव्यक्तिघटितस्येत्यर्थः । अज्ञाननिवृत्तिप्रयोज्यत्व इति । प्रमातारं प्रति विषयचैतन्यावरणद्वारा विषयचैतन्यप्रतियोगिकभेदापादकस्याज्ञानस्य निवृत्तिं विना अर्थस्य ज्ञानस्य वा आपरोक्ष्यासम्भवस्योक्तत्वादापरोक्ष्यस्याज्ञाननिवृत्तिप्रयोज्यत्वमित्यर्थः । ज्ञानस्याज्ञाननिवर्तकतायामापरोक्ष्यस्य प्रयोजकत्वाभावेऽपि न हानिः, प्रयोजकान्तरस्य प्रथमपरिच्छेदान्ते दर्शितत्वादित्याशयेन परिहरति—नेति । तथात्वादिति । सन्निकर्षरूपकारणमहिम्ना विषयसंसृष्टस्यैवोत्पद्यमानत्वादित्यर्थः । अनुमित्यादिवृत्तीनामतथात्वेनातिप्रसङ्गाभावश्चेत्यपि द्रष्टव्यम् । नन्वनुमेयवह्न्यादिगोचरानुमितिवृत्तेरिव ब्रह्मगोचरशाब्दवृत्तेरपि स्वविषयभूतेन ब्रह्मचैतन्येन संसर्गाभावान्मूलाज्ञाननिवर्तकत्वं न स्यात् । तथा च तत्त्वज्ञानानन्तरमपि ब्रह्मापरोक्ष्यं न स्यादित्यत आह—एवं चेति । एवमेवेत्यर्थः । ऐन्द्रियकवृत्तिवदेवेति यावत् । ब्रह्मगोचरवृत्तेः स्वविषयसंसर्गनियमे कारणमाह—सर्वोपादानभूतेति । जायमानस्य सर्वस्य ब्रह्मसंसर्गनियमे सति ब्रह्मगोचरवृत्तेः स्वविषयसंसर्गनियमे किं वक्तव्यमित्याशयेन सर्वोपादानेत्युक्तम् । कार्यस्योपादानसंसर्गनियमात् । तथा च ब्रह्मगोचरवृत्तेर्नानुमेयवह्न्यादिगोचरानुमितिवृत्तितुल्यतेति भावः । आपरोक्ष्यं चेति । ननु ज्ञानापरोक्ष्यस्याज्ञाननिवृत्तावप्रयोजकत्वमते वेदान्तजन्यज्ञानस्यापरोक्षत्वप्रसाधनमस्मिन् शाब्दापरोक्षवादे व्यर्थमिति चेद्, न । 'अज्ञाननिवर्तकज्ञानमपरोक्षरूपम्' इति नियमस्य चक्षुरादिजन्यज्ञानेषु दृष्टस्य ब्रह्माज्ञाननिवर्तके ब्रह्मगोचरशाब्दज्ञाने व्यभिचारवारणार्थतया तत्साधनस्यार्थवत्त्वोपपत्तेर्मूलाज्ञाननिवर्तके ब्रह्मगोचरशाब्दज्ञाने आपरोक्ष्यस्य "त-

(वे०सू०मं०) नन्वध्ययनकालेऽपि शब्दात्स्यादपरोक्षधीः॥
सत्ताधृतिर्विचाराच्चेन्मननादिश्रमो वृथा॥ २५॥
मैवं पुन्दोषशान्त्यर्थं मननादेर्विधानतः॥
तत्तत्संसृष्टवृत्त्येत्थं तदज्ञाननिबर्हणम्॥ २६॥

नन्वेवमध्ययनगृहीतवेदान्तजन्येनापि तज्ज्ञानेन मूलाज्ञाननिवृत्त्या आपरोक्ष्यं किं न स्यात्। न च तत्सत्तानिश्चयरूपत्वाभावाद् नाज्ञाननिवर्तकमिति वाच्यम्। तथाऽपि कृतश्रवणस्य निर्विचिकित्सशाब्दज्ञानेन तन्निवृत्त्या मननादिवैयर्थ्यापत्तिरिति चेद्, न। सत्यपि श्रवणाद् निर्विचिकित्सज्ञाने चित्तविक्षेपदोषेण प्रतिबन्धाद् अज्ञानानिवृत्त्या तन्निराकरणे मनननिदिध्यासननियमविध्यर्थानुष्ठानस्यार्थवत्त्वाद् भवान्तरीय-

---

द्वैतत्पश्यन्" इत्यादिश्रुत्या 'ब्रह्म साक्षात्करोमि' इतिविद्वदनुभवेन च सिद्धस्य तत्र तत्प्रसाधनं विना अनुपपत्तेश्चेति भावः। घटादौ घटादिगोचरवृत्तिकाले एवापरोक्ष्यम्, तद्वृत्त्युपरमे तु पुनरज्ञानान्तरकृतभेदप्राप्त्या स्वव्यवहारानुकूलचैतन्याभेदाभिव्यक्त्यभावाद् नापरोक्ष्यम्, ब्रह्मणि तु मूलाज्ञाननिवृत्तौ पुनरावरणकृतभेदाप्रसक्त्या ब्रह्मज्ञानानन्तरं सदैवापरोक्ष्यमिति विशेषं सूचयति—तदामिति।

नन्वेवमध्ययनगृहीतेति। 'नियमेन यद् ज्ञानं विषयसंसृष्टतयोदेति, तज्ज्ञानमज्ञानं निवर्तयत्येव' इति नियमोपगमे सतीत्येवंशब्दार्थः। आपातज्ञानस्यापि स्वविषयब्रह्मसंसर्गितयैवोत्पन्नत्वादिति भावः। सत्तानिश्चयरूपत्वमपि निवर्तकज्ञानविशेषणम्। अतो नोक्तातिप्रसङ्ग इति शङ्कते—न च तदिति। विचारप्राचीनमध्ययनगृहीतवेदान्तजन्यज्ञानं तच्छब्दार्थः। विशेषणमभ्युपगम्याप्यतिप्रसङ्गमाह—तथाऽपीति। अप्रतिबद्धत्वमपि निवर्तकज्ञानविशेषणम्। अतो नोक्तातिप्रसङ्गोऽपीति समाधत्ते—न सत्यपीति। ननु मननादेर्विक्षेपशब्दितासम्भावनाविपरीतभावनानिवृत्त्यर्थत्वे यस्य विद्याऽधिकारिणो जन्मान्तरीयमननादिसहितश्रवणानुष्ठानेन समस्तो विक्षेपदोषो निरस्तः, तस्योपदेशमात्रेणापि सत्तानिश्चयरूपमप्रतिबद्धं च ब्रह्मज्ञानं जायते। तथा च तस्येह जन्मनि श्र-

मननाद्यनुष्ठाननिरस्तचित्तविक्षेपस्य उपदेशमात्राद् ब्रह्मापरोक्ष्यस्य इष्यमाणत्वाच्चेत्याहुः ॥ १० ॥

(वे०सू०मं०) नन्वेवं वृत्त्यभिव्यक्तचिदंशो विषयैकयतः ॥
श्रवणादिमतो नश्येन्मूलाज्ञानं घटेक्षणात् ॥ २७ ॥

(११)अथैवमपि कृतनिदिध्यासनस्य वेदान्तजन्यब्रह्मज्ञानेनेव घटादिज्ञानेनापि ब्रह्माज्ञाननिवृत्तिः किं न स्यात्। न च तस्य ब्रह्माविषयत्वाद् न ततो ब्रह्माज्ञाननिवृत्तिरिति वाच्यम्। 'घटस्सन्'इत्यादिबुद्धिवृत्तेः सद्रूपब्रह्मविषयत्वोपगमात्। न च तत्र घटाद्याकारवृत्त्या तदज्ञाननिवृत्तौ स्वतः स्फुरणादेव तदवच्छिन्नं चैतन्यं सदिति प्रकाशते, न तस्य घटाद्याकारवृत्तिविषयत्वमिति वाच्यम्। तदभावे घटविषयं ज्ञानं तदवच्छिन्नचैतन्यविषयमज्ञानमिति

---

वणमननाद्यनुष्ठानं विनाऽपि मूलाज्ञाननिवृत्तिर्ब्रह्मापरोक्ष्यं च स्यादित्यत आह—भवान्तरीयेति। तथा चेष्टापत्तिरिति भावः।

अथैवमपीति। विक्षेपदोषनिवृत्त्यर्थं मननाद्यपेक्षायामपीत्यर्थः। 'कृतनिदिध्यासनस्याधिकारिणो घटादिज्ञानेनापि मूलाज्ञाननिवृत्तिः किं न स्याद्। घटादिवृत्तेरपि मूलाज्ञानविषयचैतन्यविषयकत्वाविशेषाद्'इत्याक्षेपाभिप्रायः। मूलाज्ञानघटज्ञानयोः समानविषयकत्वमसिद्धमिति सिद्धान्तिनश्शङ्कामनूद्य निराकरोति—न च तस्येति। घटादिज्ञानस्येत्यर्थः। तत इति। घटादिज्ञानादित्यर्थः। 'घटः सन्'इत्याद्याकाराया वृत्तेर्ब्रह्मचैतन्यविषयकत्वाभ्युपगमोऽसिद्ध इति सिद्धान्ती शङ्कते—न च तत्रेति। तत्रेत्यादितच्छब्दत्रयं घटादिपरम्। तस्येति। ब्रह्मण इत्यर्थः। घटाद्यवच्छिन्नचैतन्यस्य घटादिवृत्तिविषयत्वं पूर्ववादी साधयति—तदभाव इत्यादिना। चैतन्यस्य घटादिवृत्तिविषयत्वाभावे सतीत्यर्थः। ननु यदि घटमात्रविषयकज्ञानेन घटाद्यवच्छिन्नचैतन्यविषयकाज्ञाननिवृत्तिर्न सम्भवति, तयोः समानविषयकत्वाभावात्, तर्हि घटज्ञानेन सहाज्ञानस्य समानविषयकत्वसम्पत्तये अज्ञानमपि घटादिजडमात्रविषयकमेवा-

भिन्नविषयेण ज्ञानेन तदज्ञाननिवृत्तेरयोगाद् जडे आवरणकृत्या-भावेन घटस्याज्ञानाविषयत्वात् । न च घटादिवृत्तेस्तदवच्छिन्न-चैतन्यविषयत्वेऽपि अखण्डानन्दाकारत्वाभावाद् न ततो मूला-ज्ञाननिवृत्तिरिति वाच्यम् । वेदान्तजन्यसाक्षात्कारेऽपि तदभा-वात् । न हि तत्राखण्डत्वमानन्दत्वं वा कश्चिदस्ति प्रकारः । वेदान्तानां संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वहानापत्तेः । न च वेदान्तजन्यज्ञानादेव तन्निवृत्तिनियम इति वाच्यम् । क्लृप्ताज्ञाननिवर्तकत्वप्रयोजकस्य रूपस्य ज्ञानान्तरेऽपि सद्भा-वे तथा नियन्तुमशक्यत्वात् । न च घटाद्याकारवृत्तिविषयस्या-वच्छिन्नचैतन्यस्यापि कल्पितत्वेन यन्मूलाज्ञानविषयभूतं सत्य-

---

स्तु, नेत्याह पूर्ववादी—जड इति । जडस्य जडत्वादेव प्रमाणानवतारद-शायामप्रकाशोपपत्त्या जडस्याप्रकाशार्थमावरणकल्पनायोगादित्यर्थः । कृत्स्नं फलम् । तथा च वेदान्तजन्यज्ञानवद् घटादिज्ञानस्यापि ब्रह्मचैतन्यविषयक-त्वावश्यंभावेन मूलाज्ञानसमानविषयकत्वात् तेनापि तन्निवृत्तिप्रसङ्ग इति स्थितम् । तत्र सिद्धान्ती शङ्कते—न चेति । तर्हि वेदान्तजन्यज्ञानमपि ब्र-ह्माज्ञाननिवर्तकं न स्यादिति पूर्ववादी दूषयति—वेदान्तजन्येति । अख-ण्डत्वमनवच्छिन्नत्वम् । वेदान्तजन्यज्ञानस्याखण्डत्वादिधर्मवैशिष्ट्यावगाहि-त्वोपगमे बाधकमाह—वेदान्तानामिति । मूलाज्ञाननिवर्तकज्ञानस्य वे-दान्तजन्यत्वमपि विशेषणं विवक्षितम् । अतो घटादिज्ञाने नातिप्रसङ्ग इत्या-शयवतीमाशङ्कामनूद्य दूषयति पूर्ववादी—न च वेदान्तेत्यादिना । वेदा-न्तजन्यज्ञाने क्लृप्तस्य मूलाज्ञाननिवर्तकत्वप्रयोजकरूपस्य मूलाज्ञानसमान-विषयकत्वसत्त्वानिश्चयरूपत्वाप्रतिबद्धत्वलक्षणस्य निदिध्यासनपरिपाककाले चक्षुरादिजन्यघटादिज्ञानेऽपि सत्त्वे सति 'वेदान्तजन्यज्ञानादेव मूलाज्ञानिनि-वृत्तिः, न तु घटादिज्ञानाद्' इति नियन्तुमयुक्तत्वाद् । वेदान्तजन्यत्वस्यापि सत्त्वानिश्चयरूपत्वादेरिव प्रयोजकविशेषणत्वे गौरवाद्, मानाभावाच्चेति भा-वः । तर्हि वेदान्तजन्यज्ञाने क्लृप्तं यत् प्रयोजकम्, तदेव घटादिज्ञाने नास्ती-ति शङ्कते—न च घटाद्याकारेति । अवच्छिन्नत्वं कल्पितत्वे हेतुः, अ-नवच्छिन्नत्वं सत्यत्वे हेतुः । घटादिवृत्तीनां कल्पितचैतन्यविषयकत्वेन स-

मनवच्छिन्नं चैतन्यम्, तद्विषयत्वाभावाद् घटादिवृत्तीनां निवर्त्यत्वाभिमताज्ञानसमानविषयत्वलक्षणं क्लृप्तं प्रयोजकमेव नास्तीति वाच्यम् । तत्रावच्छेदकांशस्य कल्पितत्वेऽप्यवच्छेद्यांशस्याकल्पितमूलाज्ञानविषयचैतन्यरूपत्वात् तस्य कल्पितत्वे घटत्वजडतया अवस्थाऽज्ञानं प्रत्यपि विषयत्वायोगेनावस्थाऽज्ञानस्य मूलाज्ञानविषयाकल्पितचैतन्यविषयत्वस्य वक्तव्यतया तन्निवर्तकघटादिज्ञानस्यापि तद्विषयत्वावश्यम्भावेन तत्पक्षेऽपि ततो मूलाज्ञाननिवृत्तिप्रसङ्गस्यापरिहारात् ।

(वे०सू०मं०) मैवमत्राहुराचार्या न सन्दृश इति श्रुतेः ॥
चिच्चक्षुराद्ययोग्यैव चिद्वाराऽस्त्यावृतिर्जडे ॥ २८ ॥

---

सत्यब्रह्मविषयकत्वाभावादित्यर्थः । 'घटाद्यवच्छिन्नचैतन्यं कल्पितम्'इत्यत्र चैतन्यांशस्याकल्पितत्वं कल्पितत्वं वा विवक्षितम् ? । नाद्य इत्याह—तत्रेति । अवच्छिन्नचैतन्ये इत्यर्थः । अवच्छेद्यचैतन्यांशस्य घटादिवृत्तिविषयस्याकल्पितं यद् मूलाज्ञानविषयब्रह्मचैतन्यम्, तद्रूपत्वादित्यर्थः । तथा च घटाद्यवच्छिन्नचैतन्यगोचरवृत्तेरपि निवर्त्यत्वाभिमतमूलाज्ञानसमानविषयकत्वरूपं वेदान्तजन्यज्ञाने क्लृप्तं प्रयोजकमस्तीति भावः । द्वितीयकल्पेऽपि घटादिवृत्तौ क्लृप्तप्रयोजकमस्तीति दर्शयन् तं कल्पं दूषयति—तस्य कल्पितत्वे इति । अवच्छेद्यचैतन्यांशस्येत्यर्थः । वक्तव्यतयेति । अवच्छेद्यचैतन्यांशस्य कल्पितत्वपक्षे तस्य जडत्वापत्त्या जडस्य तस्याज्ञानविषयत्वासम्भवादवस्थाऽज्ञानं प्रति मूलाज्ञानविषयब्रह्मचैतन्यमेव विषय इति वक्तव्यम्, निर्विषयाज्ञानासम्भवात् । तथा च ब्रह्मचैतन्यविषयकावस्थाऽज्ञाननिवर्तकत्वाय घटादिवृत्तीनामपि मूलाज्ञानविषयब्रह्मचैतन्यविषयकत्वमपरिहार्यम् । घटादिवृत्तीनां सत्यब्रह्मविषयकत्वाभावेन अवस्थाऽज्ञानेन सह समानविषयकत्वाभावात् तासामवस्थाऽज्ञाननिवर्तकत्वं न स्यादित्यर्थः । तन्निवर्तकेति । अवस्थाऽज्ञानं तच्छब्दार्थः । तद्विषयत्वेति । मूलाज्ञानविषयब्रह्मचैतन्यं तच्छब्दार्थः । तत्पक्षेऽपीति । 'अवच्छेद्यांशस्य कल्पितत्वम्'इति द्वितीयकल्पेऽपीत्यर्थः । तत इति । घटादिज्ञानादित्यर्थः । अपरिहारादिति । घटा-

अत्राहुराचार्याः—न चैतन्यं चक्षुरादिजन्यवृत्तिविषयः ।
"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्"॥
इत्यादिश्रुत्या तस्य परमाण्वादिवत् चक्षुराद्ययोग्यत्वोपदेशाद्, 'औपनिषदम्'इतिविशेषणाच्च । न च—
'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते' ।
इत्यादिवार्तिकविरोधः । तस्य घटाद्याकारवृत्त्युदये

---

दिज्ञानस्यापि वेदान्तजन्यज्ञानस्येव मूलाज्ञानसमानविषयकत्वादिति भावः ।

अत्राहुरिति । 'घटादिज्ञानमपि मूलाज्ञाननिवर्तकं स्यात्, चैतन्यविषयकत्वाद्, वेदान्तजन्यज्ञानवद्' इति चोद्ये हेत्वसिद्धिमाहुरित्यर्थः । अस्यात्मनो रूपं सन्दृशे चक्षुषो योग्यत्वेन न तिष्ठति । रूपादिहीनत्वात् । अतो न कश्चिदेनमात्मानं चक्षुषा पश्यति । पराञ्चि पराग्विषयाणि खानि इन्द्रियाणि व्यतृणद् हिंसितवान् ईश्वरः । जडार्थविषयकत्वेनैव करणानि सृष्टवानिति यावत् । तस्मात् तथा सृष्टत्वात् पराङ् पराञ्चं सर्वो लोक इन्द्रियैरुपलभते, नान्तरात्मानं चैतन्यस्वभावमित्यर्थः । "न चक्षुषा गृह्यते" इत्यादिश्रुतिरादिपदार्थः । तस्येति । चैतन्यस्येत्यर्थः । ननु यदि इन्द्रियायोग्यत्वोपदेशाद्, उपनिषदेकगम्यत्वश्रवणाच्च चैतन्यं घटादिवृत्तिविषयो न भवतीत्युपेयते, तर्हि वार्तिकविरोध इति शङ्कते—न च सर्वेति । यद् वस्तु प्रतीयते, तत् सर्वं 'सद्'इत्येव प्रतीयते । तथा चानुभवबलात् सद्रूपं ब्रह्म सर्वप्रत्ययवेद्यतया व्यवस्थितमित्यर्थः । चैतन्यस्य सर्वप्रत्ययवेद्यत्वं गौणमेव वार्तिककाराणामभिमतम्, न घटादिवन्मुख्यम् । उदाहृतश्रुतिविरोधात् । तथा च न वार्तिकविरोध इति समाधत्ते—तस्येति । वार्तिकवचनस्येत्यर्थः ।

यथा घटस्य घटगोचरवृत्त्यधीनव्यवहारविषयत्वम्, तथा घटाद्यधिष्ठानसद्रूपब्रह्मणोऽपि घटादिवृत्त्यधीनव्यवहारविषयत्वमस्तीत्यनेन गुणेन 'सद्रूपं ब्रह्म घटादिप्रत्ययवेद्यम्'इति वार्तिककारैरुच्यते इत्यर्थः । न चैवं परोक्षवृत्तिविषयेऽप्यावरणाभिभवाभावादुक्तगतिस्तत्र न सम्भवतीति वाच्यम् । वार्तिके प्रत्ययपदस्यावरणाभिभावकवृत्तिपरत्वोपपत्तेरिति भावः ।

सति आवरणाभिभवात् स्वप्रभं सद्रूपं ब्रह्म 'घटस्सन्'इति घटवद् व्यवहार्यं भवतीत्यौपचारिकघटादिवृत्तिविषयत्वपरत्वात् । आवरणाभिभावकत्वं च घटादिज्ञानस्य घटादिविषयत्वादेव उपपन्नम् । घटादेरप्यज्ञानविषयत्वाद् 'घटं न जानामि' 'घटज्ञानेन घटाज्ञानं नष्टम्'इति अवस्थाऽज्ञानस्य घटादिविषयत्वानुभवात् । न च तत्रावरणकृत्याभावादज्ञानाङ्गीकारो न युक्तः, तद्भासकस्य तदवच्छिन्नचैतन्यस्यावरणादेव तदप्रकाशोपपत्तेरिति वाच्यम् । उक्तभङ्ग्या जडस्य साक्षादज्ञानविषयत्वप्रतिक्षेपे-

---

ननु घटादिवृत्तेर्घटाद्यवच्छिन्नचैतन्याविषयकत्वाभावे चैतन्यावारकाज्ञानाभिभावकत्वं न सम्भवति, ज्ञानाज्ञानयोस्समानविषयकत्वाभावादित्यत आह—आवरणाभिभावकत्वं चेति । जडस्याप्यज्ञानविषयत्वमनुभवबलात् स्वीकार्यमित्याह—घटादेरपीति । अवस्थापदं मूलाज्ञानव्यवच्छेदाय । तस्य 'ब्रह्म न जानामि'इति ब्रह्ममात्रविषयकत्वानुभवाद् न जडविषयकत्वमिति भावः । न च तत्रेति । जडवस्तुनीत्यर्थः । न युक्त इति । अज्ञानाश्रयत्वं जडे न युक्तम्, तत्रावरणाभावात्, तदभावश्च फलाभावादित्यर्थः । 'घटं न जानामि'इत्यनुभवस्तु घटतदधिष्ठानचैतन्ययोस्तादात्म्याच्चैतन्यविषयकत्वेनाप्युपपद्यते इति भावः । ननु जडस्यावरणाभावे कथं तदप्रकाशस्सम्भवति । न च तत्प्रकाशकचैतन्यसंसर्गाभावादेवाप्रकाशः, न त्वावरणबलादिति वाच्यम् । जडस्य स्वप्रकाशचैतन्ये अध्यस्ततया तस्य सदाऽवभासकचैतन्यसंसर्गसत्त्वात् । अतो जडस्याप्रकाश एव जडावरणफलमित्यत आह—तद्भासकस्येति । अत्र तच्छब्दत्रयं जडपरम् । उक्तभङ्ग्येति । 'तत्रावरणकृत्याभावादज्ञानाङ्गीकारो न युक्तः'इति वाक्येन जडे साक्षादज्ञानाश्रयत्वस्य साक्षादज्ञानविषयत्वस्य च प्रतिक्षेपेऽपीत्यर्थः । ननु तद्वाक्यस्य जडे साक्षादज्ञानविषयत्वप्रतिक्षेपपरत्वं किमिति कल्प्यते, साक्षात्परम्परासाधारणाज्ञानविषयत्वमात्रप्रतिक्षेपपरत्वसम्भवादित्याशङ्क्य तथा सति 'तद्भासकस्य तदवच्छिन्नचैतन्यस्यावरणादेव तदप्रकाशोपपत्तेः'इत्युत्तरवाक्येन जडेऽपि परम्परया अज्ञानविषयत्वाभ्यु-

ऽपि जडावच्छिन्नचैतन्यप्रकाशस्याज्ञानेनावरणम्, ततो नित्य-चैतन्यप्रकाशसंसर्गेऽपि जडस्य 'नास्ति', 'न प्रकाशते' इत्यादि-व्यवहारयोग्यत्वमिति परम्परया अज्ञानविषयत्वाभ्युपगमात् साक्षात्परम्परया वा यदज्ञानावरणीयम्, तद्विषयत्वस्यैव ज्ञानस्य तदज्ञाननिवर्तकत्वप्रयोजकशरीरे निवेशात् । न चैवं घटादीनामुक्तरीत्या मूलाज्ञानविषयत्वमपीति घटादिसाक्षात्कारादेव मूला-

---

पगमविरोधप्रसङ्गादिसाशयवचनाह—जडावच्छिन्नेत्यादिना । शङ्काग्रन्थे 'तदप्रकाशोपपत्तेः'इत्यनेनांशेन जडे 'अस्ति, प्रकाशते, प्रियं च'इत्येवमात्मकव्यवहारायोग्यत्वलक्षणमावरणमभ्युपगतम् । 'चैतन्यस्यावरणादेव' इत्यनेनांशेन जडावरणस्य कारणत्वेन चैतन्यावरणमभ्युपगतमिति प्रतिपादयति—अज्ञानेनेति । तत इति । चैतन्यावरणादित्यर्थः । चैतन्यस्य स्वप्रकाशतया तस्य यथा सदा प्रसक्तप्रकाशत्वमावरणकल्पकमस्ति, तथा जडस्यापि सदा चैतन्यप्रकाशसंसृष्टतया सदा प्रसक्तप्रकाशत्वमावरणकल्पकं सूचयति—नित्यचैतन्यप्रकाशसंसर्गेऽपीति । इतिशब्दः प्रकारवचनः । ननूक्तरीत्याऽवच्छिन्नचैतन्यनिष्ठमवस्थाऽज्ञानं जडतदवच्छिन्नचैतन्ययोरुभयोरप्यावारकमिति लभ्यते । तथा च घटादिज्ञानस्य जडमात्रविषयकत्वस्वीकारेण तस्याज्ञानेन सह सर्वांशे समानविषयकत्वाभावादज्ञाननिवर्तकत्वं न स्यादित्यत आह—साक्षादिति । ज्ञानस्याज्ञानसमानविषयकत्वमात्रं विरोधप्रयोजकशरीरे प्रविष्टम्, न तु सर्वांशेऽपि समानविषयकत्वम्, गौरवादिति भावः । न चैवमिति । ज्ञानाज्ञानयोस्सर्वांशे समानविषयकत्वानादरे इत्यर्थः । उक्तरीत्येति । अवच्छिन्नचैतन्यस्य स्वरूपेण सत्त्वया ब्रह्मस्वरूपस्यावस्थाऽज्ञानविषयत्ववद् मूलाज्ञानविषयत्वमप्यस्ति । तथा चावस्थाऽज्ञानकृतचैतन्यावरणबलाज्जडस्यापि परम्परयाऽवस्थाऽज्ञानविषयत्वमित्युक्तरीत्या मूलाज्ञानकृतचैतन्यावरणबलाद् मूलाज्ञानविषयत्वमपि जडस्य घटादेरपरिहार्यं स्यादित्यर्थः । ततः किम्, तत्राह—घटादीति । यथा अवस्थाऽज्ञानं प्रति परम्परया विषयभूतजडसाक्षात्कारादेवावच्छिन्नचैतन्यनिष्ठावस्थाऽज्ञानस्य निवृत्तिः, तथा मूलाज्ञानं प्रत्यपि परम्परया विषयभूतजडसाक्षात्कारादेव ब्रह्मचैतन्यनिष्ठमूलाज्ञानस्यापि निवृत्त्यापात इत्यर्थः । 'मूलाज्ञाननिवृत्त्यापातो न च'इत्यत्र

ज्ञाननिवृत्त्यापातः । फलबलात्तदज्ञानकार्यातिरिक्ततद्विषयाविषयकत्वस्यैव तन्निवर्तकत्वे तन्त्रत्वात् ॥

(वे०सू०मं०) मूलाज्ञानस्य विषयो जड एवाथवाऽन्यथा ॥
चक्षुषा सौरभं भायाद्वृत्तिर्व्यक्तचिदन्वयात् ॥ २९ ॥

अथवा मूलाज्ञानस्यैव जडं न विषयः । अवस्थाऽज्ञानानां त्ववच्छिन्नचैतन्याश्रितानां तत्तज्जडमेव विषयः । अन्यथा चाक्षुषवृत्त्या चन्दनखण्डचैतन्याभिव्यक्तौ तत्संसर्गिणो गन्धस्याप्यापरोक्ष्यापत्तेः । तदनभिव्यक्तौ चन्दनतद्रूपयोरप्यप्रका-

---

हेतुमाह—फलबलादित्यादिना । घटादिसाक्षात्कारे सत्यपि मूलाज्ञानानुवृत्तिरूपफलबलादित्यर्थः । मूलाज्ञानतत्कार्यातिरिक्तो यो मूलाज्ञानविषयश्चिन्मात्रम्, तद्विषयकत्वस्यैव ज्ञाने मूलाज्ञाननिवर्तकत्वे तन्त्रत्वकल्पनाद्, घटादिसाक्षात्कारे च तदभावाद् न मूलाज्ञाननिवर्तकत्वापत्तिरित्यर्थः ॥

'जडमात्रगोचरवृत्त्या कथमवच्छिन्नचैतन्यावारकाज्ञाननिवृत्तिः, भिन्नविषयत्वाद्' इति शङ्कायामवस्थाऽज्ञानमवच्छिन्नचैतन्यावरणद्वारा जडमप्यावृणोति । अतो जडमात्रगोचरयाऽपि वृत्त्या अवस्थाऽज्ञाननिवृत्तिसम्भवतीति प्रतिपादितम् । इदानीं तस्यामेव शङ्कायां प्रकारान्तरेण समाधानं दर्शयति—अथवेति । अथवा अवस्थाऽज्ञानानां तत्तज्जडमेव विषय इति सम्बन्धः । 'घटं न जानामि' इत्यादिपूर्वोक्तानुभवादेवेति भावः । तर्ह्यवस्थाऽज्ञानानामाश्रयोऽपि तत्तज्जडमेव स्यात्, तथाचापसिद्धान्त इत्यत आह—अवच्छिन्नचैतन्याश्रितानामिति । ननु जडस्याज्ञानविषयत्वोपगमे 'जडमज्ञानस्य विषयो न भवति' इतिसिद्धान्तस्य का गतिरत आह—मूलाज्ञानस्यैवेति । जडस्याज्ञानाविषयत्वसिद्धान्तो मूलाज्ञानमात्रविषय इति भावः । अन्यथेति । जडस्यानावृतत्वे इत्यर्थः । चन्दनखण्डगोचरचाक्षुषवृत्त्या तदवच्छिन्नचैतन्यमभिव्यज्यते, न वा । आद्ये दोषमाह तत्संसर्गिण इति । चन्दननिष्ठगन्धस्यापि चन्दनस्येवापरोक्ष्यापत्तिः । अभिव्यक्तचैतन्यसंसर्गित्वस्योभयत्राविशेषात् । जडस्यावृतत्वपक्षे तु नायं दोषः । चाक्षुषवृत्त्या गन्धावरणानिवृत्तेरित्यर्थः । द्वितीये दोषमाह—तदनभिव्यक्ताविति । अप्रकाशापत्तेरिति । चन्दनगोचरचाक्षुषवृत्तिकाले चन्दनतद्रूपप्रकाशाभावोऽनिष्ट इति

शापत्तेः । न च चाक्षुषवृत्त्या चन्दनतद्रूपावच्छिन्नचैतन्ययोरभिव्यक्त्या तयोः प्रकाशः, गन्धाकारवृत्त्यभावेन गन्धावच्छिन्नचैतन्यस्यानभिव्यक्त्या तस्याप्रकाशश्चेति वाच्यम् । चैतन्यस्य द्विगुणीकृत्य वृत्त्ययोगेन एकद्रव्यगुणानां स्वाश्रये सर्वत्र व्याप्य वर्तमानानां पृथक् पृथग् गगनावच्छेदकत्वस्येव चैतन्यावच्छेदकत्वस्याप्यसम्भवात् । तेषां स्वाश्रयद्रव्यावच्छिन्नचैतन्येनैव शुक्तीदमंशावच्छिन्नचैतन्येन शुक्तिरजतवत् प्रकाश्यतया तस्याभिव्यक्तौ गन्धस्यापि प्रकाशस्य, अनभिव्यक्तौ रजतादेरप्यप्रकाशस्य चापत्तेः । न च गन्धाकारवृत्त्युपरक्ते एव चैतन्ये गन्धः प्रकाशते इति नियमः, प्र-

भावः । चन्दनखण्डघटपटादिद्रव्याणामिवैकद्रव्यवृत्तिगुणानामपि चैतन्यावच्छेदकत्वमस्तीत्यभिप्रेत्याशङ्कते—न चेति । एकत्र द्रव्ये रूपरसगन्धादिभेदेन चैतन्यभेदो नास्ति, मानाभावादित्याह—चैतन्यस्येति । चैतन्यस्य निरवयवतया द्रव्ये द्रव्यावच्छेदेनैका, गुणावच्छेदेनापरा वृत्तिर्न सम्भवतीत्यर्थः । यद्येकत्र द्रव्ये प्रदेशभेदेन गन्धादयः स्युः, तदा तत्र द्रव्ये गन्धादिभेदेन चैतन्यभेदशङ्काऽपि स्यात्, न त्वेतदस्ति । गन्धादीनां व्याप्यवृत्तित्वानुभवादित्याशयेनाह—व्याप्येति । गगनेति । यथा घटादिद्रव्याणां गगनभेदकत्वमस्ति, तथा गन्धादीनां गगनभेदकत्वं नास्ति । गन्धादिभेदेन गगनभेदाननुभवादिति भावः । गन्धादिभेदेन चैतन्यभेदाभावे सिद्धे चन्दनचैतन्याभिव्यक्त्यनभिव्यक्तिकृतौ पूर्वोक्तदोषौ दुष्परिहरावित्याह—तेषामिति । शुक्तीति ।

यथा शुक्तीदमंशावच्छिन्नचैतन्ये रजतस्याध्यासाद् रजतं शुक्तीदमंशचैतन्येनैवावभास्यं, न त्विदमंशावच्छिन्नचैतन्यापेक्षया पृथग्भूतेन स्वावच्छिन्नचैतन्येनावभास्यम्, तथा द्रव्यावच्छिन्नचैतन्ये कल्पिता रूपादयोऽपि द्रव्यावच्छिन्नचैतन्येनैव प्रकाश्या इत्यर्थः ।

ननु चन्दनगन्धस्याभिव्यक्तचैतन्यप्रकाशसंसृष्टस्यापि गन्धगोचरवृत्त्यभावादेवापरोक्ष्याभाव इति शङ्कामनूद्य निराकरोति—न च गन्धाकारेति । 'नियमो न च' इत्यत्र हेतुमाह—प्रकाशसंसर्गस्यैवेति । न तु

काशसंसर्गस्यैव प्रकाशमानशब्दार्थत्वेनासत्यामपि तदाकारवृत्त्या-वनावृतप्रकाशसंसर्गे अप्रकाशमानत्वकल्पनस्य विरुद्धत्वात् । अ-भिव्यक्तस्य गन्धोपादानचैतन्यस्य गन्धासंसर्गोक्त्यसम्भवात् । त-स्माद् यथा चैत्रस्य घटवृत्तौ तं प्रत्यावरकस्यैवाज्ञानस्य निवृत्ति-रिति तस्यैव विषयप्रकाशो, नान्यस्य, तथा तत्तद्विषयाकारवृत्त्या तत्तदावरकाज्ञानस्यैव निवृत्तेर्न विषयान्तरस्यापरोक्ष्यम्, 'अना-वृतार्थस्यैव संविदभेदाद् आपरोक्ष्यम्' इत्यभ्युपगमादिति । प्रमातृ-भेदेनेव विषयभेदेनाप्येकेत्र चैतन्ये अवस्थाऽज्ञानभेदस्य वक्त-

---

वृत्त्युपहितानावृतप्रकाशसंसर्गस्य प्रकाशमाननाशब्दार्थत्वम्, सुखादिगोचर-वृत्त्यनुपहितसाक्षिप्रकाशसंसर्गिणि सुखादौ प्रकाशमानशब्दार्थत्वाभावप्रस-ङ्गादित्यर्थः । गन्धस्याभिव्यक्तचैतन्यसंसर्ग एव नास्तीत्याशङ्क्याह—अभि-व्यक्तस्य चेति । चकारस्यासम्भवादित्यनेन सम्बन्धः । उपादानपदम-धिष्ठानपरम् । असम्भवादिति । तथा च जडस्यानावृतत्वपक्षे च-न्दनचैतन्याभिव्यक्तिदशायां गन्धस्याप्यापरोक्ष्यापत्तिरपरिहार्येति भा-वः । जडस्यावृतत्वपक्षे तु नोक्तदोषप्रसक्तिरित्याह-तस्मादिति । जडे आवरणस्य सिद्धत्वादित्यर्थः । ननु जडस्यावृतत्वपक्षेऽपि चन्दनगोचरचा-क्षुषवृत्त्यैव गन्धावरणस्यापि निवृत्तिः स्यात् । गुणगुणिनोस्तादात्म्यात् । तथा च चन्दनापरोक्ष्यदशायां तद्गन्धापरोक्ष्यदोषोऽत्रापि तुल्य इति शङ्कां दृष्टान्तेन परिहरति-यथेति । नान्यं प्रति सावारकाज्ञानस्यापि निवृत्ति-रित्येवकारार्थः । तस्यैवेति । चैत्रस्यैव घटप्रकाशः, नान्यस्य मैत्रादेरि-त्यर्थः । तथेति । गुणगुणिनोस्तादात्म्येऽपि भेदस्यापि सत्त्वाद् न च-न्दनगोचरवृत्त्या गन्धादेरापरोक्ष्यप्रसक्तिरित्यर्थः । ननु चन्दनसंविदभिन्न-स्य गन्धस्यावृतस्यापि कथं नापरोक्ष्यमित्याशङ्क्यानावृतसुखादावेव संवि-दभेदस्यापरोक्ष्यप्रयोजकत्वदर्शनाद् मैवमित्याह—अनावृतार्थस्यैवेति । नन्वेकत्र चन्दनावच्छिन्नचैतन्येऽवस्थाऽज्ञानस्य चैत्रं प्रति चन्दनावरकस्यैक-त्वात्तस्य च चन्दनगोचरवृत्त्या निवृत्तत्वाच्चन्दनवृत्तिकाले गन्धस्यावरणम-युक्तमित्याशङ्कां निराकरोति—इति, प्रमातृभेदेनेवेति । यथा एकत्र विषये चैत्रमैत्रादिभेदेनाज्ञानमनेकमस्ति, तथा एकत्रापि चन्दनावच्छिन्नचैतन्ये ग-

व्यतया अवस्थाऽज्ञानानां तत्तज्जडविषयकत्वमिति घटादिवृत्तीनां नावस्थाऽज्ञाननिवर्तकत्वे काचिदनुपपत्तिः । न वा मूलाज्ञान-निवर्तकत्वापत्तिः ।

(वे॰सू॰मं॰) साक्षिणः स्वप्रकाशत्वान्नाहंवृत्त्याऽपि तत्क्षयः ॥
तथा कालादिवैशिष्ट्यगोचरप्रत्यभिज्ञया ॥ ३० ॥

न चैवमपि जीवविषयाया अहमाकारवृत्तेर्मूलाज्ञाननिवर्तकत्वापत्तिः । तस्याः स्वयंप्रकाशमानचित्संवलिताचिदंशमात्र-

न्धादिविषयभेदेनाप्यज्ञानमनेकमस्तीति वक्तव्यम् । चन्दनापरोक्ष्यदशायां गन्धापरोक्ष्यादर्शनादेवेत्ययं हेतुः प्रकृतपरामर्शिना इतिपदेन समर्प्यते । तथा च चन्दनापरोक्ष्यकाले गन्धादेरावरणसम्भवाद् नोक्तदोष इति भावः । जड-विषयकत्वमितीति । जडविषयकत्वादित्यर्थः । न काचिदनुपप-त्तिरिति ।

घटादिवृत्तीनां चैतन्यविषयकत्वाभावे ज्ञानाज्ञानयोस्समानविषयकत्वरूपं विरोधप्रयोजकं न सम्भवति । तासां जडमात्रगोचरत्वादज्ञानस्य च चैतन्यमात्रविषयकत्वाभ्युपगमात् । तथा जडस्यावरणाभ्युपगमे अपसिद्धान्तापत्तिरूपानुपपत्तिरपि नास्ति । जडावरणानभ्युपगमस्य मूलाज्ञानविषयत्वात् । तथा तत्तज्जडावारकाज्ञाननानात्वाभ्युपगमे तदेकत्वसिद्धान्तविरोधरूपानुपपत्तिरपि नास्ति, तदेकत्वादिस्यादिकमभिप्रेत्य न काचिदनुपपत्तिरित्युक्तम् ।

परमप्रकृतमाह—न वेति । घटादिवृत्तीनामपि मूलाज्ञाननिवर्तकत्वापत्तिरिति यत् पूर्ववादिनश्चोद्यमादौ प्रकृतम्, तद् नास्त्येव । घटादिवृत्तीनां मूलाज्ञानाविषयचैतन्याविषयकत्वानभ्युपगमादित्यर्थः ।

न चैवमपीति । घटादिवृत्तीनां चैतन्यविषयकत्वाभावेऽप्यहमर्थरूपजीवस्य चिदचित्संवलितरूपतया अहंवृत्तेश्चैतन्यविषयकत्वावश्यम्भावादित्यर्थः । तस्या इति । स्वप्रकाशतया स्वयमेव प्रकाशमानायां चिति चित्संवलितश्चित्तादात्म्येनाध्यस्तो योऽयमचिदंशः, तन्मात्रविषयकत्वादहमाकारवृत्तेर्न तस्या अपि चैतन्यविषयकत्वम् । औपनिषदत्वश्रुतिविरोधादेवेत्यर्थः । ननु 'योऽहं स्वप्ने श्रीकृष्णमन्वभूवम् सोऽहं जागरे तं स्मरामि' इत्यादिप्रत्यभिज्ञायाश्चैतन्यविषयकत्वमावश्य-

विषयत्वात् । 'सोऽहम्'इति प्रत्यभिज्ञाया अपि स्वयम्प्रकाश-चैतन्ये अन्तःकरणवैशिष्ट्येन सह पूर्वापरकालवैशिष्ट्यमात्रवि-षयत्वेन चैतन्यविषयत्वाभावादिति ॥

(वे०सू०सं०) केचिच्छ्रोतव्यनियमादृष्टदोषक्षयान्वितम् ॥
वाक्यजं ज्ञानमेवाहुर्मूलाज्ञाननिबर्हणम् ॥ ३१ ॥

केचित्तु घटादिवृत्तीनां तत्तदवच्छिन्नचैतन्यविषयत्वमभ्युपगम्य—

---

कम् । अन्यथा तथा चिदात्मनः स्थायित्वं संघातव्यतिरिक्तत्वं च न सिध्येदित्यत आह—सोऽहमिति । प्रत्यभिज्ञाऽपि स्वयमेव प्रकाशमाने चैतन्ये 'अहम्'इति अन्तःकरणतादात्म्यमिव तत्तादिवैशिष्ट्यमपि विषयी-करोति, नतु स्वप्रकाशचैतन्यम् । अस्मिन्मते चिदात्मनः स्थायित्वादेश्श्रु-तिबलादेव सिद्धिः, न प्रत्यभिज्ञया इति बोध्यम् ॥

'घटादिवृत्तीनामपि चैतन्यविषयकत्वाविशेषाद्वेदान्तजन्यज्ञानवन्मूला-ज्ञाननिवर्तकत्वापत्तिः'इति चोद्ये 'हेतोरेवासत्त्वान्नोक्तातिप्रसङ्गः'इति समाधा-नमुक्तम् । इदानीं तासां चैतन्यविषयकत्वाभ्युपगमेऽपि नोक्तातिप्रसङ्ग इ-त्याह-केचित्त्विति। अभ्युपगम्येति । न चैवमभ्युपगमे चैतन्यस्य चक्षुरा-दिविषयत्वनिषेधश्रुतीनां बाधः स्यादिति वाच्यम् । तासां निरुपाधिकचैत-न्यविषयत्वाभ्युपगमेनावच्छिन्नचैतन्यस्य चक्षुरादिवृत्तिविषयत्वे तद्विरोधा-भावादिति भावः । अत एव ब्रह्मचैतन्यस्य सर्वप्रत्ययवेद्यत्वप्रतिपादकपूर्वो-दाहृतवार्तिकवचनमपि सङ्गच्छते । अज्ञातज्ञापकत्वं हि प्रामाण्यम् । अज्ञानं च वस्तुचैतन्यमेव । तस्यैव स्वप्रकाशतया सदा प्रसक्तप्रकाशस्याज्ञानविष-यत्वकल्पनौचित्यात् । अवभासकचैतन्यस्यावरणे सति जडानवभाससम्भवे-न तस्य पृथगावरणकल्पनायोगात् । अज्ञानस्य चैतन्याश्रितत्वनियमेन तस्य तमस इव स्वाश्रयादन्यत्रावरणहेतुत्वानुपपत्तेश्च । तथा च प्रत्यक्षादीनामपि प्रामाण्यसिद्धये घटाद्यवच्छिन्नचैतन्यविषयकत्वमेव स्वीकर्तव्यम्, न तु जडमा-त्रविषयकत्वम् । एवं सर्वेषामेव मानानां फलशब्दितचैतन्यविषयकत्वादमृ-तत्वसाधने ब्रह्मदर्शने सर्वेषां मानानां कारणत्वप्रसक्तौ वेदान्तानामेवावरोधेच्छ-या नियमनेच्छया श्रोतव्येतिवचः 'वेदान्तानामेव विचारः कर्तव्यः' इत्यमुमर्थ-माहेति वार्तिकार्थः । घटादिवृत्तीनां तु चैतन्यविषयकत्वेऽपि वेदान्तजन्यत्वा-भावेन श्रोतव्यविधिसिद्धनियमादृष्टमहिमाभावान्न मूलाज्ञाननिवर्तकत्व-

'सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात् ।
श्रोतव्येतिवचः प्राह वेदान्तावरुरुत्सया' ॥ इति–

वार्तिकोक्तेः श्रोतव्यवाक्यार्थवेदान्तनियमविध्यनुसारेण वेदान्तजन्यमेव नियमादृष्टसहितं ब्रह्मज्ञानमप्रतिबद्धं ब्रह्माज्ञाननिवर्तकमिति घटादिज्ञानान्न तन्निवृत्तिप्रसङ्ग इत्याहुः ॥

(वे०सू०मं०) अन्ये स्वरूपसम्बन्धाद्वैजात्याद्वा ऽपि वाक्यजात् ॥
अखण्डाकारकं ज्ञानमाचख्युस्तन्निवर्तकम् ॥ ३२ ॥

अन्ये तु तत्त्वमस्यादिवाक्यजन्यं जीवब्रह्माभेदगोचरमेव ज्ञानं मूलाज्ञाननिवर्तकम्, मूलाज्ञानस्य तदभेदगोचरत्वादिति न चैतन्यस्वरूपमात्रगोचराद घटादिज्ञानात्तन्निवृत्तिप्रसङ्गः । न चाभेदस्य तत्त्वावेदकप्रमाणबोध्यस्य चैतन्यातिरेके द्वैतापत्तेः 'चैतन्यमात्रमभेदः' इति तद्गोचरं घटादिज्ञानमप्यभेदगोचरमिति वा-

---

प्रसङ्ग इति भावः । अप्रतिबद्धमिति । नियमादृष्टेन प्रतिबन्धकदुरितस्य क्षीणत्वादिति भावः ॥

'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्'इति —
नारदवचनदर्शनात्,
'तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥' इति—

भगवत्पादीयवचनदर्शनाच्च मूलाज्ञानस्य जीवब्रह्माभेदावारकत्वाच्च जीवब्रह्मणोरैक्यलक्षणतादात्म्यविषयकं यज् ज्ञानम्, इदमेव मुक्तिसाधनम्, अतो नोक्तातिप्रसङ्ग इति समाधानान्तरं दर्शयति–अन्ये त्विति । इतीति । 'वाक्यजन्याभेदज्ञानमेवाज्ञाननिवर्तकम्'इति स्थिते तदभेदागोचराद्घटादिज्ञानाद् न मूलाज्ञाननिवृत्तिप्रसङ्ग इत्यर्थः । न चेति । जीवब्रह्माभेदश्चैतन्यापेक्षया अतिरिक्त इति वक्तुं न शक्यते । तथा सति वेदान्ततात्पर्यगोचरस्य अभेदस्य सत्यत्वावश्यंभावेन चैतन्यस्याद्वितीयत्वहानापत्तेः, वेदान्ततात्पर्यविषयस्याभेदस्यासत्त्वे वेदान्तानां तत्त्वावेदकत्वलक्षणस्य प्रामाण्यस्य सिद्धान्तसम्मतस्य भङ्गापत्तेरित्यर्थः । अत्र तत्पदं परमार्थवस्तुपरम् । न हीति ।

च्यम् । न ह्यभेदज्ञानमिति विषयतो विशेषं ब्रूमः, किं तु

'घटादिज्ञाने चैतन्यविषयकेऽपि जीवब्रह्माभेदो न विषयः, महावाक्यार्थज्ञाने तु तयोरभेदो विषयः' इत्येवं घटादिज्ञानापेक्षया महावाक्यजन्यज्ञानस्य विषयतो विशेषं न ब्रूमः, येनोक्तदोषतादवस्थ्यं स्यादित्यर्थः । ननु 'इदं रजतम्'इतिभ्रमे यावानधिष्ठानांशो भासते, तावदपेक्षया अधिकशुक्तित्वादिविशेषविषयकस्य शुक्त्यादिज्ञानस्य रजतादिभ्रमविरोधित्वं दृष्टम् । तथा च 'सन् घटः', 'स्फुरति घटः' इत्यादिभ्रमेषु यावदधिष्ठानभूतं चैतन्यं विषयः, तावदपेक्षया अधिकाभेदविषयकत्वस्य वाक्यजन्यज्ञानेऽनभ्युपगमे वाक्योत्थज्ञानस्य 'भ्रमनिवर्तकत्वमेव न स्यात् । अतो विषयतो विशेषोऽभ्युपगन्तव्य इति शङ्कते—किं त्विति । भ्रमाधिकविषयाणामेव ज्ञानानां भ्रमनिवर्तकत्वम्'इति नियमो नास्ति । भ्रमानधिकविषयाणामपि भ्रमनिवर्तकत्वदर्शनेन व्यभिचारात् ।

तथाहि—वस्तुतो घोषाधारभूते गङ्गातीरे यस्य तटाकतीरत्वभ्रमेण 'तटाकतीरे घोषः' इति भ्रमोऽस्ति, तं प्रति 'गङ्गायां घोषः' इतिवाक्यप्रयोगे सति तस्माद्वाक्यात्तस्य पुरुषस्य 'गङ्गातीरे घोषः' इति बोधो जायते । तेन च बोधेन तस्य गङ्गातीरे तटाकतीरत्वभ्रमो निवर्तते । न च तत्र भ्रमविषयगङ्गातीरांशे भ्रमापेक्षया वाक्यजन्यबोधे कश्चिद्विशेषो विषयो दृष्टः । न च तत्र वाक्यजन्यज्ञाने तटाकतीरव्यावर्तकस्य गङ्गातीरत्वरूपविशेषस्य विषयत्वदर्शनाद्विशेषाविषयकत्वमसिद्धमिति वाच्यम् । यत्र तीरत्वमात्रप्रकारतातात्पर्येण 'गङ्गायां घोषः' इतिप्रयोगः, तथैव तस्य भ्रान्तस्य तात्पर्यग्रहश्च, तत्र गङ्गातीरत्वप्रकारकबोधाभावेऽपि भ्रमनिवृत्तिदर्शनेन व्यभिचारध्रौव्यात् । तथा 'येन केनचित् कपालेन तुषोपवापः कर्तव्यः' इति भ्रमवन्तं पुरुषं प्रति कपालत्वमात्रप्रकारकत्वतात्पर्येण प्रयुक्तात्तन्मात्रतात्पर्यवत्तया गृहीतात् "पुरोडाशकपालेन तुषानुपवपति"इतिवाक्याद् 'कपालेन तुषोपवापः कर्तव्यः' इत्येव तस्य पुरुषस्य बोधो जायते । तत्र कपालांशे कपालान्तरव्यावर्तकविशेषाग्रहणेऽपि पुरोडाशकपालातिरिक्तकपालेषु तुषोपवापसाधनत्वभ्रमनिवृत्तिदर्शनेन तत्रापि व्यभिचारात् । तस्मात् 'तीरे घोषः' इतिशाब्दबोधस्य गङ्गातीरत्वरूपविशेषविषयकत्वाभावेऽपि तद्धेतुपदार्थोपस्थितिकाले तीरस्य गङ्गासम्बन्धित्वेनोपस्थितत्वात्तदुपस्थितिमहिम्ना वस्तुगत्या गङ्गातीरविषयकस्य भ्रमानधिकविषयस्यापि तस्य भ्रमनिवर्तकत्वमिति वक्तव्यम् ।

तत्त्वंपदवाच्यार्थधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनेन स्वरूपसंबन्धविशेषेण चैतन्यविषयत्वमेव तदभेदज्ञानत्वम् । यथा हि

---

तथा 'कपालेन तुषोपवापः कर्तव्यः' इतिशाब्दबोधस्य स्वयं कपालान्तरव्यावर्तकविशेषविषयकत्वाभावेऽपि तादृशशाब्दबोधहेतुपदार्थोपस्थितिकाले कपालस्य पुरोडाशसम्बन्धित्वेनोपस्थितिसत्त्वात्तदुपस्थितिमहिम्ना तस्य भ्रमानधिकविषयस्यापि भ्रमनिवर्तकत्वमिति वक्तव्यम् । तथा च ज्ञानस्य भ्रमविरोधित्वे सामग्रीविशेषप्रयोज्यत्वं प्रयोजकम्, न तु भ्रमाधिकविषयत्वम् । व्यभिचारात् । किं च महावाक्यजन्यज्ञानस्य संसारमूलभ्रमविरोधित्वं श्रुतिस्मृतिविद्वदनुभवैःसिद्धम्, महावाक्यानां च चैतन्यस्वरूपमात्रबोधकत्वं द्वितीयपरिच्छेदे मुक्तिसाधनमहावाक्यजन्यज्ञानं प्रति चैतन्यमात्ररूपविषयनियामकश्रुत्युदाहरणेनास्माभिस्साधितम् । प्रपञ्चितं च निबन्धनेष्वेतत् । तथा च शुक्तिरजतादिस्थले भ्रमाधिकविषयशुक्तिज्ञानादौ भ्रमविरोधिनि भ्रमाधिकविषयत्वस्येव दोषाभावादिघटितसामग्रीविशेषाधीनत्वस्यापि दृष्टत्वेनाखण्डार्थकवेदान्तानुसारेण पूर्वोदाहृतव्यभिचारस्थलानुरोधेन च ज्ञानस्य भ्रमविरोधित्वे सामग्रीविशेषाधीनत्वमेवानुगतं प्रयोजकं कल्पयितुं युक्तम्, न तु भ्रमाधिकविषयत्वमित्यभिप्रेत्य महावाक्यार्थज्ञानस्य भ्रमानधिकविषयस्यापि भ्रमनिवर्तकत्वं सम्भवतीति समाधत्ते—तत्त्वमिति । तत्त्वंपदयोर्वाच्यार्थभूतौ जीवेश्वरावेव धर्मिद्वयम् । तस्य तत्त्वंपदाभ्यां प्रथमं शक्त्या स्मृतिरूपः परामर्शः, तदनन्तरं तत्त्वंपदसामानाधिकरण्यबलाद् 'जीव ईश्वराभिन्नः' इति तयोर्विशेषणविशेष्यभावेनावगतिः, तदनन्तरं च विशिष्टयोरैक्यं न सम्भवतीति विरोधप्रतीतिः, तदनन्तरं च तत्त्वंपदाभ्यां वाच्यार्थरूपविशिष्टान्तर्गतयोर्विशेष्यचैतन्यांशयोरभेदयोग्ययोर्लक्षणया प्रतीतिः, ततश्च विशेष्यद्वयाभेदगोचरशाब्दबोध इति क्रममभिप्रेत्यादिपदम् । वाक्यजन्यज्ञानस्य स्वविषयचैतन्येन सह यः स्वरूपसम्बन्धविशेषः सामग्रीविशेषाधीनत्वप्रयुक्तः, तेन सम्बन्धेन चैतन्यगोचरत्वं घटज्ञानादिव्यावृत्तम्, तदेव तस्याभेदज्ञानत्वम्, तद्बलादेव तस्य मूलाज्ञानमिथ्याज्ञानादिविरोधित्वमित्यर्थः । महावाक्यजन्यज्ञानस्य घटादिज्ञानापेक्षया चैतन्यांशे विषयतो विशेषाभावेऽपि सामग्रीविशेषादेव घटादिज्ञानापेक्षया

विशेषणविशेष्यतत्सम्बन्धगोचरत्वाविशेषेऽपि विशिष्टज्ञानस्य विशेषणज्ञानादिकारणविशेषाधीनस्वरूपसम्बन्धविशेषेण तत्रितयगोचरत्वमेव समूहालम्बनव्यावृत्तं विशिष्टज्ञानत्वम्, यथा वा 'स्थाणुत्वपुरुषत्ववान्' इति आहार्यवृत्तिव्यावृत्तं संशयत्वं विषयतो विशेषानिरूपणात्, तथा घटादावपि 'सोऽयं घटः' इत्यादिज्ञानस्य स्वरूपसम्बन्धविशेषेण घटादिविषयत्वमेव केवलघटशब्दादिजन्यज्ञानव्यावृत्तं तदभेदज्ञानत्वम् । अतिरिक्ताभेदानिरूपणात् ।

---

भेदज्ञानत्वरूपे वैलक्षण्ये दृष्टान्तमाह—यथा हीति । विशिष्टज्ञानस्येति । 'दण्डी पुरुषः' इति ज्ञानस्येत्यर्थः । विशेषणविशेष्ययोरसंसर्गाग्रह आदिपदार्थः । समूहालम्बनेति । 'दण्डपुरुषसंयोगाः' इति ज्ञानेत्यर्थः । तदुक्तं चिन्तामणिकृता—'कारणकृतः' इति । विशिष्टज्ञानस्य समूहालम्बनापेक्षया विशेषणज्ञानादिरूपकारणकृतो विशेष इति तदर्थः । स्थाणुत्वेति । 'स्थाणुत्वविरुद्धपुरुषत्ववान्' इति निश्चयस्संशयसमानविषयको य आहार्यवृत्तिरूपस्तद्व्यावृत्तमित्यर्थः । विशेषदर्शनदशायामनाहार्यनिश्चयासम्भवादाहार्येत्युक्तम् । विषयत इति । विशिष्टज्ञाने, 'स्थाणुः पुरुषो वा' इतिसंशये चेति शेषः । न केवलं तत्त्वमसिवाक्यजन्यज्ञानस्याभेदज्ञानत्वे इयं रीतिः 'सोऽयं घटः' 'सोऽयं देवदत्तः' इत्यादिवाक्यजन्यज्ञानस्यापि केवलघटशब्ददेवदत्तशब्दादिजन्यज्ञानव्यावृत्ताभेदज्ञानत्वेऽपीयं रीतिरनुसर्तव्येत्याह—तथा घटादावपीति । अतिरिक्तेति । केवलघटशब्ददेवदत्तशब्दादिजन्यज्ञानविषयघटादिस्वरूपापेक्षया 'सोऽयम्' इति वाक्यगम्याभेदस्यातिरिक्तत्वे मानाभावात् । तथा च विषयतो विशेषासम्भवात् 'सोऽयं घटः' इत्यादावपि 'तत्त्वमसि' इत्यत्रेव 'सोऽयम्' इतिपदद्वयवाच्यार्थरूपधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनस्वरूपसम्बन्धविशेषेण घटादिस्वरूपविषयकत्वमेव घटाद्यभेदज्ञानत्वम्, नान्यदिति वक्तव्यमिति भावः । ननु केवलघटशब्दादिजन्यज्ञानस्यापि विषयेण स्वरूपसम्बन्ध एव । तथा च कथं स्वरूपसम्बन्धकृताभेदज्ञानत्वादिव्यवस्था । न च वृत्तिज्ञानानां विषयैस्सह विषयविषयिभावप्रयोजकस्वरूपसम्बन्धानामविशेषेऽपि तेष्वेव विषयतज्ज्ञानस्वरूपात्मकसम्बन्धेषु सामग्रीविशेषाधीनत्वप्रयुक्तपरस्परवैलक्षण्यकल्पनया व्यवस्थोपपा-

अभावसादृश्यादीनामधिकरणप्रतियोग्यादिभिः स्वरूपसम्बन्धयुक्तानामधिकरणेनाधाराधेयभावरूपः स्वरूपसम्बन्धविशेषः, प्रतियोगिना प्रतियोग्यनुयोगिभावरूप इत्यादिप्रकारेण स्वरूपसम्बन्धे अवान्तरविशेषकल्पनावद् वृत्तीनां विषयेऽपि संयोगतादात्म्ययोरतिप्रसक्त्या विषयैर्विषयविषयिभावरूपस्वरूपसम्बन्धवर्तीनां विषयविशेषनिरूपणासम्भवे क्लृप्ते एव स्वरूपसम्बन्धे

दनं कर्तुं शक्यते इति वाच्यम् । स्वरूपसम्बन्धेषु वैलक्षण्यस्य काप्यदृष्टत्वेन तथाकल्पनानुपपत्तेरित्यत आह—अभावसादृश्यादीनामिति । ननु वृत्तीनां विषयैस्सह विषयविषयिभावः स्वरूपसम्बन्धकृत एव न भवति, किं तु संयोगादिकृतः । तथा च तासां तैस्सह स्वरूपसम्बन्धानामेवासिद्धत्वात्तेषु वैलक्षण्यात्मकविशेषकल्पना दूरापास्तेत्यत आह—संयोगेति । वृत्तिसंयोगस्य वृत्तिविषयत्वप्रयोजकत्वे चक्षुर्गोलकादेरपि घटादिवृत्तिसंयोगित्वेन तद्विषयत्वप्रसङ्गाद्वृत्तितादात्म्यस्य वृत्तिविषयत्वप्रयोजकत्वे वृत्त्यधिष्ठानतया वृत्तितादात्म्यापन्नस्य घटाद्यवच्छिन्नचैतन्यस्य घटादिवृत्तिविषयत्वसम्भवेऽपि घटादेर्वृत्तितादात्म्यरहितस्य तदविषयत्वप्रसङ्गात्तद्वृत्तिपरिणाम्यन्तःकरणस्य घटादिवृत्तिविषयत्वप्रसङ्गाच्च परिणामपरिणामिनोस्तादात्म्यादित्यर्थः । ननु तत्त्वमस्यादिवाक्यजन्यज्ञानस्य विषयेण सह यःस्वरूपसम्बन्धश्चैतन्यगद्गोचरज्ञानस्योभयस्वरूपात्मकः तत्र सामग्रीविशेषबलादपि विषयस्वरूपात्मके सम्बन्धे विशेषो निरूपयितुं न शक्यत इत्यत आह—विषयविशेषनिरूपणासम्भव इति । विषये निर्विशेषचैतन्यात्मके विशेषाधानासम्भवेऽपि स्वरूपसम्बन्धान्तर्गततया क्लृप्ते एव ज्ञानस्वरूपात्मके सम्बन्धे सामग्रीविशेषबलाद्विशेषाधानसम्भवान्नोक्तदोष इति भावः ।

यद्वा वृत्तीनां विषयेऽपि संयोगतादात्म्ययोरतिप्रसक्त्या विषयविशेषनिरूपणासंभवे विषयैर्विषयविषयिभावरूपस्वरूपसम्बन्धवर्तीनामिति सम्बन्धः । अभावसादृश्यादीनामधिकरणादाविव वृत्तीनामपि विषये संयोगतादात्म्ययोरतिप्रसक्तत्वेन ताभ्यां वृत्तीः प्रति विषयविशेषनियमनासम्भवे सति परिशेषाद्विषयविषयिभावप्रयोजकस्वरूपसम्बन्धवर्तीनामित्यर्थः । रूपपदं नियामकपरम् । विषयविषयिभावस्य स्वरूपसम्बन्धनियम्यत्वेन तयोर-

अवान्तरविशेषकल्पनेनाभेदज्ञानत्वादिपरस्परवैलक्षण्यनिर्वाहाच्च । एवं च ब्रह्मज्ञानस्याभेदाख्यकिञ्चित्संसर्गगोचरत्वानभ्युपगमाद् न वेदान्तानामखण्डार्थत्वहानिरपीत्याहुः ॥

(वे०सू०मं०) ननु स्वहेतुमज्ञानं विरोधात्सा कथं हरेत् ॥
वृत्तिर्मैवं विरुद्धत्वाद्वह्निसंयोगवत् पटे ॥ ३३ ॥

ननु घटादिज्ञानवद् ब्रह्मज्ञानस्यापि न मूलाज्ञाननिवर्तकत्वं युक्तम् । निवर्तकत्वे तदवस्थानासहिष्णुत्वरूपस्य विरोधस्य तन्त्रत्वात्, कार्यस्य चोपादानेन सह तादृशविरोधाभावादिति चेन्न । कार्यकारणयोरन्यत्र तादृशविरोधादर्शनेऽपि

---

भेदस्य स्वरूपशब्दार्थस्यायोगात् ।

ननु संयोगतादात्म्ययोर्विषयविशेषनियामकत्वाभावेऽपि वृत्तीनां विषये स्वरूपसम्बन्धवत्त्वं परिशेषान्न सिध्यति, स्वरूपसम्बन्धातिरिक्तस्य सम्बन्धान्तरस्य कल्पनोपपत्तेरित्यत आह—क्लृप्त एवेति । स्वरूपसम्बन्धस्य वृत्त्यादिस्वरूपतया तस्य क्लृप्तत्वात् क्लृप्ते एव स्वरूपसम्बन्धे विशेषकल्पनायां लाघवम्, सम्बन्धान्तरं कल्पयित्वा तस्मिन् सम्बन्धान्तरे अभेदज्ञानत्वादिनिर्वाहकविशेषकल्पनायां गौरवम् । अतो वृत्तीनां विषयैः सह स्वरूपसम्बन्धवत्त्वमेवेति भावः । ननु 'तत्त्वमस्यादिवाक्याद् जीवस्य ब्रह्माभेदस्यैव संसर्गविधया भानाद्वेदान्तानां संसर्गागोचरप्रमितिजनकत्वरूपाखण्डार्थत्वाभ्युपगमहानिः' इत्यत्रेनच्चोद्यं निरवकाशमित्याह—एवं चेति । महावाक्यजन्यज्ञानगताभेदज्ञानत्वस्यान्यथोपपादितत्वेनाभेदसंसर्गभानानपेक्षायां सत्यामित्यर्थः । हानिरपीति । घटादिवृत्तीनां मूलाज्ञाननिवर्तकत्वापत्तिर्नास्ति, अखण्डार्थत्वहानिश्च नास्तीत्यपिशब्दार्थः ॥

वेदान्तजन्यज्ञानस्यापि मूलाज्ञाननिवर्तकत्वमाक्षिपति—नन्विति । तादृशेति । कार्यस्य लोके उपादानास्थितिविरोधित्वादर्शनादित्यर्थः । ब्रह्मगोचरवृत्तिं प्रति अन्तःकरणस्यैवोपादानत्वेन तां प्रति अज्ञानस्यानुपादानत्वात्तन्निवर्तकत्वं सम्भवतीति मत्वाऽऽह—नेति । उपादानत्वमुपेत्याप्याह—कार्येति । उपादानोपादेययोर्निवर्त्यनिवर्तकभावप्रयोजकविरोधो नास्तीत्युत्सर्गः । स च ब्रह्मज्ञानतदुपादानस्थले अपोद्यते । निवर्त्यनिवर्तकभावप्रयोज-

एकविषयज्ञानाज्ञानप्रयुक्तस्य तादृग्विरोधस्यात्र सत्त्वात् कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृशविरोधस्य दृष्टेश्च । न चाग्निसंयोगादवयवविभागप्रक्रियया असमवायिकारणसंयोगनाशादेव पटनाशः, नाग्निसंयोगादिति वाच्यम् । दग्धपटेऽपि पूर्वसंस्थानानुवृत्तिदर्शनेन मुद्गरचूर्णीकृतघटवद् अवयवविभागादर्शनात् तत्रावयवविभागादिकल्पनाया अप्रामाणिकत्वात् । नापि तत्र तन्तूनामपि दाहेन समवायिकारणनाशात् पटनाश इति युक्तम् । अंशुतन्त्वादिभिस्सह युगपदेव पटस्य दाहदर्शनेन क्रमकल्पनायोगात् । यतोऽधस्तान्नावयवनाशः, तत्रावयवे

---

कतया लोके क्लृप्तसमानविषयज्ञानाज्ञानभावस्य विशेषरूपतया तेन सामान्यरूपस्योपादानोपादेयभावप्रयुक्ताविरोधस्य बाधोपपत्तेरित्यर्थः । लोके उपादानोपादेययोर्निवर्त्यनिवर्तकभावप्रयोजकविरोधादर्शनमसिद्धं चेत्याह—कार्यकारणयोरपीति । अग्निसंयोगरूपकार्यस्य स्वोपादानपटनाशकत्वदर्शनादित्यर्थः । ननु तत्राग्निसंयोगस्य नाशकत्वदर्शनं भ्रान्तिरिति मत्वा शङ्कते—नचाग्नीति । प्रक्रिययेति । अग्निसंयोगात्तन्तुषु क्रिया, ततस्तेषां विभागः, ततस्तेषां पटासमवायिकारणसंयोगनाशः, ततः पटनाश इति वैशेषिकप्रक्रिया । तन्तुषु विभागप्रक्रियैव भ्रान्तिमूलेत्याह—दग्धपटेऽपीति । पूर्वसंस्थानं संयुक्तावस्था । व्यतिरेकदृष्टान्तमाह—मुद्गरेति । यथा मुद्गरचूर्णीकृतस्य घटस्यावयवेषु विभागो दृश्यते, तथा पटदाहानन्तरं दग्धतन्तुषु विभागादर्शनेनेत्यर्थः । तत्रेति । तन्तुष्वित्यर्थः । वैशेषिकप्रक्रियान्तरमपि भ्रान्तिमूलमेवेत्याह—नापीत्यादिना । तत्रेति । पटदाहस्थले इत्यर्थः । अग्निसंयोगस्य क्वचिदुपादानद्रव्यनाशकताया आवश्यकत्वात् पटनाशकत्वमपि तस्यैवसाह—यत इति । यतो द्व्यणुकादधस्ताद् द्व्यणुकावयवस्य परमाणोर्न नाशः, तत्र द्व्यणुके विद्यमानादग्निसंयोगादेव तदुपादानभूतद्व्यणुकनाशस्य वाच्यत्वात् । न च तत्रावयवविभागप्रक्रियया परमाणुद्वयसंयोगनाशादेव द्व्यणुकनाश इति वाच्यम् । अवयवविभागप्रक्रियाया निरस्तत्वात् । तथा चाग्निसंयोगस्य स्वोपादानपटनाशकत्वदर्शनं

अग्निसंयोगादेव नाशस्य वाच्यत्वात् ॥ ११ ॥

(१२)नन्वस्त्वेतदेवम्, तथाऽपि सविलासाज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येद्, नाशकान्तरस्याभावादिति चेद्,

(वे०सू०मं०) हृत्वा मोहं विनश्येत्सा कतकाम्बिन्दुवद्धयः ॥
पङ्कभस्मतृणानीव वास्तसायसभूमिषु ॥ ३४ ॥

यथा कतकरजः सलिलेन संयुज्य पूर्वयुक्तरजोऽन्तरविश्लेषं जनयत् स्वविश्लेषमपि जनयति, तथाऽऽत्मन्यध्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्तयत् स्वात्मानमपि निवर्तयतीति केचित् ॥

अन्ये तु अन्यन्निवर्त्य स्वयमपि निवृत्तौ दग्धलोहपीताम्बुन्यायमुदाहरन्ति ॥

---

न भ्रान्तिरिति भावः ॥

नन्वस्त्वेतदेवमिति । एतद् - ब्रह्मज्ञानमेवान्तःकरणद्वारा स्वोपादानाज्ञाननाशकमस्त्वित्यर्थः । तथाऽपीति । ब्रह्मज्ञानस्य सविलासाज्ञाननाशकत्वेऽपीत्यर्थः । सकार्याज्ञाननाशकस्याज्ञाननाशकाले अवशिष्यमाणस्य ब्रह्मज्ञानस्य नाशो न सिध्येत् । स्वस्य स्वनाश्यत्वायोगाद्, नाशकान्तरानवशेषाच्चेत्यर्थः । प्रथमं ब्रह्मज्ञानव्यतिरिक्तस्य सकलस्य ब्रह्मज्ञानेन नाशः, पश्चादवशिष्टस्य ब्रह्मज्ञानस्य नाश इति क्रमो नोपेयते, किं तु ब्रह्मज्ञानेन सविलासाज्ञाननाशकाले सविलासाज्ञानेन सहैव ब्रह्मज्ञानस्यापि नाश इत्युपेयते । ब्रह्मज्ञानस्यैव स्वनाशं प्रत्यपि हेतुत्वाभ्युपगमात् । न चैकस्यैव स्वपरविलापकत्वं न दृष्टमिति वाच्यम् । कतकरजसि दृष्टत्वादिति परिहरति—यथेति । पूर्वेति । कतकरजस्संयोगात् पूर्वं जलेन संयुक्तरजोऽन्तरैर्जलस्य विश्लेषमित्यर्थः । पूर्वाध्यस्तेति । ब्रह्मज्ञानाध्यासात् पूर्वेत्यर्थः ॥

अन्ये त्विति । यथा वह्नितप्तलोहपिण्डे प्रक्षिप्तमम्बु लोहगतमग्निं नाशयदात्मानमपि नाशयति, तथा ब्रह्मज्ञानमपीत्यर्थः । ब्रह्मज्ञानस्य स्वव्यतिरिक्तं सर्वं निवर्तयतस्तदैव स्वस्यापि निवर्तने दग्धलोहेन पीताम्बुरूपं दृष्टान्तमुदाहरन्तीत्यक्षरार्थः ॥

अपरे त्वत्र दग्धतृणकूटदहनोदाहरणमाहुः । न च ध्वंसस्य प्रतियोग्यतिरिक्तजन्यत्वनियमः । अप्रयोजकत्वात् । निरिन्धनदहनादिध्वंसे व्यभिचाराच्च । न च ध्वंसस्य प्रतियोगिमात्रजन्यत्वेऽतिप्रसङ्गात् कारणान्तरमवश्यं वाच्यम्, निरिन्धनदहनादिध्वंसेऽपि कालादृष्टेश्वरेच्छादिकारणान्तरमस्तीति वाच्यम् । अतिप्रसङ्गापरिज्ञानात् । न च घटादिध्वंसस्यापि कारणान्तरनिरपेक्षत्वं स्यादित्यतिप्रसङ्गः । ध्वंसमात्रे कारणान्तरनैरपेक्ष्यानभिधानात् । न च घटध्वंसदृष्टा-

---

यन्नात्मानमपि नाशयति, तथा अज्ञानतत्कार्यसमुदाये समुत्पन्नो ब्रह्मप्रत्ययस्तन्नाशयन्नात्मानमपि नाशयतीत्यर्थः । ननु 'दग्धदाह्यदहनादिन्यायेन ब्रह्मज्ञानादेव ब्रह्मज्ञाननाशः' इत्युपपादनमयुक्तम् । घटादिनाशे प्रतियोगिघटाद्यतिरिक्तमुद्गरपातादिकारणान्तरदर्शनेन ध्वंसस्य प्रतियोग्यतिरिक्तकारणजन्यत्वनियमादिति शङ्कते—न च ध्वंसस्येति । निरिन्धनेति । इन्धनानां निःशेषं नाशानन्तरं दहनस्य स्वत एव नाशदर्शनेन निरिन्धनदहनध्वंसे, स्वापाव्यवहितपूर्वकालीनज्ञानादिध्वंसे च प्रतियोगिमात्रजन्ये व्यभिचाराच्चेत्यर्थः । उक्तं व्यभिचारं पूर्ववादी परिहरति—निरिन्धनेति । अतिप्रसङ्गस्यैवासिद्ध्या ध्वंसे प्रतियोग्यतिरिक्तकारणजन्यत्वनियमस्याप्रयोजकत्वाभिप्रायेण दूषयति सिद्धान्ती—अतिप्रसङ्गापरिज्ञानादिति ।

ननु कुतोऽपरिज्ञानमिति चेत्, तत्र वक्तव्यम्—ब्रह्मज्ञानध्वंसस्य प्रतियोग्यतिरिक्ताजन्यत्वे घटादिध्वंसोऽपि प्रतियोग्यतिरिक्तकारणानपेक्षः स्यादित्यतिप्रसङ्गो वा, घटादिध्वंसवद् ब्रह्मज्ञानध्वंसोऽपि प्रतियोग्यतिरिक्तकारणापेक्षः स्यादित्यतिप्रसङ्गो वा, ब्रह्मज्ञानध्वंसवत् घटज्ञानादिध्वंसोऽपि कारणान्तरानपेक्षः स्यादित्यतिप्रसङ्गो वा, ब्रह्मज्ञानस्य स्वोत्पत्तिद्वितीयक्षणे एव नाशः स्यादित्यतिप्रसङ्गो वा विवक्षितः ? ।

तत्राद्यमनूद्य दूषयति—न चेति । ध्वंसमात्र इति । ध्वंसत्वावच्छिन्ने इत्यर्थः । अनभिधानादिति । न च सिद्धान्तिना तथाऽनभिधानेऽपि ध्वंसत्वाविशेषात्तत्र तद् आपाद्यते इति वाच्यम् । अप्रयोजकत्वादिति भावः । द्वितीयमतिप्रसङ्गेन दूषयति—घटध्वंसदृष्टा-

न्तेन ब्रह्मज्ञानध्वंसस्य कारणान्तरापेक्षासाधनम् । तद्दृष्टान्तेन मुद्गरपतनापेक्षाया अपि साधनापत्तेः । नापि ज्ञानध्वंसत्वसाम्याद् घटज्ञानादिध्वंसस्यापि कारणान्तरनैरपेक्ष्यं स्यादित्यतिप्रसङ्गः । सेन्धनानलध्वंसस्य जलसेकादिदृष्टकारणापेक्षत्वेऽपि निरिन्धनानलध्वंसस्य तदनपेक्षत्ववद्, जाग्रज्ज्ञानध्वंसस्य विरोधिविशेषगुणान्तरापेक्षत्वेऽपि सुषुप्तिपूर्वज्ञानध्वंसस्य तदनपेक्षत्ववच्च मूलाज्ञानानिवर्तकज्ञानध्वंसस्य कारणान्तरसापेक्षत्वेऽपि तन्निवर्तकज्ञानध्वंसस्य तदनपेक्षत्वोपपत्तेः । नापि कारणान्तरनैरपेक्ष्ये स्वोत्पत्त्युत्तरक्षणे एव नाशः स्यादित्यतिप्रसङ्गः । इष्टापत्तेः । तदुत्पत्त्युत्तरक्षणे एव ब्रह्माध्यस्तनिखिलप्रपञ्चदाहेन तदन्तर्गतस्य तस्यापि तदैव दाहाभ्युपगमात् । निरिन्धनदहनध्वंसन्यायेन ब्रह्मज्ञानध्वंसस्यापि कालादृष्टेश्वरेच्छादिकारणान्तरजन्यत्वेऽप्यविरोधाच्च । सर्वप्रपञ्चनिवृत्त्यनन्तरमेकशे-

---

न्तेनेति । ध्वंसत्वहेतुनेति शेषः । तृतीयमनूद्याप्रयोजकत्वेन दूषयति—नापि ज्ञानध्वंसत्वसाम्यादिति । ब्रह्मज्ञानध्वंसदृष्टान्तेनेति शेषः । सुषुप्तीति । सुषुप्तिपूर्वज्ञानादिगुणस्य नाशकगुणान्तरापेक्षायां तस्यापि नाशकात्मगुणान्तरकल्पनापत्त्या सुषुप्त्युच्छेदप्रसङ्गस्स्यात्, तत्परिहाराय सुषुप्तिपूर्वज्ञानादिगुणस्य नाशकान्तरानपेक्षत्वं वक्तव्यमिति भावः । मूलाज्ञानानिवर्तकेति । घटादिज्ञानेत्यर्थः । चतुर्थमतिप्रसङ्गमनूद्य तस्येष्टत्वमाह—नापि कारणान्तरनैरपेक्ष्ये इति । ब्रह्मज्ञानध्वंसस्येति शेषः । ननूदाहृतनिरिन्धनदहनध्वंसादौ जलसेकादिविशेषकारणानां व्यभिचारदर्शनेऽपि साधारणकारणानां व्यभिचारादर्शनेन ब्रह्मज्ञानध्वंसस्यापि साधारणकारणापेक्षा दुर्वारेत्यत आह—निरिन्धनदहनध्वंसन्यायेनेति । ननु प्रथमक्षणे ब्रह्मज्ञानस्य जन्म, द्वितीयक्षणे सविलासाज्ञाननिवृत्तिः, तृतीयक्षणे ब्रह्मज्ञानस्य निवृत्तिरिति क्रमे सति ब्रह्मज्ञाननाशात्पूर्वक्षणे कालादृष्टादीनामसत्त्वात् कथं तेषां ब्रह्मज्ञाननाशहेतुत्वाभ्युपगमे विरोधाभाव इत्यत आह—सर्वप्रपञ्चेति । स्वमतेनाह—

षस्य ब्रह्मज्ञानस्य निवृत्तिरित्यनभ्युपगमेन युगपत् सर्वदाहे पूर्वक्षणे चिदविद्यासम्बन्धरूपस्य द्रव्यान्तररूपस्य वा कालस्य, ईश्वरप्रसादरूपस्यान्तःकरणगुणविशेषस्य वाऽदृष्टस्य, अन्येषां च सत्त्वात् । न च तत्र ज्ञानातिरिक्तकारणापेक्षणे ब्रह्मज्ञानस्यामिथ्यात्वप्रसङ्गः, ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यभ्युपगमादिति वाच्यम् । ज्ञानाघटितसामग्र्यनिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वस्य तदर्थत्वात् । "नान्यः पन्थाः" इतिश्रुतेरपि तत्रैव तात्पर्यात् ।

---

चिदविद्येति । परमतेनाह—द्रव्यान्तरेति । यद्वा स्वमतेऽपीश्वरस्य कालत्वमभिप्रेत्याह—द्रव्यान्तरेति । स्वमतेनैवादृष्टस्य द्विप्रकारत्वमाह—ईश्वरेति । प्रसादग्रहणमुपलक्षणम् । पुण्यमीश्वरप्रसादरूपम्, पापमीश्वरक्रोधरूपमिति द्रष्टव्यम् । अन्तःकरणेति । आत्मनस्स्वमते निर्गुणत्वादिति भावः । अन्येषां चेति । ईश्वरदिगादीनामपीत्यर्थः । न च तत्रेति । ब्रह्मज्ञानध्वंसे इत्यर्थः । ज्ञानैकनिवर्त्यत्वं हि ज्ञानातिरिक्तानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वरूपं यथाश्रुतं न भवति, ज्ञानसाध्यायामज्ञाननिवृत्तौ ज्ञानातिरिक्तस्य प्रतियोगिनोऽपि हेतुत्वात्, किं त्वन्यदेव तदित्याह—ज्ञानाघटितेति । ज्ञानाघटिता या सामग्री, तदनिवर्त्यत्वे सतीत्यर्थः ।

प्रपञ्चसत्यत्वमतेऽपि घटादेर्ज्ञाननिवर्त्यत्वमस्ति । 'घटं नाशयामि'इत्यादिज्ञानपूर्वकं मुद्गरपातादिना तन्नाशदर्शनादिति तद्वारणाय सत्यन्तम् । घटादिनाशस्य ज्ञानपूर्वकत्वनियमाभावेन ज्ञानाघटितसामग्रीनिवर्त्यजातीये घटादौ तदघटितसामग्र्यनिवर्त्यत्वस्याभावात् । न च परमते नाशमात्रस्येश्वरज्ञानघटितसामग्रीसाध्यत्वात्तदीयज्ञानमादाय कार्यमात्रे ज्ञानाघटितसामग्र्यनिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वमस्तीति नैतन्मिथ्यात्वनिर्वचनमिति वाच्यम् । लक्षणे ज्ञानपदस्य जैवज्ञानपरत्वात् । आत्मन्यतिव्याप्तिवारणाय विशेष्यमिति भावः ।

ननु कार्यमात्रे कालादृष्टादेः कारणत्वमित्यङ्गीकृत्य ब्रह्मज्ञानध्वंसेऽपि कालादृष्टादेः कारणत्वाभ्युपगमे मूलाज्ञानध्वंसरूपे मोक्षेऽपि कालादेः कारणत्वं स्यात्, कार्यत्वाविशेषात् । न चेष्टापत्तिः । "नान्यः पन्थाः" इति श्रुतिविरोधादित्यत आह—नान्यः पन्था इतीति । अस्याः श्रुतेर्ज्ञान-

अतो युक्त एव दग्धदाह्यदहनादिन्यायः ॥

(वे०सू०मं०) आहुरन्ये तु वृत्तीद्ध आत्मैवाज्ञानतत्कृतम् ॥
प्रदहेत्सूर्यकान्तेद्धा सूर्यकान्तिस्तृणं यथा ॥ ३५ ॥

केचित्तु वृत्तिरूपं ब्रह्मज्ञानं नाज्ञानतन्मूलप्रपञ्चनिबर्हकम् । अज्ञानस्य प्रकाशनिवर्त्यत्वनियमेन जडरूपवृत्तिनिवर्त्यत्वायोगात् । किं तु तदारूढचैतन्यप्रकाशस्तन्निवर्तकः । स्वरूपेण तस्याज्ञानादिसाक्षितया तदनिवर्तकत्वेऽप्यखण्डाकारवृत्त्युपारूढस्य तस्य तन्निवर्तकत्वोपपत्तेः ।

'तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तन्न्यायं तत्र योजयेत् ॥'—

---

मेव मोक्षसाधनमित्यत्र न तात्पर्यम् । किं तु मोक्षस्य ज्ञानाघटितं किमपि साधनं नास्तीत्यत्र तात्पर्यम् । अतो न श्रुतिविरोध इत्यर्थः । अत इति । श्रुतिविरोधादिरूपबाधकाभावादित्यर्थः ॥

'वृत्तिरूपस्य ब्रह्मज्ञानस्याविद्यादिनाशकत्ववदेव स्वनाशकत्वमप्यस्ति'इत्युक्तम् । इदानीं 'वृत्तिरूपब्रह्मज्ञानस्याविद्यादिनाशकत्वं स्वनाशकत्वं वा नास्ति, किं तु तद्वृत्त्यारूढचैतन्यमेव तद्वृत्तिसहितसर्वनाशकम्'इति मतमाह—केचित्त्विति । ननु चैतन्यस्याज्ञानादिसाधकत्वात् कथं तस्य नाशकत्वम्, अत आह—स्वरूपेणेति । तत्र दृष्टान्तं श्लोकेन दर्शयति—तृणादेरिति ।

यैषा प्रत्यक्षा सूर्यदीप्तिः स्वरूपेण तृणादेः प्रकाशिकाऽपि सूर्यकान्तमणिमुपारुह्य तृणादिकं दहतीति प्रत्यक्षसिद्धं तन्न्यायं तत्र चैतन्ये योजयेत् । चैतन्यं स्वरूपेणाज्ञानादिप्रकाशकमपि वृत्तिविशेषसंसृष्टं सद् अज्ञानादेर्नाशकमिति निश्चिनुयादेव, न तु साधकस्य कथं घातकत्वमित्यसम्भावनया प्रमाणसिद्धमर्थमुपेक्षेतेति श्लोकतात्पर्यम् ।

ननु मण्यारूढा सूर्यदीप्तिर्मणिव्यतिरिक्तमेव तृणादिकं दहति, न तु मणिमपि । तथा वृत्त्यारूढं चैतन्यं वृत्तिव्यतिरिक्तमेवाज्ञानादिकं नाशयेद्, न वृत्तिमपि । तथा च ब्रह्मज्ञानं कथं नश्येद्, नाशकान्तराभावादिति

इत्यभियुक्तोक्तेः। एवं च यथा किञ्चित् काष्ठमुपारुह्य ग्रामनगरादिकं दहन् वह्निर्दहत्येव तदपि काष्ठम्, तथा चरमवृत्तिमुपारुह्य निखिलप्रपञ्चमुन्मूलयन्नखण्डचैतन्यप्रकाशस्तन्निवर्तनेऽपि प्रकल्पते इति न तन्नाशे काचिदनुपपत्तिरित्याहुः॥

(वे०सू०मं०) उपादानक्षयादन्ये विश्वोच्छेदं प्रचक्षते॥
जीवन्मुक्तस्य भोगोऽत्राविद्यालेशेन युज्यते॥३६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामचन्द्रसरस्वतीपूज्यपादशिष्यगङ्गाधरसरस्वतीविरचितायां
वेदान्तसिद्धान्तसूक्तिमञ्जर्यां
तृतीयः परिच्छेदः॥

अन्ये तु ब्रह्मज्ञानमज्ञानस्यैव निवर्तकम्। ज्ञानाज्ञानयोरेव साक्षाद्विरोधात्। प्रपञ्चस्य तूपादाननाशान्नाश इति प्रपञ्चान्तर्गतस्य ब्रह्मज्ञानस्यापि तत एव नाशः। न च प्रपञ्चस्य ज्ञानानिवर्त्यत्वे मिथ्यात्वानुपपत्तिः। प्रपञ्चनिवृत्तेस्साक्षाद् ज्ञानजन्यत्वाभावेऽपि ज्ञानजन्याज्ञाननाशजन्यत्वात्। 'साक्षात् परम्परया वा

---

शङ्कायाः समाधानं कथं लब्धम्, तत्राह—एवं चेति। चैतन्यस्य वृत्त्यारूढस्य नाशकत्वे प्रकाशाप्रकाश्ययोरेव लोके निवर्त्यनिवर्तकभावदर्शनात् प्रकाशस्यापि सहकारिविशेषवशेन नाशकत्वाविरोधाच्चेति युक्तिद्वयेन सिद्धे सतीत्यर्थः। उन्मूलयन्निति। मूलभूताज्ञानेन सह नाशयन्नित्यर्थः। प्रकल्पते इति। समर्थो भवतीत्यर्थः। तन्नाश इति। चरमवृत्तिनाश इत्यर्थः॥

'अज्ञाननाश एव ब्रह्मज्ञाननाशहेतुः' इति मतं दर्शयति—अन्ये त्विति। अज्ञानस्यैवेति। उक्तं च पञ्चपादिकायाम्—'ज्ञानमज्ञानस्यैव निवर्तकम्' इति। साक्षादिति। विरोधप्रयोजकस्य समानविषयत्वादेरज्ञान एव सम्भवादिति भावः। तत एवेति। उपादाननाशादेवेत्यर्थः। साक्षात् परम्परया वेति। मूलाज्ञानमात्रस्य ज्ञानैकनिवर्त्यतया मिथ्यात्वसिद्धौ मूलाज्ञानातिरिक्तजडमात्रस्य तदधीनतया स्वयं साक्षाज्ज्ञाननिवर्त्य-

ज्ञानैकनिवर्त्यत्वं मिथ्यात्वम्' इत्यङ्गीकारात् । एवं च तत्त्वसाक्षात्कारोदयेऽपि जीवन्मुक्तस्य देहादिप्रतिभास उपपद्यते । प्रारब्धकर्मणा प्रतिबन्धेन तत्त्वसाक्षात्कारोदयेऽपि प्रारब्धकर्मतत्कार्यदेहादिप्रतिभासानुवृत्त्योपादानाविद्यालेशानुवृत्त्युपपत्तेः । अज्ञानवत् प्रपञ्चस्यापि साक्षाद् ब्रह्मसाक्षात्कारनिवर्त्यत्वे नायमुपपद्यते । विरोधिनि ब्रह्मसाक्षात्कारे सति प्रारब्धकर्मणः स्वयमेवावस्थानासम्भवेनाविद्यालेशनिवृत्तिप्रतिबन्धकत्वायोगादित्याहुः ॥

---

त्वाभावेऽपि कृत्स्नप्रपञ्चस्य मिथ्यात्वसिद्धिरत्यूहेऽपि मन्तव्यम् । अस्य मतस्य जीवन्मुक्तिशास्त्रानुगृहीतत्वं दर्शयति—एवञ्चेत्यादिना । अज्ञानातिरिक्तस्य जडस्य ज्ञानेन सह साक्षाद्विरोधाभावे सतीत्यर्थः । ननु तत्त्वसाक्षात्कारेणाज्ञाननाशे सत्युपादानाभावाद्देहादेरवस्थानासम्भवे सति कथं विद्योदये देहादिप्रतिभास इत्यत आह—प्रारब्धेति । तत्त्वसाक्षात्कारोदये सति अज्ञानस्य निवृत्तिप्रसक्तौ प्रारब्धकर्मकृतप्रतिबन्धवशादज्ञानलेशस्य निवृत्तिर्न सम्भवति । तल्लेशानुवृत्तौ च तत्त्वज्ञानानन्तरमपि प्रारब्धकर्मणस्तत्कार्यस्य देहादिप्रतिभासस्याप्यनुवृत्तिर्युज्यते । देहाद्युपादानभूतस्याविद्यालेशस्यानुवृत्तेरित्यर्थः । पूर्वमते जीवन्मुक्त्यसिद्धिमाह—अज्ञानवदिति । नायमिति । जीवन्मुक्तस्य देहादिप्रतिभास इत्यर्थः । विरोधिनीति । अज्ञानस्येव प्रारब्धकर्मणोऽपि साक्षाद्विरोधिनीत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वतीदिव्यश्रीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ शास्त्रसिद्धान्तलेशसंग्रहव्याख्यायां कृष्णालङ्काराख्यायां तृतीयपरिच्छेदः समाप्तः ॥

# चतुर्थः परिच्छेदः ।

(वे०सू०मं०) अथ कोऽयमविद्याया लेशो यदनुवर्तनात् ॥
देहादेः प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥ १ ॥

अथ कोऽयमविद्यालेशः, यदनुवृत्त्या जीवन्मुक्तिः ? ।

(वे०सू०मं०) ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते ॥
प्रारब्धप्रतिबन्धेन स लेशस्तेन जीवनम् ॥ २ ॥

आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंश इति केचित् ॥

---

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥

यत्र यस्मिन् हरौ स्मृते सतीत्यर्थः ।

नन्दहस्तमवलम्ब्य पाणिना मन्दमन्दमरविन्दलोचनः ।
सञ्चरन् कनककिङ्किणीरवस्सन्ततम्मम तनोतु मङ्गलम् ॥
यस्याः स्मरणमात्रेण वाग्विभूतिर्विजृम्भते ।
सा भारती चिरं नित्यं रमतां मन्मुखाम्बुजे ॥
यश्शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोस्संस्मरणात् पुंसां सर्वतो जयमङ्गलम् ॥
विघ्नेश विधिमार्तण्डचन्द्रेन्द्रोपेन्द्रवन्दित ।
नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते ॥

अथ कोऽयमिति । तृतीयपरिच्छेदे ब्रह्मज्ञानरूपं मुक्तिसाधनं सपरिकरं निरूपितम् । इदानीं तत्फलभूता मुक्तिर्निरूप्यते । तथा च फलनिरूपणपरस्य चतुर्थपरिच्छेदस्य साधननिरूपणपरतृतीयपरिच्छेदानन्तर्यमथशब्दार्थः । लेशो नामावयवः । न चानाद्यविद्याया अवयवोऽस्ति सावयवस्य कार्यत्वनियमात् । अतोऽविद्यालेशो न सम्भवतीति किंशब्दार्थः ।

अविद्याया अनादित्वाविरोधेन लेशशब्दार्थं मतभेदेनाह—आवर-

(वे०सू०मं०) क्षालितेष्विव हिङ्ग्वादिपात्रेष्वन्ये तु वासना ॥

क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पो ऽविद्यासंस्कार इत्यन्ये ॥

(वे०सू०मं०) नष्टानुवृत्तिमाचख्युरन्ये दग्धपटे यथा ॥ ३ ॥

दग्धपटन्यायेनानुवृत्ता मूलाविद्यैवेत्यपरे ॥

---

णेति । आवरणविक्षेपशक्तिद्वयवत्या अविद्यायाः वृत्तिसाक्षात्कारेणावरणशक्तेर्नाशः, विक्षेपशक्तिमत्या अविद्यायाः प्रारब्धकर्मरूपप्रतिबन्धकक्षये सति पूर्वमेव निवृत्तावरणतया स्थितं चैतन्यं प्रतिबन्धापगमकाले नाशकमित्यभ्युपगमात् तत्त्वज्ञानेन विक्षेपशक्तिमदविद्यारूपस्याविद्यालेशस्यानिवृत्तौ तस्य पश्चात् को निवर्तक इति शङ्कायाः अनवकाश इति बोध्यम् ॥

क्षालितेति । तत्त्वज्ञानेनान्तःकरणाद्युपादानभूताविद्याया निवृत्तावप्यविद्याजन्यः कश्चिद्देहादिस्थितिप्रयोजको वासनाविशेष इत्यर्थः । न चोपादाननाशे कथं कार्यस्थितिरिति वाच्यम् । पटादिनाशक्षणे पटरूपादीनां परमते स्थित्यभ्युपगमवद् अस्मन्मतेऽपि तदभ्युपगमोपपत्तेः । न च समवायिकारणनाशरूपकारणप्रतीक्षया रूपादीनामुपादानाभावकालेऽपि स्थितिरुपपद्यते इति वाच्यम् । तथा सति प्रकृतेऽपि तत्त्वज्ञानजनितस्य देहाद्युपादानाविद्यानाशस्य देहादिनाशहेतोः प्रारब्धकर्मणा प्रतिबद्धतया प्रतिबन्धकरहिताविद्यानाशप्रतीक्षया देहादीनामपि स्थित्युपपत्तेः । न च प्रारब्धकर्मणः प्रतिबन्धकत्वे मानाभावः । जीवन्मुक्तिशास्त्रविद्वदनुभवादेर्मानत्वात् । परमते च पटतद्रूपादीनां युगपदेव नाशदर्शनेन परमते परं तथाऽङ्गीकारे मानाभावः । तदुक्तं श्रीविद्यारण्यगुरुभिः—

'विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ।
श्रुतियुक्त्यनुभूतिभ्यो वदतां किं नु दुःशकम् ॥' इति ।

दुःशकम्, अशक्यमित्यर्थः । क्षालिते लशुनभाण्डे अनुवृत्ता या लशुनवासना, तत्तुल्य इत्यक्षरार्थः ॥

तत्त्वज्ञानेन बाधिता दृढतरकार्याक्षमत्वं नीता साक्षादविद्यैवाविद्यालेश इत्याह—दग्धेति । तदुक्तम्—'कार्यक्षमं नश्यति चापरोक्ष्यात् ।' इति ॥

'कोऽयमविद्यालेशः, यदनुवृत्त्या जीवन्मुक्तिः'इत्याक्षेपे इष्टापत्ति-

(वे०सू०मं०) विरोधिन्युदिते शेषासम्भवादर्थवादताम् ॥
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥ ४ ॥

सर्वज्ञात्मगुरवस्तु—विरोधिसाक्षात्कारोदये लेशतोऽप्यविद्याऽनुवृत्त्यसम्भवाज् जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रम् । शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात् । अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलासवासनाऽविद्यानिवृत्तिरित्यपि कश्चित् पक्षमाहुः ॥ १ ॥

(वे०सू०मं०) का निवृत्तिरविद्यायाः ?
ब्रह्मसिद्धिकृतां नये ॥
आत्मैव, तदभावो हि मोहस्तत्संक्षयश्च सः ॥५॥

## (२)अथ केयमविद्यानिवृत्तिः ? ।

---

रित्याह—सर्वज्ञेति । अनुवृत्त्यसम्भवादिति । न जीवन्मुक्तिरस्तीति शेषः । ननु जीवन्मुक्त्यभावे "तस्य तावदेव चिरम्" इत्यादिशास्त्रं जीवन्मुक्तिप्रतिपादकमप्रमाणं स्यादित आह—जीवन्मुक्तिशास्त्रमिति । 'श्रोतव्यादिविधिभिर्विधीयमानं श्रवणादिकमतिप्रशस्तम्, यस्यानुष्ठानाज्जीवतोऽपि मुक्तिर्लभ्यते' इति श्रवणादिस्तावकमित्यर्थः । न तु स्वार्थपरमिति मात्रशब्दार्थे हेतुमाह—शास्त्रस्येति । निष्फलेऽर्थे वेदतात्पर्यायोगादिति भावः । अत इति । जीवन्मुक्तौ मानाभावादित्यर्थः । सविलासेति । विलासेन वासनया च सहैवाविद्यानिवृत्तिरित्यर्थः । सत्यम्, जीवन्मुक्तिशास्त्रस्य श्रवणादिविध्यर्थवादत्वेऽपि सालम्बनार्थवादत्वसम्भवे निरालम्बनत्वायोगात्, लोके रज्ज्वादितत्त्वज्ञानेन सर्पाद्यध्यासस्य समूलस्य निवृत्त्यनन्तरमपि सर्पाद्यध्याससंस्कारवशात् कञ्चित्कालं भयकम्पाद्यनुवृत्तिदर्शनेन तत्त्वज्ञानस्याविद्यादिसंस्काराविरोधित्वाच्च मूलाविद्याद्यध्यासजनितसंस्कारवशाज् जीवन्मुक्तौ नानुपपत्तिरिति सूचयति—इत्यपीति ॥ १ ॥

अथ केयमिति । इयं प्रकृता अविद्यानिवृत्तिः का, आत्मस्वरूपा, अतिरिक्ता वा ?। नाद्यः। साध्यत्वायोगात् । न द्वितीयः । तस्याः सत्त्वे द्वैतापत्तेः, असत्त्वे साध्यत्वायोगादेवेत्यर्थः ।

आत्मैवेति ब्रह्मसिद्धिकाराः ।

न च तस्य नित्यसिद्धत्वाद् ज्ञानवैयर्थ्यम् । असति ज्ञानेऽनर्थहेत्वविद्याया विद्यमानतया अनर्थमपि तिष्ठेदिति तदन्वेषणाद् । 'यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वम्, यद्व्यतिरेके चाभावः, तत् तत्साध्यम्' इति लक्षणानुरोधेनात्मरूपाया अप्यविद्यानिवृत्तेः ज्ञानसाध्यत्वाच्च । ज्ञाने सत्यग्रिमक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वम्, तद्व्यतिरेके तत्प्रतियोग्य-

तत्राविद्यानिवृत्तेरात्मस्वरूपत्वमिति पक्षं साधयति—आत्मैवेति । आत्मैवाविद्यानिवृत्तिः, नातिरिक्ता, उक्तदोषप्रसङ्गादिति भावः ।

आद्यपक्षेऽपि दोषतौल्यमाशङ्क्य निराकरोति—न च तस्येति । अविद्यानिवृत्तिरूपात्मन इत्यर्थः । तत्त्वज्ञानस्य वैयर्थ्यं वदता वक्तव्यम्—किं ज्ञानसम्पादनस्य प्रयोजनं नास्तीति तद्वैयर्थ्यं विवक्षितम्, किं वा अविद्यानिवृत्तेरात्मस्वरूपत्वे तस्यानादितया ज्ञानं विनाऽपि सिद्धत्वेन ज्ञानसाध्यत्वासम्भवात्तस्य वैयर्थ्यं विवक्षितम् ? । नाद्य इत्याह—असतीति । तदन्वेषणादिति । अनर्थनिवृत्तिमुद्दिश्य ज्ञानान्वेषणोपपत्तेरित्यर्थः । अन्वेषणं च ज्ञानसाधनानुष्ठानम् ।

साध्यलक्षणं द्विविधम्—एकं सादिपदार्थमात्रासाधारणं जन्यत्वरूपम् । अपरं तु साद्यनादिसाधारणं 'यस्मिन् सति' इत्यादिरूपम् । तथा च आत्मस्वरूपायामविद्यानिवृत्तौ प्रथमलक्षणासम्भवेऽपि द्वितीयस्य साध्यलक्षणस्य सम्भवात् तस्याः ज्ञानसाध्यत्वमुपपन्नम् । अतो न ज्ञानवैयर्थ्यमित्यभिप्रेत्य द्वितीयं निराकरोति—यस्मिन् सतीति । अभाव इति । यस्याभाव इत्यर्थः । तत् तत्साध्यमिति । 'यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वम्' इत्यत्र प्रथमयच्छब्दार्थः साधनम्, द्वितीययच्छब्दार्थः साध्यमिति विभागः । प्रायश्चित्ते सत्यग्रिमक्षणे दुःखप्रागभावस्य सत्त्वम्, प्रायश्चित्तस्य व्यतिरेके च दुःखस्यैवोदयादग्रिमक्षणे दुःखप्रागभावस्याभाव इति दुःखप्रागभावस्यानादेरपि दुःखसाधनपापध्वंसस्य सादेरिव प्रायश्चित्तसाध्यत्वमेतल्लक्षणसिद्धमिति बोध्यम् । उक्तलक्षणं प्रकृते योजयति—ज्ञाने सतीति । आत्मस्वरूपाया अविद्यानिवृत्तेरनादित्वेन ज्ञानोत्पत्तिद्वितीयक्षणे जन्मासम्भवेऽपि सत्त्वं सम्भवतीत्याह—आत्मरूपाविद्यानिवृत्तिसत्त्वमिति । तद्व्य-

विद्यारूपस्तदभाव इति उक्तलक्षणसत्त्वात् ॥

(वे०सू०मं०) आनन्दबोधाचार्यास्तु युक्तिभिः पञ्चमीं विधाम् ॥
सदसत्सदसन्मिथ्याभिन्नामात्मनि तां विदुः ॥ ६ ॥

आत्मान्यैवाविद्यानिवृत्तिः। सा च न सती, अद्वैतहानेः। नाप्यसती, ज्ञानसाध्यत्वायोगात्। नापि सदसद्रूपा, विरोधात्। नाप्यनिर्वाच्या, अनिर्वाच्यस्य सादेरज्ञानोपादानकत्वनियमने मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः, ज्ञाननिवर्त्यत्वापत्तेश्च।

---

तिरेके तत्प्रतियोग्यविद्यारूपस्तदभाव इति 'तद्व्यतिरेके तदभावः' इत्युक्तलक्षणसत्त्वादिति सम्बन्धः। 'ज्ञानव्यतिरेके आत्मरूपाविद्यानिवृत्तेरभावः' इत्यनेन प्रकारेणात्मरूपाविद्यानिवृत्तौ ज्ञानसाध्यत्वरूपलक्षणसत्त्वादिसर्थः। नन्वविद्यानिवृत्तेरात्मस्वरूपत्वे आत्मनोऽनन्तत्वेन वस्तुतस्तदभावस्यैवाभावात् कथमविद्यानिवृत्तेरभावः? तत्राह—अविद्यारूप इति। निर्विशेषचैतन्यस्य वास्तवाभावाभावेऽपि 'तादृशं चैतन्यं नास्त्येव' इति भ्रान्तिसिद्धः कश्चित्तदभावोऽस्ति। स चाविद्यैव। चैतन्यप्रतियोगिककल्पिताभावस्याविद्यातिरिक्तत्वे मानाभावादित्यर्थः।

ननु लोके घटादिभावपदार्थस्याभावप्रतियोगिकाभावरूपत्वमेव दृष्टम्, न तु भावप्रतियोगिकाभावरूपत्वम्। तथा च कथमविद्याया भावरूपायाश्चैतन्यप्रतियोगिकाभावरूपत्वम्, अत आह—तत्प्रतियोगीति। आत्मरूपाविद्यानिवृत्तेः प्रतियोगिनी या अविद्या, तद्रूप इत्यर्थः। एतदुक्तं भवति—चैतन्यस्य स्वस्मिन्नध्यस्ताविद्यां प्रत्यभावरूपत्वादविद्यायाः स्वाभावरूपचैतन्यप्रतियोगिकाभावरूपत्वं सम्भवतीति ॥

'अविद्यानिवृत्तिरात्मान्या' इति पक्षं मतभेदेन द्वेधा साधयति—आत्मान्यैवेत्यादिना। तदुपादानेति। अनिर्वचनीयामविद्यानिवृत्तिं प्रति उपादानत्वेनाज्ञानस्य मुक्तावप्यनुवृत्त्यापत्तेः। तथा चानिर्मोक्षप्रसङ्ग इति भावः। किं च मुक्तिकाले अनुवर्तमानाया अविद्यानिवृत्तेरनिर्वाच्यत्वरूपमिथ्यात्वनिर्वाहार्थं ज्ञाननिवर्त्यत्वापत्तिः। 'ज्ञानैकनिवर्त्यत्वं मिथ्यात्वम्'-इत्युपगमात्। न च मुक्तिकाले तन्निवर्तकं ज्ञानं सम्भवति। सामग्र्यभावात्। अतो नानिर्वाच्या अविद्यानिवृत्तिरित्याशयेनाह—ज्ञाननिवर्त्यत्वापत्तेश्चेति। सा च न सती, नाप्यसती, नापि सदसद्रूपा, नाप्यनि-

किं तु उक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेत्यानन्दबोधाचार्याः ॥
(वे०सू०मं०) उत्पत्तिरिव नाशोऽपि क्षणिका(१)भावविक्रिया ॥
अद्वैतविद्याचार्यास्तद्वृत्तिकालेति तां विदुः ॥ ७ ॥

अविद्यावत्तन्निवृत्तिरप्यनिर्वाच्यैव । न च तदनुवृत्तौ तदुपादानाज्ञानस्याप्यनुवृत्तिनियमाद् अनिर्मोक्षप्रसङ्गः । तदनुवृत्तौ प्रमाणाभावात् । उत्पत्तेः प्रथमसमयमात्रसंसर्गिभावविकारत्ववद् निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकारत्वोपपत्तेः । अत एव यथा पूर्वं पश्चाच्च 'उत्पत्स्यते, उत्पन्नः' इति भाविभूतभावेन व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे 'उत्पद्यते' इति वर्तमानव्यवहारः, तथा पूर्वं पश्चाच्च 'निवर्तिष्यते, निवृत्तः' इति भाविभूतभावेन व्यवह्रियमाणाया निवृत्तेश्चरमसमयमात्रे 'निवर्तते, नश्यति, ध्वंसते' इति

---

वाच्या, किं तु पञ्चमप्रकारा सेति सम्बन्धः । नन्वविद्यानिवृत्तेरुक्तप्रकारचतुष्टयेऽन्तर्भावासम्भवे प्रकारान्तराप्रसिद्धेरविद्यानिवृत्तिरेव माऽस्त्विति शङ्कते—किं त्विति । मोक्षशास्त्रप्रामाण्यादप्रसिद्धोऽपि कश्चित्प्रकार एषितव्य इत्याशयेनाह—उक्तप्रकारेति ॥

अविद्यानिवृत्तेरात्मान्यत्वपक्षे मतान्तरं दर्शयति—अविद्यावदिति । न च तदनुवृत्ताविति । मुक्तावविद्यानिवृत्त्यनुवृत्तावित्यर्थः । उत्पत्तेरिति । यथा घटादिपदार्थानामुत्पत्तिराद्यक्षणमात्रसंसर्गी भावरूपो विकार उपेयते, न त्वभावरूपा, तथा निवृत्तिशब्दितनाशोऽपि तेषां चरमक्षणमात्रसम्बन्धी कश्चिद् भावरूप एव विकारोऽभ्युपगन्तव्यः, न त्वभावरूपः । विनिगमकाभावादित्यर्थः । उत्पत्तेः क्षणिकभावविकारत्व इव नाशस्यापि क्षणिकभावविकारत्वे प्रमाणं समभिव्याह—अत एवेति । निवृत्तेरपि क्षणिकत्वाभ्युपगमादेवेत्यर्थः ।

उत्पत्तेः पूर्वम् 'उत्पत्स्यते घटः' इति भावित्वेन व्यवह्रियमाणायाः, उत्पत्तेः पश्चाद् 'उत्पन्नो घटः' इति भूतत्वेन च व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे 'उत्पद्यते' इति वर्तमानत्वव्यवहारो यथा उत्पत्तेः क्षणिकत्वसाधकोऽस्तीति दृष्टान्तभागार्थः । तथेति । निवृत्तेः पूर्वं 'निवर्तिष्यते घटः' इति भावि-

---

(१) क्षण एवाधारत्वेन अस्या अस्तीति क्षणिका । मत्वर्थीयष्ठन् ।

वर्तमानव्यपदेशः। निवृत्तेरनुवृत्तौ तु चिरशकलितेऽपि घटे 'इदानीं निवर्तते' इत्यादिव्यवहारः स्यात्। आख्यातानां प्रकृत्यर्थग-तवर्तमानत्वाद्यर्थाभिधायित्वात्।

ननु च तेषां स्वाभिहितसङ्ख्याश्रयप्रकृत्यर्थकर्तृ-कर्मगतवर्तमानत्वाद्यर्थाभिधायकत्वम्, स्वाभिहितप्रकृत्यर्थानुकूल-व्यापारगतवर्तमानत्वाद्यर्थाभिधायकत्वं वाऽस्तु। तथा च निवृत्तिक्रियाकर्तुश्चिरचूर्णितस्य घटस्य, तद्गतनिवृत्त्यनुकूलव्या-पारस्य चावर्तमानत्वाद् नोक्तातिप्रसङ्ग इति चेद्, न। आ-द्ये उत्पन्नेऽपि घटे 'उत्पद्यते' इति व्यवहारापत्तेः। उत्पत्तिक्रि-याकर्तुर्घटस्य वर्तमानत्वात्। द्वितीये आमवातजडीकृतकलेवरे

---

त्वेन व्यवह्रियमाणायाः, पश्चाद् 'निवृत्तो घटः' इति भूतत्वेन च व्यवह्रियमाणाया निवृत्तेश्चरमसमयमात्रे 'निवर्तते' इत्यादिवर्तमानत्वव्य-पदेशरूपो व्यवहारो निवृत्तेरपि क्षणिकत्वसाधकोऽस्तीति प्रमाणं तुल्यमित्यर्थः।

निवृत्तेः स्थायित्वाभ्युपगमे बाधकमाह—निवृत्तेरनुवृत्तौ त्विति। मासात् पूर्वं ध्वस्तेऽपि घटे वर्तमानकालेऽपि घटावयवेषु शकलेषु कपालरूपेषु निवृत्तिरूप-स्य पराभिमतप्रध्वंसरूपाभावस्य वर्तमानत्वाद् 'इदानीं निवर्तते, नश्यति, ध्वंसते' इति निवृत्तेर्वर्तमानत्वव्यपदेशः स्यादित्यत्र हेतुमाह—आख्यातानामिति। प्रकृत्यर्थो धात्वर्थः। तद्गतवर्तमानत्वातीतत्वभावित्वार्थकत्वादित्यर्थः।

आख्यातानां प्रकृत्यर्थगतवर्तमानत्वादिकं नार्थः, किं त्वन्यगतवर्तमानत्वादि-कमेवेति शङ्कते—ननु च तेषामिति। एकवचनत्वादिरूपेणाख्यातैरभिहितानां सङ्ख्यानामाश्रयभूताः 'घटो निवर्तते, देवदत्तः पचति, तण्डुलाः पच्यन्ते' इ-त्यादिप्रयोगेषु प्रकृत्यर्थभूतनिवृत्त्यादिक्रियाणां कर्तृकर्मादिरूपाश्च ये घटादयः तद्गतवर्तमानत्वाद्यर्थवाचकत्वं लुट्त्वादिरूपेण तेषामाख्यातानामस्त्वित्यर्थः।

अर्थान्तरमाह—स्वाभिहितेति। 'घटो निवर्तते' इत्यत्र आख्याताभिहितो यः प्रकृत्यर्थनिवृत्त्यनुकूलो व्यापारस्तद्गतेत्यर्थः। सङ्ख्या-याः, प्रकृत्यर्थानुकूलव्यापारस्य च समानप्रत्ययोपात्तत्वेनान्तरङ्गत्वात् प्रकृत्यर्थस्य निवृत्त्यादेः प्रकृत्यर्थकर्तृघटादेश्चातथात्वेन बहिरङ्गत्वादित्यभि-प्रायः। ततः किं? तत्राह—तथा चेति। द्वितीयमर्थमभिप्रेत्याह—तद्ग-

उत्थानानुकूलयत्नवति उत्थानानुदयेऽपि 'उत्तिष्ठति' इति व्यवहारापत्तेः । आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्तमानत्वात् । तस्मात् प्रकृत्यर्थगतमेव वर्तमानत्वादि आख्यातार्थ इति ध्वंसस्य स्थायित्वे चिरनिवृत्तेऽपि घटे 'निवर्तते' इति व्यवहारो दुर्वारः ।

यदि च मुद्गरादिशकलिते घटे ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायी भूतलाद्याश्रित उपेयते, तदा कपालमालापसरणे तदनपसरणेऽपि माणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शने च किमिति स प्रत्यक्षो न स्यात् । कपालसंस्थानविशेषादिनाऽनुमेयो घटादिध्वं-

---

तेति । घटगतेत्यर्थः । निराकरणग्रन्थः स्पष्टार्थः । तस्मादिति । अर्थान्तरासम्भवादित्यर्थः ।

पराभिमतो ध्वंसः प्रत्यक्षोऽनुमेयो वेति विकल्पं मनसि निधाय क्रमेण निराकर्तुं परमतमनुवदति—यदि चेति । घटे मुद्गरपातादिना शकलीकृते सतीत्यर्थः । तत्प्रतियोगिकः—घटप्रतियोगिक इत्यर्थः । भूतलादिति । ध्वंसोत्तरकालं कपालेष्विव शकलीक्रियमाणघटाधिकरणभूतलादिष्वपि 'अत्र घटो ध्वस्तः' इति प्रतीतिबलाद् भूतलादिकमपि कपालानां घटध्वंसाधिकरणत्वेन कैश्चिचार्किकैरुपेयते इति तन्मतानुवाद इति बोध्यम् ।

'ध्वंसः प्रत्यक्षः' इति पक्षं दूषयति—तदेति । किमिति । स ध्वंसः प्रत्यक्षो न स्यादिति सम्बन्धः । ननु भूतलादौ घटध्वंसप्रत्यक्षे कपालमालाप्रत्यक्षमपि कारणम्, अतो नोक्तदोष इत्यत आह—तदनपसरणेऽपीति । मृन्मयबृहत्पात्रविशेषो मणिकशब्दार्थः । यदा भूतलगतेषु घटकपालेषु मणिकशरावादिकपालेभ्यो व्यावृत्तस्य संस्थानविशेषस्य घटकपालासाधारणस्य दर्शनं नास्ति, कपालमालागोचरदर्शनमात्रमेवास्ति, तदाऽपि ध्वंसः प्रत्यक्षस्स्यात् । कपालमालादर्शनस्य सत्त्वादित्यर्थः । वस्तुतस्तु प्रध्वंसाभावस्य इन्द्रियसन्निकर्षानिरूपणात् प्रत्यक्षत्वं न सम्भवतीति भावः ।

सो न प्रत्यक्ष इति चेत्, तर्हि तेन मुद्गरपातकालीनस्य उत्पत्तिवद् भावविकाररूपतया प्रतियोग्याश्रितध्वंसस्यानुमानं सम्भवतीति न ततः पश्चादनुवर्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः। 'इह भूतले घटध्वंसः' इति भूतले ध्वंसाधिकरणत्वव्यवहारस्य 'इह भूतले घट उत्पन्नः' इतिवत् भावविकारयुक्तप्रतियोग्यधिकरणत्वविषयत्वोपपत्तेः। घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं तदभावव्यवहारवत् समयविशेषसंसर्ग्यत्यन्ताभावालम्बनतोपपत्त्या ध्वंसविषयत्वस्याकल्पनीयत्वाच्च। एवं सति घटोत्पत्तेः पूर्वं तदभावव्यवहारोऽप्यत्य-

---

'ध्वंसोऽनुमेयः' इति पक्षं दूषयति—तर्हीति। अतीतस्यापि ध्वंसस्यानुमानसम्भवादनुमानेन ध्वंसमात्रसिद्धावपि नानुमानबलाद् ध्वंसस्य पराभिमतं स्थायित्वं सिध्यतीत्यर्थः। तत इति। अनुमानादित्यर्थः। ननु 'इदं भूतलं घटध्वंसवत्, कपालमालाविशेषवत्त्वात्। व्यतिरेकेण कपालमालाविशेषानधिकरणप्रदेशवत्' इत्यनुमानं कथं घटाश्रितं ध्वंसं विषयीकुर्यादिति चेद्, न। ध्वंसोत्पत्तिकाले प्रतियोग्याश्रितस्यापि ध्वंसस्य प्रतियोगिद्वारा भूतलाश्रितत्वस्यापि सत्त्वेनानुमानस्य तद्विषयत्वोपपत्तेरिति भावः। अनयैव रीत्या व्यवहारविशेषस्यापि गतिमाह—इहेति। भूतलाधिकरणकस्थायिध्वंससाधकान्तरमप्यन्यथयति— घटध्वंसानन्तरमिति। भूतल इति। 'भूतले घटो नास्ति' इति प्रत्ययप्रयोगात्मकव्यवहारस्येत्यर्थः। समयविशेषे भूतलादौ घटसंयोगाद्यभावकाले संसर्गी योऽत्यन्ताभावः, स आलम्बनं यस्य घटाभावव्यवहारस्य, स तथा, तस्य भावस्तत्ता, तदुपपत्त्येत्यर्थः। क्लृप्ताभावेनैव व्यवहारोपपत्तावतिरिक्तप्रध्वंसाभावो न कल्पनीयः। "अतोऽन्यदार्तम्" इति श्रुत्या चैतन्यव्यतिरिक्तवस्तुमात्रानित्यत्वप्रतिपादिकया पराभिमतस्य नित्यध्वंसस्य निराकृतत्वाच्चेति भावः। एतेन घटध्वंसानन्तरं कपालमालायां 'घटो नास्ति' इति व्यवहारोऽपि नीतः। उपादानेऽपि समयविशेषेऽत्यन्ताभावसंसर्गमादाय तदुपपत्तेः। शङ्कते—एवंसतीति। घटनाशोत्तरकालीनस्य घटाभावव्यवहारस्य सामयिकात्यन्ताभावालम्बनत्वो-

न्ताभावेन चरितार्थ इति प्रागभावोऽपि न स्यादिति चेत्, सोऽपि मा भूत् । नन्वेवं 'प्रागभावाधारकालः पूर्वकालः, ध्वंसाधार उत्तरकालः' इति निर्वचनासम्भवात् काले पूर्वोत्तरादिव्यवहारः किमालम्बनस्स्यात् । घटादिषु प्रतियोगित्वादिव्यवहारवदखण्डकिञ्चिद्धर्मगोचरोऽस्तु । अभावरूपस्थायिध्वंसाभ्युपगमेऽपि तेषु ध्वंसत्वादेरखण्डस्य वक्तव्यत्वात् । न च जन्याभावत्वरूपं सखण्डमेव ध्वंसत्वम् । ध्वंसप्रागभावरूपस्य घटस्य तद्ध्वंसत्वापत्तेः ।

न च सप्तमपदार्थरूपाभावत्वं विवक्षितम् । घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घटकाले प्रागभावोत्तरकालत्वव्यवहारस्य निरालम्बनत्वापत्तेः । न च प्रति-

---

पपत्तौ सत्यामित्यर्थः । तदभावेनेति । मृदि 'घटो नास्ति' इति व्यवहारोऽपीत्यर्थः । अत्यन्ताभावेनेति । सामयिकेनेत्यर्थः । कालत्रयेऽप्यधिकरणसंसर्ग्यत्यन्ताभावस्य मृद्यसम्भवादिति बोध्यम् । प्रागभावप्रध्वंसाभावयोरभावेऽपि काले पूर्वकालत्वमुत्तरकालत्वं चाखण्डोपाधिरूपमादाय व्यवहारोपपत्तिरिति परिहरति—घटादिष्विति । तत्राप्यखण्डोपाधिकल्पनमावश्यकमित्याह—अभावस्वरूपेति । सखण्डस्यैव ध्वंसत्वस्य मन्मते निर्वचनसम्भवान्न ममाक्लृप्ताखण्डोपाधिकल्पनमित्याशयेन शङ्कते—न च जन्याभावत्वरूपमिति । जन्यत्वे सति अयभावत्वरूपमित्यर्थः । अतिव्याप्त्या दूषयति—ध्वंसेति । तद्ध्वंसत्वेति । घटध्वंसत्वापत्तेरित्यर्थः ।

ननु 'जन्यत्वे सति सप्तमपदार्थरूपाभावत्वम्' ध्वंसलक्षणं विवक्षितम् । अत्यन्ताभावादिवारणाय सत्यन्तम् । घटध्वंसप्रागभावरूपे घटे उक्तातिव्याप्तिवारणाय विशेष्यमित्याशङ्क्यानूद्य निराकरोति—न च सप्तमेति । घटप्रागभावस्य ध्वंसत्वेनोपेते घटे उक्तलक्षणाभावाद् घटस्य घटप्रागभावं प्रति ध्वंसत्वं न स्यादिति दूषयति—घटस्येति । इष्टापत्तिमाशङ्क्याह—घटकाले इति । घटकाले घटप्रागभावध्वंसाभावे प्रागभावध्वंसकालत्वरूपस्य तदुत्तरकालत्वस्याभावादिति भावः । ननु घटप्रागभावध्वंसस्य घटातिरिक्तस्य सप्तमपदार्थरूपस्याभ्युपगमान्नोक्तदोष इत्यत आह—न च प्रतियोग्यतिरिक्त

योग्यतिरिक्तः प्रागभावध्वंसः । तथा सति तुल्यन्यायतया ध्वंसप्रागभावोऽपि प्रतियोग्यतिरिक्तः स्यादिति प्रागभावध्वंसस्यापि प्रागभावोऽन्यः, तस्यापि कश्चिद् ध्वंसः, तस्यापि प्रागभावोऽन्य इत्यप्रामाणिकानन्तधिकध्वंसप्रागभावकल्पनापत्तेः । न चान्यद्ध्वंसत्वमात्माश्रयादिशून्यं निर्वक्तुं शक्यम् । एवं प्रागभावत्वमपीत्यन्यत्र विस्तरः ।

तस्मान्न पूर्वं प्रागभावः, न च पश्चात् ध्वंसाभावः ।

इति । तथासतीति । प्रागभावध्वंसस्य प्रतियोग्यतिरिक्तत्वे सतीत्यर्थः । 'घटप्रागभावध्वंसः प्रतियोगिन्यतिरिक्तः' इति न च । तथा सति घटध्वंसप्रागभावोऽपि घटरूपप्रतियोगिव्यतिरिक्तः स्यात् । ध्वंसप्रागभावयोरुभयोरपि कादाचित्काभावत्वेन तुल्यत्वादित्यर्थः । ततः किं ? तत्राह—इतीति । इतिशब्दो हेत्वर्थे । तथा च यथा घटप्रागभावस्य ध्वंसः प्रतियोगिव्यतिरिक्तोऽस्ति, तथा घटप्रागभावध्वंसस्यापि प्रागभावो घटप्रागभावादन्यो वाच्यः । ध्वंसप्रागभावस्यापि ध्वंसप्रतियोगिव्यतिरिक्तत्वादित्यर्थः । ततः किं ? तत्राह—तस्यापीति । अन्यप्रागभावस्यापीत्यर्थः । तस्यापीति । ध्वंसस्यापीत्यर्थः । ननु यदि जन्याभावत्वरूपं ध्वंसत्वमुक्तरीत्या अनवस्थादोषदुष्टम्, तर्हि ध्वंसाप्रतियोगित्वे सति त्रैकालिकभिन्नाभावत्वरूपं ध्वंसत्वमस्तु, अत्यन्ताभावादावतिव्याप्तिवारणाय विशेष्यम् । त्रैकालिकवस्तुभिन्ने प्रागभावे अतिव्याप्तिवारणाय सत्यन्तम् । तथा च सखण्डमेव ध्वंसत्वमिति, नेत्याह न चान्यदिति । ध्वंसलक्षणे ध्वंसत्वप्रवेशादात्माश्रय इत्यर्थः । न च 'प्रागभावात्यन्ताभावभिन्नत्वे सति संसर्गाभावत्वम्' ध्वंसत्वम्, अतो नात्माश्रय इति वाच्यम् । प्रागभावत्वादिनिर्वचनस्यापि प्रध्वंसाभावभिन्नत्वघटिततया अन्योन्याश्रयापत्तेरित्याशयेनादिपदमिति बोध्यम् । ध्वंसत्ववत् प्रागभावत्वमपि सखण्डं दुर्निरूपमित्याह—एवमिति ।

अयमभिप्रायः—न तावद् अनादित्वे सति सान्ताभावत्वम् प्रागभावत्वम्, घटध्वंसप्रागभावरूपे घटे अनादित्वाभावेनाव्याप्त्यापत्तेः । नापि 'प्रतियोगिजनकाभावत्वम्' प्रागभावत्वम् । जनकत्वशरीरप्रविष्टपूर्ववृत्तित्वस्य कार्यप्रागभावकालवृत्तित्वरूपतया आत्माश्रयप्रसङ्गात् । एवं लक्षणान्तरमपि निरसनीयमिति ।

तस्मादिति । पराभिमतप्रागभावादिसाधकाभावादित्यर्थः । ननु प्रागभावा-

मध्ये परं कियत्कालमनिर्वचनीयोत्पत्तिस्थितिध्वंसरूपभावविकारवान् घटाद्यध्यासः। एवं चाविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारोदयानन्तरक्षणवर्ती कश्चिद्भावविकार इति तस्या मुक्तावनुवृत्त्यभावान्न तदनिर्वाच्यत्वे कश्चिद्दोष इत्यद्वैतविद्याचार्याः ॥ २ ॥

(वे०सू०सं०) नन्वेवं क्षणिकत्वं स्यान्मुक्तेर्भ्रान्तोऽसि नह्यसौ ॥
दुःखाभावः सुखं वेति पुरुषार्थत्ववर्जनात् ॥ ८ ॥

(३) नन्वेवमविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेद्, भ्रान्तोऽसि। न ह्यविद्यानिवृत्तिः स्वयमेव पुरुषार्थ इति तस्या ज्ञानसाध्यत्वमुपेयते। तस्याः सुखदुःखाभावेतरत्वात्। किं त्वखण्डानन्दावरकसंसारदुःखहेत्वविद्योच्छेदे अखण्डानन्दस्फुरणम्, संसारदुःखोच्छेदश्च भवतीति तदुपयोगितया तस्यास्तत्त्वज्ञानसाध्यत्वमुपेयते ॥

---

घनङ्गीकारे तत्प्रतियोगिघटादिकार्यमपि नाङ्गीकर्तव्यम्, तदङ्गीकारे द्वैतापत्तेरित्यत आह–मध्ये परमिति। घटादिकार्यस्य शुक्तिरजतादिवदध्यासरूपत्वाभ्युपगमाद् नाद्वैतविरोधः। ननु यथा परमते ध्वंसत्वादिकं दुर्निरूपम्, तथा सिद्धान्ते भावविकाररूपा उत्पत्तिस्थितिध्वंसा अपि दुर्निरूपा एवेत्याशङ्क्य तेषां दुर्निरूपत्वमलङ्कारायेत्याशयेनाह–अनिर्वचनीयेति। एवं चेति। लोके घटादिध्वंसस्य क्षणिकभावविकाररूपत्वे सिद्धे सतीत्यर्थः।

नन्वेवमिति। उक्तरीत्येत्येवंशब्दार्थः। अविद्यानिवृत्तेर्मोक्षसाधनज्ञानसाध्यत्वोपपादने सिद्धान्तिना क्रियमाणे सति सिद्धान्तिनोऽविद्यानिवृत्तिरेव मोक्षत्वेनाभिमतेति पूर्वपक्षिणो भ्रान्तिरभूत्, तां भ्रान्तिमवलम्ब्य शङ्का। तस्य भ्रममपनयति–भ्रान्तोऽसीति। अविद्यानिवृत्तेरपुरुषार्थत्वे हेतुमाह–तस्या इति। तर्हि तस्या ज्ञानसाध्यत्वोपगमो व्यर्थ इति शङ्कते–किंत्विति। अविद्यानिवृत्तेः सुखेतरत्वाद् दुःखाभावेतरत्वाच्च स्वयं पुरुषार्थत्वेऽपि पुरुषार्थसाधनतया तस्या ज्ञानसाध्यत्वमुपेयते इत्याह–अखण्डेति। तदुपयोगितयेति। अनर्थात्मकदुःखनिवृत्तिरानन्दावाप्तिश्चेति द्वयमपि स्वतःपुरुषार्थभूतं तच्छब्दार्थः ॥

(वे०मू०मं०) दुःखं सुखाविरोधीति तन्नाशोऽपि हि न स्वतः ॥
पुमर्थः सुखमात्रं तु नथा चित्सुखदर्शने ॥ ९ ॥

चित्सुखाचार्यास्तु—दुःखाभावोऽपि मुक्तौ न स्वतःपुरुषार्थः। सर्वत्र दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया सुखशेषत्वात् सुखस्यैव स्वतःपुरुषार्थत्वम्। अन्येषां सर्वेषामपि तच्छेषत्वमिति सुखसाधनताज्ञानस्यैव प्रवर्तकत्वे सम्भवति दुःखाभावस्यापि स्वतःपुरुषार्थत्वं परिकल्प्य तत्साधनप्रवर्तकसङ्ग्रहाय इष्टसाधनताज्ञानस्य इच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्तकत्वकल्पनायोगात्।

---

'अविद्यानिवृत्तिवद् दुःखनिवृत्तिरपि स्वतःपुरुषार्थो न भवति, अतो ब्रह्मानन्दस्फुरणसाधनतयैवाविद्यानिवृत्तेर्ज्ञानसाध्यत्वमुपेयते' इति मतमाह—चित्सुखेति। मुक्ताविति विशेषणात् संसारदशायां सुखवद् दुःखाभावोऽपि स्वतःपुरुषार्थ इति भ्रान्तिर्भवेत्, तां वारयति—सर्वत्रेति। दुःखदशायामात्मस्वरूपभूतस्यापि सुखस्याभिव्यक्तिशब्दितस्फुरणविशेषाभावेन दुःखस्य तदभिव्यक्तिप्रतिबन्धकत्वं कल्प्यते। तथा च तदभावस्य सुखाभिव्यक्तिशेषतयैव काम्यमानत्वम्, न सुखवत् स्वतःपुरुषार्थत्वेनेति भावः। सुखस्यैव स्वतःपुरुषार्थत्वकल्पने विनिगमकमाह—सुखस्यैवेति। दुःखाभावस्य सुखशेषत्वे दुःखाभावसाधनान्यपि सुखसाधनानि भवन्ति। तथा च सुखसाधनेषु दुःखाभावसाधनेषु च सर्वत्र सुखसाधनताज्ञानस्यैव प्रवर्तकत्वं सम्भवति। दुःखाभावस्य स्वतःपुरुषार्थत्वकल्पने तु तत्साधनेषु सुखसाधनत्वस्य बाधितत्वात् सुखसाधनताज्ञानात्तेषु प्रवृत्तिर्न सम्भवति। न च तेषु दुःखाभावसाधनताज्ञानमेव प्रवर्तकमस्त्विति वाच्यम्। तथा सति प्रवृत्तिमात्रे अनुगतकारणाभावप्रसङ्गात्। न च तर्हीष्टसाधनताज्ञानात् सर्वत्र प्रवृत्तिरस्तु। दुःखाभावस्यापि सुखवद् इच्छाविषयतया इष्टपदेन सङ्ग्रहोपपत्तेरिति वाच्यम्। प्रवृत्तित्वावच्छिन्नं प्रति कारणे इष्टसाधनताज्ञाने इष्टांशे सुखत्वजातेः प्रवेशकल्पने कारणतावच्छेदकलाघवं लभ्यते, इष्टत्वरूपोपाधेः प्रवेशकल्पने तु कारणतावच्छेदकगौरवं भवेदिति सुखस्यैव स्वतःपुरुषार्थत्वपक्षो युक्तिमानिति भावः। तच्छेषत्वमितीति। स्वीकुर्वन्ति शेषः। प्रवर्तकत्व इति। प्रवर्तकत्वकल्पने इत्यर्थः। तत्साधनेति। दुःखाभा-

न च दुःखाभाव एव स्वतःपुरुषार्थः । तच्छेषतया सुखं काम्यमिति वैपरीत्यापत्तिः । बहुकालदुःखसाध्येऽपि क्षणिकसुखजनके निन्दितग्राम्यधर्मादौ प्रवृत्तिदर्शनात् । तत्र क्षणिकसुखकालीनदुःखाभावस्य पुरुषार्थत्वे तदर्थं बहुकालदुःखानुभवायोगात् । न च तत्र क्षणिकसुखस्य पुरुषार्थत्वेऽपि दोषतौल्यम् । भावरूपे सुखे उत्कर्षापकर्षयोरनुभवसिद्धत्वेन क्षणमप्यत्युत्कृष्टसुखार्थं बहुकालदुःखानुभवोपपत्तेः । दुःखाभावे चोत्कर्षापकर्षा-

---

वसाधनेषु प्रवर्तकस्य दुःखाभावसाधनताज्ञानस्य सङ्ग्रहायेत्यर्थः ।

न च दुःखाभाव एवेति । न चेयं शङ्कैव नावतरति, वैपरीत्यपक्षे दुःखाभावत्वरूपोपाधेरेव प्रवर्तकज्ञानकारणतावच्छेदकशरीरे प्रवेशापत्त्या इच्छाविषयत्वरूपोपाधिप्रवेशपक्ष इव गौरवदोषस्य तुल्यत्वादिति वाच्यम् । सिद्धान्ते सुखस्यात्मरूपतया एकव्यक्तित्वेन सुखत्वस्य जातित्वासम्भवं तस्योपाधिरूपत्वं च मत्वा तस्य शङ्कासम्भवात् । इच्छाविषयत्वस्येव सुखत्वस्याप्युपाधिरूपत्वे सति सुखत्वप्रवेशेऽपि कारणतावच्छेदकगौरवाविशेषे सति विनिगमकाभावेन वैपरीत्याशङ्का युक्तैवेति भावः ।

सिद्धान्ते वस्तुतस्सुखव्यक्तेरेकत्वेऽप्यौपाधिकभेदाङ्गीकारेण सुखत्वस्य जातित्वाक्षतेर्वैपरीत्यं वक्तुं न शक्यत इति मनसि निधाय दोषान्तरमाह—बहुकालेति । लोके हि क्षणिकसुखोद्देशेन बहुकालदुःखानुभवमङ्गीकृत्याप्यगम्यागमनादौ प्रवृत्तिर्दृश्यते । सा च दुःखाभावस्यैव स्वतःपुरुषार्थत्वपक्षे न सम्भवतीत्यर्थः । कुतः ? इत्यत आह—तत्रेति । निन्दितप्रवृत्तिस्थले इत्यर्थः । सुखस्य दुःखाभावशेषत्वपक्षे सुखकालीनो यो दुःखाभावः, तं प्रत्येव सुखस्य शेषत्वं वाच्यम् । कालान्तरीयं दुःखाभावं प्रति तस्य शेषत्वासम्भवात् । तथा च क्षणिकसुखकालीनं दुःखाभावं क्षणिकसुमुद्दिश्य बहुकालदुःखानुभवाङ्गीकारस्यायुक्तत्वादित्यर्थः । न च तत्रेति । निन्दितप्रवृत्तिस्थले इत्यर्थः । दोषतौल्यमिति । बहुकालदुःखानुभवाङ्गीकारायोगरूपदोषस्य तुल्यत्वमिति न चेत्यर्थः । दुःखाभावस्यैव स्वतःपुरुषार्थत्वपक्षेऽपि क्षणिकसुखकालीने दुःखाभावे उत्कर्षः कल्प्यतामिति तत्राह—दुःखाभावे चेति । अभावस्यो-

सम्भवात् । तस्मान्मुक्तौ संसारदुःखनिवृत्तिरप्यविद्यानिवृत्तिवत् सुखशेष इत्यनवच्छिन्नानन्दप्राप्तिरेव स्वतःपुरुषार्थ इत्याहुः ॥३॥

(वे०सू०मं०) प्रत्यगेव परानन्दास्तिरोभूतः स्वमोहतः ॥
स्वकण्ठचामीकरवत् प्राप्तप्राप्यः स्वविद्यया ॥१०॥

(४) नन्वनवच्छिन्नानन्दः प्रत्यग्रूपतया नित्यमेव प्राप्तः । सत्यम् । नित्यप्राप्तोऽपि अनवच्छिन्नानन्दस्तमावृत्य तद्विपरीतमर्थं प्रदर्शयन्त्या अविद्यया संसारदशायामसत्कल्पत्वं नीत इत्यकृतार्थताऽभूत् । निवर्तितायां च तस्यां निरस्तनिखिलानर्थविक्षेपे स्वकण्ठगतविस्मृतकनकाभरणवत् प्राप्यते इवेत्यौपचारिकी तस्य प्राप्तव्यतेति केचित् ॥

---

त्कर्षादिजाद्याश्रयत्वानभ्युपगमादिति भावः । तस्मादिति । दुःखाभावस्य स्वतःपुरुषार्थत्वासम्भवादित्यर्थः ।

नित्यमेवेति । तथा च जीवस्य स्वस्वरूपतया सदा प्राप्तस्य ब्रह्मानन्दस्य प्राप्तव्यत्वासम्भवात् तत्प्राप्त्युद्देशेन तदुपायेषु प्रवृत्तिर्न स्यादिति भावः । नित्यतया तस्य प्राप्तिं तत्त्वमस्यादिश्रुतिसिद्धामङ्गीकरोति—सत्यमिति । औपचारिकं तस्य प्राप्तत्वमाह—नित्यप्राप्तोऽपीति । अनवच्छिन्नानन्दो नित्यप्राप्तोऽप्यविद्यया असत्कल्पत्वं नीत इति सम्बन्धः । तथा च प्राप्तेऽप्यप्राप्तत्वभ्रान्त्या तत्प्राप्त्युद्देशेन तदुपायेषु प्रवृत्तिर्युज्यते इत्यर्थः । तामिति । पूर्णानन्दमावृत्यानन्दविपरीतं दुःखात्मकं संसारं प्रापयन्त्येत्यर्थः । अकृतार्थतेति । पूर्णानन्दाप्राप्तिरित्यर्थः । निरस्तेति । अविद्यायां निवृत्तायां निखिलानर्थात्मकविक्षेपरहित आनन्दः प्राप्यते । यथा स्वकण्ठगतमेव विस्मृतं सत् कनकाभरणं प्राप्तमप्यप्राप्तत्वभ्रमतत्कृतविक्षेपलक्षणानर्थनिवृत्तिमात्रेण प्राप्यते, न त्वप्राप्ताभरणप्राप्तिवन्मुख्या तस्य प्राप्तिरस्ति तद्वदित्यर्थः ।

'"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" "आनन्दं ब्रह्मणो विद्वान्" इत्यादिवेदान्तप्रसिद्धो निरतिशयानन्दो नास्ति' इत्यनुभवः सर्वसम्प्रतिपन्नः । तथा च प्रत्यग्रूपतया नित्यमेव तादृशानन्दे

---

१ प्राप्तिर्वक्तव्येति पाठः ।

(वे०सू०मं०) अप्राप्तिरपि तस्याभूत् संसृतौ व्यावहारिकी ॥
सा विद्यया निवृत्तेति मुख्यां प्राप्तिं परे जगुः ॥ ११ ॥

अन्ये तु—संसारदशायां 'नास्ति न प्रकाशते' इति व्यवहारयोग्यत्वरूपाज्ञानावरणप्रयुक्तस्य 'मम निरतिशयानन्दो नास्ति' इति प्रत्ययस्य सर्वसिद्धत्वात् तदालम्बनभूतः कश्चिद् ब्रह्मानन्दस्याभावः काल्पनिको यावदविद्यमनुवर्तते। अविद्यानिवृत्तौ च तन्मूलत्वान्निवर्तते इति 'यस्मिन् सत्यग्रिमक्षणे' इत्यादिलक्षणानुरोधेन मुख्यमेव तस्य प्राप्यत्वमित्याहुः ॥

(वे०सू०मं०) परे प्रागावृतत्वेन पारोक्ष्यादपुमर्थताम् ॥
मुक्तौ तु तदभिन्नत्वादात्मप्राप्त्या पुमर्थताम् ॥ १२ ॥

अपरे तु—अवेद्यस्यापुरुषार्थत्वात्संसारदशायां सदप्यनवच्छिन्नसुखमापरोक्ष्याभावान्न पुरुषार्थः। न च स्वरूपज्ञानेनापरोक्ष्यं

---

विद्यमानेऽपि तदभावप्रत्ययदर्शनेन वास्तवस्य तदभावस्यासम्भवादविद्यावरणाधीनस्थितिकस्यानादेः काल्पनिकाभावस्य तदभावप्रत्ययालम्बनत्वं वक्तव्यम्। तत्रावरणस्वरूपमाह—नास्तीति। 'निरतिशयानन्दो मे न प्रकाशते, अप्रकाशमानत्वान्नास्त्येव सः' इति व्यवहारस्य सदा अभावादावरणस्य च सदा सत्त्वाद्योग्यत्वपर्यन्तधावनमिति बोध्यम्। निवर्तते इति। ब्रह्मानन्दस्याभाव इति शेषः। इदानीं ब्रह्मानन्दाभावसाधनफलं ब्रह्मानन्दस्य मुख्यं प्राप्यत्वं दर्शयति—इति यस्मिन्निति। ज्ञाने सत्यग्रिमक्षणे निरतिशयानन्दसत्त्वम्, ज्ञानाभावे च साधितस्य निरतिशयानन्दाभावस्यैव सत्त्वमिति लक्षणसत्त्वान्निरतिशयानन्दस्य प्राप्तस्यापि मुख्यमेव प्राप्यत्वमित्यर्थः ॥

'ब्रह्मानन्दस्वरूपमात्रं न पुरुषार्थः, किं तु तस्यापरोक्ष्यम्। तच्चाविद्यानिवृत्तिद्वारा विद्यासाध्यमेव, न तु तद् विद्योदयात् प्रागस्ति' इति मतमाह—अपरे त्विति। विद्याप्राप्यमानन्दापरोक्ष्यं स्वप्रकाशचैतन्यरूपम्, वृत्तिरूपं वा। उभयथाऽपि न सम्भवतीति शङ्कते—न चेति। आपरोक्ष्यं हि स्वव्यवहारानुकूलचैतन्याभिन्नत्वम्। तच्च संसारदशायामप्रतस्यापि ब्रह्मानन्दस्य वर्तते एव। ब्रह्मानन्दव्यवहारानुकूलसाक्षिचैतन्याभेदस्य सः

तदाऽप्यस्ति, तस्य सर्वदा स्वरूपसुखाभिन्नत्वात्। वृत्तिज्ञानेनापरोक्ष्यं तु न मुक्तावपीति वाच्यम्। न हि स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्। घटावच्छिन्नचैतन्याभिव्यक्तौ तदभिन्नस्य घटगन्धस्यापि आपरोक्ष्यापत्तेः। किं त्वनावृतार्थस्य तदभेदः। तथा चानावृतत्वांशस्तत्त्वसाक्षात्कारे सत्येवेति निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य विद्याप्राप्यत्वं युक्तमित्याहुः॥

(वे०सू०मं०) अन्ये भूमसुखाद्भेदो जीवेऽध्यस्तोऽभवत् पुरा॥
मुक्तौ तन्नाशतः प्राहुः प्राप्तिं स्फुटसुखात्मिकाम्॥१३॥

इतरे तु—अस्तु व्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्। तथाऽप्यज्ञानमहिम्ना जीवभेदवच्चिदानन्दभेदोऽपि अध्यस्त इति

---

दा ब्रह्मानन्दे सत्त्वादित्यर्थः। तदाऽपीति। संसारकालेऽप्यस्ति। तथा च न तस्य ज्ञानप्राप्यत्वमिति भावः। तस्येति। स्वरूपज्ञानस्येत्यर्थः। आपरोक्ष्यशरीरप्रविष्टा या आवृतत्वनिवृत्तिः, तस्यास्सम्पादनद्वारा ब्रह्मानन्दापरोक्ष्यं विद्यासाध्यमिति समाधानं कर्तुं शाब्दापरोक्षवादे निर्णीतमर्थं स्मारयति—न हीत्यादिना। तदभिन्नस्येति। अभिव्यक्तचैतन्याभिन्नस्येत्यर्थः। तदभेद इति। अनावृतचैतन्याभिन्नत्वमित्यर्थः। निरतिशयसुखापरोक्ष्यस्येति। चैतन्यरूपस्येत्यर्थः। न वृत्तिरूपस्य, अतो न मुक्तावापरोक्ष्यानुपपत्तिरित्यर्थः।

चैतन्याभेदमात्रमिति। अर्थापरोक्ष्यनिर्वचनेऽस्मिन् अनावृतत्वमर्थविशेषणं मात्रपदेन व्यवच्छिद्यते। न चैवं घटावच्छिन्नचैतन्याभिव्यक्तौ सत्यां तदभिन्नस्य घटगन्धस्याप्यापरोक्ष्यापत्तिरिति वाच्यम्। धर्मादेः साक्षिण्यध्यस्तस्यानावृतसाक्षिचैतन्याभिन्नस्याप्यापरोक्ष्यादर्शनेन तद्वद् घटगन्धस्याप्यभिव्यक्तघटावच्छिन्नचैतन्याभिन्नस्याप्यापरोक्ष्याभावोपपत्तेः। न च धर्मादेरयोग्यत्वादापरोक्ष्याभाव इति वाच्यम्। तथा सति प्रकृतेऽपि चाक्षुषवृत्त्यभिव्यक्तचैतन्यं प्रति फलबलेन गन्धस्यायोग्यत्वकल्पनेन तदापरोक्ष्याप्रसक्तेरिति भावः। तर्हि स्वरूपानन्दस्य सदा स्वव्यवहारानुकूलसाक्षिचैतन्याभिन्नत्वसत्त्वादापरोक्ष्यस्य विद्यासाधनत्वानुपपत्तिरित्याशङ्क्याह—तथाऽपीति। तावन्मात्रस्यापरोक्ष्यरूपत्वेऽपीत्यर्थः। यथा एकस्य पुरुषस्य पुरु-

संसारदशायां पुरुषान्तरस्य पुरुषान्तरचैतन्यापरोक्ष्यवद् अनव-च्छिन्नसुखापरोक्ष्यमपि नास्ति । अज्ञाननिवृत्तौ तु चिदानन्दभेद-प्रविलयात्तदापरोक्ष्यमिति तस्य विद्यासाध्यत्वमित्याहुः ॥ ४ ॥

(वे० सू० मं०) अथ मुक्तो भवेच्छुद्ध उतेशोऽत्र निगद्यते ॥
व्यक्ता जीवैक्यवादे हि शुद्धब्रह्मैकशेषता ॥ १४ ॥

(५) अथ विद्योदये सत्युपाधिविलयादपेतजीवभावस्य किम् ईश्वरभावापत्तिर्भवति, उत शुद्धचैतन्यमात्ररूपेणावस्थानम्? इति विवेचनीयम् । उच्यते—

एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागा-दिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणै-वावस्थानम् ।

---

षान्तरचैतन्यापरोक्ष्यं नास्ति, तथा जीवस्य संसारदशायामनवच्छिन्नानन्दापरो-क्ष्यमपि नास्ति । जीवानां परस्परभेदवत् साक्षिचैतन्यब्रह्मानन्दयोरप्याज्ञानिक-स्वानादिभेदस्य सत्त्वेन ब्रह्मानन्दस्य स्वव्यवहारानुकूलेन साक्षिचैतन्येनाभेदा भावाद् वास्तवाभेदस्य च परस्परभिन्नजीवसाधारणस्य विद्यमानस्याप्यकिञ्चि-त्करत्वादित्यर्थः । प्रविलयादिति । तथा च तत्त्वज्ञानस्याज्ञानतत्प्रयुक्त-भेदनिवृत्तिद्वारा अनवच्छिन्नानन्दापरोक्ष्यसम्पादकत्वात् तादृशानन्दापरोक्ष्य-स्य तत्त्वज्ञानसाध्यत्वं युक्तमित्यर्थः ॥

इति विवेचनीयमिति । इत्याकाङ्क्षायां सत्यां विविच्य वक्त-व्यमिति प्रश्नार्थः । मतभेदेन विवेकं दर्शयति—उच्यत इत्यादिना । तदेकाज्ञानेति । तस्य जीवस्य यदेकमज्ञानम्, तत्कल्पितेत्यर्थः । जीव-स्यैकत्वात्तदीयमूलाज्ञानमप्येकमेव । तथा च तस्यैकस्य यत्र क्वाप्यन्तः-करणे तत्त्वसाक्षात्कारोदये सति अज्ञानस्य देवतिर्यङ्मनुष्यादिरूपसर्वप्रमातृ-साधारणस्य सकार्यस्य तस्मिन्नेव क्षणे निश्शेषं प्रविलयादित्यर्थः । न चैवं शुकाद्यन्तःकरणोत्पन्नतत्त्वज्ञानेनैव समूलस्य सर्वप्रमातृसाधारण-संसारस्य निवृत्तत्वादिदानीं संसारानुपलब्धिप्रसङ्ग इति वाच्यम् । शुका-दिमुक्तौ मानाभावाच्छुकादिमुक्तिप्रतिपादकशास्त्रस्यान्यपरतायाः प्राग्दर्शि-तत्वादिति भावः ।

(वे०सू०मं०) अनेकजीववादेऽपि प्रतिबिम्बेशवादिनाम् ॥
मुक्तस्य बिम्बसद्भावाच्छुद्धता पर्यवस्यति ॥ १५ ॥
अनेकजीववादे ऽतो नावच्छेदनयः शुभः ॥
बद्धमुक्ताव्यवस्थानात्तद्देशोपाधिबन्धनात् ॥ १६ ॥

अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाऽङ्गीकारेऽपि यद्यपि कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेऽपि बद्धपुरुषान्तराविद्याकृतो जीवेश्वरविभागादिप्रपञ्चोऽनुवर्तते, तथाऽपि 'जीव इवेश्वरोऽपि प्रतिबिम्बविशेषः' इतिपक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम्। अनेकोपाधिष्वेकस्य प्रतिबिम्बे सति एकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात्। तत्सम्भवे कदाचिज्जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्ष इव मुक्तस्य पुनर्बन्धापत्तेः। अत एवानेकजीववादे अवच्छेदपक्षो नाद्रियते। यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे पु-

---

एकजीववादे अस्वरसं सूचयन् नानाजीववादं पुरस्करोति— अनेकेति। कश्चिज्जीवो बद्धः, कश्चिज्जीवो मुक्त इति व्यवस्थाभ्युपगमे इत्यर्थः। नानाजीववादे मुक्तस्येश्वरभावापत्तिरिति मनसि निधाय तत्र तत्सम्भवमाह—यद्यपीति। अनुवर्तत इति। तथा च नानाजीववादे मुक्तस्य वक्ष्यमाणविधया यावत्सर्वमुक्ति बद्धपुरुषान्तराविद्याकृतेश्वरभावापत्तिः सम्भवतीति भावः। नन्वेवं 'यद्यपि'इत्युक्तिरनुपपन्ना, तदुक्त्या हि यद्यपीश्वरभावापत्तिः सम्भवति, तथाऽपि न सम्भवतीत्यर्थप्रतीतेरिति चेद्, नायं दोषः। नानाजीववादो हि बहुविधः। तथा च सर्वेषु नानाजीववादेषु मुक्तस्येश्वरभावापत्तिर्न सम्भवतीति 'यद्यपि'इत्युक्तेस्तात्पर्यात्। एतदेव प्रपञ्चयति—तथाऽपीत्यादिना। बिम्बभूतेति। न तु प्रतिबिम्बविशेषरूपेश्वररूपेणावस्थानमित्येवकारार्थः। एवकारार्थे हेतुमाह—अनेकेत्यादिना। एकस्य ब्रह्मचैतन्यस्येत्यर्थः। प्रतिबिम्बभूतस्य बिम्बभावप्राप्तिनियमं विहाय प्रतिबिम्बान्तरत्वापत्तिसम्भवाभ्युपगमे बाधकमाह—तत्सम्भव इति। दृष्टान्तं प्रपञ्चयति—अत एवेति। पुनर्बन्धापत्तेरेवेत्यर्थः। य-

नरपि बन्धापत्तेः ।

(वे०सू०सं०) विश्वेशवादे मुक्तः प्राक् सर्वजीवविमोचनात् ॥
ईशो भूत्वा ततः शुद्धे स्वभावे व्यवतिष्ठते ॥

'प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः, उभयानुस्यूतं शुद्धचैतन्यम्' इति पक्षे तु मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वैश्वर्यत्वसत्यकामत्वादिगुणपरमेश्वरभावापत्तिरिष्य-

---

दवच्छेदेनेति । पूर्णचैतन्ये यच्चैतन्यप्रदेशावच्छेदेन मुक्तिः, तत्प्रदेशावच्छेदेन तत्र चैतन्ये उपाध्यन्तरसम्बन्धे सति पुनर्बन्धापत्तेरित्यर्थः । यच्चैतन्यप्रदेशो मुक्तस्तस्य बन्धापत्तेरिति यावत् ।

अत्रेदं चिन्त्यम्—चैतन्यं तावत् स्वतो नित्यमुक्तम् । तस्य चानाद्युपाध्यवच्छिन्नस्योपाध्युपहितस्य वा जीवत्वं बन्धश्चेति स्थितिः । तथा च मुक्तेः पूर्वं यस्योपाधिपरतन्त्रस्य चैतन्यप्रदेशस्य बन्ध आसीत्, न तस्य पुनर्बन्ध आपादयितुं शक्यते । मुक्तिकाले तदुपाधिनिवृत्त्या तत्परतन्त्रस्य पूर्वं बन्धाश्रयस्य निवृत्तत्वात् । नापि मुक्तस्य शुद्धचैतन्यस्य तदापादनं सम्भवति । तस्य बद्धजीवान्तरोपाधिसंसर्गे जीवान्तरत्वापत्तावपि 'पूर्वं यो बद्धः सन् मुक्तिं गतः, तस्य बन्धाप्रसक्त्या पुनर्बन्धापत्तेः' इत्युक्त्ययोगात् । किं च मुक्तचैतन्यस्यान्तःकरणान्तरसंसर्गेण तदुपाधिकजीवान्तरत्वापत्तौ सत्यां 'योऽहं पूर्वं संसारी सन् कथञ्चिन्मुक्तः, सोऽहं पुनः संसारं प्राप्तः' इत्यनुसन्धानं तावन्न सम्भवति । मुक्तजीवस्य बद्धजीवस्य चोपाध्यैक्याभावात् । तथा चेयं जीवान्तरतापत्तिरकिञ्चित्करेति न दोषावहा । एवं पूर्वोक्ता मुक्तस्य प्रतिबिम्बरूपजीवान्तरत्वापत्तिरप्यकिञ्चित्करेति ।

ननु नानाजीववादे यदि प्रतिबिम्बेश्वरपक्षे मुक्तस्येश्वरभावापत्तिर्न सम्भवति, अवच्छेदपक्षे च मुक्तिरेव न सम्भवति, दूरे ईश्वरभावापत्तिः, तर्हि कस्मिन् पक्षे मुक्तस्येश्वरभावापत्तिरिष्यते ? तत्राह—प्रतिबिम्बो जीव इति । अस्मिन्नपि पक्षे सर्वेषां जीवानां मुक्त्यनन्तरं मुक्तस्य निर्विशेषशुद्धचैतन्यमात्ररूपेणैवावस्थानम्, तदा सर्वेषामुपाधीनां निश्शेषं चिन्मात्रे विलीनत्वेन जीवेश्वरविभागाभावादित्याशयेनाह—यावदिति । ननु ततः पूर्वमपि बिम्बप्रतिबिम्बोभयानुस्यूतशुद्धचैतन्यरूपेणैवावस्थानमस्तु, तथा सति

ते। यथा अनेकेषु दर्पणेषु एकस्य मुखस्य प्रतिबिम्बे सति एकदर्पणापनये तत्प्रतिबिम्बो बिम्बभावेनावतिष्ठते, न तु मुखमात्ररूपेण, तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात्, तथैकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सति एकस्मिन् प्रतिबिम्बे विद्योदये तेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावात्। न च मुक्तस्याविद्याऽभावात् सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिः। तदविद्याऽभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात्। न ही-

---

निर्गुणविद्याफलभूताया मुक्तेरैकरूप्यप्रतिपादकस्य तृतीयाध्यायान्तिमाधिकरणस्य सामञ्जस्योपपत्तेरित्यत आह—यथेति। तदानीमपीति। एकदर्पणापनयनकालेऽपीत्यर्थः। एकस्मिन्निति। एकस्मिन् प्रतिबिम्बरूपे जीवे विद्योदये सति तेन विद्योदयेन तस्य विदुष उपाधिलये सति तत्प्रतिबिम्बस्य मुक्तस्य प्रतिबिम्बजीवस्येत्यर्थः। ननु मुक्तस्य निरुपाधिकत्वात् कथं तस्यैश्वर्यं सम्भवतीति शङ्कते—न च मुक्तस्येति। परिहरति—तदविद्येति। तस्य मुक्तस्याविद्याऽभावेऽपीत्यर्थः। अत्राविद्यानानात्वव्यवहारेणाविद्याप्रतिबिम्बा एव जीवाः, अन्तःकरणानि तु तेषां कर्तृत्वाद्युपाधय इति सूचितम्। तथा च मुक्तस्याविद्यकमेवैश्वर्यमित्युपगमात् परमार्थत एकरूपैव सदा मुक्तिरिति न तृतीयाध्यायान्तिमाधिकरणविरोध इति भावः। ननु जीवस्य संसारित्वं यथा स्वाविद्याकृतम्, तथा ईश्वरस्याप्यैश्वर्यं स्वोपाधिकृतमेव वाच्यम्। तथा च मुक्तस्य स्वोपाध्यभावान्नैश्वर्यं सम्भवतीति शङ्कां निराकरोति—न हीति। तत्र किमीश्वरस्योपाधिरविद्या, किं वा तदतिरिक्ता माया?। नान्त्यः। अविद्यासु बिम्बभूतस्य चैतन्यस्य जीवाश्रिताविद्याभिरैश्वर्यसम्भवेन तदतिरिक्तमायोपाधिकल्पनावैयर्थ्याद्। तत्तज्जीवगततत्त्वज्ञानेन तत्तदविद्यानिवृत्तिरिति क्रमेण सर्वजीवमुक्त्यनन्तरमपि मायाया निवर्तकाभावेन तदाऽपि मायावशेषप्रसङ्गाच्च। अविद्यानामपि बिम्बभूतेश्वरसंबन्धित्वसत्त्वेन ईश्वरस्य तासु विक्षेपशक्तिप्राधान्येन 'मम माया' इत्यादिनिर्देशोपपत्तेश्च। बन्धमुक्तिप्रतिपादकशास्त्रानुसारिभिः "इन्द्रो

श्वरस्येश्वरत्वं सत्यकामादिगुणवैशिष्ट्यं च स्वाविद्याकृतम्, तस्य निरञ्जनत्वात्, किं तु बद्धपुरुषाविद्याकृतमेव तत्सर्वमेष्टव्यम् ।

(वे०सू०मं०) न च विद्यान्तरफलैः साम्यं मोहपरिक्षयात् ॥
तेषु भोगस्य साम्येऽपि जगद्व्यापारवर्जनात् ।

न च "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथायथोपासते" इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणाद् मुक्तेः सगुणविद्याफलाविशेषापत्तिः । सगुणोपासकानामखण्डसाक्षात्काराभावाद् नाविद्यानिवृत्तिः, न वा तन्मूलाहङ्कारादेर्विलयः । आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणम् । 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' ( उ. मी.

मायाभिः पुरुरूपः" "यो योनियोनिम्" इत्यादिश्रुतिवाक्यैरविद्यानानात्वसिद्धौ 'मायाम्' इत्याद्येकवचनस्य जात्यभिप्रायत्वोपपत्तेश्च । तस्मान्नान्त्यः कल्पस्सम्भवति । नाद्य इत्याह—स्वाविद्याकृतमिति । स्वाश्रिताविद्याकृतमित्यर्थः । बद्धपुरुषेति । अविद्यानां जीवाश्रितत्वं च प्रथमपरिच्छेदे निरूपितमस्माभिरिति नात्र निरूप्यते । निरञ्जनत्वादिति । दोषानाश्रयत्वादित्यर्थः ।

ननु निर्गुणब्रह्मविद्याफलभूतायां मुक्तावपीश्वरसायुज्याभ्युपगमे सगुणविद्याफलादविशेषापत्त्या सगुणनिर्गुणविद्ययोः फलतो भेदो न स्यादित्याशङ्कां निराकरोति—न चेत्यादिना । यादृग्गुणकब्रह्मध्यानवानस्मिन् लोके भवति, तादृशं ब्रह्म देहपातानन्तरं प्राप्नोतीति "यथाक्रतुः" इतिश्रुत्यर्थः । तमीश्वरं यथा यथा येन येन गुणजातेन विशिष्टमुपासते, तादृशमेव तं प्राप्नुवन्तीत्यर्थः । सगुणोपासकं प्रकृत्य श्रुतम् "प्राप्नोति स्वाराज्यम्" इत्यादिश्रुतिवाक्यमादिशब्दार्थः । अविशेषापत्तिरिति । तथा च सगुणोपासकानां ब्रह्मलोकं गतानां निर्गुणविद्याश्रयणं व्यर्थं स्यादिति भावः । फलभेदं दर्शयति—सगुणेत्यादिना । जगदिति । सकलजगत्सृष्टिस्थितिसंहारकर्तृत्वलक्षणव्यापारव्यतिरिक्तं स्वभोगोपयुक्तभोग्यभोगोपकरणमात्रसृष्टिसामर्थ्यरूपमेवैश्वर्यमुपासकानां भवितुमर्हति, न तु सकलजगद्व्यापारः । स

अ. ४ पा. ४ सू. १७ ) 'भोगमात्रसाम्यलिङ्गाच्च' (उ. मी. अ. ४ पा. ४ सू. २१ )इत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्येऽपि सङ्कल्पमात्रात् स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येऽपि सकलजगत्सृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्यम् । मुक्तानां तु निस्सन्धिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महतो विशेषस्य सद्भावात् । न च परमेश्वरस्य रघुनाथाद्यवतारे तमस्वित्वदुःखसंसर्गादिश्रवणाद् मुक्तानामी-

---

तु नित्यसिद्धस्य परमात्मन एव । कुतः? । "आत्मन आकाशः सम्भूतः"इत्यादिसृष्टिवाक्येषु परमात्मन एव प्रकृतत्वाद्, उपासकानामसन्निहितत्वाच्च । इतश्च सगुणोपासकानां न निरङ्कुशमैश्वर्यमित्याह—भोगेति । उपासकानां नित्यसिद्धेन परमेश्वरेण हिरण्यगर्भमाविश्य भोगान् भुञ्जानेन भोगमात्रे साम्यगमकस्य सत्त्वादित्यर्थः । तथा च श्रुतिः—"तमाह आपो वै खलु मीयन्ते लोकोऽसौ"इति । तमुपासकं स्वसमीपमागतं प्रत्याह हिरण्यगर्भः 'मया खल्वापोऽमृतलक्षणा भुज्यन्ते, तत्राप्यसावल्लक्षणपदार्थो भोग्यः' इति श्रुत्यर्थः । ननु 'सङ्कल्पादेव तु तच्छ्रुतेः'(उ०मी०अ०४पा०४सू०८)इति सूत्रेण तेषामीश्वरवत् सत्यसङ्कल्पत्वव्यवस्थापनात् कथं जगद्व्यापाराभावः ? इत्यत आह—सङ्कल्पमात्रादिति । 'यं यं कामं पित्रादिरूपं कामयते, स स कामः सङ्कल्पादेव समुत्तिष्ठति'इति भोग्यादिपदार्थानामेव श्रुतौ सङ्कल्पमात्रसिद्धत्वप्रतिपादनात् तावन्मात्रविषयमेवोपासकानां सत्यसङ्कल्पत्वमिति सूत्रतात्पर्यान्न तद्विरोध इति भावः । निःसन्धिबन्धमिति । सर्वात्मनेत्यर्थः । तत्सर्वमिति । अविद्यानिवृत्त्यादिकं पूर्वोक्तं सर्वमित्यर्थः । परममुक्तस्य ईश्वरभावापत्तौ बाधकमाशङ्क्य निराकरोति—न चेत्यादिना । परमेश्वरस्येति । श्रीमहाविष्णोरित्यर्थः । श्रीकृष्णाद्यवतार आदिशब्दार्थः । तमस्वित्वेति ।

आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ।

इत्यादिश्रीरामवाक्यैरेव स्वकीयविष्णुत्वलक्ष्मीभर्तृत्वादिविषये अज्ञानावगमात् ।

राज्यनाशो वने वासः सीता नष्टा द्विजो हतः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥

श्वरभावे पुनर्बन्धापत्तिः । तस्य विप्रशापामोघत्वादिस्वकृतमर्यादापरिपालनाय कथंचिद् भृगुशापादिसत्यत्वं प्रत्याययितुं नट-

---

'न मद्विधो दुष्कृतकर्मकारी' इत्यादिभिः श्रीरामवाक्यैरेवात्यन्तदुःखित्वप्रतीतेश्चेत्यर्थः । 'सुग्रीवं शरणं गतः' इत्यादिवाक्यावगतदैन्यादिकमादिपदार्थः । तस्य कथं चिदभिनयमात्रपरत्वादिति सम्बन्धः । तस्येत्यस्य तमस्वित्वादिश्रवणस्येत्यर्थः । कथञ्चिदित्यस्य स्वेच्छयेत्यर्थः । विप्रशापामोघत्वादिरूपा या स्वेन परमेश्वरेण कृता मर्यादा व्यवस्था, तत्परिपालनायेत्यर्थः । सर्वज्ञस्यापि श्रीरामस्य महादेवब्रह्मेन्द्रादिदेवानां सन्निधौ 'आत्मानं मानुषं मन्ये' इत्यादिवचनेन 'देवानां सन्निधौ मनुष्येण विनय एव कर्तव्यः, न तु प्रागल्भ्यं कर्तव्यम् । तथा सति मनुष्यस्यानर्थो भवेद्'इति या परमेश्वरकृता मर्यादा, सा श्रीरामेण परिपालिता । एवमन्या अपि मनुष्याणां हितार्थाय गुरुशिष्यसम्प्रदायादिलक्षणा मर्यादाः परमेश्वरेण कृताः, ता सर्वा अपि तदा तदा श्रीरामकृष्णाद्यैर्लोकहितार्थायानुष्ठिताः, तासां सङ्ग्रहार्थमादिपदम् । भृग्विति । भृगुशापस्य स्वयं तच्छापाङ्गीकारस्य च सत्यत्वं मनुष्यलोके प्रकाशयितुमित्यर्थः । तत्प्रकाशनफलं च श्रेयोऽर्थिनां विप्रशापादिभ्योऽतिभीत्यादिनिवृत्तिद्वारा श्रेयःप्राप्तिरेव । भृगुशापादिकं च वाल्मीकीये उत्तररामायणे व्यक्तम् । तथा हि वसिष्ठसन्निधौ दशरथं प्रति दुर्वासाः—

शृणु राजन् पुरा वृत्तं पुरा देवासुरे युधि ।
दैत्याः सुरैर्हन्यमाना भृगुपत्नीमुपाश्रिताः ॥
तया दत्ताभयास्तत्र न्यवसन् निर्भयास्तदा ।
तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरोत्तमः ॥
चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ।
ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः ॥
शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् ।
सहसा विष्णोर्जगदीश्वरस्य शापानभिभाव्यत्वमविचार्येत्यर्थः ॥
यस्मादवध्यां मे भार्यामवधीः क्रोधमूर्छितः ।
तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ।

एवं शापं भृगुर्दत्वा विष्णोर्देवस्य विव्यथे।
विष्णुशक्तिमविद्वान् स प्रपेदे शापमूढताम् ॥

विष्णुशक्तिमविद्वान् सन् विष्णोः शापं दत्वा पश्चाद्विष्णुशक्तिप्रतिहतं शापं स्वात्मानं प्रति पुनः प्राप्तं ज्ञात्वा व्यथां भीतिं प्राप्तवान् व्यथितश्च शापेन मूढतां विसंज्ञतां प्राप्त इत्यर्थः।

चिरकालमसंज्ञोऽभूच्छापान्धतमसाऽऽवृतः।
दृष्ट्वा सप्तर्षयश्चैनं कृपां चक्रुश्च भक्तिभिः ॥

एवं चिरकालं शापान्धतमसाऽऽवृतं भृगुं दृष्ट्वा पूर्वं सप्तर्षिषु भृगुणा कृताभिर्भक्तिभिः पूजाभिस्तस्मिन् ते ऋषयः कृपां चक्रुः। शापं च कृपया भृगोस्सकाशान्निस्सारितवन्त इत्यर्थः।

स च शापः पुरस्तस्थौ मन्दं भृगुरथाब्रवीत्।
रक्षध्वं मामृषिश्रेष्ठाश्शापान्मत्पुरतस्स्थितात् ॥
श्रुत्वा तु भृगुवाक्यं तमाहुश्च परमर्षयः।
स्तुत्यैर्ब्रह्मेशशक्राद्यैस्स्तूयमानमहर्निशम् ॥
स्तुत्यैरिति—अस्माभिस्स्तुत्यैरपीत्यर्थः।
नारायणं प्रपद्यस्व स्तोत्रैरेव च सुव्रत।
नारायणमेव प्रपद्यस्व नान्यश्शक्तस्त्वां मोक्षयितुमित्यर्थः।
भृगुणाऽऽराधितो विष्णुरागतस्त्वरितं भृगुम्।
कृतापराधमपि भृगुं भक्तवात्सल्यात् त्वरया आगत इत्यर्थः ॥
माभैर्भृगोऽनृतं वाक्यं नाभविष्यद्द्विजस्य ते।
अनृतं न भविष्यतीत्यर्थः।
सम्मोचयित्वा शापात्त्वामहमेनं गृहीतवान्।
अङ्गीकृतवानित्यर्थः।
अर्चयामास तं देवं भृगुश्शापेन पीडितः।
ततोऽब्रवीद्देवदेवः प्रीतिमान् भक्तवत्सलः ॥
लोकानां तु हितार्थाय शापं तं ग्राह्यमुक्तवान्।'
तव च हितार्थायेति तुशब्दार्थः।
इति शप्तो महातेजा भृगुणा पूर्वजन्मनि।
इहागतस्स पुत्रत्वं तव पार्थिवसत्तम ॥
राम इत्यभिविख्यातस्त्रिषु लोकेषु मानद ॥ इति।

वदीश्वरस्य तदभिनयमात्रपरत्वात् । अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्यसमाभ्यधिकराहित्यादिश्रुतिविरोधात् । तस्माद्यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति बिम्बेश्वरभावे न कश्चिद्दोषः ॥

(वे०सू०मं०) पक्षोऽयं चरमः साधुः सूत्रभाष्यादिषु स्फुटम् ॥
आविर्भूतस्वरूपेऽपि गुणाष्टकनिरूपणात् ॥१९ ॥

अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणः । तथा हि—समन्वयाध्याये तावद् "दहर उत्तरेभ्यः" ( उ० मी० अ० १ पा० ३ सू० १४ ) इत्यधिकरणे "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशः" इत्यादिश्रुतिनिर्दिष्टो दहराकाशो न भूताकाश, नापि जीवः, किं-

---

अहर्निशं ब्रह्मेशादिस्तुत्यत्वदेवदेवत्वादिप्रतिपादकरामायणवचनैरेव श्रीमहाविष्णोर्लोकहितार्थाय श्रीरामरूपेणावतीर्णस्य तमस्त्वित्वादिश्रवणमभिनयमात्रपरमिति भावः । अन्यथेति । तस्याभिनयमात्रपरत्वानङ्गीकारे इत्यर्थः । तस्येति । नारायणाद् ब्रह्मा जायते "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः" इत्यादिश्रुतिसहस्रसिद्धस्येश्वरस्येत्यर्थः । "एष त आत्माऽन्तर्याम्यमृतः" "एष सर्वेश्वरः" "न तत्समश्चाभ्यधिकश्च दृश्यते" "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यादिश्रुतिषु नारायणस्य नित्यमुक्तत्वसर्वेश्वरत्वसमाभ्यधिकरहितत्वमुक्तमाप्यत्वादिश्रवणेन तद्विरोधमसङ्गादित्यर्थः । तस्मादिति । मुक्तस्येश्वरभावापत्तौ बाधकाभावादित्यर्थः ।

ननु बाधकाभावेऽपि साधकमानं विना कथमीश्वरभावापत्तिस्तस्य सिध्यतीत्याशङ्क्य तत्र मानमाह—अयमेवेति । अस्मिन् ब्रह्मणः परमात्मनः उपलब्धिस्थानभूते पुरे शरीरे यदिदं दहरमल्पं पुण्डरीकमस्ति वेश्माकारम्, अस्मिन् पुण्डरीकेऽन्तर्दहर आकाशो यः श्रुतः स 'भूताकाशो वा, जीवो वा, परमेश्वरो वा' इति संशये रूढिबलाद् भूताकाश इत्येकः पूर्वपक्षः । आकाशविशेषणदहरत्वलिङ्गादल्पोपाधिपरिच्छिन्नो जीव इति द्वितीयः पूर्व पक्षः । पक्षद्वयनिषेधपूर्वकं सिद्धान्तं वदन् सूत्रं व्याचष्टे—न भू-

तु परमेश्वरः, उत्तरेभ्यो वाक्यशेषेभ्यः। "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इत्यादिना प्रतिपाद्यमानेभ्यो द्यावापृथिव्याद्याधारत्वलक्षणगुणेभ्यो हेतुभ्य इति निर्णीय 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' ( उ० मी० अ० १ पा० ३ सू० १९ ) इतिसूत्रान्तरेण दहरविद्यानन्तरमिन्द्रप्रजापतिसंवादे "य आत्माऽपहतपाप्मा" इत्यादिना अपहतपाप्मत्वादिगुणाष्टकयुक्तमात्मानमुपदेश्यमुपक्षिप्य "य एषोऽक्षिणि

---

त्ताकाश इत्यादिना। वाक्यशेषमेव खण्डश उदाहरति—उभे इति। अस्मिन् प्रकृते दहराकाशे समाहिते स्थिते अयमाकाशः भूताकाशः। एतच्छब्दाभ्यां दहराकाशो निर्दिष्टः। जिघत्सा भक्षणेच्छा तद्रहितः, पिपासारहितश्च। अत्र भूताकाशे भूताकाशोपमितत्वसत्यकामत्वादयो गुणा न सम्भवन्तीति तन्निरासः। परिच्छिन्ने जीवे आकाशोपमितत्वद्यावापृथिव्यादिजगदाधारत्वापहतपाप्मत्वादयो गुणा न सम्भवन्तीति जीवनिरासः। उक्तहेतूनां परमेश्वरे सम्भवमादायाकाशशब्दस्य तत्र निरूढत्वाच्च स एव दहराकाशः। तस्य दहरत्वं तु न स्वाभाविकम्, किं तूपासनार्थं कल्पितमणीयस्त्वादिवदिति निर्णयः। सूत्रान्तरेण 'जीवेऽप्यपहतपाप्मत्वादिगुणाष्टकमस्तीति तद्गुणाष्टकं निर्णायकं न भवति' इत्याशङ्क्य समादधानः सूत्रकारो मुक्तस्येश्वरभावापत्तिमाहेति सम्बन्धः। 'जीवेऽपि गुणाष्टकमस्ति' इत्यत्र 'गुणाष्टकयुक्तमात्मानमुपदेश्यमुपक्षिप्य जीवस्योपदेशाद्' इति हेतुः। गुणाष्टकयुक्तमात्मानमुपदेश्यत्वेनोपक्रम्य प्रजापतिना जीव उपदिष्ट इति कथमवगम्यते? इत्यत आह—य एषोऽक्षिणीत्यादिना। प्रजापतिना हि पर्यायचतुष्टयेनात्मा इन्द्रं प्रत्युपदिष्टः। तत्र प्रथमपर्यायवाक्यम्—"य एषोऽक्षिणि" इति। पुरुषो जीवः। अक्षिग्रहणं सर्वेन्द्रियोपलक्षणार्थम्। 'चक्षुरादिषु रूपाद्युपलब्धिक्रियां कुर्वत्सु सत्सु यः पुरुषो दृश्यते रूपाद्युपलब्धिक्रियाकर्तृत्वेनानुमीयते, एषः युवाभ्यां पृष्ट आत्मा' इतीन्द्रविरोचनौ प्रति प्रजापतेरुपदेशः। तत्राक्षिग्रहणेन जाग्रदवस्थावान् जीव इह विवक्षित इति प्रतीयते। अवस्थान्त-

पुरुषो दृश्यते एष आत्मा"इति जाग्रदवस्थायां द्रष्टृत्वेनाक्षिसन्निहितस्य "य एष स्वप्ने महीयमानश्चरति एष आत्मा" इति स्वप्नावस्थापन्नस्य "तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानाति एष आत्मा"इति सुषुप्त्यवस्थापन्नस्य "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इत्यवस्थात्रयोत्तीर्णस्य च जीवस्योपदेशाज् जीवेऽप्यस्ति अपहतपाप्मत्वादिगुणाष्टकमिति न तद् दहराकाशस्य परमेश्वरत्वनिर्णायकम्।

---

रेष्विन्द्रियव्यापाराभावादिति मत्वा प्रथमपर्यायवाक्यस्य तात्पर्यमाह—जाग्रदवस्थायामिति। द्रष्टृत्वेनेति। इन्द्रियै रूपादिद्रष्टृत्वेनेत्यर्थः। अक्षिसन्निहितस्य स्वप्नावस्थापन्नस्य सुषुप्त्यवस्थापन्नस्यावस्थात्रयोत्तीर्णस्य च जीवस्योपदेशादिति सम्बन्धः। द्वितीयपर्यायवाक्यमुदाहरति—य एष स्वप्ने इति। महीयमानो वनितादिभिः पूज्यमान इत्यर्थः। चरति विषयान्वासनामयाननुभवति य एव इन्द्रेण त्वया पृष्ट आत्मेत्यर्थः। तृतीयपर्यायवाक्यमुदाहरति—तद्यत्रैतदिति। यत्र यस्मिन् काले, एतद् एष जीवः। सुप्तः स्वापं प्राप्तः, समस्तः सम्यग्विलीनकरणग्रामः। सम्प्रसन्नः स्वरूपानन्दानुभववान् स्वप्नमपि न विजानाति, एष एव त्वया पृष्ट आत्मेत्यर्थः। चतुर्थपर्यायवाक्यमुदाहरति—एष सम्प्रसाद इति। सम्यक् प्रसीदत्यस्मिन् जीव इति व्युत्पत्त्या सम्प्रसादशब्दस्सुषुप्तस्थानवाचकस्सन् सुषुप्त्यवस्थोपलक्षितं जीवमुपलक्षयति। शरीरादुत्क्रम्य परमुत्कृष्टं ज्योतिरादित्यमुपसम्पद्यादित्योपलक्षितं देवयानमार्गं प्राप्य स्वेन स्वकीयेनोपासनाफलभूतैश्वर्यविशिष्टेन रूपेणाभिनिष्पद्यते। ब्रह्मलोकं गत उपासकस्स उत्तमः पुरुष उपक्रान्तापहतपाप्मत्वादिगुणक इति पूर्वपक्षरीत्या चतुर्थपर्यायवाक्यार्थो द्रष्टव्यः।

ननु प्रजापतिवाक्ये पर्यायचतुष्टयस्य जाग्रदाद्यवस्थापन्नजीवविषयकत्वमनुपपन्नम्। प्रथमपर्याये जाग्रदवस्थावाचिपदाभावेन तस्य जाग्रज्जीवविषयकत्वस्यास्फुटत्वात्। तथा च प्रथमपर्याये इन्द्रविरोचनाभ्यां पृष्टोऽपहतपाप्मत्वादिगुणक आत्मैव निर्दिष्टः। स च ब्रह्मैवेति प्रजापतिवाक्येऽपि ब्रह्मण एव

"य एष स्वप्ने" इत्यादिपर्यायेषु प्रतिपर्यायम् "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति श्रवणेन स्फुटस्वप्नादिजीवलिङ्गानां द्वितीयादिपर्यायाणामेव जीवविषयत्वम्, प्रथमपर्यायस्य च ब्रह्मविषयत्वमिति चोद्यानवकाशादित्याशङ्क्य तत्र चतुर्थपर्याये निरूप्यमाणः सकलबन्धविनिर्मुक्तत्वेनाविर्भूतस्वरूपो जीवः प्रतिपाद्यः।

---

गुणाष्टकमुपदिष्टम्, न जीवस्येति चोद्यस्यात्र नावकाश इत्याह—य एष स्वप्न इत्यादिपर्यायेष्विति। स्फुटेति। स्फुटानि स्वप्नस्वापशरीराद् समुत्थानरूपाणि जीवलिङ्गानि येषु पर्यायेषु, तेषामेव जीवविषयत्वम्। तेषां ब्रह्मविषयकत्वचोद्यानवकाशाद्। प्रथमपर्यायस्य त्वस्फुटजीवलिङ्गस्य ब्रह्मविषयकत्वमिति चोद्यं सावकाशमिति भ्रमो न कर्तव्य इत्यत्र हेतुमाह—प्रतिपर्यायमिति। द्वितीयपर्यायादौ "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति श्रवणेन प्रथमपर्यायस्य ब्रह्मविषयत्वासम्भवादित्यर्थः।

एतदुक्तं भवति—द्वितीयादिपर्यायत्रयस्य जीवविषयत्वं तावद् सम्प्रतिपन्नम्। प्रथमपर्यायस्यापि जीवविषयत्वं वक्तव्यम्। प्रथमपर्यायनिर्दिष्टस्यैव "एतद्" इति सर्वनाम्ना आकृष्यमाणत्वादर्थभेदे तदयोगादिति। एतेन प्रथमपर्यायस्य चक्षुर्गोलकस्थप्रतिबिम्बविषयत्वमेव तस्याक्षिणि दृश्यत इति दृश्यमानत्वसम्भवादिति चोद्यमपि निरस्तम्। द्वितीयपर्यायगतैतत्पदेन प्रथमपर्यायनिर्दिष्टं पुरुषमाकृष्य तस्योत्तरत्र स्वप्नजीवरूपत्वोपदेशाद् प्रथमपर्याय एवाक्षिणि निर्दिष्टस्य पुरुषस्यामृतत्वाभयत्वाब्रह्मत्वसङ्कीर्तनाच्च। न च प्रतिबिम्बे तद् सम्भवति। न च जीवस्यापि तदसम्भव इति वाच्यम्। जाग्रदाद्यवस्थास्वमृतत्वादेरसम्भवेऽप्यवस्थात्रयोत्तीर्णस्य तस्य प्रजापतिवाक्यप्रामाण्याद् तत्सम्भवादिति पूर्वपक्ष्याशयः। एवम् 'उत्तराच्चेद्' इति सौत्रशङ्काभागं व्याख्याय 'आविर्भूतस्वरूपस्तु' इति सिद्धान्तभागं व्याचष्टे—तत्र चतुर्थेति। पर्यायचतुष्टयमध्ये इत्यर्थः। सकलेति। तत्त्वसाक्षात्कारेणाविद्यानिवृत्तौ सत्यां तन्मूलसकलबन्धविनिर्मुक्तया आविर्भूतममृताभयब्रह्मलक्षणं स्वरूपमस्येत्याविर्भूतस्वरूपो जीवः प्रतिपाद्यत इत्यर्थः।

ननु चतुर्थपर्यायेऽपि पूर्वपर्यायेष्विव संसार्यात्मैव कुतो न निरूप्यते।

न तु सांसारिकावस्थाभेदकलुषितः । तत्र सत्यसङ्कल्पत्वादिगुणबाधात् । अवस्थात्रयोपन्यासस्य तत्तदवस्थादोषाभिधानेन चतुर्थपर्यायोपदेशशेषत्वप्रतिपत्तेरिति समादधानः सूत्रकारश्चतुर्थपर्याये

तत्पर्यायेऽपि "शरीरात् समुत्थाय" इति शरीरादधिकोत्क्रान्त्यवस्थाविशेषविशिष्टस्य संसारिण एव स्पष्टं प्रतीतेरित्याशङ्कां सौत्रावधारणार्थकतुशब्दव्याख्यानेन परिहरति—न त्विति । तत्रेति । संसारिणीत्यर्थः । तथा च चतुर्थपर्यायेऽपि संसारिण एव निरूपणे इन्द्रेण पृष्टस्यापहतपाप्मत्वादिगुणकस्य प्रजापतिना अनुपदिष्टत्वात् प्रजापतिवाक्यं प्रतिवचनमेव न स्यात् । अतश्चतुर्थपर्यायो गुणाष्टकयोग्यमुक्तजीवविषय एवेत्यर्थः । न च पूर्वपक्षोक्तरीत्या सगुणविद्यया ब्रह्मलोकं गतस्य अपहतपाप्मत्वादिगुणाष्टकसम्भवादात्यन्तिकमुक्तविषयत्वं चतुर्थपर्यायस्य न वक्तव्यम्, तथा च संसारिविषयत्वमेवास्यापि पर्यायस्येति वाच्यम् । सगुणविद्याफलभूतस्यापि तस्याविद्यानिवृत्त्यादेरभावेन निरङ्कुशापहतपाप्मत्वादेरसम्भवात् प्रजापतिवाक्यस्य निर्गुणब्रह्मपरत्वस्य समन्वयाध्याय एव सप्रपञ्चं निरूपितत्वाच्च न तद्विद उत्क्रान्त्यादिसम्भव इति भावः ।

तथाचोक्ततात्पर्यानुरोधेन चतुर्थपर्यायस्यायमर्थः—शरीरात् समुत्थानं शरीरत्रयविलक्षणस्य त्वम्पदलक्ष्यस्य निर्णयः, परं ज्योतिर्ब्रह्म, तदुपसम्पत्तिः तत्साक्षात्कारः, तत्फलं मुक्तिः, स्वस्वरूपाविर्भावः स्वेन रूपेणाभिनिष्पत्तिः । स च मुक्त उत्तमः पुरुषः परमात्मैवेति ।

ननु चतुर्थपर्यायस्यैव पृष्टगुणाष्टकयुक्तात्मनिरूपणपरत्वे पूर्वपर्यायाणामवस्थात्रयोपन्यासरूपाणां वैयर्थ्यं स्यादिति नेत्याह—अवस्थात्रयोपन्यासस्येति । जाग्रदवस्थायामन्धत्वविनाशित्वादिदोषाभिधानेन स्वप्नावस्थायां रोदनादिदोषाभिधानेन सुषुप्त्यवस्थायां स्वपरज्ञानाभावविनष्टप्रायत्वादिदोषाभिधानेन चावस्थात्रयकलुषितस्य जैवरूपस्य लोकसिद्धस्य हेयत्वज्ञापनद्वारा तज्जिज्ञासोरधिकारिणो वास्तवब्रह्मस्वरूपनिरूपणार्थं चतुर्थपर्यायप्रवृत्तिरित्यवगमात् पूर्वपर्यायाणां चतुर्थपर्यायशेषत्वं प्रतीयते, अतो न तेषां वैयर्थ्यमित्यर्थः । समादधान इति । अपहतपाप्मत्वादिगुणाष्टकं दहराकाशस्येश्वरत्वनिर्णायकं न भवति । प्रजापतिवाक्याज् जीवेऽपि गुणाष्टकसत्त्वेन तस्य व्यभिचारित्वादित्याशङ्क्य प्रजापतिवाक्ये मुक्तजीव एव गुणाष्टकयुक्तः प्रतिपाद्यते, न तु बद्ध-

प्रतिपाद्यस्य मुक्तस्येश्वरभावापत्तिं स्पष्टमाह । तदभावे मुक्तेऽपि सत्यसङ्कल्पत्वाद्ययोगाद् अनुक्रान्तस्य गुणाष्टकस्य ईश्वरादन्यत्रापि भावे कृतशङ्कापरिहारालाभाच्च । तस्मिन् सूत्रे 'तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वे-

---

जीवः । ततो न गुणाष्टकस्य परमेश्वरादन्यत्र सत्त्वम् । येन तस्यान्यत्रापि सत्त्वेन व्यभिचारितया निर्णायकत्वं न स्यादिति समादधान इत्यर्थः । ननु 'तत्र सत्यसङ्कल्पत्वादिगुणबाधाद्'इति पूर्वग्रन्थेन चतुर्थपर्याये गुणाष्टकयुक्तो मुक्तजीवः प्रतिपाद्यत इति सूत्रतात्पर्यं वर्णितम् । तावता मुक्तस्येश्वरतापत्तिः कथं सूत्रकारेणोक्ता ? तत्राह—तदभावे इति । मुक्तस्येश्वरभावापत्त्यभावे बद्धजीव इव मुक्तजीवेऽपि निरस्तोपाधिके सत्यसङ्कल्पत्वादिगुणायोगाद् गुणाष्टकयुक्तस्यात्मनो निरूपणं प्रजापतिवाक्ये न स्यात् । अतो मुक्तजीवस्य गुणाष्टकयुक्तत्वमीश्वरभावापत्त्यैवेति सूत्रकारस्य तात्पर्यं निश्चीयत इत्यर्थः । ननु जीवेश्वरयोर्वस्तुत एव भिन्नत्वान्मुक्तस्य नेश्वरभावापत्त्या गुणाष्टकयोगः, किं तु स्वत एवेत्याशङ्कां निराकरोति—अनुक्रान्तस्येति । उपक्रमे श्रुतस्येत्यर्थः । कृतेति । गुणाष्टकस्य जीवसाधारणत्वेन ईश्वरासाधारणत्वाभावान्नेश्वरलिङ्गत्वं गुणाष्टकस्येति या शङ्का 'उत्तराच्चेद्'इति सूत्रभागेन कृता, तस्याः शङ्काया गुणाष्टकयुक्तस्य मुक्तस्य वस्तुगत्या ईश्वराद् भिन्नत्वपक्षे परिहारो न लभ्यते । तथा च सूत्रविरोधाद् न मुक्तस्येश्वराद् भेदेनावस्थानमिति भावः । तस्मिन्निति । 'उत्तराच्चेदाविर्भूतस्वरूपस्तु'इत्यस्मिन्नित्यर्थः । तस्मादिति । जीवब्रह्माभेदस्य वास्तवत्वादित्यर्थः । 'तस्माद्'इत्यनन्तरं 'यद्'इति पदमध्याहर्तव्यम् । विद्यया तद्विलयनेनाविद्यकसंसारनिवृत्तिद्वारा संसारविलक्षणं रूपं प्रतिपद्यत इत्यर्थः ।

ननु अत्र मुक्तस्येश्वरभावापत्तौ किम् 'उत्तराच्चेद्'इतिसूत्रभागकृतशङ्कापरिहारालाभप्रसङ्गो नियामकत्वेनाभिमतः, किं वा प्रजापतिवाक्यमेव मुक्तस्येश्वरभावापत्तौ नियामकत्वेनाभिमतम् ? । नाद्यः । मुक्तस्य बिम्बभूतेश्वरभावापत्तिं विना केवलचिन्मात्ररूपेणैवावस्थानाभ्युपगमे गुणाष्टकस्य बिम्बभूतेश्वरादन्यत्राभावेन तस्य तदसाधारणस्य महाकाशे ईश्व-

षादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहत-पाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यते' इति भाष्यकारोऽप्यतिस्पष्टं मुक्तस्य सगुणेश्वरभावापत्तिमाह ।

(वे०सू०मं०) ईशांशस्येशभावाप्तौ सर्वदुःखप्रसञ्जनम् ॥
निवारयद्भिरग्रेऽपि बिम्बभावप्रदर्शनात् ॥ २० ॥

अविरोधाध्यायेऽपि "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इत्यादिश्रुतेस्तत्तत्कर्मकर्तृत्वेन तत्तत्कर्मकारयितृत्वेन च

---

रत्वनिर्णायकत्वसम्भवात् । न द्वितीयः । निर्गुणविद्याप्रकरणरूपे प्रजापतिवाक्ये गुणानामविवक्षितत्वेन मुक्तजीवेऽपि गुणाष्टकवैशिष्ट्यस्याप्रतिपाद्यत्वात् । ज्ञेयब्रह्मप्रकरणे गुणवैशिष्ट्यस्याप्रतिपाद्यत्वमानन्दमयाधिकरणारम्भभाष्ये (उ०मी०अ०१ पा०१ अधि० ६) स्पष्टमभिहितम् । तथा च भाष्यम्—'एकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते'इति । अत्र भाष्ये वेदान्तेषु निरस्तोपाधिसम्बन्धं ब्रह्म ज्ञेयत्वेनोपदिश्यते इत्युक्त्वा ज्ञेयब्रह्मप्रकरणेषु गुणवैशिष्ट्यस्याप्रतिपाद्यत्वं स्पष्टं प्रतीयते । अत एव सिद्धान्ते ज्ञेयब्रह्मपराणां वेदान्तानां संसर्गागोचरप्रमितिजनकत्वरूपमखण्डार्थत्वमिष्यते । तस्मात् प्रजापतिवाक्योपक्रमे श्रुतं सत्यसङ्कल्पत्वादिकं बृहदारण्यकषष्ठाध्यायगतसर्वेश्वरत्वादिगुणजातवद् ज्ञेयब्रह्मप्रशंसापरम्, उपलक्षणमात्रं वा, न तु दहरविद्यागतगुणाष्टकवत् प्रतिपाद्यम् । 'तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यते' इति भाष्यमपि गुणाष्टकोपलक्षितं ब्रह्म प्रतिपद्यत इति योजनीयम् ।

अतो मुक्तस्येश्वरभावापत्तौ नोदाहृतश्रुतिसूत्रभाष्याणि प्रमाणं भवितुमर्हन्तीत्यस्वरसादाह—अविरोधाध्यायेऽपीति । वेदान्तसमन्वयस्य प्रथमाध्याये निरूपितस्य मानान्तरविरोधसमाधानप्रतिपादके द्वितीयाध्यायेऽपीत्यर्थः । अविरोधाध्यायेऽपि समाहितेन शङ्काग्रन्थेन भाष्यकारो मुक्तस्येश्वरभावापत्तिं स्पष्टीचकारेति सम्बन्धः । उन्निनीषते उत्कृष्टं लोकं नेतुमिच्छतीति यावत् । कर्मकर्ता जीव उपकार्यः, कर्मकारयिता ईश्वर उपकारकः । तयोः श्रुत्यवगतोपकार्योपकारकभावबलात् सामान्यतः कश्चित् सम्बन्धोऽवगतः । सम्बन्धं विना लोके तद्भावादर्शनात् । स च सम्बन्धः

उपकार्योपकारकभावेनावगतयोर्जीवेश्वरयोरंशांशिभावरूपसम्बन्ध-निरूपणार्थत्वेनावतारिते 'अंशो नानाव्यपदेशात्' (उ० मी० अ० २ पा० ३ सू० ४३) इत्यधिकरणे 'जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेन ईश्वरस्यापि दुःखित्वं स्यात्। यथा लोके हस्तपादाद्यन्यतमांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं, तद्वत्। ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्, ततो वरं पूर्वावस्था संसार एवास्त्विति सम्यग् ज्ञानानर्थक्यप्रसङ्गः' इति शङ्काग्रन्थेन भामत्यादिषु स्पष्टीकृतम्। बिम्बप्रतिबिम्बभावकृतासङ्करमुपादाय समाहितेन भाष्यकारो मुक्तस्य ईश्वरभावापत्तिं स्पष्टीचकार।

---

इति निरूपणार्थत्वेनेत्यर्थः। जीव ईश्वरस्यांशः, कुतः ? नानात्वस्य भेदस्योपदेशादिति सूत्रभागाक्षरार्थः। भाष्यं पठति—जीवस्येत्यादिना। ईश्वरस्य स्वांशभूतसकलजीवगतदुःखभाक्त्वे को दोषः ?, तत्राह—ततश्चेति। तत्पदमीश्वरपरम्। तत इति। ईश्वरप्राप्तेः सकाशात् पूर्वावस्थितसंसाराङ्गीकरणमेव वरमिति बुद्ध्या ईश्वरप्राप्त्युपाये सम्यग् ज्ञाने कोऽपि न प्रवर्तेत। ततश्च ज्ञानशास्त्रमप्रमाणं स्यादित्यर्थः। अस्याः शङ्कायाः परिहारग्रन्थरूपयोः सूत्रभाष्ययोरभिमेतो जीवपरमेश्वरयोरंशांशिनोः परस्परं धर्मासङ्करो भामत्यादिग्रन्थेषु स्पष्टीकृतः। कथं जीवास्तावदविद्याप्रतिबिम्बभूता ईश्वरांशत्वेन श्रुतिसूत्रभाष्येषु विवक्षिताः, न तु हस्तपादादिवदवयवाः। तथा बिम्बभूतेश्वरोंऽशित्वेन विवक्षितः, न त्ववयवी। बिम्बप्रतिबिम्बयोश्च लोके धर्मासाङ्कर्यं प्रसिद्धम्। अतो न जीवगतानां दुःखानामीश्वरे प्रसक्तिरिति। स्पष्टीचकारेति।

ननु मुक्तस्येश्वरभावापत्तिर्न सिद्धान्तसम्मता। तथा हि—यावत्सर्वमुक्तीश्वरभावापत्तिर्मुक्तस्येति स्वीकारे हि चरमं मुच्यमानस्य निर्विशेषचिन्मात्रस्वरूपेणैवावस्थानलक्षणा मुक्तिः। ततः प्राङ् मुच्यमानानां तु स्वतश्चिन्मात्ररूपेणावस्थितानामीश्वरभावापत्त्या निरवग्रहैश्वर्यप्राप्तिरूपा मुक्तिरिति परममुक्तौ बहूनामैश्वर्यप्राप्तिरेकस्य तद् नास्तीत्येकं वैषम्यम्, बहूनामैश्वर्यप्राप्तावपि क्रमेण मुच्यमा-

नानां चिराचिरकालैश्वर्यलक्षणमपरं तारतम्यम्, तेषामेव किञ्चित्कालमैश्वर्यं पश्चात्तदभाव इत्यादिरूपं तारतम्यं कल्पितं स्यात् । तच्च तृतीयाध्यायान्तिमाधिकरणविरुद्धम् । तत्र हि सगुणविद्याफलभूतायामवान्तरमुक्तावेव तारतम्यम्, न तु परममुक्ताविति व्यवस्थापितम् । न च तदधिकरणस्य परममुक्तौ वस्तुनस्तारतम्यं नास्तीति प्रतिपादने तात्पर्यम् । तथा च काल्पनिकतारतम्ये सत्यपि न तदधिकरणविरोध इति वाच्यम् । सिद्धान्ते सगुणविद्याफलभूतावान्तरमुक्तावपि वास्तवतारतम्याभावेन सगुणमुक्तावेव तारतम्यम्, न निर्गुणविद्याफलभूतायां परममुक्ताविति व्यवस्थापनपरस्य भाष्यादेर्निरालम्बनत्वापत्तेः । अतो मुक्तस्येश्वरभावापत्तिर्न सिद्धान्तसम्मता । एवं स्थिते प्रकृते किं शङ्काभाष्यपर्यालोचनयेश्वरभावापत्तिर्भाष्यकाराभिमतेति कल्प्यते, किं वा परिहारभाष्याभिप्रायालोचनया तथा कल्प्यते ? । नाद्यः । शङ्ककेन सिद्धान्त्यनभिमतामीश्वरभावापत्तिमापाद्य चोद्यकरणोपपत्तेः । न हि सर्वत्र सिद्धान्त्यभिमतमेवार्थमवलम्ब्य पूर्वपक्षिणा सिद्धान्तिनं प्रत्यनिष्टमाशङ्क्यत इति नियमो दृश्यते ।

द्वितीयकल्पस्य हीत्थमुत्थितिः—'ईश्वरभावं प्राप्तानां महत्तरं दुःखं स्याद्'इति शङ्काया द्वेधा परिहारस्सम्भवति । ईश्वरस्य सकलजीवदुःखैर्दुःखित्वेऽपि न मुक्तानां महत्तरदुःखप्राप्तिः । तेषां शुद्धचिन्मात्ररूपेणैवावस्थानाभ्युपगमेनेश्वरभावापत्तेरनभ्युपगमादित्येकः प्रकारः, ईश्वरस्य दुःखाभावे समर्थिते सति तं प्राप्तानां मुक्तानां दुःखं स्यादिति शङ्का अर्थात्परिहृता भवतीत्याशयेन बिम्बप्रतिबिम्बभावकृतभेदाधीनधर्मव्यवस्थासमर्थनं द्वितीयः प्रकारः । तत्र परिहारभाष्यभामत्यादिनिबन्धनेषु प्रथमप्रकारं विहाय द्वितीयप्रकारस्यैवावलम्बनात् शङ्काग्रन्थोक्ता मुक्तानामीश्वरभावापत्तिर्भाष्यकाराद्यनुमतेति प्रतीयते । अनेनैवाभिप्रायेण भामत्यादिस्पष्टीकृतबिम्बप्रतिबिम्बभावकृतासङ्करमुपादाय समाहितेनेत्युक्तमिति । एवमुत्थितः परिहारभाष्यपर्यालोचनारूपो द्वितीयप्रकारोऽपि मुक्तस्येश्वरभावापत्तावनन्यथासिद्धहेतुर्न भवति । परिहारभाष्यादौ प्रथमप्रकारमवलम्ब्य मुक्तानामीश्वरभावापत्तिर्नास्ति । तेषां शुद्धचिन्मात्ररूपेणैवावस्थानाभ्युपगमात् । अतो न ज्ञानानर्थक्यप्रसङ्ग इति वास्तवपरिहारे कथिते हि ज्ञानानर्थक्यशङ्कापरिहारेऽपि ईश्वरस्य सकलजीवदुःखैर्दुःखित्वप्रसङ्गः परिहृतो न भवतीति तत्प्रसङ्गशङ्का अवशिष्येत । साऽपि शङ्का मा भूदित्यालोच्य प्रथमं प्रकारं विहाय द्वितीयप्रकारमवलम्ब्य महता यत्नेन परमेश्वरस्य दुःखित्वप्रसङ्गः परिहृतो भाष्यादिष्विति वक्तुं शक्यत्वात् । परिहारभाष्यादि-

(वे०सू०मं०) पराभिध्यानतः सत्यकामत्वादितिरोहितेः ॥
नाशे मुक्तौ पुनस्तेषामाविर्भावस्य चेरणात् ॥ २१ ॥

साधनाध्यायेऽपि 'सन्ध्ये सृष्टिराह हि'(उ० मी० अ० ३ पा० २ सू० १) इत्यधिकरणे स्वप्नप्रपञ्चस्य मिथ्यात्वे व्यवस्थापिते

---

षु परमेश्वरस्य दुःखित्वप्रसङ्गपरिहारानन्तरम्, 'तथा च मुक्तानामीश्वरभावापत्तिर्नानुपपन्ना' इति परापादितानुपपत्त्यभावोपसंहारादर्शनाच्च । किं च छान्दोग्ये सप्तमाध्याये—

"स एकधा भवति त्रिधा भवति पञ्चधा ।
सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ॥
शतं च दश चैकं च सहस्राणि च विंशतिः ।"

इति वाक्येन परब्रह्मविदो अनेकशरीरपरिग्रहादिरूपमैश्वर्यं श्रूयते । तच्च मुक्तस्येश्वरभावापत्तिपक्षे परममुक्तस्यैव सम्भवति । तथा च "एकधा भवति" इत्यादिवचनं निर्गुणविद्याफलसमर्पकं न भवति, किं तु सगुणोपासनाफलसमर्पकम् । तच्च निर्गुणविद्याफलप्रशंसार्थं निर्गुणविद्याप्रकरणे पठ्यत इति भाष्यादिव्यवहारो विरुध्येत । तथा च सगुणविद्याफलविचारप्रस्तावे भाष्यम्—'यद्यपि निर्गुणायां भूमविद्यायामनेकधा भावविकल्पः पठ्यते, तथाऽपि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये सङ्कीर्त्यते' इति । यदि मुक्तस्येश्वरभावापत्तिः सूत्रभाष्यकारयोरभिमेता स्यात्, तदा "स एकधा भवति" इति वचनस्य निर्गुणविद्याफलसमर्पकत्वेन प्रकरणसमवेतार्थस्य सगुणविद्याफलसमर्पकत्वायोगादेतद्वचनस्य तत्फलसमर्पकत्वमाश्रित्य सूत्रभाष्ययोः प्रवृत्तो 'भावं जैमिनिर्विकल्पामननाद्'(उ० मी० अ० ४ पा० ४ सू० ११)इत्यादिविचारो निरालम्बन एव स्यात् । 'ब्रह्मलोकं गतस्य सगुणोपासकस्य स्थूलशरीरसद्भावं जैमिनिराचार्यो मन्यते । "स एकधा भवति"इत्यादिना अनेकधाभावरूपविकल्पश्रवणात् स्थूलशरीरभेदं विना एकस्योपासकस्यानेकधाभावासम्भवाद्'इति सूत्रार्थः ।

तस्मादुदाहृतशङ्काभाष्यग्रन्थस्य तत्परिहारभाष्यादिग्रन्थस्य च मुक्तानामीश्वरभावापत्तावनन्यथासिद्धप्रमाणत्वाभावादुदाहृतानेकाधिकरणतद्भाष्यादिविरोधाच्च सा भाष्याभिमतेति कल्पयितुं न शक्यते इत्यस्वरसादाह—साधनाध्यायेऽपीति । ब्रह्मविद्यासाधनवैराग्यादिमति-

तत्र मिथ्याभूते स्वप्नप्रपञ्चे जीवस्य कर्तृत्वमाशङ्क्य 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'(उ०मी०अ०३ पा०२ सू०५) इतिसूत्रेण 'जीवस्येश्वराभिन्नत्वात् सदपि सत्यसङ्कल्पत्वादिकमविद्यादोषात्तिरोहितमिति न तस्य स्वप्नप्रपञ्चे स्रष्टृत्वं सम्भवति'- इति वदन् सूत्रकारः 'तत्पुनस्तिरोहितं सत् परमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्छक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति, न स्व-

---

पादकतृतीयाध्यायेऽपीत्यर्थः । साधनाध्यायेऽपि सूत्रकारः सूत्राभिप्रायं वर्णयन् भाष्यकारश्च मुक्तस्य परमेश्वरभावापत्तिं स्पष्टीचकारेति सम्बन्धः । 'सन्ध्ये जाग्रत्सुषुप्त्योस्सन्धौ भवे स्वप्नस्थाने रथादिसृष्टिस्सत्या भवितुमर्हति । हि यस्मात् श्रुतिराह रथादिसृष्टिम् "अथ रथान् रथयोगान् पथस्सृजते" इत्यादिका । न हि श्रुतिसिद्धा सृष्टिरसत्या भवितुमर्हति । वियदादिसृष्टौ श्रुतिसिद्धायामसत्यत्वादर्शनाद्' इति सूत्रार्थः । रथयोगा अश्वाः । कर्तृत्वमाशङ्क्येति । यथा अग्न्यंशस्य विस्फुलिङ्गस्याग्नेरिव दहनप्रकाशनसामर्थ्यमस्ति, तथा जीवस्य परमेश्वरांशत्वात्तद्वदेव जीवस्यापि स्वप्नादिसृष्ट्यनुकूलं सत्यसङ्कल्पत्वादिलक्षणं सामर्थ्यमस्ति, अतस्तस्य स्वप्नसृष्टौ कर्तृत्वं संभवतीत्याशङ्क्येत्यर्थः । सत्यं सत्यसंकल्पादिकमस्ति, किं तु तत् तिरोहितं वर्तते संसारदशायाम् । अतो न सृष्ट्यादावुपयोगस्तस्य । तच्च तिरोहितमैश्वर्यं परस्य बिम्बभूतेश्वरस्याभिध्यानादीश्वरसाक्षात्कारपर्यन्तात्तिरोधायकनिवृत्तावभिव्यज्यते । ईश्वरध्यानादभिव्यक्तौ हेतुमाह–तत इति । 'हि यस्मात् कारणात् तत ईश्वरादज्ञाताद् बन्धोऽस्य जीवस्य, तत एव ज्ञाताद् बन्धविपर्यय ऐश्वर्याविर्भावः' इति सूत्रार्थः । सदपीत्यत्र हेतुः–ईश्वराभिन्नत्वादिति । जन्तोर्जीवस्य सत्यसङ्कल्पत्वादिलक्षणैश्वर्याविर्भावार्थं यतमानस्य श्रवणमननात्मकं विचारमनुतिष्ठतः क्रमेण परं परमेश्वरमभेदेन ध्यायतः कस्यचिदेव प्रतिबन्धरहितस्य श्रवणमननध्यानानुष्ठानजनितादीश्वरप्रसादात् संसिद्धस्याप्रतिबद्धपरमेश्वरसाक्षात्कारवत इत्यर्थः । तिमिरेण रोगविशेषेण तिरस्कृता दृशश्चक्षुषश्शक्तिर्यथा औषधवीर्यादाविर्भवति, तथेत्यर्थः । न स्वभावत एवेति । यथोक्तसाधनसम्पत्ति

भावत एव सर्वेषां जन्तूनाम्'इति तत्सूत्राभिप्रायं वर्णयन् भाष्यकारश्च मुक्तस्य स्वप्नसृष्ट्याद्युपयोगिसत्यसङ्कल्पत्वाद्यभिव्यक्त्यङ्गीकारेण परमेश्वरभावापत्तिं स्पष्टीचकार ।

---

विनेत्यर्थः। अभिव्यक्त्यङ्गीकारेणेति । ईश्वरभावापत्तिं विना मुक्तस्य सत्यसङ्कल्पत्वाद्यभिव्यक्तिर्न सम्भवतीत्यर्थः।

अत्रेदं विचार्यते—किं प्रतिबिम्बत्वविशिष्टचैतन्यरूपजीवगतस्य सत्यसङ्कल्पत्वादेर्मुक्तावाविर्भावः प्रतिपाद्यते, किं वा बिम्बत्वविशिष्टचैतन्यरूपेश्वरगतस्य ? । नाद्यः । ईश्वरगतसत्यसङ्कल्पत्वाद्यपेक्षया जीवे पृथक् सत्यसङ्कल्पत्वादिसत्त्वे प्रमाणाभावात् । न हीश्वरस्येव जीवस्यापि पृथक् तत्सत्त्वप्रतिपादकं शास्त्रमस्ति । न च जीवस्येश्वराभिन्नत्वात्तत्समानधर्मवत्त्वमनुमातुं शक्यते । लोके बिम्बमुखाभिन्नस्यापि प्रतिबिम्बमुखस्य बिम्बवद् अवदातत्वादिधर्मादर्शनेन व्यभिचारात्तत्त्वसाक्षात्काराद्विद्यानिवृत्तावविद्यानिरूपितप्रतिबिम्बत्वस्यापि निवृत्त्या प्रतिबिम्बजीवाश्रितसत्यसङ्कल्पत्वादेरवस्थानस्यैवाभावेन मुक्तौ तदभिव्यक्त्यसम्भवाद्, बन्धदशायामावृतस्य सत्यसङ्कल्पत्वादेरुपयोगाभावस्य स्पष्टतया जीवे पृथक् तत्कल्पनवैयर्थ्याच्च । न च बन्धदशायामेव सगुणविद्याफलभूतावान्तरमुक्तौ सत्यसङ्कल्पत्वादेरुपयोगोऽस्तीति न तद्वैयर्थ्यमिति वाच्यम् । तत्रापीश्वरगमानसत्यसङ्कल्पत्वाद्यभिव्यक्त्यनभ्युपगमेन जीवे तत्समानैश्वर्यस्य तिरोहितस्य कल्पनावैयर्थ्यात् । तस्मात् प्रतिबिम्बचैतन्यरूपजीवे पृथक् सत्यसङ्कल्पत्वादिकल्पनं प्रमाणप्रयोजनशून्यम् । तथा बिम्बभूतेश्वरगतं सत्यसङ्कल्पत्वाद्यैश्वर्यं बन्धदशायां जीवान्प्रति जीवाविद्याभिस्तिरोहितं सद् ईश्वरसाक्षात्कारात् मुक्तौ तेषामभिव्यज्यत इति द्वितीयपक्षोऽप्यनुपपन्नः, सत्यसङ्कल्पत्वादिविशिष्टेश्वरस्याविद्यावृतत्वे मानाभावात् । न च 'इदानीमहं सत्यसङ्कल्पत्वादिगुणक ईश्वरोऽस्मि'इत्यनुभवाभावात्तद्विशिष्टेश्वरस्यावृतत्वं कल्प्यत इति वाच्यम् । प्रतिबिम्बजीवानां बिम्बभूतेश्वरस्य च कल्पितभेदाभ्युपगमे तत एव जीवस्य जीवान्तरसाक्षात्काराभाववदीश्वरसाक्षात्काराभावोपपत्त्या तद्विशिष्टेश्वरस्यावृतत्वकल्पनावैयर्थ्याद् । विशिष्टेश्वरस्यावृतत्वकल्पने विशिष्टावरकाविद्यानिवर्तकज्ञानासम्भवेन तदनिवृत्तिप्रसङ्गाच्च । तत्त्वमस्यादिवाक्यजन्यज्ञानस्य शु-

(चे०सू०मं०) ब्राह्मचैतन्यमात्रत्वाद् विरोधस्य च कीर्तनात् ॥
प्रतिबिम्बेशजीवैक्यवादयोर्नैतदञ्जसा ॥ २२ ॥

फलाध्यायेऽपि "स्वेन रूपेणाभिनिष्पद्यते" इति मुच्यमानविषयायां श्रुतौ 'केन रूपेणाभिनिष्पत्तिर्विवक्षिता' इति बुभुत्सायां 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ( उ० मी० अ० ४ पा० ४ सू० ५ ) इतिसूत्रेण ब्राह्मं रूपमपहतपाप्मत्वादि सत्यसङ्कल्पत्वाद्यवसानं सर्वज्ञत्वसर्वेश्वरत्वादि च, तेनाभिनिष्पत्तिः "य आत्माऽपहतपाप्मा" इत्याद्युपन्यासेन "स तत्र पर्येति जक्षन् क्रीडन्

द्धचिन्मात्रगोचरस्य तद्विशिष्टेश्वरविषयकत्वाभावेन विशिष्टावरणानिवर्तकत्वाद्, अविद्यायाश्शुद्धचिन्मात्रावरकत्वाश्रयणे च सत्यसङ्कल्पत्वाद्यैश्वर्यस्याविद्यया तिरोधानासिद्धेश्च । न च जीवस्य स्वकीयत्वेनेश्वरगतसत्यसङ्कल्पत्वाद्यप्रतीतिरेवात्र तिरोधानं विवक्षितमिति वाच्यम् । तथा सति तदुत्तरसूत्रे तिरोधानस्याविद्याप्रयुक्तावरणरूपत्वप्रतिपादनविरोधात् । तस्मादीश्वरगतसत्यसङ्कल्पत्वाद्यैश्वर्यस्य जीवाविद्यातिरोहितत्वम् ऐश्वर्यतिरोधानस्य तत्त्वसाक्षात्कारनिवर्त्यत्वं चाभ्युपेत्य 'पराभिध्यानाद्'इति सूत्रतद्भाष्ययोः प्रवृत्तिरिति वक्तव्यम् । उक्तं चास्य सूत्रस्याभ्युपेत्यवादत्वं सर्वज्ञात्ममुनिभिः । तेषां वचनं मूल एवोदाहरिष्यत इति ।

मुक्तस्येश्वरभावापत्तौ नैतत्सूत्रादिकमपि मानमित्यस्वरसादाह—फलाध्यायेऽपीति । केन रूपेणेति । किं सर्वज्ञत्वसर्वेश्वरत्वापहतपाप्मत्वादिगुणविशिष्टेन रूपेण मुक्तोऽवतिष्ठते, किं वा शुद्धचिन्मात्ररूपेणावतिष्ठते, अथवा द्विविधेन रूपेण? इति जिज्ञासायां सत्यामित्यर्थः । उपन्यासेनेति । उद्देशरूपवाक्यजातेनेत्यर्थः । "य आत्माऽपहतपाप्मा"इत्युपक्रम्य "सोऽन्वेष्टव्यः" इति विचारावधानाद् । तथा "एष सर्वेश्वरः" इत्याद्युपक्रम्य "तमेतं यज्ञादिना विविदिषन्ति"इति तद्वेदने यज्ञादिविधानादुपन्यासग्रहणं सर्वज्ञत्वादिविशेषस्याप्युपलक्षणम् । तथाच सर्वज्ञत्वादिव्यपदेशः—"यस्सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" इत्यादिः । व्यपदेशो नाम यो वाक्यसन्दर्भ उद्देशरूपो न भवति, विधिरूपश्च न भवति, स एव । सर्वज्ञत्वादिसन्दर्भश्च नोद्देशरूपः, विधेयानुपलम्भात् । नापि विधिः । य(१)च्छब्दघटितत्वेनानुवादत्वप्र-

( १ ) 'यत्तदोर्नित्यसम्बन्ध.' इति न्यायेन यच्छब्दोपात्तस्यार्थस्येतच्छब्दे-

रममाणः स्त्रीभिर्वा यानैर्वा" इत्याद्यैश्वर्याविदनेन चेति जैमिनिमतम्। 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' (उ० मी० अ० ४ पा० ४ सू० ६) इत्यनन्तरसूत्रेण "एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्यादिश्रुत्या 'चैतन्यमात्रमात्मस्वरूपम्' इत्यवगतेः 'तन्मात्रेणाभिनिष्पत्तिः' इति मतान्तरं चोपन्यस्य 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' (उ०मी०अ०४ पा०४ सू०७) इति सिद्धान्तसूत्रेण 'वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्य उपन्यासाद्यवगतस्य मायातीतेः। तथा च 'मुक्तो ब्राह्मेण वास्तवेन धर्मजातेन युक्तोऽवतिष्ठते। कुतः ?। उपन्यासव्यपदेशविधिभ्यस्तस्य ब्रह्माभिन्नस्य तद्रूपयुक्तत्वावगमाद्' इति सूत्रार्थः। स मुक्तः, तत्र प्रकृते ब्रह्मणि स्थितः। जक्षन् हसन्। ऐश्वर्याविदनेनेति। अज्ञातस्यैश्वर्यस्याविदनेन ज्ञापकेन विधिवाक्येनेति यावत्। अज्ञातज्ञापकवाक्यस्यापि उत्पत्तिविधित्वस्वीकारात्। चितितन्मात्रेण—चितिश्चैतन्यम्, चैतन्यमात्ररूपेणैव मुक्तोऽवतिष्ठत इत्यर्थः। यथा लवणपिण्डो बहिरन्तश्च लवणैकरसः, एवमेवारे मैत्रेयि प्रकृत आत्मा शरीराद्यन्तस्तद्बहिश्च चैतन्यैकस्वभाव इति श्रुत्यर्थः। तन्मात्रेणेति। मुक्तौ ब्रह्माभेदेन विद्यमानस्य न कश्चिद्धर्मोऽस्ति। ब्रह्मस्वरूपे मुक्ते उपन्यासाद्यवगतगुणैश्वर्यादीनां श्रुतितात्पर्यविषयत्वाभावेन तुच्छत्वादिति तात्पर्यकमौडुलोमिमतम्। इदं च मतद्वयं पूर्वपक्षः। सूत्रं व्याचष्टे—वस्तुदृष्ट्येति। परमार्थत इत्यर्थः। जैमिनिमत इव गुणकलापस्य वास्तवत्वानभ्युपगमाद् न चिन्मात्रप्रतिपादकश्रुतिविरोधः। औडुलोमिमत इव गुणकलापस्य तुच्छत्वानभ्युपगमाद् न गुणकलापादिश्रुतीनां निर्विषयत्वापत्तिरूपो-

---

न परामर्शात् यच्छब्दस्य स्वारसिकी उद्देश्यसमर्पकता। न केवलं यच्छब्दे एवानुवाद्यप्रतीतिकृत्ता किन्तु तत्सम्बद्धस्यापि तथात्वम्। शब्दशक्तिस्वाभाव्यात्। एतन्मूलक एव 'यच्छब्दयोगः प्राथम्यमेतदुद्देश्यलक्षणम्' इत्यभियुक्तानां प्रवादः। अत एव पूर्वमीमांसायां द्वितीयाध्यायस्य प्रथमपादे षष्ठे ऽधिकरणे सर्वत्र आख्यातस्य विधायकत्वेन "देवांश्च याभिर्यजते" इति मन्त्रेऽपि यजते इत्याख्यातस्य विधायकत्वमाशङ्क्य यच्छब्दयोगेन विधिशक्तेः क्षीणत्वेनानुवाद्यप्रतीतिकृत्त्वेति सिद्धान्तितम्।

मयस्य बद्धपुरुषव्यवहारदृष्ट्या सम्भवाद् न श्रुतिद्वयविरोधः' इति अविरोधं वदन् सूत्रकारः, सूत्रत्रयमिदमुक्तार्थपरत्वेन व्याकुर्वन् भाष्यकारश्च मुक्तस्येश्वरभावापत्तिं स्पष्टमनुमेने । भामतीनिब-

ऽपि विरोधोऽस्तीत्यर्थः एवमपीति । सौत्रभागेन मुक्तस्य चिन्मात्रत्वमुपेत्योपन्यासाद्यवगतगुणकलापादेरपि पूर्वभावादित्यनेन सौत्रभागेन मुक्तात्मन्यङ्गीकृतत्वाद् । ईश्वरभावापत्तिं विना मुक्तस्य गुणकलापादेरयोगात्तस्येश्वरभावापत्तिः सूत्रे भातीत्यर्थः । अस्यार्थस्य भाष्यादिकमपि न प्रतिकूलम्, किं त्वनुकूलमेवेत्याह—सूत्रत्रयमित्यादिना ।

अत्रेदं विचार्यते—मुक्तस्येश्वरभावापत्तिस्वीकारे बिम्बभूतेश्वरस्य साधकानुग्रहार्थं मायामयशरीराङ्गीकारेण मुक्तोऽपि शरीर्येव स्यात् । अन्यथा "क्रीडन् रममाणः" इत्यादिश्रुतिसिद्धैश्वर्यायोगात् । तथा च "अशरीरं वाव सन्तम्" इति श्रुत्या मुक्तस्याशरीरत्वप्रतिपादनं विरुध्येत । 'कथमिदम् अशरीरत्वं सम्भवति' इत्याकाङ्क्षायां विद्यासामर्थ्यात् परब्रह्मप्राप्तौ सत्यां तत् सम्पद्यते, नान्यथेति प्रतिपादनार्थमशरीरत्वप्रतिपादकवाक्यानन्तरं "परं ज्योतिरुपसम्पद्य" इतिवाक्यम्' इतिप्रतिपादकज्योतिरधिकरणभाष्यं ( उ० मी० अ० १ पा० ३ अधि० ११ ) च विरुध्येत, परब्रह्मप्राप्त्यनन्तरमपि सशरीरत्वाभ्युपगमात् । तथा च तदधिकरणभाष्यम्—' "अशरीरं वाव सन्तम्" इति चाशरीरतायै ज्योतिस्सम्पत्तेरस्याभिधानाद् ब्रह्मभावाच्चान्यत्राशरीरत्वानुपपत्तेः' इति । ज्योतिरत्र ब्रह्म विवक्षितम् । कि(१)ञ्च मुक्तस्य सर्वज्ञत्वाद्यभ्युपगमे "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येद्" इत्यादिना तस्य विशेषविज्ञानाभावप्रतिपादनं विरुध्येत । इदं च वचनं परममुक्तिविषयमिति 'स्वाप्ययसम्पत्त्योः' ( उ० मी० अ० ४ पा० ४ सू० १६ ) इति सूत्रतद्भाष्यादौ स्पष्टम् ।

किञ्च सर्वेश्वरभावं प्राप्तस्य मुक्तस्य तद्भावापत्तिदशायां सगुणविद्याफलभूतेश्वरभावापत्तिदशायामिव 'योऽहं पूर्वं संसार्यभूवम्, सोऽहमिदानीमीश्वरः सम्पन्नः' इति प्रतिसन्धानम् अभ्युपगम्यते न वा ? । नाद्यः । पूर्वोपाधेर्निवृत्तत्वेन तथाऽनुसन्धानासम्भवात्, उपाध्यैक्यस्य अनुसन्धानप्रयोजकशरीरप्रविष्टत्वात् । न द्वितीयः । ईश्वरभावापत्तौ केवलस्वरूपेणैवाव-

(१) किञ्चेत्यारभ्य स्पष्टमित्यन्तः क्वाचित्कः पाठः ।

न्धप्रभृतयश्च श्रुत्युपबृंहितमिदं सूत्रजातं, भगवतो भाष्यकारस्य उदाहृतं वचनजातं च तथैवान्ववर्तन्त । न च श्रुत्युपबृंहितस्य एतावतः सूत्रभाष्यवचनजातस्य—

---

स्थानापेक्षया मुक्तस्य फलतो विशेषाभावेन तद्भावापत्त्युपपादनस्यानतिप्रयोजनत्वापत्तेः । तस्माद् मुक्तस्येश्वरभावापत्तिप्रतिपादनं "यत्र त्वस्य" इत्यादिश्रुतिविरुद्धं तदनुसारिबहुभाष्यादिविरुद्धं प्रयोजनशून्यं चेति सिद्धम् । (१)अत एव न्यायरक्षामणौ यावत्सर्वमुक्ति विम्बेश्वरभावापत्तिरस्तीत्यस्माभिः सिद्धान्तलेशसङ्ग्रहे समर्थितत्वेन आविर्भूतस्वरूपस्य सत्यकामत्वसर्वेश्वरभावापत्तावत्र साधितायां यथोक्तमस्वरसं मनसि निधाय मुक्तानां शुद्धचैतन्यभावापत्तिस्तत्पक्षे जक्षणाद्यैश्वर्योपपत्तिश्च दर्शिता दीक्षितैरेव । 'मुक्तानां यावत्सर्वमुक्ति सत्यकामत्वं सत्यसङ्कल्पत्वादिकं च उपपद्यते । तस्य शुद्धचैतन्यभावापत्तावपि तत्सर्वमुपपद्यते एव । शुद्धचैतन्यस्य जीवेश्वरानुस्यूतचैतन्यसामान्यात्मना अवस्थानात् । अत एव साक्षात्कृतब्रह्मणां यावत्सर्वमुक्ति सर्वात्मतापत्तिरस्तीति वामदेवस्य मनुसूर्यादिभावापत्तिः श्रूयते । एवं च मुक्तस्य सार्वभौमादिमानुषात्मना इन्द्रादिलोकपालात्मना दहराद्युपासनाफलानुभवितृपुरुषात्मना च जक्षणादिकं सर्वलोककामावाप्तिमत्त्वं ब्रह्मलोकसमाहितसत्यकामानुभवितृत्वं च व्यपदेष्टुं शक्यमिति जक्षणादिश्रवणमप्युपपद्यत इत्यादिग्रन्थेन । तथा च तदनुसारेण प्रकृतसूत्रभाष्यादौ ब्राह्मस्यैश्वर्यस्य मुक्तजीवगतत्वाङ्गीकरणं मुक्तस्य ब्राह्मेण रूपेणावस्थानाभ्युपगमेऽपि जैमिनिमत इव सिद्धान्ते नाद्वैतविरोधः । तस्य रूपस्य बद्धजीवान्तराविद्याकृतत्वाभ्युपगमादित्येतावन्मात्रपरम्, न तु मुक्तस्येश्वरभावापत्तिपरमिति सङ्क्षेपः ।

नन्वध्यायचतुष्टयेऽप्युदाहृतश्रुतिसूत्रभाष्यादिग्रन्थजातस्य सर्वज्ञात्ममुनिभिरुक्तयुक्तिभिः प्रौढिवादत्वप्रतीतेः कथं मुक्तस्येश्वरभावापत्तावेतच्छ्रुत्यादिकं प्रमाणं स्यादित्यत आह—न चेति । 'एतावतः' इत्यनेन बहुश्रुतिसूत्रभाष्यादिविरोधात् सङ्क्षेपशारीरकमतं हेयमिति सूचितम् । अस्य शरीरिणः तत् सत्यसङ्कल्पत्वादिलक्षणमैश्वर्यमुपेत्य मुक्तौ ध्यानादभिव्यज्यत इत्युदितमुक्तं सूत्रकृतेत्यर्थः । अभ्युपे-

---

(१) अत एवेत्यारभ्य ग्रन्थेनेत्यन्तो ग्रन्थः क्वचिद् अधिको दृश्यते ।

ऐश्वर्यमज्ञानतिरोहितं सद् ध्यानादभिव्यज्यत इत्यत्रोचत् ॥
शरीरिणः सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोः॥ अ.३ श्लो. १७५
इति संक्षेपशारीरकोक्तरीत्याऽभ्युपेत्यवादत्वं युक्तं वक्तुम् ।

तस्मान्मुक्तानामीश्वरभावापत्तेरवश्याभ्युपेयत्वादेतदसम्भव एव प्रतिबिम्बेश्वरवादे दोषः । तदाहुः कल्पतरुकाराः—'न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यता' इति । एतदसम्भवश्च एकजीववाद-पारमार्थिकजीवभेदवादयोरपि दोषः ।

(वे०सू०मं०) जीवेशभेदसत्यत्वेऽप्येतत्सर्वमसङ्गतम् ॥
नच शक्त्यन्तरं जीवे प्रमाणफलवर्जनात् ॥ २३ ॥
आसर्वमुक्ति परकल्पितसत्यकाम-
सङ्कल्पकल्पितजगत्स्थितिभङ्गसर्गे ॥
सत्यं स्वतस्तु सुखचिद्घनमद्वितीयं
मुक्तोपसृप्यमहमस्मि विशुद्धतत्त्वम् ॥ २४ ॥
श्रुतिकल्पलताकुञ्जसञ्जाता सूक्तिमञ्जरी ॥
रम्या राद्धान्तगन्धाढ्या रञ्जयत्वखिलान् बुधान्॥२५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्रामचन्द्रसरस्वती
पूज्यपादशिष्यगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षुविरचिता
वेदान्तसिद्धान्तसूक्तिमञ्जरी सम्पूर्णा ॥

---

त्यवादत्वे हेतुमाह—उक्तहेतोरिति । मुक्तस्येश्वरभावापत्तिप्रमाणत्वेनोदाहृतश्रुतिभाष्यादिकं व्याख्यायान्ते अस्वरसादिरूपेण मुक्तस्येश्वरभावापत्तिं प्रत्यनुपपत्तिरूपा या युक्तयोऽस्माभिः प्रदर्शिताः, ताः सर्वा अप्यत्रोक्तहेतोरित्यनेन विवक्षिता इति बोध्यम् । तस्मादिति । उक्तप्रमाणबलादित्यर्थः । मुक्तस्येश्वरभावापत्तिरेतच्छब्दार्थः । उपसृप्यता प्राप्यता । एकेति । एकजीववादे एतदसम्भवः प्रागेव दर्शितः । पारमार्थिकेति । 'पारमार्थिको जीवेश्वरयोर्भेदः' इति वादेऽपि मुक्तस्येश्वर-

यत्तु कैश्चित् द्वैतिभिरुच्यते—भेदस्य पारमार्थिकत्वेन मुक्तौ जीवस्येश्वरभावाभावेऽपि तत्रापीश्वर इव पृथगपहतपाप्मत्वादि-गुणसम्भवाददविरोध इति । तच्चुच्छम् । तथा सति जीवस्यापहतपाप्मत्वादिकमस्तीति न तस्य ब्रह्मलिङ्गत्वमिति शङ्कापरिहारालाभेन 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति सूत्रविरोधात् । 'ब्राह्मेण जैमिनिः' इतिसूत्रे जीवगतस्यापहतपाप्मत्वादेः, 'उपन्यासादिभ्यः' इत्यत्रादिशब्दार्थत्वेन परेषामप्यभिमतस्य "जक्षन् क्रीडन् रममाणः" इत्यादि-श्रुत्युदितस्य जक्षणादेश्च ब्राह्मत्वनिर्देशविरोधाच्च । भेदे तेषां गुणानां सत्यत्वेन 'चितितन्मात्रेण' इतिसूत्रोक्तस्य मुक्तजीवानां चैतन्य-

भावापत्त्यसम्भवो दोष इत्यर्थः । एतदुपलक्षणम् । शुद्धब्रह्मरूपेणावस्थानलक्षणमुक्त्यसम्भवोऽपि पारमार्थिकजीवेशभेदवादे दोष इति बोध्यम् ।

ननु प्रजापतिविद्यायां मुक्तस्यापहतपाप्मत्वादिगुणाष्टकं प्रतिपाद्यते । तच्च मुक्तस्येश्वरभावापत्त्यनभ्युपगमे न सम्भवतीति तद्भावापत्तिरेष्टव्या । सा च पारमार्थिकजीवभेदवादे न सम्भवतीति खलु तवाभिप्रायः, स चानुपपन्नः । भेदपक्षेऽपि श्रुतिसूत्राभ्यां निरूपितस्य मुक्ते गुणकलापस्य मुक्तस्येश्वरभावापत्त्या विनाऽपि सम्भवादिति द्वैतिनां मध्ये केचित् श्रुतिसूत्रव्याख्यातारः । तेषां मतमनूद्य दूषयति यत्त्वित्यादिना । तत्रापीति । मुक्तजीवेऽपीत्यर्थः । तथासतीति । जीवस्य पृथगपहतपाप्मत्वाद्यभ्युपगमे सतीत्यर्थः । इति या शङ्का, "उत्तराच्चेद्" इति सूत्रभागेन कृता, तस्या 'आविर्भूतस्वरूपस्तु' इति परिहारभागेन मुक्तजीवे गुणाष्टकाविर्भावकथनेऽपि परिहारालाभादित्यर्थः । तथा च मुक्तब्रह्मणोर्भेदपक्षे गुणकलापस्य जीवसाधारणस्य ब्रह्मासाधारणत्वरूपब्रह्मलिङ्गत्वालाभाद्दहराकाशस्येश्वरत्वनिर्णायकं गुणाष्टकं न स्यादिति भावः । भेदपक्षे मुक्तजीवगतस्य अपहतपाप्मत्वादेर्ब्राह्मत्वनिर्देशविरोधश्चेत्याह—ब्राह्मेणेति । ननु भेदिनां मते मुक्तगतापहतपाप्मत्वादेर्जक्षणाद्यैश्वर्यस्य च ब्राह्मत्वमसिद्धम्, अत आह—परेषामपीति । भेदे इति । जीवब्रह्मभेदपक्षे वास्तवगुणवतो जीवस्य चिन्मात्रत्वायोगादिति भावः । किञ्च किं गुणजातं मुक्तावुत्पद्यते, किं वा नित्यसिद्धम् ? इति विकल्पं मनसि निधाय आद्यनिराकरणपूर्वकं द्वितीयं प-

मात्रत्वस्य 'एवमपि'इति सिद्धान्तसूत्रेऽङ्गीकारविरोधाच्च, 'सम्पद्याविर्भावः' इत्यधिकरणविरोधाच्च । तत्र हि 'स्वेन रूपेणाभिनिष्पद्यते,''इति श्रुतौ आगन्तुना केनचिद्रूपेणाभिनिष्पत्तिर्नोच्यते स्वेनशब्दवैयर्थ्यापत्तेः । येन रूपेण आगन्तुना स्वयमभिनिष्पद्यते तस्यात्मीयत्वस्यावक्तव्यत्वात् । तस्मादात्मवाचिस्वशब्दोपादानाद् नित्यसिद्धेन स्वस्वरूपेणैवाभिनिष्पत्तिर्विवक्षिता, न तु केन चिद्धर्मेणेति व्यवस्थापितम् ।

किञ्चेदमपहतपाप्मत्वादि जीवस्य मुक्तावागन्तुकं चेत्, 'सम्पद्याविर्भावः' इति मुक्तावागन्तुकरूपनिषेधेन 'पराभिध्यानात्तु तिरोहितम्' 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यपहतपाप्मत्वादेर्बन्धमुक्त्योस्तिरोभावाविर्भावप्रतिपादनेन च विरोधः स्या-

---

रोधयति—सम्पद्याविर्भाव इत्यादिना । तत्र हीति । सम्पद्याधिकरणे हीत्यर्थः । "स्वेन रूपेणाभिनिष्पद्यते"इत्यनेन मुक्तिरभिधीयते । सा किमागन्तुकस्य स्वरूपस्योत्पत्तिरेव स्वर्गादिरूपोत्पत्तिवद्विवक्षिता किं वाऽऽत्मस्वरूपस्यैव विद्ययाऽविर्भावमात्ररूपा विवक्षितेति संशये मुक्तेरपि स्वर्गादिवद् फलत्वात्तद्वदेवागन्तुकातिशयरूपनिष्पत्तिर्मुक्तिरिति पूर्वपक्षनिषेधपूर्वकं सिद्धान्तमाह–आगन्तुनेत्यादिना। कथं तद्वैयर्थ्यम् ?। अत आह—येनेति । स्वर्गाद्यागन्तुकरूपवद् यद् मुक्तिलक्षणं रूपमुत्पद्यते मुक्तस्य, तत् स्वशब्देनानुक्तावपि स्वीयमेव भवति । अतस्स्वशब्दस्य स्वीयवाचित्वे वैयर्थ्यमेवेत्यर्थः । तस्मादिति । 'आगन्तुकरूपाभिनिष्पत्तिर्मुक्तिः'इति पक्षे स्वशब्दस्य स्वकीयार्थकताया एव वक्तव्यत्वेनोक्तरीत्या तद्वैयर्थ्यापत्तेरित्यर्थः। आत्मेति । स्वकीय इव स्वस्वरूपेऽपि स्वशब्दस्य रूढत्वेन नानार्थत्वे सति स्वकीयार्थकत्वस्य प्रकृते असम्भवादात्मस्वरूपवाचित्वं निश्चितमिति भावः ।

इदमेवात्रात्मवाचिस्वपदोपादानप्रयोजनं यद् मुक्तेः स्वर्गादिवद् आगन्तुकरूपत्वनिराकरणम् । अन्यथाऽऽत्मवाचिस्वपदवैयर्थ्यादेवेति बोध्यम् । सत्यसङ्कल्पत्वादिरूपस्य "स्वेन रूपेण"इत्यत्र मुक्तित्वेनाभिमतस्य

दिति नित्यसिद्धं वाच्यमिति बन्धस्य मिथ्यात्वं दुर्वारम्।

नित्यसिद्धमपहतपाप्मत्वं हि सर्वदा पाप्मरहितत्वम्। न च वस्तुतः सर्वदा पाप्मरहिते पाप्मसम्बन्धः, तन्मूलककर्तृत्वभोक्तृत्वसम्बन्धो वा पारमार्थिकः सम्भवति। एवं च जीवस्येश्वराभेदोऽपि दुर्वारः। श्रुतिबोध्यतदभेदविरोधिबन्धस्य सत्यत्वाभावात्। अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्पातिरोधानोक्त्ययोगाच्च। न हि जीवस्य संसारदशायामनुवर्तमानो यत्किञ्चिदर्थगोचरः कश्चिदस्त्यवितथसंकल्पस्तिरोहि-

---

आगन्तुकत्वपक्षे तदागन्तुकत्वनिषेधाधिकरणविरोधवद् तस्य बन्धदशायां तिरोधानप्रतिपादकसूत्रेण मुक्तिदशायामाविर्भावप्रतिपादकसूत्रेण च विरोधो भवेद्, मुक्तावभिनवतयोत्पद्यमानस्य उक्ततिरोधानाविर्भावयोगादित्याह—किञ्चेदमिति। द्वितीयविकल्पपरिशेषस्य फलमाह—इति बन्धस्येति। अपहतपाप्मत्वादेरीश्वर इव जीवेऽपि नित्यसिद्धत्वादितीतिशब्दार्थः।

तदेवोपपादयति—नित्यसिद्धमिति। तन्मूलेति। पाप्मसम्बन्धमूलकेत्यर्थः। एवञ्चेति। बन्धस्य मिथ्यात्वे सतीत्यर्थः। ननु किं बन्धस्य मिथ्यात्वसाधनेन? तस्य सत्त्वेऽपि जीवब्रह्माभेदबोधनसम्भवादिति भास्करमतमाशङ्क्याह—श्रुतीति। बन्धस्य सत्यत्वमते परमात्मगतनित्यमुक्तत्वस्यापि सत्यत्वेन परमार्थभूतविरुद्धधर्माक्रान्तयोर्जीवब्रह्मणोर्दहनहिमयोरिव श्रुतिबोध्याभेदासम्भवादित्यर्थः। अन्यथेति। बन्धस्य मिथ्यात्वस्वीकारपूर्वकं जीवब्रह्मणोरभेदानङ्गीकार इत्यर्थः। कुतस्तिरोधानोक्त्ययोगः? इति चेद्। तत्र वक्तव्यम्—किं जीवगतस्य नित्यसिद्धसत्यसङ्कल्पत्वादेस्तिरोहितत्वं 'पराभिध्यानात्तु' इति सूत्रेणाभिधीयते, किं वा ईश्वरगतस्यैव जीवं प्रति तेन तिरोहितत्वमभिधीयते?। नाद्य इत्याह—न हीति। यत्किञ्चिदर्थगोचरोऽपि सत्यसङ्कल्पास्तिरोहितोऽस्तीति नेष्यते, सर्वार्थगोचरसत्यसङ्कल्पास्तिरोहितोऽस्तीति नेष्यत इति किमु वक्तव्यमित्यर्थः। अद्वैतिभिरिवेत्यपिशब्दार्थः। न हि सिद्धान्ते 'प्रतिबिम्बचैतन्यरूपेषु जीवेषु बिम्बचैतन्यरूपेश्वरगतसत्यसङ्कल्पत्वाद्यपेक्षया पृथक् सत्यसङ्कल्पत्वादिकं संसारदशायां तिरोहितमास्ते' इतीष्यते। तत्र प्रमाणप्रयोजनयोरभावाद्। एतच्च प्रागेवास्माभिर्दर्शितम्। द्वितीये तु कल्पे दूरं

त इति परैरपीष्यते । किं त्वीश्वरस्य यन्नित्यसिद्धं निरवग्रहं सत्यसङ्कल्पत्वम्, तदेव जीवस्य संसारदशायामीश्वराभेदानभिव्यक्त्या स्वकीयत्वेनानवभासमानं तं प्रति तिरोहितमित्येव समर्थनीयमिति घट्टकुटीप्रभातवृत्तान्तः ।

नन्वपहतपाप्मत्वं न पाप्मविरहः किं तु पाप्महेतुकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तियोगित्वमिति न तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः । एवं सत्यसङ्कल्पत्वमपि शक्तिरूपेण निर्वाच्यमिति नेश्वराभेदप्रसङ्ग इति चेत्, मैवम् । एवं शब्दार्थकल्पने प्रमाणाभावात् । न हि पापजननप्रतिबन्धिका शक्तिः संसाररूपपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया । तदानीं तदुत्पत्तेरिष्टत्वात् । विद्योदयप्रभृति तु विद्यामाहात्म्यादेवाश्लेषः 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' ( उ० मी०

---

गत्वाऽपि सिद्धान्तिमतमेवावलम्बनीयम् । तथा च न पारमार्थिकभेदसिद्धिरिति दूषणमाह—किन्त्वीश्वरस्येति । ईश्वरेति । बिम्बभूतेनेश्वरेण सह जीवस्य यो वास्तवाभेदः, तदनभिव्यक्त्येत्यर्थः ।

जीवब्रह्मणोरभेदापत्तिभयाज्जीवे पृथगेवापहतपाप्मत्वादिकं स्वीकृत्य तस्य वास्तवबन्धाविरुद्धत्वं शङ्कते—नन्विति । किञ्च निषिद्धकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिरपहतपाप्मशब्दार्थत्वेन कल्प्यमाना किं विद्योदयात् प्राक् तत्प्रतिबन्धार्थं कल्प्यते, किंवा विद्योदयानन्तरं त्वदभिमतमुक्तेः प्राक् तत्प्रतिबन्धार्थं कल्प्यते, अथ वा त्वदभिमतमुक्तिकाले मुक्तस्य देहेन्द्रियादिसत्त्वेन पाप्महेतुनिषिद्धकर्माचरणसम्भवाच्चदा तत्प्रतिबन्धार्थं कल्प्यते इति विकल्पं मनसि निधाय क्रमेण दूषयति—न हीत्यादिना । इष्टत्वादिति । तत्रापि सम्मतत्वादित्यर्थः । 'तस्य ब्रह्मणोऽधिगमे साक्षात्कारे सति विद्योदयात् पूर्वाघस्य नाशो भवति । तदुदयोत्तरकालीनाघस्य चाश्लेषो भवति । कुतः ? । तस्य विद्ययाऽघनाशादेश्श्रुतिस्मृतिषु व्यपदे-

अ० ४ पा० १ सू० १३ ) इति सूत्रेण दर्शितः। तत एव मुक्तावप्यश्लेष उपपद्यत इति व्यर्था शक्तिकल्पना। तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तजीवानां यावत्सर्वमुक्ति वस्तुसच्चैतन्यमात्रत्वाविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिस्सन्धिबन्धपरमेश्वरभावापत्तिरादर्तव्येति सिद्धम् ॥

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ॥
श्रीरङ्गराजमखिनः श्रितचन्द्रमौले-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥ १ ॥
तन्त्राण्यधीत्य सकलानि सदाऽवदात-
व्याख्यानकौशलकलाविशदीकृतानि ॥
आम्नायमूलमनुरुध्य च सम्प्रदायम्
सिद्धान्तभेदलवसङ्ग्रहमित्यकार्षीत् ॥ २ ॥
सिद्धान्तरीतिषु मया भ्रमदूषितेन
स्यादन्यथाऽपि लिखितं यदि किञ्चिदस्य ॥

---

शाच्छ्रुत्यादिसिद्धत्वाद्' इत्यर्थः। मुक्तस्येश्वरभावापत्तिमुपपादितामुपसंहरति-तस्मादिति। उदाहृतश्रुतिसूत्रभाष्यादिस्वारस्यादित्यर्थः। अविरोधित्वमैश्वर्यविशेषणम्। तदनुगुणेति। ऐश्वर्यानुगुणेत्यर्थः। समृद्धत्वमीश्वरभावापत्तिविशेषणम् ॥

श्रीकृष्णचरणद्वन्द्वे स्मर्तॄणां मङ्गलप्रदे ॥
योगिध्येये कृतिरियमलङ्कारार्थमर्पिता ॥ १ ॥

संशोधने सहृदयाः सदया भवन्तु
सत्सम्प्रदायपरिशीलननिर्विशङ्काः ( १ ) ॥ ३ ॥

॥ इति शास्त्रसिद्धान्तलेशसङ्ग्रहे चतुर्थः परिच्छेदः ॥

——* ॥ समाप्तोऽयं ग्रन्थः ॥ *——

---

श्रीकृष्णं मनसा ध्यात्वा श्रीकृष्णं सम्प्रणम्य च ॥
व्याख्यातोऽयं परिच्छेदः श्रीकृष्णपरितुष्टये ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयम्प्रकाशानन्दसरस्वतीदिव्यश्रीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ शास्त्रसिद्धान्तलेशसंग्रहव्याख्यायां कृष्णालंकाराख्यायां चतुर्थः परिच्छेदः समाप्तः ।

---

( १ ) अयं श्लोकः क्वचित् पुस्तके नास्ति ।

